THE
KASHI SANSKRIT SERIES
( HARIDAS SANSKRIT GRANTHAMALA )
NO. 103.
( Vyakarana Section No. 12. )



THE

# MĀDHAVĪYA DHĀTŪVṚITTI

of

## SAYAṆĀCHĀRYA

*Edited with Introduction, Index, etc.*

By

VYAKARṆĀCHĀRYA
Panidt Ananta S'astri Phadake
*Professor, Govt. Sanskrit College, Benares.*
*and*
Pandit Sada S'iva S'arma S'astri
*Professor, S. D. Jain Maha Vidyalaya, Benares.*

PUBLISHED & SOLD BY
JAI KRISHNADAS-HARIDÂS GUPTA,
*The Chowkhamba Sanskrit Series Office,*
*BENARES.*

1934

हरिदाससंस्कृतग्रन्थमालासमाख्य-
काशीसंस्कृतसीरिज़पुस्तकमालायाः

१०३

व्याकरणविभागे (१२) द्वादशं पुष्पम्।



॥ श्रीः ॥

# माधवीयधातुवृत्तिः

श्रीसायणाचार्यकृता।

काशीस्थराजकीयप्रधानसंस्कृतपाठशालाऽध्यापक-व्याकरणाचार्य-मीमांसातीर्थ-फड़के-
इत्युपाह्व-पण्डितानन्तशास्त्रिणाऽल्पभागा संशोधिता; अवशिष्टा च काशीस्थ-
श्रीस्याद्वादसंस्कृतमहाविद्याऽऽलयाध्यापकसाहित्योपाध्याय-व्याकरण-
शास्त्रिपदवीक-जोशीत्युपाह्व-पण्डित-सदाशिवशास्त्रिणा
परिष्कृत्य संशोध्य; बृहद्भूमिकयाऽकारादिधातु-
सूचिकया च संयोज्य सुसम्पादिता।

प्रकाशकः—

जयकृष्णदास-हरिदास-गुप्तः—

चौखम्बा-संस्कृत-सीरिज़ आफिस,

बनारस सिटी।

१९३१.



* श्रीः *

# भूमिका ।

इह खल्वनेककल्मषतथाऽचिन्त्याप्रमेयदुःखजालसमाकुलेऽखिल इलातल आधिभौतिकाध्यात्मिकाधिदैविकसकलदुःखापहारकस्य कर्मोपासनजीवब्रह्मैक्यज्ञानेनाभ्युदयनिःश्रेयससिद्धिहेतुकस्य धर्मस्य साधनभूताः परब्रह्मणो निश्वासभूता भगवन्तो वेदा विजयन्तेतरामिति न तिरोहितं विदुषाम् ।

अत्र मनुः—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥ इति ।

को नाम भगवान् वेदः, किञ्चास्य लक्षणमित्यत्रोच्यते—इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः । अलौकिकपदेन प्रत्यक्षानुमानयोर्व्यावृत्तिः ।

उक्तश्च श्लोकवार्तिके—

श्रेयःसाधनता ह्येषां नित्यं वेदात्प्रतीयते ।
ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ इति ।

उक्तश्चान्यत्र—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ इति च ।

अस्य भगवतो वेदस्य प्रामाण्यं तु बोधकत्वात्स्वत एव सिद्धम् । पौरुषेयवाक्यं तु बोधकं सदपि पुरुषगतभ्रान्तिमूलत्वसम्भावनया तत्परिहाराय मूलप्रमाणमपेक्षते । न तथा वेदः । तस्य नित्यत्वेन वक्तृदोषशङ्काऽनुदयात् । तत्रभगवता जैमिनिनाऽपि प्रथमाध्याये प्रथमपाद एतदेव सूत्रितम्—"तत्प्रमाणं बादरायणस्यानपेक्षितत्वात्" इति ॥

एक एवायं वेद उपाधिवशात्त्रयश्चत्वारो वेति व्यवहारविषयतामाप्तः । तत्राप्येकशतमध्वर्युशाखाः, सहस्रवर्त्मा-सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः इत्याद्युपाधिभेदेनानेकविधः ।

अस्य भगवतो वेदस्याध्ययनमानुपूर्व्या अर्थतश्च द्विविधं दरीदृश्यते । केचन विप्रवरा अस्मिन्भारते वैदिकेतिनाम्ना लोके प्रथिताः स्वगुरुपरम्परया शास्त्रशुद्धविधिना गुरुमुखेभ्य उदात्तानुदात्तस्वरिताद्युक्तस्वरपूर्वकम् अनुस्वारानुनासिकयुक्तं यथाऽर्थं परिशुद्धोच्चारणमुररीकृत्य वैदिकमन्त्राणां शुद्धोच्चारणञ्च विज्ञाय विपुलायासेन समग्रां स्वकीयां संहितां स्वकण्ठस्थितां विधाय स्वशिष्यांश्च पाठयित्वा वेदानां प्रचुरप्रचाराय प्रयतन्ते। एते खलु सर्वाणि कार्याणि विहाय बहुपरिश्रमान् विधाय भिक्षावृत्तिं स्वीकृत्य

शुद्धोच्चारणेन वेदसंरक्षणं कुर्वन्तीति तेऽस्मदीयधन्यवादार्हाः । परन्त्विमे वैदिका मन्त्रोच्चारणपरायणा वेदानामनर्थज्ञा इति तावदसंतोषकरम् । केवलमर्थदृष्ट्याऽध्ययनमपि न श्रेयस्करमिति वयं मन्यामहे । किन्त्वानुपूर्व्यायुक्तं सार्थवेदाध्ययनं द्विजानां कर्तव्येषु मुख्यतमम्, तदभावे तु शूद्रत्वप्राप्तिः ।

"ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति ।

उक्तश्च मनुना—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ इति ।
छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥

इति पाणिनीयशिक्षावचनादतिगम्भीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडङ्गानि प्रवृत्तानि । अत एवाथर्वणिकैस्तेषां षडङ्गानामपरविद्यारूपत्वमुक्तं मुण्डकोपनिषदि । तथा हि—"द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति, परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः, शिक्षा, कल्पो, व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ—परा, यया तदक्षरमधिगम्यते" ( मुण्ड० १।१।४ ) इति ।

साधनभूतधर्मज्ञानहेतुत्वात् षडङ्गानां कर्मकाण्डानामपरविद्यात्वम् । परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वादुपनिषदां परविद्यात्वम् ।

## छन्दः—

छन्दसामुपयोगस्तावत्कर्मकाण्डेऽत्यावश्यकः । श्रूयते च—

"गायत्रीभिर्ब्राह्मणस्याद्ध्यात्, त्रिष्टुभो राजन्यस्य, जगतीभिर्वैश्यस्य" ॥ इति । तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छन्दोग्रन्थमन्तरेण न सुज्ञेयः ।

अपरश्च—"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वा पात्यते प्रमीयते वा पापीयान् भवति । तस्मादेतानिच्छन्दांसि मन्त्रे मन्त्रे विद्याम्" इति श्रूयते । तस्माद्वेदवेदनायच्छन्दोग्रन्थ उपयुक्त इति सिद्धम् ।

## कल्पः—

कल्पो नामाश्वलायनापस्तम्बबोधायनादिसूत्रम् । कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तेः ।





"इषे त्वा" इत्यादिमन्त्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाता इत्यापस्तम्बादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः। कल्पसूत्रं मन्त्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति। अतः कल्पोऽप्यावश्यक इत्यायातम्।

## ज्यौतिषम्—

ज्यौतिषस्य प्रयोजनं तावत्—"यज्ञकालार्थसिद्धये" इति तस्मिन्नेव ग्रन्थे विहितम्। कालविशेषविधयश्च श्रूयन्ते—"सम्वत्सरमेतद्व्रतं चरेत्" "सम्वत्सरमुख्यं भृत्वा" इत्येवमादयः संवत्सरविधयः। "वसन्ते ब्राह्मणोऽग्नीनादधीत "ग्रीष्मे राजन्य आदधीत "शरदि वैश्य आदधीत" इत्याद्या ऋतुविधयः। एवं मासपक्षतिथिकालनक्षत्रविधयः श्रूयन्ते। अतः कालविशेषानवगन्तुं ज्यौतिषमुपयुक्तम्।

## निरुक्तम्—

निरुक्तनाम—अर्थाववोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्। यथा—गौः, ग्मा, मा, दमा, क्षा, क्षमेत्यारभ्य वसवः वाजिनः, देवपत्न्यो देवपत्न्य इत्यन्तो यः पदानां समाम्नायः समाम्नातस्तस्मिन् ग्रन्थे पदार्थाववोधाय परापेक्षा न विद्यते। एतावन्ति पृथिवीनामानि, एतावन्ति हिरण्यनामानीत्येवं तत्र तत्र विस्पष्टमभिहितत्वात्। यद्यपि व्याकरणबलेन केषांचिन्निर्वचनानां सिद्धिर्भवितुमर्हति, तथापि न सर्वेषां सिद्धिरस्ति। अतो ग्रन्थकारेणैवोक्तम्—"तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च" इति। तस्माद्वेदार्थाववोधायोपयुक्तं निरुक्तमिति।

## शिक्षा—

शिक्षा नाम—वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा। तथा च तैत्तिरीयोपनिषदारम्भे समामनन्ति—"शीक्षां व्याख्यास्यामः—वर्णः, स्वरः, मात्रा, बलं, साम, सन्तान इत्युक्तः शिक्षाऽध्यायः" ( तै० आ० ७।२ ) इति।

वर्णोऽकारादिः। स्वरः—उदात्तादिः। मात्रा—ह्रस्वादिः। बलम्—स्थानप्रयत्नौ। सामशब्देन साम्यमुक्तम्, अतिद्रुतातिविलम्बितगीत्यादिदोषराहित्येन माधुर्यादिगुणयुक्तत्वेनोच्चारणं साम्यम्। एतत्सर्वं पाणिनीयशिक्षायां स्पष्टम्। संतानः—संहिता, 'वायवायाहि' इत्यत्राऽऽदेशः। 'इन्द्राग्नी आगतम्' इत्यत्र प्रकृतिभावः। एतच्च व्याकरणेऽभिहितत्वाच्छिक्षायां नोक्तम्।

शिक्ष्यमाणवर्णातिवैकल्ये बाध इति पाणिनीयशिक्षायामेवाभिहितम्। तथाहि—

"मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्"॥

"इन्द्रशत्रुर्वर्धस्व" इत्यस्मिन्मन्त्रे ( तै० सं० २।४।१२।१ ) विवक्षितेऽर्थे तत्पुरुषसमासे "समासस्य" ( पा० सू० ६।१।२२३ ) इति सूत्रेण तत्पुरुषत्वाद् अन्तोदात्तेन भवितव्यम् । आद्युदात्तस्तु प्रयुक्तः, तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वाद् इन्द्रो घातको यस्य इत्यर्थः सम्पन्नः । अतः स्वरवर्णाद्यपराधनिरासाय शिक्षाग्रन्थोऽप्यावश्यक इति ।

## व्याकरणम्—

व्याकरणं नाम—अर्थविशेषमाश्रित्य स्वरप्रकृतिप्रत्ययादीन् विशेषेण संस्कारविशेषेण आ—समन्तात्—वैदिकां लौकिकांश्च शब्दान् करोतीति तथाभूतः पाणिन्यादिमहर्षिप्रणीतो ग्रन्थसमूहः ।

अस्य व्याकरणस्य प्रणेतारोऽष्ट नव वा आचार्या बभूवुः ।

के चित्—

इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः ।
पाणिन्यमरजैनेन्द्रा जयन्त्यष्टादिशाब्दिकाः ॥ १५ ॥

इत्याहुः ।

अपरे तु—

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम् ।
सारस्वतं चापिशलं शाकलं पाणिनीयकम् ॥

इत्याहुः ।

ऐन्द्रं व्याकरणं तावच्छ्रुत्या ज्ञायते । तथा हि—"वाग्वै पराच्यव्याकृताऽवदत्, ते देवा इन्द्रमब्रुवन्, इमां नो वाचं व्याकुरु" तामिन्द्रो मध्यतोऽपक्रम्य व्याकरोत्, तस्मादियं व्याकृता वागुच्यते" इतिश्रुतिः इन्द्रस्य व्याकरणकर्तृत्वे प्रमाणम् ।

"चान्द्रास्तु-आत्मोदरकुक्षिष्विति पेठुः" इति वचनाच्चान्द्रव्याकरणमपि पूर्वमासीदिति सिध्यति ।

काशकृत्स्नं व्याकरणं भगवता भाष्यकारेण—"शताच्च ठन्यतावशते" ( पा० सू०५।१।२१) इत्यत्र भाष्ये नाम्ना निर्दिष्टम् ।

अग्निपुराणेऽन्त्यभागे कौमारव्याकरणस्योल्लेखो दृश्यते ।

सारस्वत—शाकटायन—भ्रकूतन्त्राख्यानि व्याकरणानि चेदानीं मुद्रितानि समुपलभ्यन्ते सर्वत्र । आपिशलशाकलयोश्च पाणिनिसूत्रेषु तत्र तत्र नाम्ना निर्दिष्टत्वात्तावपि पूर्वमास्तामिति निश्चप्रचम् ।

पाणिनीयव्याकरणं तु सर्वत्र प्रचलत्येव । एवम् "अवङ् स्फोटायनस्य" इत्युक्तेः स्फोटायनम्, "पौष्करसादेः" इति वार्तिकात् पौष्करसादिव्याकरणम्, "विन्दतिश्चान्द्रदौर्गादेः" इत्युक्तेर्दौर्गव्याकरणम् । "व्याघ्रभूत्यादयस्त्वेनम्" इति कारिकाबलाद् व्याघ्रभूतेर्व्याकरणञ्चासीदिति ।

एवमप्याशुबोध—जैनेन्द्र—मुग्धबोध-कलापादीनि बहूनि व्याकरणानि सन्ति ।

सत्स्वपि सर्वेषु व्याकरणेषु सार्वलौकिकवैदिकशब्दानां नितरां व्युत्पादकं पाणिनीयव्याकरणमेव । अन्येषु व्याकरणेषु लौकिकालौकिकशब्दानां न व्युत्पादनं दृष्टिपथमायातम् ।

अत एवास्य वेदाङ्गत्वम् । इदमेवाभिप्रेत्य "इदमक्षरच्छन्दो वर्णशः समनुक्रान्तं यथाऽऽचार्या ऊचुः, ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्राय, इन्द्रो भरद्वाजाय, भरद्वाज ऋषिभ्यः, ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयात् ब्रह्मराशिः" इति ऋक्तन्त्रव्याकरणेऽस्य चतुर्दशसूत्रकदम्बकस्याम्नायत्वमुक्तं तन्मूलकत्वादस्यैव व्याकरणस्य वेदाङ्गत्वं युक्तम् । अत एवास्य ज्ञाने सर्ववेदपारायणजं पुण्यमिति स्पष्टं शब्देन्दुशेखरे नागेशेनोक्तम् । छान्दोग्योपनिषदि व्याकरणमुपक्रम्य "वेदानां वेदः" इत्युक्तम् ।

अत्र पराशरोपपुराणम्—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ॥

तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्तिके दर्शितः—"रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति ।

एतानि रक्षाऽऽदिप्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पस्पशाऽऽह्निके भगवता पतञ्जलिना स्पष्टीकृतानि। रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग् वेदान् परिपालयिष्यति वेदार्थं चाध्यवस्यति । ऊहः खल्वपि न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः। ते च यज्ञाङ्गत्वेन यथायथं विपरिणमयितव्याः । तान् नावैयाकरणः शक्नोति विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् । आगमः खल्वपि "ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति । प्रधानञ्च षट्सु अङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान् भवति । लघ्वर्थं चाध्येयं व्याकरणम् । बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां पारायणं प्रोवाच, नान्तं जगाम । बृहस्पतिश्च वक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रम् अध्ययनकालः । अन्तं च न जगाम । अद्यत्वे पुनर्यदि परमायुर्भवति स वर्षशतं जीवति । तत्र कुतः प्रतिपदपाठेन सकलपदावगमः । कुतस्तरां प्रयोगेण । असन्देहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति—'स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेत' इति । तत्र न ज्ञायते किं स्थूलानि पृषन्ति यस्याः सा स्थूलपृषती, किंवा स्थूला चासौ पृषतीति। तान् नावैयाकरणः स्वरतोऽध्यवस्यति । यदि समासान्तोदात्तत्वम्, तदा कर्मधारयः । अथ पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिरिति ।

एवं च व्याकरणस्याध्ययनमत्यावश्यकमिति न संदेहलेशः ।
उक्तञ्च सम्यगभियुक्तैः—

यद्यपि बहु नाधीषे तथाऽपि पठ पुत्र ! व्याकरणम् ।
स्वजनः श्वजनो मा भूत् सकलं शकलं सकृत् शकृत् ॥ इति ।

भगवान् भाष्यकारः—"एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः स्वर्गे लोके च कामधुग्भवति" इति चाह ।

सर्वेषु व्याकरणेषु निकषायमाणस्य परमप्रमाणीभूतस्य पाणिनीयव्याकरणस्योपर्यद्ययावद् बहवो ग्रन्थाः समभूवन् । ते संक्षेपतोऽन्तेऽस्माभिर्निर्दिष्टाः । तेषु ग्रन्थेषु पाणिनीयमतमनुसृत्य तत्रभवता सायणाचार्येण विरचिता धातुविषयकोऽतिप्रामाणिको लोके 'माधवीयधातुवृत्ति'—रिति नाम्ना प्रथित इति समेषां विदुषां विदितचरम् ।

अस्मिन्ग्रन्थे भगवता सायणाचार्येण क्रमेण पाणिनीयधातुपाठमुररीकृत्य धातुतः तिङन्तस्य कृदन्तस्योणादेश्च पाणिनीयसूत्रवार्तिकभाष्येष्टिप्रमाणपुरस्सरं रूपाणि प्रसाध्य सूत्रवार्तिकभाष्येष्टिपरिभाषाणाञ्च सम्यगर्थं विधाय तत्र तत्रान्यग्रन्थकृतां ग्रन्थानाञ्च मतानि प्रदर्श्य स्वसम्मतमादर्शवत् प्रदर्शितम् । तथा च माधवीयधातुवृत्तिनिर्माणोत्तरं माधवीयधातुवृत्तावनुक्तानां सौत्रकण्ड्वादिधातूनां निरूपणेऽपि भूयसा नामधातूनामेव व्युत्पादनान्मल्लग्रामन्यायेन नामधातुवृत्तिरिति नाम्नाऽपरं प्रकरणं निर्मितम् । अस्य ग्रन्थस्य सम्यगध्ययनेन विदुषां विद्यार्थिनाञ्च पाणिनीयव्याकरणस्य सम्यग्बोधो भवतीति किं निगदनेन ।

## सायणाचार्यपरिचयः ।

अस्य भगवतः सायणस्य वेदशास्त्रसम्पन्नो नित्यनैमित्तिकविधिना नितान्तनिर्मलस्वान्तो जनको मायण इति नामा, जननी पतिव्रता श्रीमती नाम्नी चासीत् । गोत्रेणायं भारद्वाजः । सूत्रं चास्य बोधायनम् , कृष्णयजुर्वेदान्तर्गततैत्तिरीयशाखा चास्यासीत् । अस्य भ्रातरौ माधवाचार्यभोगनाथनामानौ वेदशास्त्रसम्पन्नौ बृहस्पतिशुक्राचार्यसदृशावभूतामित्यधोनिर्दिष्टपराशरमाधवीयारम्भश्लोकाभ्यां निश्चीयते ।

श्रीमती जननी यस्य सुकीर्तिर्मायणः पिता ।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ ॥
बौधायनं यस्य सूत्रं शाखा यस्य च याजुषी ।
भारद्वाजं यस्य गोत्रं सर्वज्ञः स हि माधवः ॥ इति ।

## माधवाचार्यः ।

अस्य सायणाचार्यस्य ज्यायान् भ्राता माधवाचार्यः वैक्रमीये चतुर्दशशतके दक्षिणभारते विजयनगरसाम्राज्यप्रतिष्ठातुः श्रीमन्महाराजहरिहरस्या-

ध्यात्मिकगुरुर्नीतिशास्त्रकुशलो मन्त्रिवरोऽभवत्। माधवाचार्यमन्त्रप्रभावादेव महाराजहरिहरेण गोब्राह्मणहिताय स्वातन्त्र्यराजलक्ष्म्याः विलासाय वैदिकधर्मप्रचाराय च प्रबलयवनानुत्पाट्य स्वराज्यं निष्कण्टकं कृतमिति भारतेतिहासे प्रसिद्धम्। अनेन पूर्वोत्तरमीमांसयोर्विस्ताराय धर्मशास्त्रस्य प्रचुरप्रचाराय च 'पराशरस्मृतिव्याख्या' (पराशरमाधवः) 'व्यवहारमाधवः' 'कालमाधवः' 'जीवन्मुक्तिविवेकः' 'जैमिनीन्यायमालाविस्तरः' 'शङ्करदिग्विजयः' इत्यादयो ग्रन्थाः प्राणायिषत। गृहस्थाश्रमानन्तरं संन्यासदीक्षां स्वीकृत्य विद्यारण्य इतिनामालभत। तत्राश्रमेऽपि बहवः प्रणीताः पञ्चदशीत्यादयो ग्रन्थाः विद्यारण्यकृतित्वेन प्रसिद्धाः ।

## भोगनाथः ।

सायणाचार्यस्य कनीयान् भ्राता श्रीभोगनाथः सङ्गमनरपतेः नर्मसचिवः काव्यकलाकुशलो बिन्नगुण्टशासनपत्रस्थप्रशस्ते रचयिता चासीदिति सायणाचार्यविरचितग्रन्थेभ्यः स्फुटीभवति ।

अस्य भोगनाथस्यालौकिकीं प्रतिभामसाधारणं नैपुण्यं कमनीयकविताकलनचातुर्यञ्चावलोक्य संतुष्यति हृदयमस्माकम्। एभिस्तावत्—"रामोल्लासः" "त्रिपुरविजयम्" "उदाहरणमाला" "गणपतिस्तवः "शृङ्गारमञ्जरी" "गौरीनाथाष्टकम्" इत्यादयो ग्रन्थाः प्रणीताः । उपरिनिर्दिष्टग्रन्थावलोकनात्प्रतीयतेऽस्य प्रतिभा नैपुण्यञ्च ।

## सायणस्य गुरवः ।

सायणाचार्येण तद्भ्रातृभ्यां च विरचितानां ग्रन्थानां परिशीलनतो ज्ञायते तेषां त्रयो गुरवोऽभूवन्निति । प्रथमो विद्यातीर्थः, द्वितीयो भारतीतीर्थः, तृतीयः श्रीकण्ठः ।

विद्यातीर्थस्तावन्महातपस्वी रुद्रप्रश्नभाष्यस्य कर्ता परमात्मात्मतीर्थानां—शिष्य आसीत् । विद्यावैभवप्रभावादेव च विद्यातीर्थं महेश्वरस्यावतारत्वेन वर्णयति सायणाचार्यः सर्वेषां वेदभाष्याणामारम्भे—"यस्य निश्वसितं—वेदाः" इत्यादिना ।

## सायणाचार्यः ।

सायणाचार्यस्तावच्चतुर्णां विजयनगराधीशानां साम्राज्येऽतिगौरवयुक्तं मन्त्रिपदमभजत । अस्य स्थितिसमयो वैक्रमीयश्चतुर्दशशतक इति शिलालेखादितिहासाच्च ज्ञायते । अस्य मन्त्रिवरस्य सततशास्त्राभ्यासजनिता ज्ञानपरिपाकसहजा बुद्धिः क्व, लौकिकव्यवहारनिरीक्षणतत्परा राज्यभारक्षमा नीतिनिपुणता च क्व । प्रथमं तावदेते सायणाचार्याः विजयनगरसाम्राज्यस्य पूर्वविभागस्थेऽधुना तञ्जोरेतिनाम्ना प्रथिते प्रदेशे सम्यक् शासनं कुर्वतो-

महाराजहरिहरस्यानुजस्य कम्पराजस्यामात्यपदवीमभूषयन् । तस्मिन् राजनि दिवं गते सति तस्य सूनुः सङ्गमेति नामा बालतया राज्यभारं वोढुमसमर्थोऽतो भगवान् सायणाचार्य एव राज्यतन्त्रकमचालयत् । अपाठयच्च सङ्गमनरेन्द्रं राज्यकार्यभारक्षमां सकलां राजनीत्याद्युपयोगिनीं विद्याम् । प्रान्तस्थान् बहून् देशान् विजित्य स्वबाहुबलमपि प्रकटयामास । गरुडनामानं स्वपराक्रमेण गरुडनामानञ्च नगरं सङ्गमनरेन्द्रसाहाय्येन जितवानिति शिलालेखादितिहासादलङ्कारसुधानिधिग्रन्थाच्च स्फुटीभवति ।

राज्यकार्यवहने समर्थं सङ्गमभूपतमालक्ष्य तस्मिन् राज्यधुरामारोप्य सायणो ज्यायसा भ्रात्रा माधवाचार्येण साकं बुक्कनरेन्द्रस्य मन्त्रिपदमलङ्चकार । बुक्कनरेन्द्रे दिवं गते तस्य सूनोः हरिहरमहाराजस्यापि कानि चित् वर्षाणि मन्त्रीपदमभजत् सायणाचार्यः ।

अस्य सायणाचार्यस्य त्रयः पुत्राः कम्पणः, मायणः, शिङ्गणश्चेति आसन् । कम्पणः सङ्गीतकलासु कुशलः । मायणः गद्यपद्यात्मककाव्यकलाचतुरः । शिङ्गणः क्रमजटाघनादिवेदप्रकृतिविकृतिषु पण्डित इत्यलङ्कारसुधानिधितोऽवगम्यते ।

तथा ह्यलङ्कारसुधानिधिः—

तत् संव्यक्षय कम्पण व्यसनिनः सङ्गीतशास्त्रे त्वं ।
प्रौढिं मायण गद्यपद्यरचनापाण्डित्यमुन्मुद्रय ॥
शिक्षां दर्शय शिङ्गण क्रमजटाचर्चासु वेदेष्विति ।
स्वान् पुत्रानुपलालयन् गृहगतः सम्मोदते सायणः ॥




एते सायणाचार्याः हरिहरमहाराजस्य ज्येष्ठभ्रातुर्माधवाचार्यस्य च निदेशं प्राप्याथर्ववेदशतपथब्राह्मणादीनाञ्च व्याख्यानानि व्याकुर्वन् ।

अस्य ग्रन्थाः—सुभाषितसुधानिधिः, प्रायश्चित्तसुधानिधिः, अलङ्कारसुधानिधिः, धातुवृत्तिः, पुरुषार्थसुधानिधिः, वेदभाष्याणि, आयुर्वेदसुधानिधिः, यज्ञतन्त्रसुधानिधिश्च ।

सुभाषितसुधानिधिः—अत्र नीतिवाक्यामृतानां सरसः सञ्चयः । प्रायश्चित्तसुधानिधिः—प्रायश्चित्तप्रतिपादकोऽयं ग्रन्थः । अस्यापरं नाम 'कर्मविपाक' इति ।

अलङ्कारसुधानिधिः—काव्यालङ्कारप्रतिपादनपरोऽयं ग्रन्थः ।

धातुवृत्तिः—पाणिनीयमतमवलम्ब्य विरचितोऽयं ग्रन्थः धातुनि-श्चयकोऽतिप्रामाणिकः ।

पुरुषार्थसुधानिधिः—पुरुषार्थोपयोगिनां पुराणस्थानां व्यासवा-क्यानां सङ्ग्रहोऽत्र वर्तते ।

वेदभाष्याणि—तैत्तिरीयसंहितायाः, ऋक्संहितायाः, सामवेदस्य, काण्वसंहितायाः, अथर्ववेदस्य च भाष्याणि ।

ब्राह्मणानां भाष्याणि च—तैत्तिरीयब्राह्मणस्य, तैत्तिरीयारण्यकस्य, ऐतरेयब्राह्मणस्य ताण्ड्यब्राह्मणस्य षड्विंशस्य, सामविधानस्य, आर्षेयस्य, देवताऽध्यायस्य, उपनिषदाख्यस्य संहितोपनिषदितिख्यातस्य च भाष्याणि सर्वत्र प्रसिद्धानि ।

आयुर्वेदसुधानिधिः—आयुर्वेदसिद्धान्तदर्शनपरोऽयं ग्रन्थः ।

यज्ञतन्त्रसुधानिधिः—यागानुष्ठानविधिरस्य ग्रन्थस्य विषयोऽस्ति ।

श्रीमतः सायणाचार्यस्य जीवनवृत्तातो विमलोऽतिविततोऽतो न मदीया बुद्धिस्तेषां वर्णने समर्था, तथाऽपि मया भगवतो वृत्तान्तः संक्षेपेणात्र निदर्शितः ।

सायणाचार्यकृतेयं धातुवृत्तिरस्ति, न माधवाचार्यकृतेति ग्रन्थोपक्रमात्स्फुटीभवति । माधवाचार्याज्ञयेयं विरचितेति, प्रेमप्राचुर्यात् ज्येष्ठभ्रातुर्नाम्ना वाऽस्या माधवीयेतिनामधेयमिति कल्प्यतेऽस्माभिः । अयं माधवीयधातुवृत्तिरितिनामधेयो ग्रंथः पाणिनीयमतावलम्ब्यतिप्रामाणिकः धातुसम्बन्धिसकलकार्यविचारपरोऽतिप्राचीनो वेदभाष्यकर्तृसायणाचार्यनिमित इति सकलजनाल्हादकरः विद्वद्वराणां प्रमोदकरः विद्यार्थिजनहितकरश्चेति विज्ञाय श्रीहरिदासगुप्तात्मजजयकृष्णदासश्रेष्ठिना संशोधनार्थं प्रथमं व्याकरणाचार्यमीमांसातीर्थाद्युपाधिककाशिकराजकीयसंस्कृतमहाविद्यालयाध्यापकफडकेइत्युपनामकानन्तशास्त्रिभ्यः संशोधनायादायि। तैरपि प्रियवरपाठकगणसौलभ्याय रूपादीनां पृथक्तया झटितिप्रतीत्यै रूपाणां कृते (   ) इदं चिन्हम्, वार्तिकज्ञानाय [   ] इदं चिन्हम्, सूत्रव्याख्यानज्ञानाय ** इदं—चिन्हम्, साधारणसूत्रज्ञानाय "   " इदं चिन्हम्, परिभाषासाधारणवचनभाष्येष्टिज्ञानाय '   ' इदं चिन्हञ्च तत्र तत्र दत्वा पाठान्तराणि च तत्र तत्र विन्यस्य भू(धा०अं०१)धातुमारभ्य भ्वादिगणपठितकै (धा०अं० ६००) धातुपर्यन्ता ( प्रथमपत्रमारभ्या १६८ पृष्ठङ्कपर्यन्ता ) इयं धातुवृत्तिः संशोधिता । अग्रे च कार्यबाहुल्यात्स्वशरीरास्वास्थ्याच्च प्रकाशकानुमत्या तैः संशोधनार्थं सा मह्यं प्रदत्ता । मयाऽपि पूर्वसरणीमवलम्ब्य-

म० म० व्याकरणकेसरिपण्डितप्रकाण्डपरमगुरुभारद्वाजोपाह्वदामोदरशास्त्रिसंशोधित-मेडिकलहाल-इति नामकयन्त्रालयमुद्रितं पुस्तकं म्हैसुरदेशस्थमुद्रणालये मुद्रितमपरम् अन्यानि च द्वित्राणि पुस्तकानि मुहुर्मुहुरवलोक्य गुरुवरपण्डितमोकाटे इत्युपनामकगणपतिशास्त्रिमहोदयाच्छङ्कास्थलानि दूरीकृत्य यथाशेमुषि सा संशोधिता । पाठकगणसौलभ्याय चाकारादिक्रमेण धातुसूची, वेदवेदाङ्गप्रयोजनपरिचयपूर्वकसायणाचार्यपरिचयाय बृहद्भूमिका चात्र संनिवेशिता । माधवीयधातुवृत्तौ प्रसङ्गोपात्तग्रन्थकृतां ग्रन्थानाञ्च परिचयाय तेषां ग्रन्थानाञ्च नामदर्शकपत्रं पाणिनीयग्रन्थोपरि ग्रन्थकारैः कृतग्रन्थानाम्परिचयाय ग्रन्थकाराणां ग्रन्थानाञ्च परिचायकं पत्रमप्यन्ते निवेशितम् ।

अस्य मुद्रणसमये काशीस्थराजकीयपाठाशालाध्यक्षैरनेकानवद्यविद्याविशारदैः कविराजकुलभूषणैर्गोपीनाथमहाशयैः पण्डितप्रवरसाहित्याचार्यकमनीयकाव्यकलाकुशलखिस्ते इत्युपनामकनारायणशास्त्रिभिश्च सदयतया सरस्वतीभवनस्थपुस्तकं दत्वा यत्साहाय्यं दत्तमतस्तेऽस्माकं धन्यवादार्हाः ।

तथा च व्याकरणाचार्यमीमांसातीर्थपण्डितफडकेइत्युपाह्वानन्तशास्त्रिभिश्च प्रतिसमयं संशोधनविचारसाहाय्यं तत्तद्विषयकग्रन्थान्तरसूचनासाहाय्यं च प्रदत्तमिति तेषामुपकारभारं समुचितशब्दैः प्रकटयामि ।

अस्याः माधवीयधातुवृत्तेः संशोधने गच्छतस्खलनन्यायात् मदीयमतिमान्द्यान्मुद्रकदोषाद् दृष्टिदोषाच्चाशुद्धीनां सम्भवः कादाचित्को भवेत्, तागुणैकपक्षपातिनो विद्वांसो हंसक्षीरन्यायेन परिशोधयन्तु ।

> न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
> दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥

इत्युक्तिमनुसंधाय मामनुगृह्णन्तु विद्वांस इति मुहुर्मुहुः साञ्जलिबन्धं सम्प्रार्थयते—

विदुषां वशंवदः—

जोशीत्युपाह्वसदाशिवशास्त्री—

साहित्योपाध्यायो व्याकरणशास्त्री च ।

॥ श्रीः ॥

# अथ माधवीयधातुवृत्तिस्थप्रकरणानाम्

# अनुक्रमणिका ।



इति माधवीयधातुवृत्तिस्थप्रकरणानामनुक्रमणिका ।

---

# अथ माधवीयनामधातुवृत्तिस्थविषयाणाम्

# अनुक्रमणिका ।



इति माधवीयनामधातुवृत्तिस्थविषयाणामनुक्रमणिका ।

---



॥ श्रीगणेशाय नमः ॥

# माधवीयधातुवृत्तौ-

## भ्वादिः ।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
जीयाद्धस्तिमुखो यस्य लीलयोर्ध्वाण्डखण्डने ।
कन्दाङ्कुरवदाभाति दन्ताग्रं वहिर्गतम् ॥ २ ॥
चिदानन्दकलां वाणीं वन्दे चन्द्रकलाधराम् ।
नैर्मल्यतारतम्येन बिम्बितां चित्तभित्तिषु ॥ ३ ॥
अस्ति श्रीसङ्गमक्ष्मापः पृथ्वीतलपुरन्दरः ।
यत्कीर्तिमौक्तिकादर्शे त्रिलोक्यां प्रतिबिम्ब्यते ॥ ४ ॥
यशः क्षीराहुतीकृत्य यत्प्रतापहुताशने(१) ।
परे यान्ति पदं दिव्यं राजानो रणदीक्षिताः ॥ ५ ॥
तूर्णं कर्णान्तिकं प्राप्ते यत्प्रतापधनञ्जये ।
पुरो निधाय गाङ्गेयं स्वात्मा संरक्ष्यते परैः ॥ ६ ॥
कुर्वन् शत्रुयशांसि धूमपटलीं कूलङ्कुषाज्यास्पदः
काष्ठासङ्गविवर्द्धितः प्रकटयन् भूतिं नवां भूयसीम् ।
आतन्वन्नितरप्रतापदहनं स्फूर्जत्स्फुलिङ्गाकृतिं
प्रायो यच्छति यत्प्रतापदहनः कस्मै न विस्मेरताम् ॥ ७ ॥
तस्य मन्त्रिशिखारत्नमस्ति मायणसायणः ।
यः ख्यातिं रत्नगर्भेति यथार्थयति पार्थिवीम् ॥ ८ ॥
नित्योन्मीलितदानवारिरधिकं निर्धूतपङ्कोदयो
दूरापास्तहरीशलङ्घनविधिर्भङ्गप्रसङ्गोज्झितः ।
क्ष्माभृत्क्षोभकृतिक्षमः क्षणिययन् दोषाकरात्पोषणा-
मानन्दाय चकास्ति यस्त्रिजगतामाश्चर्यरत्नाकरः ॥ ९ ॥
यत्कीर्तौ जाह्नवीस्फूर्तौ कीर्त्या विद्विषतामपि ।
कलिन्दनन्दिनीकान्तिः स्पर्द्धयेव प्रपद्यते ॥ १० ॥
येन निर्मीयते नित्यं धनैरायो(२) धनैरपि ।

---

(१) धनञ्जये इति पाठान्तरम् ।
(२) सुधातुवृत्तिर्विहिता बुधानां श्रीवत्सचिन्हेन कृते हि नाके ।
सुधातुवृत्तिर्विहिता बुधानां श्रीकुण्डिनार्येणकलावपीह ॥
[अ]यमधिकः श्लोक उपलभ्यते "जी" संज्ञकपुस्तक इति म्हैसूरस्थमुद्रितपुस्तकतो ज्ञायते ।

श्रेयसे यशसे दानं विदुषां विद्विषामपि ॥ ११ ॥
न ध्यानं न व्रतं नार्चा न समाधिर्न वा जपः ।
मन्त्रसिद्धा बलं यस्य मतिरेव महीयसी ॥ १२ ॥
तेन मायणपुत्त्रेण सायणेन मनीषिणा ।
आख्यया माधवीयेयं धातुवृत्तिर्विरच्यते ॥ १३ ॥
अस्याः पूर्वनिबन्धेभ्यो गुणवत्ता न कथ्यते ।
सर्व एव स्ववाक्येषु यदाहुर्गुणगौरवम् ॥ १४ ॥
सा च संत्यक्तमात्सर्यैर्गुणगृह्यैर्मनीषिभिः ।
सूत्रवार्त्तिकभाष्याणामीक्ष्यतां पारदृश्वभिः ॥ १५ ॥
कल्पयन्तु खला दोषं किं तैर्यद्यमुद्यमः ।
मुनित्रयगिरामर्थमतत्त्वविदुषः प्रति ॥ १६ ॥

## भू सत्तायाम् ॥

वर्त्तत इति शेषः । सत्तेहात्मभरणम् (१-२) । यदाह हरिः-
आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते । इति
हेलाराजश्च—'अस्ति आत्मानं बिभर्त्ति सत्तां भावयतीति यावत्' इति । कैयटकारोपि—'आत्मभरणवचनो भवति' इति । नैरुक्ताश्च 'अस्तीत्युत्पन्नस्यात्मधारणमाचष्टे' इति ।

## उदात्तः ॥

नानुदात्त इत्यर्थः । तेन "एकाच उपदेशे ऽनुदात्तात" इतीण्निषेधो न भवति । एवमुत्तरत्रापि ॥

## परस्मैभाषा ॥

परस्मैपदीत्यर्थः । उपलक्षणमर्थनिर्देशः । हिमवतो गङ्गा प्रभवति, मल्लो मल्लाय प्रभवति, यामस्य प्रभवति, परान् पराभवति, इदमेवं संभवति, स्थाली तण्डुलान् संभवति, शमनुभवति, इत्यादौ प्रकाशनाङ्गनिःसरणप(३)र्याप्त्यैश्वर्याभिभवोत्प्रेक्षान्तर्भावनसंवेदनादीनामवगमात् । न च मन्तव्यं प्रभूप्रभृतयस्समुदाया एवैतेष्वर्थेषु वर्त्तन्त इति । एवं ह्येह भुवः क्रियावाचित्वाभावात्समुदायस्य च भूवादावपाठान्नेह धातुत्वमिति तन्निबन्धनप्रत्ययाभावात् प्रभवतीत्यादि रूपं न स्यात् । किं चोपसर्गसंबन्धमन्तरेण 'भूतिकामः पुत्त्रो भवति' 'बहुर्वै भवतो भ्रातृव्यः' इत्यादावैश्वर्योत्पत्तिलिप्सादयोऽवगम्यन्ते । न चोत्पत्तिः सत्ता, उत्पन्नस्यात्मधारणलक्षणमित्युक्तत्वात् । तथा च नैरुक्ताः—'जायतेऽस्ति विपरिणमते वर्द्धते ऽपक्षीयते विनश्यति' इति क्रमेण षड् भावविकारानाहुः(४) । लोकेऽपि सत्ताजन्मनोर्भिन्नत्वादेव घटः किमुत्पद्यत इति पृष्टो न कश्चिदप्यस्तीति प्रतिवक्ति । तथाचार्येणापि "तत्र जातः" "तत्र भवः" इति भेदेन(५) निर्दिश्यते, तस्माद्धातुरेवानेकार्याभिधायी, प्रादयस्तु प्रकरणादिवद्विशेषस्मृतिहेतवो द्योतकाः । द्योतकापेक्षा च शब्दशक्तिस्वाभाव्यात् क्वचिदेव, यथा हरिशब्दो भेकादावेव । एवमुत्तरत्राप्यर्थनिर्देशोऽतन्त्रम् । यथा बीजसंताने वपिः पठितः केशान्वपतीत्यादौ छेदनेपि वर्त्तते, तथा करोतिर्भूतप्रादुर्भावे पठितो ऽस्मानभितः कुरु, पादौ कुरु, यः प्रथमः शकलः परापतेत्स स्वरुः कार्यः, चोरंकारमाक्रोशतीत्यादौ स्थापन-

(१) आत्मावधारणमिति पुस्तकान्तरे । (२) धारणमिति पाठान्तरम् ।
(३) सामर्थ्येति पाठान्तरम् । (४) क्रमेणेत्यधिकमेकस्मिन्पुस्तके ।
(५) निर्देशः कृत इति पुस्तकान्तरे ।

निर्मलीकरणोपादानोच्चारणादौ वर्त्तते, चोरंकारमित्यत्र चोरशब्दमुच्चार्यति(१) अर्थः न त्व-चोरश्चोरः क्रियते । अर्थनिर्देशस्योपलक्षणत्व एव 'कुर्द खुर्द गुर्द गुद क्रीडायामेवेत्येवकारोप-पत्तिः(२) । 'गाधृप्रतिष्ठालिप्सयोः' इत्यादौ त्वनेकार्थाभिधानं प्रपञ्चार्थम् । तदेवं सत्स्वपि बहुष्वर्थेषु माङ्गलिकत्वात् सुप्रसिद्धत्वात्सर्वपदार्थव्यापित्वाच्च सत्तानिर्देशः कृतः । उक्तं च भाष्ये(३) 'न सत्तां पदार्थो व्यभिचरति' इति । हरिणाप्युक्तम् ।

संबन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥
तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते । इति ।

माङ्गलिकत्वमपि प्रसङ्गात् सत्ताख्यस्य परब्रह्मणः स्मरणेन । आदौ भुवो निर्देशो भूशब्दस्य महाव्याहृतिस्मरणेन माङ्गलिकत्वात् सर्वजात्यर्थव्याप्यर्थाभिधायित्वात् "भूवादयो धातव" इति प्रसङ्गात् भूवादिशब्दस्य साधुत्वलाभहेतुत्वाच्च । कृभ्वस्तयो हि क्रियासामान्यवचनाः । सामान्यं च विशेषेषु प्रत्येकं परिसमाप्यते । आत्मभरणं च पाकादिष्वप्यस्तीति भ्वस्त्योः क्रियासामान्यवाचित्वम् । उक्तं च कैयटे 'तद्ध्यात्मभरणं विरुद्धार्थसमवायैः पाकादिभिरविरुद्धैकार्थसमवायम्' इति । तेन यथा 'ब्राह्मणो गार्ग्यः' इत्यत्र ब्राह्मण्यं सामान्यं गार्ग्यत्वं विशेषस्तद्वदिहाप्यात्मभरणं सामान्यं पाकादिकं तु विशेषः । करोतेरपि क्रियासामान्यमर्थः, ब्राह्मणो गार्ग्य इतिवत् किं करोति पचतीति क्रियासामानाधिकरण्यदर्शनात्, इत्थं च करोत्यर्थः प्रश्नः पचत्यादिभिर्व्याकृतो भवति । अत्यन्तभेदे तु करोत्यर्थो न व्याकृतो भवेत्, यथा किं करोति देवदत्तो ? घट इति । कथं तर्हि करोत्यर्थविशेषत्वे सर्वधात्वर्थानामासनमपि करणमिति किं करोतीति प्रश्ने न करोत्यास्त इति करोत्यर्थविशेषेणोत्तरं संगच्छते । उच्यते । नात्र क्रियासामान्यं पृच्छ्यते किं तु लोकप्रसिद्धो गमनागमनादिर्विशेषस्तत्रैव लौकिकानां क्रियात्वाभिमानात्, तेन तन्निषेधपूर्वकमास्त(४) इत्यत्र युज्यते । यद्वा क्रियासामान्यस्यावश्यं भावात् विशेषविषय एव प्रश्न इति तन्निराकरणेन प्रतिवचनं बोद्धव्यम् । क्रिया च यद्वस्तु सिद्धमसिद्धं वा शब्देन साध्यत्वेनाभिधीयमानमाश्रितक्रमं तदिति वैयाकरणानां मतम् । तदुक्तम् ।

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात्क्रियेति व्यपदिश्यते ॥ इति ।

नन्वेवं सति वितता बहवः क्षणा धातुवाच्या इत्युक्तं भवति, यथा पचतीत्यत्राधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणादिः, ततश्चैषां बहुत्वेनैकत्वाभावात् कथमेकक्रियात्वेनैकधातुवाच्यत्वं, न चास्ति समुदायभावः, क्षणानां क्षणिकत्वेन युगपदसंनिधानात् । नैष दोषः । क्रमवतामेषां क्षणानामेकफलोद्देशेन प्रवृत्तानां सकलानां बुद्ध्या समापादितैक्यानां क्रियात्वव्यवहारात् । न च यदनन्तरं फलं निष्पद्यते तस्यैव फलसाधनत्वम्, एवं ह्यधिश्रयणादिवैयर्थ्यं स्यादिति तैरपि समीहितफलानुगुणैर्यथास्वं विशेष आधीयत एवेत्यवश्यं फलसाधनत्वमङ्गीकर्त्तव्यम्, एवं च काल्पनिकः समुदायो धातुवाच्य इत्युक्तं भवति । तत्रावयवक्षणाः समुदाये गुणभावमापन्ना इति न ते शब्दभेदं प्रयुञ्जते । तदुक्तम् ।

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।
बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते ॥ इति ।

क्रमजन्मनामेषां क्षणानामभेद एकत्वे बुद्ध्या संकलनात्मिकया प्रकल्पितः, स च समूहः

---

(१) समुच्चार्येति पुस्तकान्तरे । (२) अवधारणोपपत्तिरिति पाठान्तरम् ।
(३) भाष्यकृतेति पुस्तकान्तरे । (४) इत्युत्तरं युज्यते इति पुस्तकान्तरे ।

स्वभावतो गुणभूतैरवयवैर्युक्त इत्यर्थः । गुणभूतैरवयवैरिति वचनमवयवानां शब्दभेदं प्रति प्रयोजकत्वं नेति प्रतिपादनार्थम् । एवं समूहरूपायाः क्रियाया एकत्वादपूर्वापरीभावाद् क्रमत्वेऽप्यवयवक्रमाश्रयेण क्रमिकत्वव्यवहारः । उक्तं च ।

स चापूर्वापरीभूत एकत्वाद्यक्रमात्मकैः ।
पूर्वापराणां धर्मेण तदर्थेनानुगम्यते ॥ इति ।

कथं तर्ह्येकस्मिन् क्षणे धातोः प्रयोगः पचतीत्यधिश्रयितर्यपि वक्तारो भवन्ति । उच्यते, अधिश्रयणारम्भ एव फलाभिसन्धेस्तत्रैव समुदायस्यारोपात् । अयं च समाश्रितपूर्वापरीभाव एवारोप्यत इत्येकोऽपि क्षणः क्रमिको भवति । अत एव क्षणान्तरेऽनुष्ठीयमाने ऽनुष्ठास्यमाने चाध्यारोपितविरूपस्य क्षणस्यारोपादतीतत्वादपाक्षीदिति भूतकालता, तथा तस्य क्षणस्य भावित्वादितरेष्वभाविष्वपि पक्ष्यतीति भविष्यत्कालता, तथा चैकस्य क्षणस्य वर्त्तमानत्वादन्येष्ववर्त्तमानेष्वपि पचतीति वर्त्तमानकालता चेति कालत्रययोग उपपद्यते । यथोक्तम्—

समूहः स तथाभूतः प्रतिभेदं समूहिषु ।
समाप्यते ततो भेदे कालभेदस्य संभवः ॥ इति ।

तथाभूतः क्रमिकः सन् प्रतिभेदं प्रत्येकं समूह आरोप्यते । ततो विषयविषयिणोरभेद एकत्वे कालभेदः संभवतीत्यर्थः । तदेवं शब्देन साध्यतया प्रतीयमानः समाश्रितक्रमोऽर्थः क्रियेति स्थितं पटो भवतीत्यात्मभरणलक्षणा सत्ता तथैवाभिधीयत इति क्रियात्वेन विचिकित्सा । तथा च

क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ।

इति क्रियाभेदहेतुना कालेनाभूदस्ति भविष्यतीति प्रयोगाः ॥ नह्यक्रियस्य कालेन विभागोऽस्ति । उक्तं च—

कालानुपीति यद्रूपं तदस्तीति प्रतीयते । इति ।

एवं च 'भूतं भव्यायोपदिश्यत' इति न्यायेन देवदत्तः पचतीत्यादिवत् घटो भवतीति क्रियाकारकभावेन समन्वय उपपद्यते । किं करोतीति प्रश्ने पचतीत्यादिवदस्तीति प्रतिवचनाभावो निर्ज्ञातसत्तस्यानिर्ज्ञातो व्यापारभेदः पृच्छ्यते, न तु निर्ज्ञाता सत्तैवेति, तद्विषयस्य प्रश्नस्यैवानुदयात् (१) । यदा तु सत्ताविषयः प्रश्नो विनाशशङ्कया किं करोति देवदत्त इति, तदास्ति तावदिति प्रतिवचनमपि भवत्येव । ननु क्रियायाः क्रमिकत्वमध्यारोपेणेत्युक्तं, गौणता तु प्राप्नोति । अत्र परिहरन्ति ।

व्यवहारस्य सिद्धत्वान्नेयं गुणकल्पना ।
उपचारो हि मुख्यस्यासंभवादपदिश्यते ॥ इति ।

यथा गोशब्दस्यासंभवात्सास्नादिमदर्थस्य वाहीकादिवृत्तित्वम्, एवं स्थिते सर्वपार्षदत्वाद्व्याकरणस्य तत्तत्तैर्थिकानुरोधेन हरिणा क्रियामतभेदाः प्रदर्शिताः तेपीह संक्षेपेण प्रदर्श्यन्ते । यथा यदनन्तरं फलं निष्पद्यते सा क्रिया । यथौदनं पचतीत्यत्र विक्लेदनं, तदनन्तरं फलनिष्पादात्, तदेव कारकं, नहि साक्षादजनयत्कारकं नाम । अधिश्रयणादीनां विक्लेदनोपयोगित्वान्न वैयर्थ्यं, तेषु तु पच्यादिप्रयोगस्तदर्थत्वेन विक्लेदनरूपाध्यारोपात् । पौर्वापर्यं तु पूर्वापरक्षणापेक्षया । उक्तं च—

अनन्तरं फलं यस्याः कल्प्यते तां क्रियां विदुः ।
प्रधानभूता तादर्थ्यादन्यासां तु तदाख्यता ॥ इति ।

अथ वा चैत्रः पचति, मैत्रः पचति, क्षीरं पचति, ओदनं पचति, इत्यादिषु कर्तृकर्मभेदेन भिन्नेषु पाकादिषु पच्यादिप्रत्ययानुवृत्तेर्घटादिषु घटत्वादिवदस्तिपचित्वादिकं

(१) अनाश्रितत्वादिति पुस्तकान्तरे ।

नाम जातिः सा क्रिया । ननु युगपदवस्थितैरवयवैरारब्धेषु सत्सु घटादिषु समवायाद्घटत्वादीनामभिव्यक्तिर्युज्यत, इह तु क्रमजन्मभिरयुगपद्भाविभिः क्षणैरवयव्यन्तरमारब्धुं न शक्यते तत्समवायात् पचित्वाद्यभिव्यक्तिः स्यात् । नैष दोषः । क्रमजन्मभिरयुगपद्भाविभिरनारब्धावयविभिरुत्क्षेपणादिक्षणैरुत्क्षेपणत्वादीनामिवाभिव्यक्त्युपपत्तेः । यथैव चोत्क्षेपणाद्यवयवकर्माणि इदमहमुत्क्षिपामीत्यादिबुद्धीनां विशिष्टप्रयत्नजन्यतया मिथः स्वतो भिन्नान्युत्क्षेपणत्वादीनामाधारत्वमपि प्रतिपद्यमानानि दुरवधारत्वाद्विशिष्टजातिविषयां बुद्धिं न प्रकल्पयन्ति, एवमिहाप्येकैकक्षणदर्शनेन पचित्वादीनामप्रत्ययः । अत्र च साध्यत्वक्रमिकत्वे व्यञ्जकक्षणद्वारेण । उक्तं च

जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्तिनीम् ।
असाध्यव्यक्तिरूपेण सा साध्येवोपकल्प्यते(१) ॥

एकैकस्मिन्क्षणेपि पचित्वादेर्वस्तुतो विद्यमानत्वात्तत्रतत्र शब्दप्रयोग उपपद्यते । अथ वा कारकभेदभिन्नविघटनादिरूपाया यस्याः क्रियाव्यक्तेरनन्तरं फलं निष्पद्यते तत्र समवेता विघटनत्वादिका पच्यादिक्रिया । अस्याश्च साध्यत्वादिकमाश्रयद्वारकम् । यदाह

अन्ते या वा क्रिया भावो जातिः सैव क्रिया स्मृता ।
सा व्यक्तेरनुनिष्पादे जायमानेव गम्यते ॥ इति ।

अत्रापि मते व्यक्तिदर्शनवत्त्वादर्थादन्यत्र पच्यादिप्रयोगः । अथ वाधिश्रयणादिव्यापारविशिष्टेषु कारकेष्वधिश्रयणादिव्यापारेष्वन्त्य एव व्यापारे समवेतोपहितभेदा सत्ता क्रिया । तदुक्तम्—

स्वव्यापारविशिष्टानां सत्ता वा कर्तृकर्मणाम् ।
क्रिया व्यापारभेदेषु सत्ता वा समवायिनी ॥
अन्ते वात्मनि या सत्ता सा क्रिया कैश्चिदिष्यते ।
भाव एव हि धात्वर्थ इत्यवच्छिन्न आगमः ॥ इति ।

भाव एव हि इत्यादिना 'षट् भावविकारा इति ह स्माह भगवान् वार्ष्यायणिः' इति भाष्यकारानुमतं निरुक्तकारवाक्यमस्य संवादकत्वेन दर्शयति । जातिसमुद्देशेप्युक्तम्—

प्राप्तक्रमविशेषा तु क्रिया सैवाभिधीयते ।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते ॥

व्यापारविशेषाणां साध्यत्वात्क्रमिकत्वाच्च तदुपहितायाश्च ते भवतः । अथ वा शब्दोच्चारणसमनन्तरं योर्थः प्रतिभासते बुद्ध्याकारत्वेन स शब्दार्थः । यदुक्तं, 'बुद्धिप्रतिभासः शब्दार्थः' इति । यदि हि बहिः सत्तासमाविष्टार्थोर्थः स्यात् तदा पटोस्ति नास्तीत्यादौ पौनरुक्त्यविरोधौ स्यातां, तथा ऽसतो जन्मायोगाद् पटो जायत इत्यादिप्रयोगोऽनुपपन्नः स्यात् । किं च बहिरत्यन्तासत्सु शशविषाणादिषु तत्तच्छब्दप्रयोगो न स्यात्, बुद्ध्युपारूढे तु शब्दार्थत्वे दोषा नावतरन्ति । बुद्धिसत्तासमाविष्टस्य बहिस्सत्ताऽसत्ताजननप्रतिपादनायास्ति नास्ति जायत इति प्रयोगस्योपपन्नत्वात् । अर्थक्रियाकारित्वं तु दृश्यविकल्पयोरभेदाध्यवसायादुपपद्यते शशविषाणादिष्वप्यस्तिप्रयोगो नास्तिप्रयोगश्च बुद्धिसत्त्वयैवास्ति न तु बाह्यसत्त्वयेत्येवं प्रतिपादनाय, तस्माद्धातूनामपि बुद्धिसिद्धाः क्षणास्तद्गता जातिः सत्ता वार्थः सैव क्रिया । साध्यतादिकं वा भेदेनाध्यवसितं दृश्यक्षणद्वारेण । उक्तं हि—

बुद्धिं तज्जातिमन्ये तु बुद्धिसत्तामथापरे ।
प्रत्यस्तरूपां भावेषु क्रियेति प्रतिजानते ॥ इति ॥

बुद्धिशब्देन बुद्धिप्रतिभास्याकारोऽत्र विवक्षितः । तदेवं भुवः क्रियावाचित्वात्पाठाच्च

(१) उपलक्ष्येते इति पाठान्तरम् ।

"भूवादयो धातव" इति धातुत्वे *वर्त्तमाने लट्* इति वर्तमानत्वोपाधिकार्थाद्धातोर्लट् *प्रत्यः* । *परश्च* इतिप्रत्ययसंज्ञकः परस्तात् । ननु बहवः क्षणा धातुवाच्यास्तत्र केचन भूता भविष्यन्त इति तेषामविद्यमानत्वात् कथं वर्त्तमानत्वं धात्वर्थविशेषणम् । उच्यते । नेह विद्यमानत्वं वर्त्तमानत्वं किं तर्हि प्रारब्धापरिसमाप्तत्वं, तच्च यावतः क्षणसमूहस्य फलावधिप्रवृत्तिः तावतः प्राक् फलजननादभेदेनाध्यवसितस्यास्त्येव । एवं च काल्पनिकसमूहाकारेण विद्यमानत्वं वर्त्तमानत्वमित्युक्तं भवति ।

कार्योत्पत्तौ समर्थं वा स्वेन धर्मेण तत्तथा ।
आत्मतत्त्वेन गृह्येत सा चास्मिन्वर्त्तमानता ॥ इति ॥

अस्यार्थः, वाशब्दो वक्ष्यमाणपक्षापेक्षः, एकैकक्षणानन्तरं फलनिष्पत्तेरदर्शनादितरक्षणवैयर्थ्यप्रसङ्गात्सर्वक्षणानन्तरदर्शनाच्चैकफलसाधनत्वेन क्षणानां कल्पितमेकं समुदायरूपं कार्योत्पत्तौ समर्थमित्युच्यते, तत्स्वेन धर्मेण क्रमवत्त्वेन तथा युक्तमात्मतत्त्वेनात्मीयेन विद्यमानत्वेन गृह्यते सेयमस्मिन्समुदाये वर्त्तमानतेति । वाशब्दसूचितः पक्ष उच्यते, विप्रसृतावयवः क्रियाकलापः प्रयोक्तुः संकलनबुद्ध्यारूढः प्रतिपत्तृबुद्धौ संक्रान्तस्तस्या एकत्वाद्वर्त्तमानत्वाच्च तदभेदेनैको वर्त्तमानश्च व्यपदिश्यत इति । उक्तं च

क्रियाप्रबन्धरूपं यत् बुद्ध्यात्मा विनिगृह्यते ।
संक्रान्तबिम्बमेकत्र तामाहुर्वर्तमानताम् ॥ इति ॥

अयमर्थः । प्रयोक्तुः संकलनबुद्धेरात्मा क्रियाप्रबन्धरूपं वस्तु एकत्र प्रतिपत्तुर्ज्ञाने संक्रान्तबिम्बं संक्रान्तस्वरूपं यद्विनिगृह्यते ऽवधार्यते तस्मात्तस्य ज्ञानस्य वर्त्तमानतामेव तदभेदात् क्रियाया वर्त्तमानतामाहुरिति । ननु यथोपलब्धिः स्मरणमुपलब्धिश्च क्रमेणेति प्रयोक्तुः कथं संकलनात्मिकैका बुद्धिर्यदुपारोहेणासौ प्रतिपत्तुः क्रियाकलापं शब्देन युगपदवगमयेत्, ततश्चैकबुद्ध्युपारोहाभावात्कथमेकत्ववर्त्तमानत्वे स्याताम्, नैष दोषः ।अनुभववासनायाः प्रत्यासन्नत्वात्क्रमेणानुभवतामपि संकलनायोगात् । अनुभवपूर्वत्वं हि स्मरणस्य नियतं न तु क्रमिकत्वमपि, अन्यथा समुच्चयशतादिप्रत्ययाभावप्रसङ्गात् । नन्वेवमस्त्वस्यैव बौद्धस्य (१)वर्त्तमानत्वं कथं बाह्यस्येति चेन्न । दृश्यविकल्पयोरभेदाध्यवसायात् । अन्ये तु काल एव क्रियाया उत्पन्नध्वस्तत्वेन साधनसंपत्त्या संभाव्यमानोदयत्वेन प्रारब्धापरिसमाप्तत्वेन चोपहितः सन् क्रमेण भूतादिभेदं प्रतिपद्यते, तत्काल‌योगात्क्रियाया अपि तत्तद्व्यपदेश इति । उक्तं च

क्रियोपाधिश्च सन् भूतभविष्यद्वर्त्तमानता ।
एकादशभिराकारैर्विभक्ता प्रतिपद्यते ॥ इति ।

काल इति शेषः । एकादशत्वमप्युक्तम् ।

भूतः पञ्चविधस्तत्र भविष्यच्च चतुर्विधः ।
वर्त्तमानो द्विधा ख्यात इत्येकादशकल्पना । इति ॥

तत्र तावदद्यतनानद्यतनव्यामिश्रसामान्यरूपाश्चत्वारो मुख्यभूतभेदाः । सामान्यमपि विशेषेभ्यो व्यावृत्तेर्भेदः । उक्तं च "अनेकमन्यपदार्थे" इत्यत्र सामान्यमपि यथा विशेषस्तद्वदिति । परोक्षस्त्वनद्यतनभूतभेदो न तु भूतभेद इति न पृथग्गण्यते । "आशंसायां भूतवच्च" इत्यतिदिष्टभूतकार्यो भविष्यत्तथैको गौणो भूत इति भूतः पञ्चविधः । भविष्यत्तु गौणाभावादद्यतनादिभेदेन चतुर्विधः । "वर्तमानसामीप्य" इत्यतिदिष्टवर्त्तमानकार्यौ भूतभविष्यन्तौ गौणौ, तदेवमेकादशभेदा कालस्य, यद्यप्यन्येऽप्यौपाधिका भेदाः सन्ति तथापि शास्त्रप्रक्रियायामियन्त एवोपयुज्यन्त इत्येवमुक्तंगतमदः । लटोऽकारटकारयोः "उपदेशेऽजनुनासिक-

(१) अस्त्वेवं बौद्धस्येति पाठः ।

इत्" "हलन्त्यम्" इतीत्संज्ञा । उपदेशो धातुसूत्रप्रातिपदिकप्रत्ययागमादेशलक्षणः । प्रतिज्ञानुनासिक्याः पाणिनीयाः । "तस्य लोप" *अदर्शनं लोपः* अदर्शनं चेह प्रसक्तस्य शब्दस्य लोपः, प्रयोजनं लडित्यनुवादर्ष्टिद्व्यपदेशश्चैषामन्येषामप्यनुबन्धानाम् । ननु "शपसर्" "हल्" इत्यत्र "लकारस्येत्त्वे तेन "आदिरन्त्येन सहेता" इति प्रत्याहारः, सति च तस्मिन् "लण्" इत्यत्र लकारस्य हल्त्वात्तस्यैव "शपसर्" "हल्" इत्यत्रान्ते निर्देशादित्संज्ञा, तदाश्रयश्चं हलिति प्रत्याहारः, इतीतरेतराश्रयत्वादयमेव तावत् प्रत्याहारो ऽनुपपन्नस्ततः सर्वेषामेव णकारादीनामित्त्वं न स्यादिति सर्वप्रत्याहारव्यवहारो ऽनुपपन्न इति कथमत्राच्त्वेन हल्त्वेन चाकारटकारयोरित्त्वे, एवं चादिरन्त्येनेति ग्राहकसूत्रमपि व्यर्थं स्यादिति चेत् । नैष दोषः । हलितिसूत्रे(१) हकारात्पर लृकारः, लपरत्वं तु तस्यैकादेशलक्षणकृतम् । तेन तस्याच्त्वादित्त्वं भविष्यति, स एव च "हलन्त्यम्" इत्यत्राप्येकादेशेन लपरेण निर्दिष्ट इति । एवमपीतरेतराश्रयमेव लृकारस्य । सत्यामित्संज्ञायां हलितिप्रत्याहारः, सत्यस्मिन्नैऔजिति चकारस्येत्त्वं, तस्मिंश्च सत्यजितिप्रत्याहारः, सत्यस्मिन्नैऔजिति चकारस्येत्त्वं, तस्मिंश्च सत्यजितिप्रत्याहारः, अस्मिंश्च प्रत्याहारे सति लृकारस्येत्संज्ञया भाव्यमिति । एवं तर्हि हल् च ल् चेति समाहारद्वन्द्वेन द्वितीयस्यापि लकारस्य निर्देशात् प्रत्याहारमन्तरेण तस्येत्संज्ञासिद्धिः, अश्रवणन्तु संयोगान्तलोपेन । अथ वा श्वेतो धावतीत्यादाविव द्वितीयमप्यत्र हल्ग्रहणं तन्त्रेणोपादीयते, तत्रैकेन हस्य लिति हकारसमीपस्य लकारस्य विनैव प्रत्याहारादित्संज्ञा भविष्यति । यद्वा हस्य ल् हलिति तत्पुरुषस्य प्रत्याहारस्य च हल्शब्दस्यैकशेषे ऽर्थद्वयं लभ्यत इति न संकटं किं चित् । तत्पुरुषः पुल्लिङ्गः प्रत्याहारस्तूभयलिङ्गोऽप्यन्तमित्यनेन साहचर्यादिह नपुंसकलिङ्गः । "नपुंसकमनपुंसकेन" इतितस्यैकशेष एकत्वं च ॥

*कर्मणि च भावे चाकर्मकेभ्यः* ॥ उत्सृष्टानुबन्धश्चायं लकारः, लकारः सकर्मकेभ्यो धातुभ्यः कर्मणि कर्त्तरि च भवन्ति, अकर्मकेभ्यस्तु भावे कर्त्तरि चेति यथायोगं कर्त्रादौ भवन्ति ॥

*स्वतन्त्रः कर्त्ता* ॥ क्रियाप्रसिद्धौ यत्कारकं प्रधानभूतं विवक्षितं तत् कर्तृसंज्ञं भवति । ननु च सामग्रीसाध्यायां क्रियायां स्वस्वव्यापारे सर्वेषां स्वातन्त्र्यात् कथमेकस्य तत् । उच्यते । करणादिप्रवृत्तेः प्रागेव परस्मादर्थितादेरेव निमित्तात्कर्तुः प्रवृत्तिः, करणादि तु तदधीनप्रवृत्ति । तथाहि । अर्थी हि कर्त्ता तत्प्रयुङ्क्ते न तदेनम् । किं च तस्य प्रतिनिधिर्दृश्यते, व्रीह्यपचारे नीवारैरिज्यते, कर्तुः स नास्ति तद्भेदे क्रियान्तरमेवेति प्रसिद्धिः । किं च कारकान्तराद्युपादानेप्यसौ दृश्यते भवत्यादिषु, तस्माद्युक्तं स्वातन्त्र्यम् । तथा चोक्तम्—

प्रागन्यतः शक्तिलाभान्यग्भावापादनादपि ।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्त्तनात् ॥
अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात् ।
आरादप्युपकारित्वात्स्वातन्त्र्यं कर्तुरुच्यते ॥ इति

प्रागन्यतः शक्तिलाभादीनां शब्देन प्रतीतिमात्रस्य विवक्षणादचेतनेष्वपि तदनपायात् कर्तृतोपपत्तिः उक्तं च—

सर्वैरभ्युदितैः शब्दैर्नियमो न तु वस्तुनि ।
कर्तृधर्मविवक्षायां शब्दात् कर्त्ता प्रतीयते ॥ इति

वृत्तौ तु स्वातन्त्र्येणागुणभावो विवक्ष्यत इति तस्य च सार्वत्रिकत्वात्सर्वत्र कर्तृतोपपत्तिः ।

कर्त्ता च त्रिविधो ज्ञेयः कारकाणां प्रवर्त्तकः ।
केवलो, हेतुकर्त्ता च कर्मकर्त्ता तथापरः ॥ इति

*कर्तुरीप्सिततमं कर्म* ॥ कर्त्रा क्रियया यदाप्तुमिष्टतमं तत्कर्म ॥ *तथा युक्तं चानो-

---

(१) हलिति सूत्रं लृकारान्तमिति पाठान्तरम् ।

प्सितम्* । येनैव प्रकारेणेप्सिततमं क्रियया युज्यते तेनैव प्रकारेण तथा युज्यमानमनीप्सितमपि कर्म ॥ *अकथितं च* । अपादानादिविशेषकथारहितं दुह्यादिकारकं गवादि च कर्म ॥ *दिवः कर्म च* दिवः साधकतमं करणं तत्कर्मेत्यादि चतुर्विधं कर्मेप्सिततमनीप्सिततमाकथितसंज्ञान्तरपूर्वभेदेन । तत्राद्यं त्रिधा, निर्वर्त्यं विकार्यं प्राप्यमिति । द्वितीयमपि द्वेधा, द्वेष्यमितरदिति । तदुक्तम्—

निर्वर्त्यं च विकार्यं च प्राप्यं चेति त्रिधा मतम् ।
तत्रेप्सिततमं कर्म चतुर्धान्यत्तु कल्पितम् ॥
औदासीन्येन यत्प्राप्यं यच्च कर्तुरनीप्सितम् ।
संज्ञान्तरैरनाख्यातं तद्यच्चाप्यन्यपूर्वकम् ॥ इति

तत्र निर्वर्त्यं यस्योपादानकारणं नास्ति सदपि वा तत्परिणामित्वेन नाश्रीयते, यथा संयोगं करोति, पटं करोति, मृदा घटं करोतीति । विकार्यमपि द्वेधा । प्रकृत्युच्छेदसंभूतमेकं, प्रकृत्यनुवृत्तौ गुणान्तरोत्पत्त्योपलक्षितमपरम्, यथा काष्ठानि भस्म करोति, हिरण्यं कुण्डलं करोतीति । व्रीहीन्प्रोक्षतीत्यादौ प्रोक्षणादिजन्यादृष्टरूपेण विक्रियमाणा व्रीह्यादयोपि विकार्यं कर्म । प्राप्यं पुनरेकमेव, यत्र क्रियाकृतो विशेषो न गम्यते यथा वेदमधीत इत्यादौ वेदादि । तथाचोक्तम्—

सती या ऽविद्यमाना वा प्रकृतिः परिणामिनी ।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥
तन्निर्वर्त्यं विकार्यं तु द्विधा कर्म व्यवस्थितम् ।
प्रकृत्युच्छेदसंभूतं किं चित् काष्ठादिभस्मवत् ॥
किं चित् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ।
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते ॥
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ इति ।

भावस्तु केवलो धात्वर्थः ॥ *लस्य* ॥ *तिप्तस्झि सिप् थस्थ मिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ्* ॥ तिबादयोऽष्टादश *षष्ठीस्थानेयोग* इति लस्य स्थाने स्युः । स्थानं प्रसङ्गो, योगः संबन्धः । इह शास्त्रेऽनियतसंबन्धविशेषा षष्ठी स्थानेयोगेत्यर्थः । तत्र तिबादिष्वविशेषेण प्राप्तेषु *शेषात्कर्त्तरि परस्मैपदम्* इति आत्मनेपदविषयादन्यत्वेन शेषादन्यस्मात्परस्मैपदमेव तच्च कर्त्तर्य्येव । आत्मनेपदविषयश्च स येषां "अनुदात्तङित" इत्यादिनाऽऽत्मनेपदं विहितम् ॥ *लः परस्मैपदम्* ॥ *तङानावात्मनेपदम्* ॥ तङितितिबादिसूत्रेणापात्तास्तादयो नव प्रत्याहारेणोच्यन्ते । आनइति शानच्कानचौ, अत्र यद्यपि "लः परस्मैपदम्" इतिलादेशानां सामान्येन परस्मैपदसंज्ञोच्यते तथापि *आकडारादेकासंज्ञा* इत्यतः परेषां "कडाराः कर्मधारय" इत्यतः प्राचामेकस्यैकैव संज्ञेतिनियमात् तङानयोरात्मनेपदसंज्ञयाऽनवकाशया बाधिता सा तद्व्यतिरिक्तविषया ऽवतिष्ठते ॥ *युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः* ॥ युष्मदि समानाधिकरणे व्यवहिते वाव्यवहिते वा प्रयुज्यमाने वा लान्तार्थस्य युष्मदर्थविशेष्यत्वे एव मध्यमः ॥ *अस्मद्युत्तमः* ॥ पूर्ववद्व्याख्या ॥ *शेषे-प्रथमः* ॥ यत्र युष्मदस्मदी समानाधिकरणेन स्तःशेषस्तत्रैव प्रथमः ॥ *तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः* ॥ तिङः परस्मैपदान्यात्मनेपदानि च प्रत्येकं त्रीणित्रीणि पदानि भूत्वा यथासंख्यं प्रथमादिसंज्ञानि ॥ *यथासंख्यमनुदेशः समानाम्* ॥ संख्या क्रमः, अनुदेशः पश्चादुच्चार्यमाणो विधीयमानः, अनुदेशशब्दस्य संबन्धिशब्दत्वादाक्षिप्ता उद्देशिनः, तेषामनुदेशिनां च संख्यातः पाठतश्च समानानां यो यः क्रमस्तेन तेन क्रमेण संबन्ध इत्यर्थः । तत्राप्येवं व्यवस्था ॥ *बहुषु बहुवचनम्* ॥ *द्व्येकयोर्द्विवचनैकवचने* ॥ बहुत्वादिषु यथासंख्यं बहुवचनादीनि ॥ *तान्येकवचनद्विवचनबहुवचनान्येकशः* ॥ तानि लब्धप्रथमादिव्यपदेशानि-

त्रीणित्रीणि प्रत्येकं यथासंख्यमेकवचनादिसंज्ञानि । एवं तिबादिषु ॥ *कर्त्तरि शप्* । कर्तृवाचिनि सार्वधातुके धातोः शप्स्यात् ॥ *तिङ्शित्सार्वधातुकम्* ॥ प्रत्यय इति शेषः । शकारस्य *लशक्वतद्धिते* ॥ लशकवर्गास्तद्धितवर्जप्रत्ययाद्या इत इतीत्वाल्लोपः ॥ *सार्वधातुकार्द्धधातुकयोः* ॥ अनयोरिगन्ताङ्गस्थाने गुणः ॥ *आर्द्धधातुकं शेषः* ॥ तिङ्शिद्भिन्नो धातुसंशब्दनेन विहितः प्रत्यय आर्द्धधातुकम् ॥ *अदेङ्गुणः* ॥ अदेङौ मात्रिकद्विमात्रिकौ तद्भाविनावतद्भाविनौ च तौ च गुणौ ॥ *अणुदित्सवर्णस्य चाप्रत्ययः* ॥ अण् चोदिच्च गृह्यमाणः सवर्णग्राहको भवति विधीयमानमणं वर्जयित्वा, उदिच्छब्देन कादयः पञ्चोच्यन्ते ॥ *तुल्यास्यप्रयत्नं सवर्णम्* ॥ आस्यं ताल्वादि, तत्स्थः प्रयत्नो यस्य वर्णस्य येन तुल्यः स तं प्रति सवर्णः । अकुहविसर्जनीयानां कण्ठः । स्पृष्टं(१) करणं स्पर्शानामिति स्थानप्रयत्नसाम्यम् । कादयो मावसानाः स्पर्शाः ॥ *तपरस्तत्कालस्य* ॥ तः परो यस्मात्स च तात्परश्च तपरः, स उदात्तादिभिन्नं सवर्णमात्मना तुल्यकालं स्वं च ग्राहयतीति भिन्नकालाग्रहः । गुणविधौ च "इको गुणवृद्धी" इत्यनेन गुणवृद्ध्योः स्वसंज्ञया विधाने इक इत्युपस्थाप्यते । "अङ्गस्य" इति चाधिकृतम् ॥ *यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्* ॥ यस्मात्प्रत्ययविधिस्तदादि तच्च तस्मिन्नेव प्रत्ययेऽङ्गं, तत्रानयोः सामानाधिकरण्येनान्वयस्य न्याय्यत्वादिकोऽङ्गस्य विशेषणता । *येनविधिस्तदन्तस्य* ॥ यद्विशेषणमुपादाय किं चिद्विधीयते तदात्मान्तस्य स्वस्य च ग्राहकमिति तदन्तत्वलाभः ॥ *अलोन्त्यस्य* ॥ आदेशः षष्ठीनिर्दिष्टस्यान्त्यस्य भवति । अन्त्यस्यैवेति स्थानषष्ठी स्थानित्वं प्रतिपादयतीत्यन्त्यस्य स्थानित्वादिगन्ताङ्गान्त्यस्येत्युक्तार्थलाभः । स चेह गुणः *स्थानेऽन्तरतमः* ॥ अनेकादेशप्रसङ्गे सदृशतमः स्यात्, स सदृशः गुणादिसदृशात् स्थानसदृश इति नियमादुकारस्योपपद्यमानीयानामोष्ठ्य इत्योष्ठ्यस्यौदौतोः कण्ठोष्ठमिति ओष्ठ्य ओकारः । तस्य "एचोऽयवायावः" इति यथासंख्येनावादेशे सिद्धं (भवति इति) । अस्य च "सुप्तिङन्तं पदं" इति पदत्वे *युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ* इति पदात्परयोरपादादौ वर्त्तमानयोः समानवाक्यस्थयोः श्रूयमाणषष्ठ्यादिद्विवचनान्तयोरनयोर्यथासंख्यं वान्नावादेशौ भवतः । *बहुवचनस्य वस्नसौ*॥ *तेमयावेकवचनस्य* ॥ इमावादेशौ न द्वितीयैकवचनान्तयोः, *त्वामौ द्वितीयाया* इति त्वामोर्विधानात् । एषामपि पूर्ववद्व्याख्या, (भवति वाम्, भवति नौ, भवति वः, भवति नः, भवति ते, भवति मे, भवति त्वा, भवति मा) यथायोगं स्वं, देयं, प्राप्तमिति शेषः । एते चानेकाल्त्वात् "अनेकाल्शित्सर्वस्य" इति सर्वादेशाः । एषां च *स्थानिवदादेशोनल्विधौ"* इति स्थान्यलाश्रयकार्यं वर्जयित्वा स्थानिकार्यविधानात् पदत्वे तन्निबन्धनानि रुत्वादीनि यथायोगं ज्ञेयानि। (भवतः) अत्र तसः सकारस्य प्रयोजनाभावादित्त्वाभावः। न च लोप एव प्रयोजनम्, एवं हि नोपदिश्येत, "सिति च" इति पदत्वं यकाराद्यसर्वनामस्थानविषयमिति न प्रयोजनम् । यद्वा *विभक्तिश्च* इति सुपः तिङश्चैकवचनादिसंज्ञाः सन्तो विभक्तय इति । *न विभक्तौ तुस्माः* इतीत्त्वाभावेन ॥ *ससजुषो रुः* सान्तस्य पदस्य सजुषश्च रुरिति रुत्वे "खरवसानयोर्विसर्जनीयः" इति विसर्जनीयः ॥ *विरामो ऽवसानम्* । विरतिर्विरामः।वर्णस्याभावो ऽनुच्चारणं, तत्र वर्णेष्वप्युच्चरितप्रध्वंसिषु बुद्धिकृतं पौर्वापर्यमित्यभावरूपेऽवसानेऽपि तत्संभवात् परसप्तमीत्वोपपत्तिर्भवति । (भवन्ति) *झोन्तः* ॥ प्रत्ययादेरिति शेषः, अन्त्योकार उच्चारणार्थः, न तु तकारस्यानन्त्यत्वेनेत्त्वनिवृत्तये । तस्य प्रयोजनाभावादेव सिद्धेः । न च "तित्स्वरितम्" इति स्वरितत्वं प्रयोजनं, तितः प्रत्ययस्येति तत्र स्थितेः । न च स्थानिवत्त्वात्प्रत्ययः । तदेकदेशत्वादस्य । अत्रशबन्त्यकारयोः *अतो गुणे* । इत्यपदान्ताकाराद्गुणे परे तयोः पूर्वपरयोः पररूपमेकादेश इत्येकादेशं वर्णमात्राश्रयत्वे,

---

(१) प्रयत्नमिति पाठान्तरम् ।

नान्तरङ्गं प्रकृतिप्रत्ययापेक्षत्वाद्बहिरङ्गोपि गुणो 'वर्णादाङ्गं बलीय' इति बाधते, अस्ति च समानाश्रयत्वमनयोरुभयोर्विकरणापेक्षत्वात् पूर्वं त्वेकादेशे *अन्तादिवच्च* इत्येकादेश आश्रीयमाणं पूर्वं प्रत्यन्तवत्परं प्रत्यादिवदिति "सार्वधातुकमपित्" इत्यत्राश्रीयमाणस्य पितो ऽस्य सार्वधातुकस्यैकादेशस्यादिवद्भावाच्छपोपित्सार्वधातुकग्रहणात् ङित्त्वात् "क्ङिति च" इति क्ङिन्निमित्तयोरिग्लक्षणयोर्गुणवृद्ध्योर्निषेधात् गुणो न स्यात् । भवतु वा पूर्वमेकादेशस्तदाप्यदोषः । *अचः परस्मिन् पूर्वविधौ* इति परनिमित्तोऽजादेशोऽचः पूर्वसंबन्धिनि कार्यमात्रे कर्त्तव्ये स्थानिना तुल्यः स्यादिति स्थानिबुद्ध्या व्यवधानेन निषेधस्याप्रसङ्गात् । किं च तत्रापिदित्यस्य प्रसज्यप्रतिषेधत्वेन सिद्धान्तितत्वात् 'पित्सार्वधातुकं ङिन्न' इत्याश्रीयमाणं पितं प्रत्येकादेशस्यान्तवत्त्वात् ङित्त्वस्याप्रसङ्गात, अस्तु गुणैकादेशयोः प्रवृत्तौ कामचारः । (भवसि । भवथः । भवथ । भवामि । भवावः भवामः) । *अतो दीर्घो यञि* इति यञादौ सार्वधातुके ऽकारान्ताङ्गान्त्यस्य दीर्घः, स च स्थानितुल्य इति तादृश आकारः 'यस्मिन्विधिस्तदादावल्ग्रहण' इति यञादौति लाभः । *ऊकालोज्झ्रस्वदीर्घप्लुत* इत्यचो मात्रिकद्विमात्रिकत्रिमात्राः क्रमेण ह्रस्वादिसंज्ञाः ॥

*परोक्षे लिट्* भूतानद्यतनपरोक्षतोपाधिकार्थवृत्तेर्धातोर्लिट् । धातुवाच्यायाः क्रियाया इन्द्रियेणासंन्निकर्षात्परोक्षत्वे सिद्धे परोक्षग्रहणं साधनपरोक्षतार्थम् । पूर्ववत्तिबादयः । ते च "लिट् च" इति लिडादेशत्वादार्द्धधातुकाः । अत्र च "लङः शाकटायनस्यैव" इत्यत एवकारानुवृत्त्या न सार्वधातुका इति विकरणाभावः । एषां च लिडादेशानां नवानां तिबादीनां *परस्मैपदानां णलतुसुस्थलथुसणल्वमाः* इति यथासंख्यं णलादयः स्युः । ते च स्थानिवत्त्वेनार्द्धधातुकाः प्रत्ययाश्च । णलो णकारस्य प्रत्ययादित्वाच्च इत्संज्ञायां लोपः, प्रयोजनं वृद्ध्यादि । नन्वत्र णकारो लुप्यत इत्यनेन्ऽल्त्वाभावः "अनेकाल्शित्सर्वस्य" इति सर्वादेशत्वं न स्यात् । नैतत् । आदेशोत्तरकालं प्रत्ययत्वतदादित्वेन णकारस्येत्त्वे लोप इत्यादेशदशायामनेकाल्त्वात्, एवं भू अ इति स्थिते *अचो ञ्णिति* इति ञित्णित्प्रत्ययपरस्याजन्तस्याङ्गस्य वृद्धिः प्राप्नोति । वृद्धिरित्यादैचां तद्भावितानाम-तद्भावितानां "वृद्धिरादैच्" इतिसंज्ञा, तपरकरणादैचौ द्विमात्रिकौ गृह्येते तादपि परस्तपर इति । "भुवो वुग्लुङ्लिटोः" इत्यजादौ लुङि लिटि च विधीयमानो वुक् कृताकृतप्रसङ्गित्वेन नित्यो वृद्धिं बाधते । अत्र वृद्धौ कृतायामौकारान्तस्य प्राप्नोत्यन्यत्र तू-कारान्तस्येति शब्दान्तरप्राप्त्या वुगनित्य इति चेन्न । एकदेशविकृतस्यानेन्यत्वादत्र शब्दान्तरप्राप्तिरिति ॥ "अद्यन्तौ टकितौ" यथासंख्यं षष्ठीनिर्दिष्टस्येति वुगयं भुवोन्त्यः ॥ *लिटि धातोरनभ्यासस्य* ॥ धातोरवयवस्य प्रथमस्यैकाचो द्विर्वचनमजादेस्तु द्वितीयस्येति भुव आदिर्द्विरुच्यते । *पूर्वोभ्यासः* अत्र प्रकरणे, द्विरुक्तस्येति शेषः ॥ *हलादिः शेषः* अभ्यासस्याचो *ह्रस्वः* इति अभ्यासस्याचो ह्रस्वः । *भवतेरः* इति लिटि परेऽभ्यासान्तस्याकारन्तादेशः । *अभ्यासे चर्च* इति अभ्यासझलां चरो जशश्च । तत्र वर्गाणां प्रथमद्वितीयाः शषसा विसर्जनीयजिह्वामूलीयेपध्मानीया अघोषा विवृतकण्ठाः श्वासानुप्रदानाः । तृतीयचतुर्थपञ्चमहकार घोषवन्तः संवृतकण्ठा नादानुप्रदाना इत्योष्ठ्यस्य घोषवतः संवृतकण्ठस्य नादानुप्रदानस्य भकारस्य तादृशो बकारः ( बभूव ) ननु *अचि श्नुधातुभ्रुवां य्वोरियङुवङौ* । इत्यजादौ प्रत्यये श्नुभ्रुवोरन्त्यस्य धात्वन्तयोरिवर्णोवर्णयोरियङुवङोर्विधानात् । अत्रोवङि कर्त्तव्ये *असिद्धवदत्राभात्* । समानाश्रयमाभीयशास्त्रमाभीयेऽसिद्धमिति वुकोऽसिद्धत्वादुवङ् स्यात् अस्तु, पुनर्वुग् भविष्यति । ततश्च *उपधायां च* । धातोरुपधाभूतौ हल्परौ यौ रेफवकारौ ताभ्यां पूर्वस्येणो दीर्घः स्यादिति दीर्घत्वं । *लोपोव्योर्वलि* इति पूर्वयकारवकायोर्वलिपरे लोप-इति पूर्वस्य वकारस्य लोपे सेत्स्यति । बभूवेति न सिद्धति ॥ *पूर्वत्रासिद्धम्* ॥ अस्माद्योगात् पूर्वत्रासिद्धाः परे च मिथः पूर्वत्र पूर्वत्रासिद्धा इति "उपधायां च" इत्यस्य वलि लोपे

त्यसिद्धत्वात्पूर्वलोपे हल्पर उपधावकारो नेति दीर्घाप्रसङ्गात् । अथ वा दीर्घवलोपयोरन्तरङ्गयोः कर्त्तव्ययोः 'असिद्धं बहिरङ्ग' इति बहिरङ्गस्य वुकोऽसिद्धत्वादत्रैव दीर्घत्वं स्यात् नापि वलोपः, एवं तर्हि [ वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ] इति वुकः सिद्धत्वादुवङ्न भविष्यति । "श्नसोरल्लोप" इति तपरकारणाल्लिङ्गादाभीयस्यासिद्धत्वस्यानित्यत्वाद्वात्र वुकः सिद्धत्वं भवति । ( बभूवतुः । बभूवुः । बभूविथ ) *आर्द्धधातुकस्येड्वलादेः* टित्वात्तदादिः । बभूविथ इत्यत्र वृद्धिर्गुणो वुका बाध्यते । बभूवथुः स्थानित्वेन विभक्तित्वान्न सकारस्येत्त्वम् । (यूयं बभूव ) । नन्वत्राकारो "अलोन्त्यस्य" इति थशब्दाकारस्यादेशः प्राप्नोति फलं च यथासंख्यं स्यात् । मैवम् । अत्र धातोरित्यनुवर्तते । ,तस्मात्परस्य विधीयमानोऽकार "आदेः परस्य" इति थकारस्य । ततो ऽयोरकारयोः पररूपम् । (अहं बभूव । बभूविव । बभूविम) उत्तमविषये चित्तव्या क्षेपरोक्षतासंभवः । अत्र *असंयोगाल्लिट् कित्* ॥ असंयोगान्ताद्धातोः परोऽपित्लिट् दिति वमयोः कित्त्वे *श्र्युकः किति* इति श्रिञ उगन्ताच्च धातोः परस्य कितो नेडिप्राप्तस्य निषेधस्य *कृसृभृवृस्तुद्रुस्रुश्रुवोलिटि* क्रादय एव लिट्यनिटः, ततोन्ये लिटि सेट इति नियमात्सेट्त्वम् । अत्र के चिदेवमाहुः । वुग्विधावोरित्यनुवृत्तेर्गुणयोः तयोरुवर्णान्तत्वाभावात्तल्लक्षणस्य वुकोऽप्राप्तेस्तस्याप्यनित्यत्वोत्परत्वात्प्राप्तयाणवृद्ध्यो *इन्धिभवतिभ्यां च* । आभ्यां परो लिट् किदिति कित्त्वेन बाधस्ततो वुक् । अत्र इन्ग्रहणानुवृत्तेर्ङित्वमप्यतिदिश्यते इत्युभयातिदेशसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेधः । तेन यङ्लुकि भवतीति निर्देशात्कित्वाभावात् वृद्धिगुणयोः कृतयोरुवर्णान्तत्वाद्वुगभावात् ( बोभाव, बोभविथ, बोभव ) इति सिद्धमिति । सर्वमेतद्वार्त्तिकविरुद्धं, यदाह— [ "इन्धेश्छन्दोविषयत्वात् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनार्थक्यम्" ] इति ॥

*अनद्यतने लुट्* ॥ अह्न उभयतोर्द्धरात्रमद्यतनः कालः । अविद्यमानाद्यतनभविष्यत्युपाधिकार्थाद्धातोर्लुट् स्यात्, लस्य तिबादिषु *स्यतासी लृलुटोः* ॥ लृ इति लृङ्लृटोरुत्सृष्टानुबन्धयोः सामान्येन ग्रहणम् , लृलुटारादेशेषु परेषु धातोर्यथासंख्यं स्यतासी स्याताम् । अत्र केचित्तासेरिकारमुच्चारणार्थमाहुः । परमते त्वनुनासिकं सलोपप्रतिषेधार्थम् । इह तु प्रयोजनाभावान्न प्रपञ्च्यते । *लुटः प्रथमस्य डारौरसः* ॥ लुडादेशस्यात्मनेपदप्रथमस्य परस्मैपदप्रथमस्य च यथासंख्यं डारौरसः स्युः । *टेः* इति भस्याङ्गस्य टेर्डिति विधीयमानो लोपोत्राभत्वेपि डित्वसामर्थ्याद्भवति । *अचोन्त्यादि टि* ॥ एकत्र सन्निविष्टानामचासन्त्याजादिष्टिः । इङ्गुणादेशाः । (भविता) । अत्रेटः *पुगन्तलघूपधस्य च* पुगन्तस्याङ्गस्य लघूपधस्य चेको गुण इति प्राप्तो "दीर्धीवेवीटाम्" इतिनिषिध्यते ॥ *ह्रस्वं लघु* ॥ *अलोन्त्यात् पूर्वउपधा* ॥ धात्वादौ वर्णसमुदायेऽन्त्यादलः पूर्व उपधा । (भवितारौ । भवितारः) । *रि च* इति । रेफादौ प्रत्यये तासस्त्योः सकारस्य लोपः । (भवितासि) । *तासस्त्योर्लोपः* ॥ सकारस्य सकारादौ प्रत्यय इति शेषः । अत्र "नाज्झलौ" इत्यज्झलोमिथः सावर्ण्यनिषेधे ऽपवादे प्रवृत्ते पश्चात्तद्विषयपरिहारेण सवर्णसंज्ञाप्रवृत्तौ तदुपजीव्यप्रवर्त्तमानस्य ग्रहणकशास्त्रस्य "नाज्झलौ" इत्यत्रानिष्पन्नत्वादज्ग्रहणेन पठितानामेवाचां ग्रहणादन्येषां हल्भिः सवर्णसंज्ञाया अनिषेधादाकारस्य सवर्णेन हकारेण ग्रहणादिण्त्वात् *आदेशप्रत्ययोः* इतीण्कोश्च परस्यादेशरूपस्य प्रत्ययावयवस्य च सकारस्य विधीयमानं षत्वं कस्मान्नेति चेत्, न, हकारो विवृतः, आकारो विवृततरः एवं हि पठन्ति । 'ए औ विवृततरौ ताभ्यामप्याकार' इति । "वयस्यासुमूर्ध्नो" इत्यादिनिर्देशात् । यद्वा विवृतमूष्मणां स्वराणां च इत्यत्र इषत्स्पृष्टमन्तस्थानामित्यतः ईषदित्यनुवर्त्तते, तच्च पृथग्विभक्तिनिर्दिष्टैः प्राथमैकैरूष्मभिरेव संबध्यते न स्वरैरिति नैव सावर्ण्यप्रसङ्गः । अत एव भाष्यवार्त्तिकयोः सूत्रं प्रत्याख्यातम् । (भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ) ॥

*लृट् शेषे च* ॥ क्रियार्थक्रियोपपदादन्यो भविष्यत्कालः शेषस्तत्र शेषे चात्क्रियार्थ-
योपपदे भविष्यति च धातोर्लृट् स्यात्। चतुर्विधो भविष्यदिन्नित्युक्तं तत्रानद्यतने लुड्विधा-
नादन्यत्रायं विधिः। 'अनद्यतन' इति बहुव्रीहिनिर्दिशाद्व्यामिश्रेप्ययमेव । लस्य ति-
बादिषु "स्यतासी" इति स्यः। इडागमः। (भविष्यति। भविष्यसि)। भविष्यामि
क्रियायां क्रियार्थायामुपपदे। धनी भविष्यामीति राजानं सेवते। "आदेशप्रत्यययोः" इति
सर्वत्र षत्वम् ॥

*लोट् च* ॥ विध्यादिष्वर्थेषु धातोर्लोट् स्यात्। ते च वक्ष्यन्ते। लस्य तिबादिषु *एरुः*
इति। लोडादेशेकारस्योकारः। (भवतु, भवताम्)। अत्र *लोटो लङ्वत्* इति लङ्वत्का-
योतिदेशात् *तस्थस्थमिपां तान्तन्तामः* इति। लङस्तसादीनां विधीयमानास्तामादय आदे-
शा लोट्यपि भवन्तीति तसस्ताम्। (भवन्तु। भव)। *सेर्ह्यपिच्च* इति। लोटःसेर्हिरादेशः
अपिदिति वचनात् स्थानिवत्त्वेन पिन्न भवति। अस्य प्रयोजनं तत्र तत्र दर्शयिष्यते। *अतो हेः*
इत्यकारान्तात् परत्वेन लुक्। *प्रत्ययस्य लुक्श्लुलुपः* इति। प्रत्ययादर्शनस्यैताः संज्ञाः
अनेकसंज्ञाविधानेन तद्भावितग्रहणविज्ञानात् तत्तच्छब्दभावितस्य प्रत्ययादर्शनस्य सा सा सं-
ज्ञेति संज्ञानामसङ्करो भवति। विधिप्रदेशेषु भाविसंज्ञाविज्ञानान्नेतरेतराश्रयत्वम्। यथास्य
सूत्रस्य शाटकं वयेति। अत्र यदि शाटको न वातव्यः, अथ वातव्यः, अथ वातव्यो न शाटक
इति विप्रतिषेधात् स वातव्यो यस्योतस्य शाटक इति व्यपदेशो भवति इत्यर्थः। (भवतम्।
भवत) लङ्वद्भावात्तंतौ। तांतमोर्मकारस्य *न विभक्तौ तुस्माः* इतीत्वनिषेधः। (भवानि)।
*मेर्निः*। इतिलोडादेशस्य मेर्निरादेशः, अयं चापवादत्वाल्लङ्वद्भावप्राप्तमादेशं बाधते, मर्नु-
रित्यवचनादेरुर्न भवति। (१) (भवाव। भवाम) लङ्वद्भावात् *नित्यंङितः* इति ङित्वाल्ला-
देशोत्तमसकारस्य विधीयमानो लोपोत्रापि भवति। *आडुत्तमस्य पिच्च* इति लोडादेशोत्त-
मस्याडागमः टित्वादादिः। तस्य सवर्णदीर्घः। पिच्चत्युत्तमस्य पित्वातिदेशः, प्रयोजनं
तत्रतत्र भविष्यति। अडागममन्तरेण "अतो दीर्घो यञि" इति दीर्घेणापि रूपे सिद्धे तत्प्र-
वृत्तिः पर्जन्यवल्लक्षणप्रवृत्त्या। ननु तामादयो ङिल्लादेशानामुच्यन्ते न त्वाहत्य लङादेशा-
नामिति कथं ते लङ्वद्भावेन प्राप्यन्ते। उच्यते। विशेषातिदेशे सामान्यस्याप्यतिदेशात्।
तथा हि वसिष्ठवद [illegible]त्युक्ते वसिष्ठत्वप्रयुक्तं ब्राह्मणत्वप्रयुक्तमप्यतिदिश्यते। कथं तर्हि लुङ्-
लङ्लृङ्क्ष्वडुदात्तः* इत्याहत्य विधीयमानोऽडागमो न भवति। अत्र वृत्तिकारः परिहारमाह।
*विदो लटो वा* इति वाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा भविष्यतीति। अत एव
तामादयः सलोपश्चेति तेन परिगणितं, यद्वा लोट इत्युपमेये षष्ठीदर्शनादुपमानं विज्ञायते,
लङ इव कार्य्यं तल्लोटो भविष्यतीति न तु लङि यत्कार्यं तल्लोटीति अडाडौ न भवतः। यदा-
र्थं लोट् "अशिषि लिङ्लोटौ" इत्याशिषि विधयते, आशीरिष्टस्य प्राप्तिस्तदा *तुह्योस्तात-
ङाशिष्यन्यतरस्याम्* इति तुह्योर्वा तातङादेशः। (भ[illegible]त्तः। भवतात्वं) ननु तातङयं
"अनेकाल्शित्सर्वस्य" इत्यस्यापवादेन "ङिच्च" इत्यनेनान्त्यस्य कस्मान्न भवति। उच्यते।
किमिदं ङित्वं ? ब्रूतादित्यादौ गुणवृद्धिप्रतिषेधार्थमुतान्त्यादेशार्थमिति संदिग्धप्रयोजनम्, न
चान्त्यादेशार्थत्वे गुणवृद्धिप्रतिषेधार्थत्वसंभवोऽप्रत्ययत्वात्, अनेकाल्त्वं तु निश्चितं, "ङि-
च्च" इत्येतच्चानङादिष्वनन्यप्रयोजनेषु ङित्त्वेषु सावकाशमितीहासंदिग्धपर "अनेकाल्-
शित्सर्वस्य" इत्येतत्प्रवर्त्तते। भवत्त्वमित्यत्र तातङा परेण पूर्वबाधितस्य हेर्लुकः स्थानिव-
द्भावेन पुनः प्रवृत्तिः सकृद्गतपरिभाषया न भवति। यद्वा—*हुझल्भ्यो हेर्धिः* इत्यतो

---

(१) तथा *इतश्चे*ति ङिल्लादेशपरस्मैपदेकारस्य विधीयमानो लोपो लङ्वद्भावान्न
भवति। मेर्न इत्यवचनादित्यधिकं २ पुस्तकान्तरे।

विधेत्यनुवर्त्य "अतो हेः" इत्यत्र हिग्रहणमन्तरेण लुकि विधातव्ये 'पुनर्हिग्रहणस्य हेरिति
शिषणेन सुव्यहिपरिग्रहार्थत्वात्, इदमपि तातङः सर्वादेशत्वे प्रमाणम् ॥
*अनद्यतने लङ्* ॥ अविद्यमानाद्यतनभूतोपाध्यर्थाद्धातोर्लङ् स्यात् । लस्य तिबादिषु,
इतश्च" इतीकारलोपः । *लुङ्लङ्लृङ्क्ष्वडुदात्तः* इत्यङ्गस्याड्विधिः टित्वादादिः, उदात्तश्च ।
अभवत् । अभवद् ) *झलांजशोन्ते* ॥ पदान्ते झलां जश इत्यत्रान्तरतम्यात्तकारस्य दकारे
वसाने झलां वा चरित्यान्तरतम्यात्तकारः । (अभवताम् ) । *तस्थस्थमिपां तान्तन्तामः*
तसस्ताम् । (अभवन् ) अन्तादेशे इकारलोपे *संयोगान्तस्य लोपः* । संयोगान्तस्य
न्तस्य लोप इति तलोपः । *हलोनन्तराः संयोगः* ॥ अजव्यहित एव श्लिष्टोच्चारितहल्-
मुदायः संयोगः । (अभवः) । इकारलोपे रुत्वविसर्जनीयौ । (अभवतम् । अभवत । अभ-
म् । अभवाव । अभावाम ) । "तस्थस्थमिपां तान्तन्तामः" "नित्यं ङितः" इति तामादयः
लोपश्च ॥

*विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्* ॥ विधिः प्रेरणं भृत्यादेः कस्यां चित्
क्रियायां नियोजनम् । निमन्त्रणं नित्यनैमित्तिककर्मविषया प्रवर्त्तना । आमन्त्रणं काम्यकर्म-
षया सा, अधीष्टः सत्कारपूर्विका सर्वकर्मविषया । एषु चतुर्ष्वपि प्रवर्त्तना नाम वर्त्तते सैव
लङर्थः । भेदेन तूपादानं प्रपञ्चार्थं, प्रवर्त्तना च प्रवृत्तिहेतुधर्मः, ।

प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्त्तनाम् ।

इत्याचार्याः । संप्रश्नः संप्रधारणं, तद्वदिदं वा कर्त्तव्यमिति । प्रार्थनं याचनम् । एषु प्रत्यया-
र्थविशेषणेषु धातोर्लिङ् स्यात् ॥ *यासुट् परस्मैपदेषूदात्तो ङिच्च* ॥ लिङः परस्मैपदेषु
तेषामेव यासुट् ङित्वादादिः, उदात्तश्च । सोयुटोपवादः । इदमेव ङिद्वचनं ज्ञापकं ङिल्लादेशानां
स्थानिवत्त्वेन ङित्वाभावस्य, यदि हि स्यात् अचिनवममार्जमित्यादौ गुणवृद्धी न स्याताम् ।
च ज्ञापकापेक्षा "सार्वधातुकमपित्" इत्यस्य पर्युदासत्त्वपक्षे, प्रसज्यप्रतिषेधत्वे तु पिन्ने-
निषेधेन स्थानिवत्त्वेन "सार्वधातुकमपित्" इत्यतिदेशेन प्राप्तस्य निवारणात्, चिनुया-
इत्यादिसिद्ध्यर्थन्तु वक्तव्यम् । भवयास्ति इति स्थिते । "सुट् तिथोः" । लिङ्सम्बन्धिनो-
स्तकारथकारयोः सुट् स्यादिति सुट् टित्वादादिः । अयं तकारथकारभक्तः यासुट् तु लिङ्-
भक्त इति विषयभेदादनयोर्न बाध्यबाधकभावः । *लिङः सलोपोनन्त्यस्य* । सार्वधातुकलिङः
संबन्धिनोनन्त्यस्य सस्य लोप इति यासुट्सुट्सकारयोर्लोपः, सुट् पर्जन्यवल्लक्षणप्रवृत्त्या तु
कृतो न त्वस्मिन् कृते वा ऽकृते विशेषो ऽस्ति लोपनात् । श्रवणं त्वाशीर्लिङात्मनेपदे । *अतो
येयः* इत्यदन्तादङ्गात्परस्य या इत्यस्येयादेशः । *आद्गुणः* इत्यवर्णान्तादचि पूर्वपरयोरेको
गुणो भवन् कण्ठ्यस्याकारस्य 'इचुयशानां तालु' इति तालव्यस्येकारस्य 'एदैतोः कण्ठतालु'
इति कण्ठतालव्य एकारः । यकारस्य वलि लोपः ( भवेत् । भवेतां, भवेयुः ) । "झेर्जुस्"
इति लिङादेशजुसादेशजकारो "जुसि च" इति विशेषणार्थः । *उस्यपदान्तात्* । अपदा-
न्तादवर्णादुसि परे पूर्वपरयोः पररूपमित्येतद्बाधित्वा "अतो येयः" परत्वान्नित्यत्वाच्च प्रवर्त्तते ।
यद्यप्यन्तरङ्गत्वात् पररूपं न्याय्यं तथापि यास् इत्येतस्य इय् भवतीति विप्रतिषेधसूत्रे
भाष्यकारैर्व्याख्यातत्वात् "लिङः सलोप" इत्यस्यापवाद इय् "अतो येय" इत्यत्र त्वाद्गुणे
कर्तव्ये यलोपस्य सिद्धत्वमार्षं, या इय इति वा पठनीयमिति बोध्यम् । ( भवेः । भवेतम् ।
भवेत । भवेयम् । भवेव । भवेम ।

"आशिषि लिङ्लोटौ" इति लिङ् । "लिङाशिषि" इत्यार्द्धधातुकत्वान्न लिङःसलोपः ।
"क्दिाशिषि" इति कित्त्वान्न गुणः । *स्कोः संयोगाद्योरन्ते च* । झलि परे यः संयोगः पदान्ते
च यः संयोस्तदाद्योः स्कोर्लोप इति झल्परसंयोगादित्वेन यासुटः सस्य लोपः, पदान्ते तु
संयोगे तदादित्वेन सुटोपि सकारो लुप्यते । ( भूयात् । भूयास्ताम् । भूयासुः । भूयाः ।
भूयास्तम् । भूयास्त । भूयासं, भूयास्व । भूयास्म ) । सलोपस्य पूर्वत्रासिद्धत्वेन तिस्योः

२ मा० धा०

संयोगान्तलोपो न भवति पदान्तसंयोगादिलोपस्यानवकाशत्वात्। ननु *हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्* इति हलन्ताद् दीर्घाद् ङ्याबन्ताच्च परस्य सुतिस्यपृक्तस्य लोपविधाने स्कोरिति सलोपस्य पूर्ववदसिद्धत्वाद्धलन्तात्परो ऽपृक्तत्वेन लोपः कस्मान्न भवति। सुतिस्यपृक्तमिति प्रत्ययनिर्देशेन प्रकृतेराक्षेपात्ततः परस्यापृक्तस्य लोपविधानात्। सकारान्तस्य प्रकृतित्वं, यद्वा ऽसिद्धत्वे भूयादित्यत्र यासुट् तस्य लोपे प्रसिद्ध इति तकारभक्तत्वादपृक्तस्यैवाभावः "अपृक्त एकाल् प्रत्ययः"।

*लुङ्* ॥ भूतोपाधिकार्थाद्धातोर्लुङ् स्यात्। भूतः पञ्चविध इत्युक्तं, तत्रानद्यतने विधानात्ततोन्यः सर्वो भूतोत्र गृह्यते। अनद्यतन इति बहुव्रीहिनिर्देशान्न व्यामिश्रे प्रसङ्गः। लस्य तिबादिषु "च्लि लुङि" इति च्लिः। तस्य "च्लेः सिच्" इति सिजादेशः। स्थानिन्यादेशे च चकारानुबन्धनस्य प्रयोजनं वक्ष्यते। तस्य "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" इति लुक्। स च नित्यत्वादिटः पूर्वं *दाधा घ्वदाप्* इति दाधारूपा धातवो घुसंज्ञाः। अडागमः। (अभूत्)। अत्र सिचो लुका लुप्तत्वात् प्रत्ययलक्षणाभावात् *सिचि वृद्धिः परस्मैपदेषु* इति परस्मैपदे परे सिचि विधीयमाना वृद्धिर्न भवति। तथा गुणोऽपि न भवति "भूसुवोस्तिङि" इति तिङि सार्वधातुके निषेधात्। अत एव वा निषेधाद्वृद्धेरप्राप्तिलाभो भविष्यति। स्याद् अपवादेन बाधितत्वादप्रसङ्गात् कथमसौ निषिध्येत। ननु *अस्ति सिचोपृक्ते* इत्यस्तिसिच्भ्यां परस्य सार्वधातुकापृक्तस्य विधीयमान ईट् प्रत्ययलक्षणेन कस्मान्न भवति। अत्र केचिदेवमाहुः। अस्तीति द्विसकारकनिर्देशादेकेन सिचो विशेषणाच्छ्रूयमाणात्सिचः परस्येड्विधिरितीह न भवतीति। इदमविचारितरमणीयम्। अस्तीनेव पदान्तभूतस्यास्य सकारस्य पदान्तरेणान्वयायोगात् पृथक्पदत्वे तु न तस्य धातुत्वं नापि तत्सहितस्य समुदायस्येति धातुविषयश्तिब्निर्देश एव नोपपद्यते। अन्ये वर्णयन्ति "आर्धधातुके भुवोरीट्प्रतिषेध" इत्यत्र न केवलमस्त्यादेशस्य भुवः स्थानिवत्त्वेन प्राप्त इण् निषिध्यते किन्तु त्वनादेशस्यापीति, स्थानिवत्त्वदूषणपरे च तत्र वार्त्तिके कथमनादेशो भूर्गृह्यत इति तत्प्रष्टव्याः। न चानादेशस्याग्रहणे निषेधस्य वैयर्थ्यं प्रमाणम्। अर्थभेदेन रूपद्वयार्थत्वात्तस्य। वयं तु परिहरामः। सिचोऽल्पाच्कत्वात् बहुविषयत्वेनाभ्यर्हितत्वाच्च पूर्वनिपाते कर्त्तव्ये "अस्तिसिच" इति वचनात्तन्त्रादिना विद्यमानसिच इत्यस्याप्यर्थस्य लाभादिति। किं च अर्थद्वयपरिग्रहे श्तिबप्युपपद्यते ऽन्यथा सिजस्भ्यामित्येव ब्रूयात्, न चास्तीत्यस्यतिनिवृत्त्यर्थः, विकरणेन व्यवधानात् ताभ्यां परस्य सार्वधातुकापृक्तस्यासंभवात्। (अभूताम्। अभूवन्)। अजादौ "भुवो वुक्" इति वुक्। अत्र झेः प्रत्ययलक्षणेन सिचः परत्वेपि सिजभ्यस्तविदिभ्यः परस्य ङिल्लादेशस्य झेर्विधीयमानो जुसभावो न भवति। "आत" इति नियमात्, सिज्लुगन्ताद्यदि भवत्यात एवेति, अभ्यस्तं "उभे अभ्यस्तं" "जक्षित्यादयः षट्" इति वक्ष्यते। (अभूः। अभूतम्। अभूत। अभूवम्। अभूव। अभूम)।

*लिङ्निमित्ते लृङ् क्रियातिपत्तौ* । लिङो निमित्तं हेतुहेतुमद्भावादि, कुतश्चिद्वैगुण्यात्क्रियाया अनभिनिर्वृत्तिः क्रियातिपत्तिः, अत्र धातोर्लृङ् स्यात्, लस्य तिबादिषु स्यतासी इति स्यः। इडागमः, "इतश्च" इत्यादि। (यदि सेवापरोऽभविष्यत् आढ्यः अभविष्यत्। अभविष्यताम्। अभविष्यन्। अभविष्यः। अभविष्यतम्। अभविष्यत। अभविष्यम्। अभविष्याव। अभविष्याम)॥क्रियातिपत्तिर्न सेवापरो नाप्याढ्य इति।

अथात्मनेपदं प्रदर्श्यते ॥ *कर्त्तरि कर्मव्यतिहारे* । कर्म क्रिया। अन्यस्यान्येन करणं परस्परकरणं च कर्मव्यतिहारः। अस्मिन् गम्यमाने आत्मनेपदं स्यात् इति लस्य तिबादिषु विकरणादिसाधारणं पूर्ववदेव, "टित आत्मनेपदानां टेरे" इति टिल्लादेशानामात्मनेपदानां टेरेत्वं स्यात्। इदं चैत्वमाद्यन्तप्रयुक्तकार्यातिदेशात्केवलस्याप्यचष्टिसंज्ञाविधानाद्भवति।

व्यतिभवते । व्यतिभवेते )। अत्र "आतो ङित" इत्यदन्तादङ्गात्परस्य ङिद्वयवस्याकारस्येयादेशे वलि लोपः। 'नानर्थकेऽलोन्त्यविधिः' इति टेरेत्वमत्रान्त्यस्य न भवति, *ईदूदेद्द्विवचनं प्रगृह्यम्* इति ईदाद्यन्तस्य द्विवचनस्य प्रगृह्यत्वात् "प्लुतप्रगृह्या अचि" इति प्रकृतिभावाद् व्यतिभवेते एतावित्यादावयादि न भवति। इह प्रकृतिभावः परभूतनिमित्तविकाराभावस्तेन स्वरे ...त्येव। ( व्यतिभवन्ते ) अत्र त्रीणि कार्याणि प्राप्नुवन्त्यन्तादेशोदूभावः शबिति। अत्र विशेषविहितत्वेनान्तादेशापवादाऽङ्गावान्नित्यत्वाच्छप्, तत्र कृतेऽङ्गस्यादन्तत्वादङ्गावस्य न प्राप्तिरिति सामान्यविहित एवान्तादेशः प्रवर्तते। ( व्यतिभवसे )। *थासः से* इति टिङ्गादेशस्य थासः सेभावः। ( व्यतिभवेथे ) भवेते इतिवत्। ( व्यतिभवध्वे। व्यतिभवे। व्यतिभवावहे। व्यतिभवामहे )। एत्वात्परत्वात् "आद्गुणः" कृते वा तस्मिन् "अतो गुणे" इति पररूपम्। व्यतिशब्दः कर्म्मव्यतिहारद्योतनार्थः। तस्य *ते प्राग्धातोः* धातोः प्राक् प्रयोक्तव्या इति नियमात् पूर्वप्रयोगः। *उपसर्गाः क्रियायोगे*। *गतिश्च* इति प्रादयो यत्क्रियायुक्तास्तं प्रत्युपसर्गसंज्ञाः सन्तो गतयः। (इतरेतरस्य व्यतिभवन्ति, अन्योन्यस्य व्यतिभवन्ति) इत्यत्र "इतरेतरान्योपपदाच्च" इति कर्मव्यतिहारलक्षणमात्मनेपदं निषिध्यते। "अन्योन्योपपदाच्च" इति चकारेण परस्परोपपदादपि न भवति ( परस्परं व्यतिभवन्ति। व्यतिबभूवे। व्यतिबभूवाते। व्यतिबभूविरे। व्यतिबभूविषे। व्यतिबभूवाथे। व्यतिबभूविढ्वे। व्यतिबभूविध्वे। व्यतिबभूवे। व्यतिबभूविवहे। व्यतिबभूविमहे )। *लिटस्तझयोरेशिरेच्*। लिटस्तझयोरेशिरेचावादेशौ स्तः। एशः शकारो "अनेकाल्शित्" इति सर्वादेशार्थः, *विभाषेटः* इति इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धकारस्य मूर्धन्य इति तद्विकल्पः। टेरेत्वमजादौ वुक्। वलादौ क्रादिनियमादिट्। "भवतेरः" इत्यभ्यासस्यात्वम्। ( व्यतिभविता। व्यतिभवितासे )। "थासः से" इति सेभावे "तासस्त्योः" इति सलोपः। ( व्यतिभविताध्वे )। अत्र सकारस्य धकारादिप्रत्ययपरत्वात् "धि च" इति लोपे धकारस्य *अनचिच* इति अच उत्तरस्य यरो द्वित्वमचि नेति द्वित्वे "झलां जश् झशि" इति धकारान्तरतम्याद्दकारः। येषां "धि च" इति सिचो लोप इति पक्षस्तेषामप्यत्र सकारस्यान्तरतम्याज्जशि दकारे नात्र रूपभेदः। ( व्यतिभविताहे )। इट एत्वे "ह एति" इति सकारस्य हकारः, ( व्यतिभवितास्वहे। व्यतिभविष्यते ) इत्यादि पूर्ववत्। (व्यतिभवताम्। व्यतिभवेताम्। व्यतिभवन्ताम्। व्यतिभवस्व। व्यतिभवेथाम्। व्यतिभवध्वम्। व्यतिभवै। व्यतिभवावहै। व्यतिभवामहै ) टेरेत्वं "आतो ङित" इत्यादि पूर्ववत्। "आमेत" इति लोडादेशानामेकारस्यामादेशः। सेध्वेशब्दयोस्तु "सवाभ्यां वामौ" इति यथासंख्यं वामादेशावपवादौ। उत्तमैकारस्यैत्वे "एत ऐ" इत्यैकारः। अयमप्यामादेशापवादः। अत्राडागमे कृते तस्य तत्परस्य चैकारस्य *आटश्च* आटोचि परे पूर्वपरयोरेका वृद्धिरैकारः। तस्य शबकारस्य च "वृद्धिरेचि"। अवर्णादेचि परे पूर्वपरयोरेका वृद्धिरित्यैकारः। ( व्यत्यभवत। व्यत्यभवेताम्। व्यत्यभवन्त। व्यत्यभवथाः। व्यत्यभवेथाम्। व्यत्यभवध्वम्। व्यत्यभवे। व्यत्यभवावहि। व्यत्यभवामहि। व्यतिभवेत। व्यतिभवेयाताम्। व्यतिभवेरन्। व्यतिभवेथाः। व्यतिभवेयाथाम्। व्यतिभवेध्वम्। व्यतिभवेय। व्यतिभवेवहि। व्यतिभवेमहि )। "लिङः सीयुट्" इति लिङादेशस्य सीयुट्टित्त्वादादिः। "सुट्तिथोः"। "लिङः सलोपः"। "आद्गुणः"। वलि लोपः। "झस्य रन्" इति लिङो झस्य रन्नित्यादेशः, "न विभक्तौ" इति नेन्नकारः। *इटोत्* इति लिङादेशस्येटोदादेशः। तकार उच्चारणार्थो नादेशावयवः। यद्वादेशावयवत्वेपि "इदमस्थमुः" इति थमुप्रत्ययस्य *प्राग्दिशो विभक्तिः* इत्यतः परे दिक्शब्देभ्य इत्यतः पूर्वे प्रत्यया विभक्तय इति विभक्तित्वे तत्स्थत्वेन मकारस्येत्संज्ञानिषेधे सिद्धे तत्परित्राणायोकारासञ्जनेन "न विभक्तौ" इत्यस्यानित्यत्वज्ञापनादित्वं लभ्यते। आशिषि। ( व्यतिभविषीष्ट। व्यतिभविषीयास्ताम्। व्यतिभविषीरन्।

व्यतिभविषीष्ठाः । व्यतिभविषीयास्थाम् । व्यतिभविषीढ्वम् । व्यतिभविषीध्वम् । व्यतिभ-
विषीय । व्यतिभविषीवहि । व्यतिभविषीमहि ) । आर्द्धधातुकत्वादेषु लिङः सलोपाभावः ।
अत्र सीयुट् 'यदागमास्तद्ग्रहणेन गृह्यन्ते' इति प्रत्ययग्रहणेन गृह्यते, तथा तदवयवभक्त
सुडपि तत्समुदायभक्त इति द्वयोरपि सकारयोः प्रत्ययावयवत्वात् "आदेशप्रत्यययोः" इति
षत्वम् । यथा हि "शीङो रुट्" इति प्रत्ययावयवझकारादेशस्यातोपि रुट् समुदायभक्तत्वेन
सार्वधातुकग्रहणेन गृह्यत इति शेरत इत्यत्र "शीङः सार्वधातुके" इति गुणः प्रवर्त्तते । *ष्टुना
ष्टुः* । षकारटवर्गाभ्यां युक्तयोः सकारतवर्गयोर्यथासंख्यं ष्टुरिति तकारथकारयोः षकार-
टकारौ । निमित्तिनिमित्तयोर्यथासंख्यं *तोः षि* इति षकारे परे तवर्गस्य ष्टुत्वनिषेधान्न
भवति "विभाषेटः" इति मूर्द्धन्यविकल्पः । ( व्यत्यभविष्ट । व्यत्यभविषाताम् । व्यत्यभ-
विषत । व्यत्यभविष्ठाः । व्यत्यभविषाथाम् । व्यत्यभविढ्वम् । व्यत्यभविषि । व्यत्यभवि-
ष्वहि । व्यत्यभविष्महि । सिचीड्गुणावादेशषत्वानि यथायोगं ष्टुत्वं च । "आत्मनेपदेष्व-
नत" इति झस्याद्भावः । तकारस्य प्रयोजनाभावान्नेत्त्वम्, ध्वमि षत्वस्य पूर्वत्रासिद्धत्वात्
"धि च" इति सलोपे गुणः । इट्, इणः परत्वात् "विभाषेट" इति मूर्द्धन्यविकल्प उदा-
हार्यः । ( व्यत्यभविष्यत ) । इत्यादि लङ्वत् ।

अथ भावकर्मणोर्लकाराः प्रदर्श्यन्ते ॥ तत्र *भावकर्मणोः* इत्यनयोर्लस्यात्मनेपदमेव ।
*सार्वधातुके यक्* इति भावकर्मवाचिनि सार्वधातुके लटि लोटि लङि विध्यादिलिङि च यक् ।
अन्यत्र सार्वधातुके स्यादिभिरस्य बाधः, लिङाशीर्लिङोस्त्वार्द्धधातुकत्वान्न प्रसङ्गः । यकः
कित्त्वान्न गुणः । ( भूयते । भूयताम् । अभूयत भूयेत भवता ) । अत्र प्रत्ययेन कर्त्तुरनभि-
धानात्तृतीया । *कर्तृकरणयोस्तृतीया* इति तिङ्कृत्तद्धितसमासैरनभिहतयोरनयोस्तृतीयो-
च्यते । तत्र भावस्य युष्मदस्मदर्थाविशेष्यत्वात्प्रथमपुरुष एवात्र व्याख्याने, स्वतः क्रियाया
निवृत्तभेदाया अभिधानादेकवचनमेव भवति, ( भवद्भ्यां, भवद्भिः, त्वया युवाभ्यां युष्मा-
भिः, मया आवाभ्यामस्माभिर्भूयते ) इति । भवन्तीत्यादौ तु प्रत्ययेन कर्त्तुरभिधानात
तत्कृतं बहुत्वम् । ( भूयते मासः ) 'कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणां देशश्चाकर्म-
णां' इति मासादयो ऽकर्मकाणां कर्माणि । तत्र कर्मणोऽभिधानात् कर्मणि द्वितीया न भ-
वति, सा च तिङादिभिरनभिहिते विधीयते । ( भूयते भवता मासम् ) इत्यत्र भावे लवि-
धानात् कर्मणो ऽनभिधानाद् द्वितीया । ननु सकर्मकत्वात्कथं भावे लकारः ? । उच्यते । का-
लादिभिर्न कश्चिदप्यकर्मक इति तद्व्यतिरिक्तेन कर्मणा ऽकर्मकाणां भावे लविज्ञानात्, कथं
तर्हि मासे लो, ऽकर्मकाणां भावकर्त्रोर्लविधेः । उच्यते, एवंविधानां भावकर्मकर्तृषु लविज्ञा-
नात् । तथोक्तं "कालाध्वनोः" इत्यत्र मासादौ कर्मणि भावे च लकारं प्रस्तुत्य 'प्राकृतमेवैत-
त्कर्म यथा कटं करोति' इति, पुनश्च तत्र 'यदि प्राकृतमेवैतत्कर्म अकर्मकाणां भावे लो भवती-
ति भावे लो न प्राप्नोति' इति चोदयित्वा 'अकर्मकाणामित्युच्यते, न च के चित्कालभा-
वादिभिरकर्मकास्तत एवं विज्ञास्यामः क्व चिद्येऽकर्मका इति । अथ वा येन कर्मणा सकर्म-
काश्चाकर्मकाश्च भवन्ति तेनाकर्मकाणां न चैतेन कर्मणा कश्चिदप्यकर्मकः । अथ वा यत्कर्म
भवति न च भवति तेनाकर्मकाणां न चैतत्कर्म क्व चिदपि न भवति' इति । (अनुभूयते सुखम्)
इत्यादौ संवेदनाद्यर्थत्वाद् भुवः संवेद्यादिभिरपि सकर्मकत्वात्कर्मण्येव लः । ( भूयेते भूयन्ते )
इत्याद्युदाहार्यम् । तथा, ( भूयताम् । अभूयत । भूयेत मासः ) इत्यादि च । लिटि न
विशेषः । अत्र के चिदाहुः । "भवतेर" इत्यत्वं श्तिपा निर्देशात् भावकर्मणोर्नेति । अयम-
स्यार्थस्य कथं प्रतिपादक इति स एव प्रष्टव्यः । तस्य तु प्रयोजनं यङ्लुकि मन्त्रविषये आम-
भावे लिट्परत्वे सत्यत्वनिवृत्तिः । ( भविता । भाविता ) *स्यसिच्सीयुट्तासिषु भावकर्म-
णोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च* इत्यजन्तानां हनादीनां च धातूनामार्द्धधातुकेषु
भावकर्मविषयेषु स्यादिषु वा चिणीव कार्यमिट् चेत्यभिधानात् चिण्वत्पक्षे वृद्धिः । इडेड्वि-

धानमनिडर्थं ण्यन्तार्थं च । स्यसिजादीनामार्द्धधातुकत्वस्याव्यभिचारेऽपि तेन विशेषणं सीयुडर्थम् । तेन सार्वधातुके विध्यादिलिङि सीयुटि चिण्वत्त्वस्याभावः । एवं स्यसिच्सीयुड्विषये द्वैरूप्यमुदाहार्यम् । ( भविष्यते । भाविष्यते । अभविष्यत । अभाविष्यत । अभावि । अभाविषाताम् । भविषीष्ट । भाविषीष्ट ) इत्यादि । लुङ्लिङोर्ध्वमि चिण्वत्पक्षे "विभाषेट" इति मूर्द्धन्यविकल्पनाच्चातूरूप्यं नेयम् । लुङि तशब्दे "चिण् भावकर्मणोः" इति चिण् विधानात् च्लेश्चिण् ततः "चिणो लुक्" इति तशब्दस्य लुक् ॥

अथ कर्मकर्तोच्यते ॥ *कर्मवत्कर्मणा तुल्यक्रियः* ॥ "कर्त्तरि शप्" इत्यतः कर्तृग्रहणमनुवृत्तं प्रथमान्तमिह विपरिणम्यते । इह कर्म न पारिभाषिकं तेनात्यन्तविलक्षणेन क्रियायाः सादृश्यायोगात् । नापि क्रियामात्रं (१)यथा कथं चन क्रियया क्रियायाः सादृश्याव्यभिचारात् । अतः कर्मेह तत्स्यात्क्रिया, अनया तुल्यक्रियः कर्ता कर्मणा तुल्यस्तत्कार्याणि लभत इत्यर्थः । तानि च यगात्मनेपदचिण्चिण्वद्भावाः । एकस्मिंश्च प्रयोगे कर्मणा तुल्यक्रियस्य कर्तुरसंभवात् कर्मत्वकर्तृत्वे प्रयोगभेदेन ज्ञेये । यद्येवं पटं भावयतीत्यत्र कर्मस्था क्रियोत्पत्तिरस्ति तथा तुल्यक्रियत्वं पटो भवतीत्यत्र कर्तुरिति यगादि कस्मान्न भवति । अर्थस्वभावादेवास्य योगस्य धातुविषयत्वे सिद्धे धातोरित्यनुवृत्तिसामर्थ्याद्विभक्तिविपरिणामेन सप्तम्यन्तं विवक्षितैकत्वं विज्ञायत इत्येकस्मिन् धातौ कर्मणा तुल्यक्रियस्य कर्तुः कर्मवद्भावाद् इह तु धातुर्भिद्यते । एवं च कर्मव्यापारार्थो धातुर्यत्र सौकर्यातिशयप्रतिपादनाय कर्मव्यापारमात्रे वर्तते सोऽस्य विषयः संपन्नः । ततश्च शत्रुमभिभवतीत्यत्र न्यग्भवनोपसर्जने न्यग्भावने वृत्तो भवतिर्यदा न्यग्भवनमात्रे वर्त्तते तदाभिभूयते शत्रुः स्वयमेवेति यगात्मनेपदे भवतः । नन्वत्र कर्मस्था क्रिया न्यग्भवनं सैव कर्तृस्थापीति क्रियाभेदाभावात् कथं भेदनिबन्धनं सादृश्यमिति चेन्न । कर्मकर्त्रवस्थाभेदेन भिन्नकारकत्वेन भेदोपपत्तेः । नन्वत्रातिदेशेन यगादिवद् द्वितीया कस्मान्न भवति । न च "अनभिहिते" इति निषेधोऽस्य कार्यातिदेशत्वाद् अत्र च तदधिकाराभावात् । उच्यते । "व्यत्ययो बहुलं" "लिङ्याशिष्यङ्" इति संहितया सूत्रपाठाद् (२)द्विलकारको निर्देशः, तत्रैकं लग्रहणमनुवर्त्तते तच्चेह षष्ठ्यन्तं सत् तदन्तत्वं प्रयोजयति, (३)कार्यप्रतीतिश्चाध्याहियत इति लान्तकार्यविषयत्वादतिदेशस्य द्वितीयायास्तथाभावादप्रसङ्गः । एवं च कर्माश्रयाः कृत्यादयोऽपि न भवन्ति । नन्वभिभूयमानो देवदत्तो यज्ञदत्तमभिभवतीत्यत्रापि(४) कर्मवद्भावः प्राप्नोति, अत्र हि यज्ञदत्ते कर्मणि(५) दृष्टो न्यग्भाव इतरस्मिन् देवदत्ते च कर्तरि दृश्यते यदसौ न्यग् भवन् न्यग् भावयति । नैष दोषः । इह कर्मणा तुल्यक्रिय इति कर्मस्थया क्रियया तुल्यायाः (६)प्रसङ्गात्कर्तुश्च क्रियापेक्षत्वात् प्रत्यासत्त्या तदपेक्षयैव कर्तुः कर्मवद्भावविज्ञानात् । इह च न्यग्भवनं न कर्तृत्व उपयुज्यते किं तु न्यग्भावनमेव, अन्यग्भवतोऽपि न्यग्भावने कर्तृत्वसंभवात् । वत्करणा(७)त्स्वाश्रयाकर्मकत्वनिबन्धनो भावे लकारोऽपि भवति । अभिभूयते शत्रुणा स्वेनैवेति, तेन शत्रो(८)स्तृतीया भवति । सर्वत्र कर्मवदुदाहरणानि । लुङि तशब्दे तु "अचः कर्मकर्तरि" इति चिणादेशविकल्पनात् पक्षे सिच्, तस्य पूर्ववच्चिण्वदिट् तत्पक्षे वृद्धौ ( अभ्यभावि ) ( अभ्यभाविष्ट ) । ( अभ्यभविष्ट ) इति त्रैरूप्यम् । स्वाश्रयभावे लकारे "चिण् भावकर्मणोः" इति चिणेव । ( अभ्यभावि शत्रुणा स्वेनैवेति ) ।

---

( १ ) यथा कथाचन । ( २ ) व्लिर्दित । ( ३ ) कार्यप्रतीति श्चात्राध्या ।
( ४ ) सकर्मकत्वात् । ( ५ ) दृष्टं न्यग्भवनं न्यग्भावयितरि देवदत्ते ।
( ६ ) क्रियायाः । ( ७ ) स्वाश्रयणेन कर्मकर्तृत्व ।
( ८ ) द्वितीया न भवति ।

अथ पुरुषविषये किं चिद् विचार्यते ॥ युष्मदस्मदन्येषु सहविवक्षितेषु त्यदादीनि सर्वैर्नित्यम् । अन्यैस्सहवचने त्यदादीनि शिष्यन्ते मिथस्तु पराणीति शिष्यमाणाभ्यां युष्मदस्मद्भ्यामशिष्यमाणार्थाभिधानेपि स्वार्थापेक्षौ मध्यमोत्तमावेव भवतः । न तु शिष्यमाणाशिष्यमाणरूपस्यार्थस्य युष्मदस्मदर्थान्यत्वेन शेषत्वात्प्रथमः, यत्र युष्मदस्मदी समानाधिकरणे न स्तः स शेष इत्युक्तत्वात् । ( तेन देवदत्तश्च त्वं च युवां भवथः ) ( देवदत्तश्च स च त्वं च यूयं भवथ ) । ( देवदत्तश्चाहं च आवां भवावः ) ( देवदत्तश्च स चाहं च वयं भवामः ) इति । युष्मदस्मदोः सहविवक्षाया(१)मस्मदा शिष्यमाणेन युष्मदस्मदर्थाभिधानेपि परत्वादस्मदर्थापेक्ष उत्तमो भवति । ( त्वं चाहं च आवां भवाव ) इति । भवतापि युष्मदस्मदोः सहवचने तस्य पर्वपाठाश्रयेण तयोरेव शेषे ( भवांश्च त्वं च युवां भवथः ) । ( भवांश्चाहं च आवां भवाव ) इति । सहविवक्षा चानेकस्यार्थस्यैकगुणक्रियाभिनिवेशार्थं बुद्ध्या निरूप्यमाणस्य क्रियागुणद्वारेणान्योन्यापेक्षया समुदायभावमापन्नस्य सहभावेन वक्तुमिच्छा, उद्भूतावयवभेदत्वाच्च द्विवचनबहुवचने । असहविवक्षायां द्वैतम् । एक एव लकारो ऽनेकक्कारकार्थाभिधायी प्रतिकारकमावर्त्तते वेति । तत्राद्ये पक्षे युष्मदस्मदन्यानामशेषत्वाद्यथायोगं मध्योत्तमौ भवतः । ( स च त्वं च भवथः ) तथा मध्यमोत्तमयोर्युगपत्प्रसङ्गे परत्वादुत्तमः, (त्वं चाहं च भवाव) इति । पक्षान्तरे तु (२)अभिधेये तत्तत्कारकापेक्षया प्रथमादयो यथायोगं भवन्तीति न विवादः । ( भवान् भवति, ) ( त्वं भवसि, ) ( अहं भवामीति ) अलिङ्गसंबोधनैकविषयश्च युष्मदर्थो भवदर्थस्त्वन्य इति तद्योगे प्रथमोक्तिः । यदा त्वस्मात्सम्बोधनविभक्तिः तदा युष्मदर्थयोगात् मध्यमो भवति ( हे भवन् भवसि इति । अतित्वं भवति अत्यहं भवति इत्यादौ त्वामतिक्रान्तो मामतिक्रान्त इति "अत्यादयः क्रान्ताद्यर्थे" द्वितीयया इति तत्पुरुषे त्वमतिक्रान्तो येनाहमतिक्रान्तो येनेति "अनेकमन्यपदार्थे" इत्यनेकं सुबन्तमन्यस्य पदस्यार्थे वर्त्तमानं समर्थं समस्यत इति बहुव्रीहौ वा ऽतिक्रमितुः प्राधान्यात्तस्यैव लान्तार्थविशेषणत्वान्न मध्यमोत्तमौ । यदा त्वतिशब्दः पूजितवचनः तदा "स्वती पूजायाम्" इति तत्पुरुषे युस्मदस्मदोरर्थस्य प्रधान्यात्तेन विशेष्यत्वाद् (अतित्वं भवसि अत्यहं भवामि) इति भवतः । त्वद्भवति मद्भवतीत्यत्र च्व्यन्तयोरेतयोस्त्वमिवाहमिवार्थेस्वार्थारोपेण वर्त्तमानत्वादमुख्यार्थत्वात् 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायेन मध्यमोत्तमौ न स्तः । तथाहि । "अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्त्तरि च्विः" इति कार्यात्मना ऽभूतस्य कारणस्य कार्यात्मना भावे विवक्षिते संपद्यमाने कार्यात्मना भवतिकर्त्तरि वृत्तात्प्रातिपदिकात्कृभ्वस्तियोगे च्विर्विधीयते । एतदुक्तं भवति । अभेदविवक्षया कारणवृत्तेः कार्यशब्दात् प्रत्यय इति । त्वत्कल्पो भवति मत्कल्पो भवतीत्यादावपि गौणार्थत्वाच्च न मध्यमोत्तमौ । तत्र *ईषदसमाप्तौ कल्पब्देश्यदेशीयरः* संपूर्णता पदार्थानां समाप्तिः, किं चिन्न्यूनतेषदसमाप्तिः, एतद्विशिष्टेर्थे वर्त्तमानात्प्रातिपदिका *तिङश्च* इति तिङन्ताच्च स्वार्थे कल्पबादय इति प्रकृत्यर्थसदृशार्थान्तरवृत्तिभ्यो विधानात् । यथा तु कालान्तरदृष्टगुणेषदसमाप्तिविशिष्टस्वार्थवृत्तेः प्रत्ययाः तदा न गौणार्थत्वमिति त्वत्कल्पो भवसि मत्कल्पो भवामीति भवतः । त्वमेवेदानीं किं चिन्न्यूनगुणो भवसीत्यर्थः । पूर्वत्र तु त्वत्सदृशोन्यो भवतीत्यर्थः ॥

अथ तिङन्तात्प्रत्ययाः प्रदर्श्यन्ते ॥ *अतिशायने तमबिष्ठनौ* ॥ अतिशायनं प्रकर्षोभिभवः । एतदुपाधिकार्थवृत्तेर्ड्याप्प्रातिपदिकादेतौ स्याताम् । तथा "तिङश्च" इति तिङन्ताच्च । *बहूनामेकस्य निर्धारणे वृत्तौ द्विवचनभिज्योपपदे तरबीयसुनौ* द्वयोरर्थयोर्वचने विभज्ये विभक्तव्ये चोपपदे तरबीयसुनोर्विधानात् । तौ अजादी गुणवचनादेवेतीष्ठनीयसुनोर्गुणवचनादेव नियमात्तिङन्तात्तरसमपावेव, एतदन्तात् *किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे* किमादिभ्यो यो घस्त-

( १ ) परत्वात् । ( २ ) लाभिधेये ।

दन्तादूद्रव्यप्रकर्षे गम्यमाने आम्रुरित्यामुः। उकारोमकारस्यानन्त्यत्वेनेत्त्वनिवृत्तये हल्लुप्यते तत्र "स्वरादिनिपातमव्ययम्" तथा *तद्धितश्चासर्वविभक्तिः* इत्यसर्वविभक्तियुक्तं तद्धितान्तं, तथा "कृन्मेजन्त" इति(१) मेजन्तं, तथा "क्त्वातोसुन्कसुन" इति (२) तदन्तं, "अव्ययीभावश्च" इत्यव्ययीभावश्च. "तरप्तमपौ घः"। तत्राणि (३) परे, "यचि भम्", यकारादावजादौ च स्वाद्यावसर्वनामस्थाने परतः पूर्वं भमिति घान्तस्य भसंज्ञा। इह स्वादयः स्वौजसमौडित्यारभ्य कप्पर्यन्ताः। घान्तस्य *यस्येति च*। इवर्णावर्णयोरीति भसंज्ञानिमित्ते तद्धिते च परे लोप इति लोपः, ( भवतितरां भवतितमां, ) तद्धिताश्च "तद्धिता" इत आरभ्य आपञ्चमाध्यायसमाप्तेर्वक्ष्यमाणाः प्रत्ययाः, आमन्तं कृत्तद्धितसमासाश्च कृदन्तं तद्धितान्तं समासश्च प्रातिपदिकमिति प्रातिपदिकं, कृतः समासाश्च वक्ष्यन्ते। प्रातिपदिकाच्च "ङ्याप्प्रातिपदिकात्" "स्वौजसमौट्छष्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसाम्ङ्योस्सुप्" इति विधीयमानेषु स्वादिषु एकत्वार्थमेकवचनं सुः। तस्य च *अव्ययादाप्सुपः* अव्ययाद्विहितस्यापः सुपश्च लुगिति लुक्। स्वरादिष्वामितिपाठादयमव्ययत्वम्, आबिति टाप्डाप्चापः *प्रशंसायां रूपम्* प्रशंसा स्तुतिः। एतदुपाधिकार्थान् ङाप्प्रातिपदिकात तिङन्ताच्च रूपप् स्यात्। स्वभावादेतदन्तान्नपुंसक (४) प्रथमैकवचनमेव। तस्य "स्वमोर्नपुंसकात्" इति नपुंसकलिङ्गात्परत्वेन लुकि प्राप्ते "अतोम्" इत्यमूभावे *अमि पूर्वः* अकोमि परे पूर्वपरयोः पूर्वरूपमेकादेश इति पूर्वरूपत्वम्, तेन(भवतिरूप) इत्यादि भवति। एवं कल्पबाद्यन्तादपि स्वभावान्नपुंसकात्स्वादिकार्यम् "अव्ययसर्वनाम्नामकच् प्राक् टेः" रित्यकच्। तत्र "तिङश्च" इत्यनुवृत्तेरस्यापि टेः प्रागज्ञातादिषु प्रागिवीयेष्वर्थेषु भवति। अकार उच्चारणार्थः, चकारः "चित" इति स्वरार्थः। तत्र हि 'चितः सप्रकृतेः' इत्युच्यते। ( भवतकि )।

अथ तिङो ऽन्ये लादेशा उच्यन्ते ॥ *लटः शतृशानचावप्रथमासमानाधिकरणे* ॥ लटः शतृशानचावादेशौ स्यातामप्रथमान्तेन चेत्सामानाधिकरण्यं भवति। तत्र शेषत्वादस्य लटः शता, तस्य शित्त्वात्सार्वधातुकत्वे पूर्ववच्छबादयः। शत्रन्तस्य "कृदतिङ्" इति तृतीयधात्वधिकारविहितस्य प्रत्ययस्य कृत्संज्ञाविधानात् कृदन्तत्वेन प्रातिपदिकत्वादविशेषेण स्वादिप्रसङ्गे कर्मत्वादविशेषेण स्वादिप्रसङ्गे कर्मत्वस्य विवक्षितत्वात् "कर्मणि द्वितीया" इति द्वितीया। द्वितीयादिशब्दैः सुपां त्रिकाः पूर्वाचार्यप्रसिद्ध्योच्यन्ते। तत्रापि सुपस्त्रीणित्रीणि पदानि त्वेकशो भूय थासंख्यमेकवचनादिसंज्ञानीति तिङ्वदेकत्वादौ क्रमेणैकवचनादि भवति। तत्रमौटोः ॥ सुडनपुंसकस्य सुडिति प्रत्याहारेणादितः पञ्च वचनानि गृह्यन्ते। तान्यनपुंसकस्य संबन्धीनि सर्वनामस्थानत्वे *उगिदचां सर्वनामस्थाने धातोः* इति नुम्। उगितामङ्गानां लुप्तनकारस्याञ्चतेः पूर्वमधातोरुगितः पश्चाद्धातोस्तस्मिन्नुम्। अञ्चतिग्रहणादुगितो धातोर्यदि भवति अञ्चतेरेवेति नियमार्थकाद् अधातुग्रहणमधातुर्भूतपूर्वार्थं, नुमो मित्त्वात् *मिदचोन्त्यात्परः* इत्येकत्र संनिविष्टानामचामन्त्यादचः परः ॥ *नश्चापदान्तस्य झलि* अपदान्तयोर्नकारमकारयोर्झल्यनुस्वार इति नस्यानुस्वारः ॥ "अनुस्वारस्य ययि परसवर्णः" ॥ स च "स्थानेन्तरतमः" इति नासिक्यानुस्वारस्य तादृशो नकारः। (भवन्तं पश्य) (५) भवतस्तानित्यत्वात् "स्वादिष्वसर्वनामस्थाने" इति पूर्वस्य प्राप्तायाः पदसंज्ञायाः "यचि भम्" इति भसंज्ञया परया ऽनवकाशया बाधात् "झलां जशोन्ते" इति जश्त्वं न भवति। कर्तृकरणविवक्षायां, "कर्तृकरणयोस्तृतीया" उक्तः कर्ता ॥ *साधकतमं करणम्* क्रियाप्रसिद्धौ यत्कारकं कारकान्तरापेक्षया प्रकृष्टं विवक्ष्यते यद्व्यापारान्तरं क्रियानिष्पत्तिर्विवक्ष्यते तत्करणम्। तदुक्तम्—

---

(१) मकारैजन्तम्। (२) त्वदन्तम्। (३) अपि परे।
(४) प्रथमेति बहुषु पुस्तकेषु नास्ति। (५) भक्तो पश्यति।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥
वस्तुतस्तदनिर्देश्यं नहि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥
क्रियते येन येनैव तत्तत्करणमिष्यते ।
तेनाश्वेन रथेनेति सिद्धं दीपिकयेति च ॥

इति । टाटकारष्टाङसीति विशेषणार्थः । अन्यथा । "सुपां सुलुग्" इति विहितस्यापि ग्रहणमापद्येत ( भवता तेन । भवद्भ्यां ताभ्यां, भवद्भिस्तैः ) हलादौ पदत्वाज्जश्त्वम् । संप्रदानविवक्षायां "चतुर्थी संप्रदाने" कृदाद्यनभिहित इति शेषः॥ *कर्मणा यमभिप्रैति स संप्रदानम्* ददातिकर्म्मणा करणभूतेन कर्ता यमभिप्रेति तदनिराकर्तृत्वे प्रेरयिन्ननुमन्तृ कारकं सम्प्रदानम् । उक्तञ्च ।

अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।
प्रेरणानुमतिभ्यां च लभते संप्रदानता ॥

इति । दानं च पुनरग्रहणाय किं चिदुद्दिश्य स्वीयत्यागः ( भवते तस्मै ददाति । भवद्भ्यां ताभ्यां ददाति । भवद्भ्यस्तेभ्यो ददाति ) अपादानविक्षायाम् "अपादाने पञ्चमी" "ध्रुवमपाये ऽपादानम्" सावधिकं गमनमपायः । तदुक्तम् ।

संयोगभेदाद् भिन्नात्मा गतिरेव भ्रमिर्यथा ।
ध्रुवावधिरपायोपि समवेतस्तथा ध्रुवः ॥

इति । अस्मिन् साध्ये यद् ध्रुवमेतदनाविष्टं यत्कारकं तदपादानम् । तथाहि ।

अपाये यदुदासीनं चलं वा यदि वा ऽचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥

इति । त्रिविधं चैतत् । यथाह ।

निर्दिष्टविषयं किं चिदुपात्तविषयं तथा ।
अपेक्षितक्रियं चेति त्रिधा ऽपादानमुच्यते ॥

इति । तत्र प्रथमं धातुना ऽभिहितापायविषयं । द्वितीयं (१) धात्वन्तरार्थत्वेनाभिहितापायविषयम् । तृतीयं तु सामर्थ्यादिना प्रतीयमानापायविषयम् ( भवतस्तस्मादागच्छति । भवतो मेघाद्विद्योतते विद्युत् ) अत्र निःसरणाङ्गे विद्योतने विद्युतिर्वर्त्तते ( भवतस्तस्मादाढ्यतरः ) अत्र प्रकर्षप्रत्ययसार्थ्याद्विभागकारणतया प्रकर्षलक्षणा क्रिया प्रतीयते, अत्रावधिविभक्तयोरेकीकारो विभागस्तद्धेतुरपकर्षणं च बौद्धम् । तथा चाह ।

बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा ।
पुनर्विभजते वक्ता तदापायः प्रतीयते ॥

इति । तत्रतत्र ङसीत्यनुवादार्थौ ङकारेकारौ । विभागोपायः, अस्मिन् साध्ये यद् ध्रुवमेतद्धेतुभूतक्रियानाविष्टं तदपादानमिति सूत्रार्थः । शेषविवक्षायाम्॥ *षष्ठी शेष* अनभिहित इति शेषः । कर्मादिभ्यो ऽन्यः प्रातिपदिकार्थव्यतिरेकहेतुः स्वस्वामिसंबन्धादिः शेषः द्विष्ठोप्यसौ संबन्धो गुणभूतेन शब्देन प्रतिपाद्यत इति तस्मादेव षष्ठी न तु प्रधानात् ।

द्विष्ठोप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।

इति । तथा वार्त्तिकमपि ( उक्तं पूर्वेण ) इति । अस्यार्थः प्रातिपदिकार्थसूत्रे यद

( १ ) धात्वर्थाङ्गार्थत्वेन ।

(१) सामानाधिकरण्ये उपसंख्यातमधिकृत्वादिति चोद्यस्य न वाक्यार्थत्वादिति सामानाधिकरण्यप्रतीतेर्वाक्यार्थत्वेन पदसंस्कारवेलायामभावात् प्रातिपदिकार्थनिबन्धना प्रथमा यथा भवत्येवमत्रापि प्रधानगतसंबन्धप्रतीतेर्वाक्यार्थत्वेन पदसंस्कारवेलायामभावान्न प्रसङ्गः षष्ठ्या इति, परिहारभाष्यं चार्थरूपमेवैतदेवंजातीयकमिति ( भवतो ऽस्य स्वं, भवतोरनयोः, भवतामेषाम् । ) अधिकरणविवक्षायाम् ॥ "सतम्यधिकरणे च" चकाराद् दूरान्तिकार्थेभ्यश्च ॥ *आधारोऽधिकरणम्* ॥ कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति य आधारस्तत्कारकमधिकरणम् । त्रिविधं चैतत् । यदाह,

कर्तृकर्मव्यवहितामसाक्षाद् धारयत् क्रियाम् ।
उपकुर्वन् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ।
औपश्लेषिकमेकं स्यात्तथा वैषयिकं परम् ।
अभिव्यापकमित्येतत्त्रिधाधिकरणं मतम् ॥
आस्ते कटे शकुन्तः खे तिले तैलं व्यवस्थितम् ॥
क्रमेणाधारभेदानामुदाहरणदर्शनम् ॥

इति ( भवति कटे शेते । मेघच्छन्ने भवति खे बलाका । भवति तिलं तैले, भवतोरनयः, भवत्स्वेषु ) प्रथासामानाधिकरण्ये प्रथमासामानाधिकरण्याभावे च "नन्वोर्विभाषा" इत्यतो विभाषनुवृत्तेर्विकल्पेन भवतः ॥ "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" ॥ भवन्नयम् । "हल्ङ्याब्भ्य" इति सुलोपः । तकारस्य संयोगान्तलोपः । तस्यासिद्धत्वात् "न लोपः प्रातिपदिकान्तस्य" इति विधीयमानो नलोपो न भवति । ( भवन्तौ (२) । भवन्तः ) जसो जकारो ऽसन्देहेन विभक्तिस्वरूपप्रतिपत्त्यर्थः । ( भवत्तरः । भवत्तमः भवद्रूपः । भवत्कल्पः ) इत्यादौ तरबादिविधिवत् । ( भवत्कः ) । "प्रागिवात्कः" । "इवे प्रतिकृतौ" इत्यतः प्रागितः परेष्वजातादिष्वर्थेषु द्योत्येषु कः प्रातिपदिकादिति (क) तद्धितत्वान्न ककारस्येत्त्वम् । शत्रभावे भवतीत्यादि पूर्वमुक्तमेव । अत्र तिङः स्थानिवत्त्वेन लत्वाच्छत्रादेशो न भवति, वाग्रहणस्य व्यवस्थितविभाषाविज्ञानात् । यदि हि स्यात्स्यानिवद्भावेन तिङन्तादस्माच्च तरप् किमेत्तिङव्य'' इत्याम्स्यात् । ततश्च भवत्तरामिति तृतीयं रूपं स्यात् । असामानाधिकरण्ये खल्वपि भवत इदं ( भावतम् ) *तस्येदम्* षष्ठीसमर्थाद् ङ्याप्प्रातिपदिकात्संबन्धिन्यर्थे ऽणिति अण् । *तद्धिते ष्वचामादेः* इति वृद्धिः ञिति णिति तद्धिते परेऽङ्गस्याचामदेरचो वृद्धिरिति । इयं च *अत उपधायाः* इति ञिति णिति प्रत्ययमात्रे परे ऽङ्गस्योपधाया अतो विधीयमानां वृद्धिमपवादत्वाद्बाधते । न च भवत इत्यस्य देवदत्तादिविशेषापेक्षत्वादस्तीहापि सामानाधिकरण्यमिति वाच्यम् । तर्हि सापेक्षत्वादस्मात्प्रत्यय एव न स्यात् । *समर्थ पदविधिः* इतीह शास्त्रे पदविधिः समर्थपदाश्रय इत्युक्तत्वात् । इदमप्युदाहरणं, ( भवतो भक्तिर्भवद्भक्तिरिति ) । *षष्ठी* षष्ठ्यन्तं समर्थेन सुबन्तेन वा समस्यत इति समासः । *सुपो धातुप्रातिपदिकयोः* इति तद्धितान्तसमासप्रातिपदिकयोरन्तर्भूतस्य सुपो लुक् । अत्र के चिल्लडिति वर्त्तमाने "लटः शतृशानचौ" इति पुनर्लड्ग्रहणाद् "नन्वोर्विभाषा" इति भूते विहितस्यापि लटोप्येतावादेशौ भवत इति । एतद्भाष्यवार्तिकयोर्नोक्तं वृत्तिकारस्य च नेष्टम् । यदाह लडितिवर्त्तमाने पुनर्लड्ग्रहणात् क्वचित् प्रथमासामानाधिकरण्येपि भवतीति ॥ *संबोधने* च शतृशानचाविति शेषः । आभिमुख्यकरणं संबोधनम्, तच्च स्वभावात्क्वचित् कार्ये विनियोगार्थम् । यदाह ।

सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः ।
प्राप्ताभिमुख्यो ह्यर्थाऽत्मा क्रियायां विनियुज्यते ॥

---

( १ ) पदसामा ।　　( २ ) न्तौ । भवन्तस्ते ।

इति । हे सुखमनुभवन्नर्थस्य *लक्षणहेत्वोः क्रियायाः* लक्षणं चिन्हं, हेतुः कारण क्रियाया लक्षणहेत्वोर्वर्तमानाद्धातोर्लटः शतृशानचौ स्याताम्, (शयनमनुभवन् यवनो भुङ्क्ते अत्र शयननुभवनं यवनभोजनस्योपलक्षणं, शुश्रूषुर्भवन्विद्यामधिगच्छति, अत्रापि शुश्रूष भवनं विद्याधिगमस्य हेतुः । योगद्वयमिदं प्रथमासमानाधिकरणे नित्यार्थम् । प्रथमा "संबोधने च" इति संबोधनाधिकप्रातिपदिकार्थे विहिता *माङ्याक्रोशे* आक्रोशः शपनम् अस्मिन् गम्यमाने माङ्युपपदे शतृशानचौ भवतः ( मा.[illegible]न् ) "माङि लुङ्" इति प्रा अस्मादेवादेशवचनाल्लडनुमीयते । सुखमनुभवन्नि[illegible] "कर्तृकर्मणोः कृति" इत्यन कृद्योगे विधीयमाना षष्ठी न भवति, *न लोकाव्ययनिष्ठाखलर्थतृनाम्* इति लादियोगे प्रति षेधात् । ल इति शतृशानचौ कानच् क्वसुकिकिनौ चोच्यन्ते । उ इत्युवर्णान्ताः, उः, इच्छु उकः प्रत्यय एव । अव्यय इति "कृन्मेजन्तः" । "क्त्वातोसुन्कसुन" इति उक्ता अव्ययकृतः "क्तक्तवतू निष्ठा" । खलर्थः खल् युच् तृन्निति "पूङ्यजोः शानन्" इति शानन्नादय "तृन् इति तृन्पर्यन्ताः प्रत्याहारेणोक्ताः । प्रत्याहारश्च "लटः शतृ" इति तृशब्दस्य तृनो नकारेण सुखस्यानुभवन्निति प्रयोगः शेषलक्षणषष्ठ्या, अत्र षष्ठीसमासः *पूरणगुणसहितार्थसदव्ययतव्यसमानाधिकरणेन* इति पूरणादिभिः षष्ठीसमासो न भवति तत्र पूरणा इति पूरणप्रत्ययान्ताः । गुण इति गुणद्वारेण गुणिनि वर्त्तितुं शक्ता गुणगुणिनिष्ठाशुक्लादयः, ये तु गुणं स्व निष्ठतयैवाभिदधति ते रसादयस्तत्स्थैश्च गुणैः षष्ठी समस्यत इति तैः समास उक्तः । सुहि तार्थास्तृप्त्यर्थाः । सदिति *तौ सत्* इति सत्संज्ञौ शतृशानचौ । अव्यया उक्ताः । तव्यो सानुबन्धकः । निरनुबन्धकग्रहणे न सानुबन्धकस्येति । समानाधिकरणमेकविभक्त्यन्तं विशेषणं विशेष्यं च ।

अथ शत्रन्तात्स्त्रीप्रत्यया इह प्रदर्श्यन्ते । *उगितश्च* । यत्प्रातिपदिकमवयवद्वारेण साक्षाद्वोगित् "येन विधिस्तदन्तस्य" इति तदन्तात्, व्यपदेशिवद्भावेव केवलाच्च प्रातिपदिकात स्त्रियां ङीप्स्यात् । ङकारः सामान्यग्रहणार्थः, पकारस्तदविघातार्थः । 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' 'व्यपदेशिवद्भावो ऽप्रातिपदिकेन' इति परिभाषे प्रातिपदिकस्य स्वरूपग्रहणेन प्रत्ययविधिविषये इति नेह स्तः । ङीबन्तस्य *यू स्त्र्याख्यौ नदी* । अन्यानपेक्षया स्त्रियां वृत्तमीदूदन्तं नदी, नदीत्वे *शप्श्यनोर्नित्यम्* शप्श्योर्निमित्तत्वेन सम्बन्धिन शतुर्नित्यं नुम् शीनद्योः परयोः, नुम् मित्त्वादन्त्यादचः परः । इह नदीशब्दो नद्यवयवे वर्त्तते इति शतुर्नदीपरत्वम् । ( भवन्ती । अतिभवन्ती ) ङ्यन्तत्वात्स्वादिषु सोर्हल्ङ्यादि लोपः ( भवन्त्यौ । भवन्त्यः ) अजादौ "इको यणचि" इति संहितायां यण् भवति । *प्रथमयोः पूर्वसवर्णः* इत्यकः प्रथमाद्वितीययोरजादौ विभक्तौ परतः पूर्वपरयोः पूर्वसवर्णदीर्घः । एक इत्येतदत्र न भवति, "दीर्घाज्जसि च" इति निषेधाच् चकारादिज् गृह्यते । ( हे भवन्ति ) । *अम्बार्थनद्योर्ह्रस्वः* इति ह्रस्वः । अम्बार्था मात्रर्थाः । "एङ्ह्रस्वात्संबुद्धेः" इति संबुद्धेर्हल्लोपः ॥ *एकवचनं संबुद्धिः* ॥ संबोधने प्रथमाया इति शेषः । ( भवन्तीम् ) (१) अ[illegible] "अमि पूर्वः" पूर्वसवर्णदीर्घश्च यणं बाधते । ङिद्वचनेषु *आण् नद्याः* इति टित्त्वादाद[illegible] गमे "आटश्च" इति यथायोगमैकार औकारश्च वृद्धिः । ( भवन्त्यौ, भवन्त्यः ) । आमि "ह्रस्वनद्यापो नुट्" इति नुट् टित्त्वादादौ, ( भवन्तीनाम् ) सप्तम्येकवचनस्य "ङेराम्नद्याम्नीभ्यः" इत्यामादेशे । ( भवन्त्याम् ) । नीशब्देन तदन्तो ग्रामण्यादिरुच्यते । ( भवन्तितरा भवन्तीतरा ) पूर्ववत्तरप् । *अत्र घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्योनेकाचो ह्रस्वः* इति घादिषु परेषु ङ्यन्तस्यानेकाचो विधीयमानो नित्यो ह्रस्वः *उगितश्च* इत्युगितः परस्या नद्या उच्यमानेन ह्रस्वविकल्पेन बाध्यते, अत्र घादयः प्रत्ययाश्चेलडादीनि प्रातिपदिकानि ।

( १ ) भवन्ती ।

त्रं हरदत्तः । चेलडादीनां वृत्तिविषये कुत्सनवचनत्त्वात् तैः "कुत्सितानि कुत्सनैः इति मास इति । न्यासकारस्तु चेलड्गुवगोत्राणामेवं समासमुक्त्वा मतहताभ्यां तु "विशेषणं वाच्येन" इत्याह । एवं तसबादिष्वप्युदाहार्यम् ॥

अथ नपुंसकप्रक्रिया ॥ (भवत् ब्राह्मणकुलं तिष्ठति पश्येति वा) "स्वमोर्नपुंसकात्" इति लुक् । ( भवन्तो कुले ) "नपुंसकाच्च" स्यौङः शीभावः । औङिति प्रथमाद्वितीययोर्द्वि नस्य पूर्वाचार्यसंज्ञा । शकारः "...योः" इति निर्देशार्थः । "शप्श्यनोः" इति नित्यं गमः । ( भवन्ति कुलानि ) । ... शसोः शिः* इति नपुंसकाङ्गात्परत्वे जश्शसोः शिरा- प्रतिः । शकारः शीति तत्रानुवादार्थः । "शि सर्वनामस्थानम्" इति शेः सर्वनामस्थानत्वे । पुंसकस्य झलचः* इति झलन्तस्याजन्तस्य नपुंसकाङ्गस्य सर्वनामस्थाने नुमिति नुम् । तेत्यादि पुंल्लिङ्गवत् ।

अथ शानच् ॥ (व्यतिभवमानः) "आने मुक्" इत्यदन्तस्यानपरत्वेन मुक्कित्त्वादन्त्यः । (व्यतिभवमानौ ) "प्रथमयोः पूर्वसवर्णदीर्घस्य "नादिचि" इति निषेधे "वृद्धिरेचि" इति द्धिः, ( व्यतिभवमानात् ) । *तस्माच्छसो नः पुंसि* इति तस्मात्प्रथमयोः पूर्वसवर्णदी- र्घात् परस्य शसः सकारस्य न इति नकारादेशः ( व्यतिभवमानेन ) ॥ *टाङसिङसामिना- त्स्याः* ॥ अदन्तादङ्गात्परेषां टादीनां यथासंख्यमिनादय इति इनादेशे गुणः ( व्यतिभवमा- नाभ्याम् ) *सुपि च* इत्यदन्ताङ्गस्य दीर्घ इति सुप्परत्वाद्दीर्घः । (व्यतिभवमानैः ) *अतो भिस ऐस्* इत्यदन्ताङ्गात्परत्वेन भिस ऐसादेशः । (व्यतिभवमानाय) *ङेर्यः* इत्यदन्तादङ्गा- त्परत्वेन यादेशः । "कष्टाय" इति निर्देशात्सन्निपातपरिभाषाया अनित्यत्वात् "सुपि" दीर्घः (व्यतिभवमानेभ्यः) । अत्र झलादिबहुवचनसुप्परादन्ताङ्गत्वेन "बहुवचने झल्येत्" इति दीर्घ- प्राप्नोति, तत्र *विप्रतिषेधे परं कार्यम्* द्वयोस्तुल्यबलविरोधे परस्य प्राप्यमाणत्वात्पर- मेवं प्रवर्त्तते । ( व्यतिभवमानात् । व्यतिभवमानस्य ) "टाङसि" इत्यादिना ङसिङसो- रात्स्यौ । ( व्यतिभवमानयोः ) *ओसि च* इत्यदन्तस्याङ्गस्यौस्परत्वेनैकारे ऽयादेशः । (व्यतिभवमानानाम् ) "ह्रस्वनद्यापो नुट्" इति ह्रस्वान्तस्याङ्गस्य नाम्परत्वेन "नामि" इति दीर्घः । "सुपि च" इत्येव वा, (व्यतिभवमाने) । "आद्गुणः" । ( व्यतिभवमानेषु ) ते षत्वं, व्यतिभवमानस्येदं ( व्यतिभवमानम् ) । अत्रासामानधिकरण्ये शानच् *त- स्येदं* इत्यण्यादिवृद्धिः । *न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्* इति पदान्ताभ्यां यकारवकाराभ्यां परस्याचामादेरचो वृद्धिर्न भवति किं तु ताभ्यां पूर्वमैज् (१)भवति तद्धिते ञिति णिति किति वा पर इत्येतस्य "न कर्मव्यतिहारे" इति निषेधः ।

अथ स्त्रियाम् ॥ ( व्यतिभवमाना ) ॥ *अजाद्यतष्टाप्* ॥ अजादिगणपठितादकारान्ताच्च प्रातिपदिकात् स्त्रियां टाबिति टाप् । पकारः समान्यग्रहणार्थः, टकारस्तदविघातार्थः अत्र नचः स्थानिवत्त्वेन टित्त्वात् *टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरप् (२) नाम्* इति यथा कथं चित् टितः प्रातिपदिकाड्ढाद्यन्ताच्चानुपसर्जनात् स्त्रियां विधीयमानो ट एव इद् यस्य स टिदित्यवधारणस्याश्रयणाल्लटश्च द्व्यनुबन्धकत्वान्न भवति, सामगी- दौ टको ऽनेकानुबन्धकत्वेऽपि टित्त्वसामर्थ्यात् ङीप्, लटस्तु टित्त्वमेत्वाद्यर्थतया सावका- । हलङ्याब्भ्यादिना सुलोपः । ( व्यतिभवमाने ) "औङ आपः" इत्यापः परत्वेनौङः शी- वे गुणः । ईकारप्रत्ययपरत्वेन "यस्य" इति लोपो न भवति । [औङः श्यां परे प्रतिषेधः] ति निषेधात् । ( व्यतिभवमानाः ) । सवर्णदीर्घः । ( हे व्यतिभवमाने ) । "संबुद्धौ च" याप एत्वम् । एङः परत्वात्सोर्लोपः । ( व्यतिभवमानया ) । "आङि चापः" इत्येत्वे देशः । आङिति तृतीयैकवचनस्य पूर्वाचार्यसंज्ञा । चकारात् "ओसि च" ( व्यतिभवमा-

( १ ) यथासंख्यमैजागमौ । ( २ ) ख्युनामिति क्वचिन्नास्ति ।

नायै )। *याडापः* इति आपः परस्य ङिद्वचनस्य याडागमष्टित्त्वादादिः। "वृद्धिरेचि" इति वृद्धिः। ( व्यतिभवमानायाः ) । व्यतिभवमानयोः । "आङि चापः" इत्येत्वेऽयादेशः । व्यतिभवमानानाम् । "ह्रस्वनद्यापो नुट्" । व्यतिभवमानायाम् । ङेरामादेशः, ( व्यतिभवमानासु । )

अथ नपुंसकम् ॥ ( व्यतिभवमानम् ) "अतोम्" इत्यम्भावः । ( व्यतिभवमाने ) "नपुंसकाच्च" इति शीभावे पूर्ववदौङः श्यामिति यस्येतिलोपनिषेधः । ( व्यतिभवमानानि ) । "जश्शसोः शिः" ॥ "नपुंसकस्य झलचः" इति नुम् । *सर्वनामस्थाने चासंबुद्धौ* इति नान्तस्याङ्गस्योपधाया दीर्घः । हे व्यतिभवमानेत्यत्र "अतोम्" इत्यम् भावेऽस्मि पूर्वत्वे "एङ्ह्रस्वात्" इति संबुद्धेर्हलो मकारस्य लोपः । तृतीयादि पुंल्लिङ्गवत् । *लृटः सद्वा* इति लट इव लृटोपि शतृशानचोर्विधानाद् भविष्यन्नित्यादि लड्वत् सर्वमुदाहार्यम् । तत्र स्त्रियां नपुंसके द्विवचने च *आच्छीनद्योर्नुम्* इति नुम्विकल्पो विशेषः । अत्रानुवृत्तं शतृग्रहणं स्वावयवे वर्त्तते । तेनावर्णान्तादङ्गात् परो यः शत्रवयवस्तदन्तस्याङ्गस्य शीनद्योः परयोर्वा नुमिति सूत्रार्थः, अथ वाऽवर्णान्तादङ्गात् शीनद्योः परयोः शत्रन्तस्य वा नुमिति । तत्र येन नाव्यवधानमिति तकारेण व्यवधानमाश्रयिष्यते, अवर्णान्तादङ्गात्परो यः शता तदन्तस्याङ्गस्येति सूत्रार्थो नोक्तः । अङ्गान्तस्य शत्रवयवस्य चान्तरङ्गत्वान्नुमः पूर्वमेकादेशे व्यपवर्गाभावादवर्णान्तादङ्गात्परस्य शतुरसंभवात् । न चान्तादिवद्भावः 'उभयत आश्रये नान्तादिवत्' इति निषेधात्, भूतपूर्वगत्याश्रयणे तु लुग्विकरणादावदयी ध्नतीत्यादावपा स्यात् । ( व्यतिभविष्यमाण ) इत्यादौ *अट्कुप्वाङ्नुम्व्यवायेऽपि* इति णत्वम् । अडादिभिर्व्यवायेपि रषाभ्यां परस्य समानपदस्थस्य नो ण इति सूत्रार्थः । भविष्यन्नित्यत्तु "पदान्तस्य" इति निषेधान्न भवति ॥

अथ सनादयः प्रदर्श्यन्ते ॥ *धातोः कर्मणः समानकर्तृकादिच्छायां वा* ॥ यो धातुरीषिकर्म समानकर्तृकश्चार्थद्वारेण तस्मादिच्छायां वा सन् स्यात्, नकारो निर्देशार्थः ॥ *सनि ग्रहगुहोश्च* ॥ ग्रहिगुहिभ्यामुगन्तादेकाचश्च परस्य सनो नेडितीड्निषेधः । *इको झल्* इति इगन्ताद्धातोः परस्य झलादेः सनः कित्वान्न गुणः सन्यङो एतदन्तस्य प्रथमैकाचो द्वे भवतोऽजादेस्तु द्वितीयस्येति द्वित्वेऽभ्यासकार्यम् । *सनाद्यन्ता धातव* इति सनादिणिङ्पर्यन्तानां प्रत्ययन्तानां धातुत्वात्पूर्ववल्लादिषु तिबादयः । बुभूषतीत्यादि । लिटि कासप्रत्ययान्ताच्च धातोर्लिटि परं आम्प्रत्यय इत्याम् । अकारो मकारपरित्राणाय । सूत्रे त्वत एव निर्देशात्पररूपम् । "अतोलोपः"आर्द्धधातुक इति सनोऽकारस्य लोपः।"आम" इत्यामः परस्य लेर्लुक् । प्रत्ययलक्षणत्वेन कृदन्तात्वादुत्पन्नस्य सुपः स्वरादिष्वामिति पाठादव्ययत्वाल्लुक् । तत्र यद्यामा साहचर्यादमपि तद्धित एवेत्युच्यते तर्हि "आम"इत्येव लुग्भविष्यति । लिङ्ग्रहणं तु तत्र निवर्त्तिष्यते । अत्रामन्तस्याव्यक्तपदार्थकत्वात्पदत्वाय प्रथमातिक्रमे कारणाभावात्सुरेवोत्पद्यते । तस्य हल्ङ्यादिलोपः सिद्ध इति किं लुको विधानेनेति । यदा तु प्रयोगवशाद् द्वित्वाद्यभिव्यक्तौ द्विवचनाद्युत्पद्यते तदर्थं लुगेषितव्यः ॥ *कृञ् चानुप्रयुज्यते लिटि* ॥ आमन्तस्य पश्चादेवाव्यवहिता एव कृभ्वस्तय एव लिट्पराः प्रयोक्तव्याः अत्र "अभूततद्भावे कृभ्वस्तिः" इति कृशब्दस्य कृञा द्वितीयेति ञकारेण प्रत्याहारनिर्देशात् कृञिति कृभ्वस्तय उच्यन्ते । ( बुभूषां चकार ) बुभूषां बभूव अत्र *मोनुस्वारः* । पदान्तस्य मोनुस्वारो हलीत्यनुस्वारे तस्य *वा पदान्तस्य* इति यञि परे विधीयमानः परसवर्णविकल्पो भवति । अनुस्वारः पक्ष उदाहार्यः । "आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य" इत्यत्र पूर्ववदित्यनुवृत्त्या पूर्ववत् कृञोऽनुप्रयोगस्येति द्वितीयोऽपि योगः संपद्यते । तत्राद्य आम्प्रत्ययप्रकृतेरिवाकर्त्रभिप्रायेऽप्यनुप्रयुज्यमानस्य कृञ आत्मनेपदं प्राकरणिकं विधत्त । द्वितीये त्वर्थात् पूर्वस्येव कर्त्रभिप्राये परस्मैपदमित्यत्र आम्प्रकृतेः शेषत्वेन नित्यपरस्मैपदित्वात् कृञोऽपि परस्मैपदमेव । इदमेव कृञ् ग्रहणमनुयोगे कृञिति प्रत्याहारग्रहणमिति ज्ञापयति । अन्यथाऽनुप्रयोगस्येत्येव ब्रूयात् । ( बुभुषामास ) अत्र

"अस्तेर्भूः" इत्यार्द्धधातुके विषये विधीयमानो भूभावोऽनुप्रयोगे प्रत्याहारग्रहणसामर्थ्यादत्र भवति अन्यथा प्रतिपत्तिलाघवाय कृञ्चित्येव ब्रूयात्। (बुभूषिता) इत्यतो लोपो गुणं परत्वाद् वार्णादाङ्गमिति वा बाधते। (बुभूष्यति) बुभूषतु। अबुभूषत्। बुभूषेत्। आशिषि (बुभूष्यात्) "अतो येयः" न भवति, आर्द्धधातुकत्वात्। अत्र अकृत्सार्वधातुकयोर्दीर्घः *इति अकृद्यकारेऽसार्वधातुके च परेऽजन्तस्याङ्गस्य विधीयमानो दीर्घो [ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन] इत्यल्लोपेन बलीयस्त्वेन बाध्यते। (अबुभूषीत्)। "अस्तिसिचोऽपृक्ते" इति ईडागमे "इट ईटि" इति सिचो लोपः। [सिज्लोप एकादेशे सिद्धो वक्तव्यः] ८।२।३ इति सिज्लोपस्य पूर्वत्रासिद्धत्वाभावात्सवर्णदीर्घः। (अबुभूषिषुः)। "सिजभ्यस्त" ७२ इति जुस्। अबुभूषिष्यत्।

अथात्मनेपदम्॥ (व्यतिबुभूषते। व्यतिबुभूषां चक्रे)। "आम्प्रत्ययवत्" इति नित्यस्तङ् कृञः। (व्यतिबुभूषां बभूव। आसेति वा। व्यतिबुभूषिष्यते। व्यतिबुभूषिषीष्ट व्यत्यबुभूषिष्यत) सर्वत्र *पूर्ववत्सनः* इति तङ्। सनः पूर्वो धातुर्येन निमित्तेनात्मनेपदी सन्नन्तमपि तेनैव तथेत्यर्थः॥

अथ भावकर्मणोः॥ (बुभूष्यते त्वया अनुबुभूष्यते सुखम्)। यकि-"अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घं बाधित्वा "अतो लोपः" पूर्वविप्रतिषेधेन भवति (बुभूषां चक्रे भवता। अनुबुभूषां चक्रे सुखम्। बुभूषामास इति वा) इहानुप्रयुज्यमानस्यामन्तार्थाभिव्यक्तिमात्रकरत्वात् करोतेर्भावे, इतराभ्यामकर्मकत्वाद् भाव उपपद्यते। प्रयुज्यते चैवं 'रोमन्थमन्थरचलद्गुरुसास्नमासां चक्रे निमीलदलसेक्षणमौक्षकेण'। 'प्रकाशेनाकाशे दिनकरकरान्विक्षिपद्भिस्मिताक्षैर्न रैन्द्रैरौपेन्द्रं वपुरथ विशद्धाम वीक्षां बभूव' इति। *ह एति* इत्यस्तेर्हत्वं तासिसाहचर्यात्सार्वधातुकोत्तमैकवचने एवेतीह "लिटस्तझयो" इति तशब्दस्यैशीटश्चैत्वे न भवतीति। के चित्तु तासेरुत्तमैकवचनमेकारः संभवतीत्येतावन्मात्रसाहचर्याश्रयेण लिडुत्तमैकवचनेपि हत्वमिच्छन्ति। तत्र साहचर्यसंकोचे कारणं न विद्मः। लृङ्लृटोराशीर्लिङि लुङि च कर्तृवदेव रूपम्। न च चिण्वदिटि वृद्धौ च *अतो युक् चिण्कृतोः* इत्याकारान्तस्य चिणि ञ्णिति कृति च परे युको विधानाद्रूपभेदप्रसङ्गः, 'ण्यल्लोपो' इत्यादिना वृद्धेरतो लोपेन बाधस्योक्तत्वात्। लुङेकवचने तु चिणो विधानात् तत्राबुभूषीति विशेषः। तथा लोटि लङि विध्यादिलिङि कर्तृवत् प्रक्रिया। यक् तु विशेषः कर्मकर्त्तरि [भूषाकर्मकिरादिसनां चोपसंख्यानमन्यत्रात्मनेपदात्] इति यक्चिणोर्निषेधात्सर्वत्र कर्तृवद्रूपम्। वत्करणात्स्वाश्रये भावे लकारे यक्चिणोर्विषये कर्मवद्रूपम्, कर्त्तरि तृतीया विशेषः। (अभिबुभूष्यते शत्रुणा स्वयमेवेत्यादि)। इच्छायाः कर्तृस्थत्वेन कर्मस्थत्वाभावेऽपीष्यमाणस्य प्राधान्यात्तस्य च कर्मस्थत्वादस्ति कर्मवद्भावः। अत एव "भूषाकर्म" इति यक्चिणौ निषिध्येते॥

अथ यङ्॥ *धातोरेकाचो हलादेः क्रियासमभिहारे यङ्*॥ पौनः पुन्यं भृशार्थो वा क्रियायां समभिहारस्तत्र द्योत्ये एवंविधाद्धातोर्यङ् स्यात्। द्विर्वचनादि पूर्ववत्॥ *गुणो यङ्लुकोः*॥ यङ्लुकि चाभ्यासस्येको गुण इति गुणः। (बोभूयते)। "अनुदात्तङित" इत्यादिना ऽऽत्मनेपदम्। यङो ङकारस्य गुणप्रतिषेधार्थत्वेनावयवे चरितार्थत्वान्न समुदायार्थत्वमिति यङन्तस्य धातोरङित्त्वात्कथमात्मनेपदमिति नाशङ्क्यम्, तत्र धातुग्रहणाभावात् ङिन्मात्रात्परस्य तस्य तद्विधेः। अनुदात्तेतो ये धातवो ङितश्चेति प्रायिकाभिप्रायं वृत्तिकारवचनम्। अथ वा "ङितश्च" इत्यत्र शब्दादित्यध्याहार्यम्। अत एवानुदात्तेतो ङितश्च ये धातव इति नोक्तम्। चङादिष्वतिप्रसङ्गपरिहारस्तत्र तत्र वक्ष्यते (बोभूय्यते त्वया। अनुबोभूय्यते सुखमित्यादि) सनन्तवत्प्रक्रिया। कर्मवत्कर्मकर्ता। लुङि तशब्दे "अचःकर्मकर्तरि" इति चिणो विकल्पनात्पक्षे सिजपि भवति। तेन (अभ्यबोभूयि शत्रुः स्वयमेव, अभ्यबोभूष्ट इति च) वत्करणाद्भावे लकारे नित्यं चिणेव। अभ्यबोभूयि शत्रुणा स्वयमेवेति॥

वेति नियमादभावः ( अङ्कुरः )। "मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्" इत्युरच् । अकि कुटिलायां गतावित्यग्रे । अङ्क लक्षण इति चुरादौ ॥ ८७ ॥

वकि कौटिल्ये ॥ ( वङ्कते । ववङ्के । वङ्कितेत्यादि । प्रवङ्कनम् )। पूर्ववदणत्वम् ।(वङ्किः) "वङ्क्यादयश्च" इति क्विन्नन्तो निपातितः । अयं गत्यर्थः पठिष्यते ॥ ८८ ॥

मकि मण्डने ॥ ( मङ्कते ) इत्यादि । ( प्रमङ्कनम् ) । अङ्किवदणत्वम् । ( मङ्कनः ) । "क्रुधमण्डार्थेभ्यश्च" इति युच् । कर्मकर्त्तरि "भूषाकर्म" इति यक्चिणोर्निषेधाद् ( मङ्क्ते कन्या स्वयमेव, अमङ्किष्ट कन्या स्वयमेवेति ) शप्सिचोर्निषेधाद् (मङ्क्ते कन्या स्वयमेव, अमङ्किष्ट कन्या स्वयमेवेति ) शप्सिचौ भवतः मङ्किः । इन्नितीन् ॥ ८९ ॥

कक लौल्ये ॥ लौल्यं गर्वश्चापल्यं च । ( ककते । चकके । ककितेत्यादि । काकः, ) घञ् । बाहुलकात्कर्तरि, गत्यर्थः, पठिष्यते तस्माद्वा घञ् ॥९०॥

कुक वृक आदाने । ( कोकते । चुकुके । कोकितेत्यादि । चुकुकिषते । चुकोकिषते । कुकित्वा । कोकित्वा )। "रलो व्युपधात" इतिकित्त्वविकल्पः । ( कुकितमनेन, कोकितमनेन । प्रकुकितः । प्रकोकितः । प्रकुकितवान् । प्रकोकितवान् )। "उदुपधात्" इति कित्त्वविकल्पः । ( प्रकोकनम् । प्रकोकणम् ) ॥ *हलश्चेजुपधात् * हलादेरिजुपधात्परो यः कृत् तत्स्थस्य नकारस्य उपसर्गस्थान्निमित्तात्परस्य वा ण इति णत्वविकल्पः । "कृत्यचः" इत्यस्यापवादः । ( कोकः )। देवसेवमेषादयः पचादिषु द्रष्टव्या इत्यादिशब्दस्य प्रकारार्थत्वादिदुपधात्कं बाधित्वा ऽच् प्रत्ययः । (कोकिलः )। "सलिकल्यनिमहिब(१)डिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच्" इति इलच । ( कोकिला )। जातिलक्षणङीषं बाधित्वा ऽजादित्वाद् टाप् । वृक । ( वर्कते । ववृके । वर्कितेत्यादि । विवर्किषते । वरीवृक्यते )। *रीगृदुपधस्य च* ॥ ऋत्वतोभ्यासस्य रीगिति रीगागमः, (वरीवृकांचक्रे) इत्यादावल्लोपस्य स्थानिवत्त्वाद् "न धातुलोपः" इति वा रुगभावः ( वर्वर्क्ति । वरिवर्क्ति । वरीवर्क्ति ॥ वर्वृकीति । वरिवृकीति । वरीवृकीति ।) *रुग्रिकौ च लुकि* इति ऋत्वतोभ्यासस्य रुग्रिकौ चकाराद्रीक् । ईटि "नाभ्यस्तस्याचि पिति" इत्यगुणत्वम् । एवं ववृक्त इत्यादि । वर्वर्का चकारेत्यादौ यङ्लुकोऽनैमित्तकत्वात् "न धातुलोपः" इति गुणनिषेधाभावः । ( अववृकीत् । अवर्वर्क् स्थातेत्यत्र) "स्कोः" इति कलोपो भिन्नपदत्वान्नेति सीकतावुक्तम् । लुङि सार्वधातुकाश्रये गुणे "नाभ्यस्तस्य" इति निषिद्धेपि सिजाश्रयो भवत्येव प्रत्ययलक्षणेन, ( अवर्वर्कीत् । अवर्वर्किष्टामित्यादि )। हलन्तलक्षणा वृद्धिः "नेटि"।इति निषिध्यते । ( वर्कयति । अववर्कत् । अवीवृकत् ) *उर्ऋत्* ॥ चङ्परे णावुपधाया ऋकारस्य वा ऋकार इत्यृकारः । इररारामपवादः । वृकः । इगुपधलक्षणः कः । मृगविशेष आयुधजीविसंघविशेषश्च । तत्र द्वितीयार्थाभिधायिनो "वृकाट्टेण्यण्" इति स्वार्थे टेण्यणि वार्किण्यः॥*ञ्यादयस्तद्राजाः* । "पूगाञ्ञ्यो ग्रामणीपूर्वात्" इत्यारभ्यापादपरिसमाप्तेर्वक्ष्यमाणाः प्रत्ययास्तद्राजसंज्ञा इति टेण्यस्य तद्राजत्वे "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इति लुकि बहुषु वृकाः । तेनैवेति वचनाद्यदि बहुत्वं तद्राजकृतमेवेत्यवगतेर्वार्केण्यमतिक्रान्ता अतिवार्केण्या इत्यादावर्थान्तरकृते बहुत्वे लुग् न भवति । तथा । अस्त्रियामितिवचनात् स्त्रियां टित्त्वात् ङीपि हलस्तद्धितस्य । हल उत्तरस्य तद्धितयकारस्य लोपो भवतीति परत इति "आदेः परस्य" इति यकारलोपे च इत्यकारलोपे ( वार्केणी । वार्केण्यौ । वार्केण्य ) इति भवति । वर्करस्तरुणः पशुः । बाहुलकादरच् ॥ ९२ ॥

चक तृप्तौ प्रतिघाते चेति धनपालमैत्रेयादयः । चक तृप्तावित्येव क्षीरस्वामिशाकटायनौ । ( चकते । चेके । चकितेत्यादि । चकोरः )। "कटिचकिभ्यामोरच्" इत्योरच् । अयं

( १ ) वडीतिः पञ्चपादीवृत्तौ नास्ति ।

घटादावपि ॥ ९३ ॥

ककि वकि श्वकि त्रकि ढौकृ त्रौकृ ष्वष्क वस्क मस्क टिकृ टीकृ रघि लघि गत्यर्थाः ॥ ( कङ्कते । चकङ्के । कङ्कितेत्यादि । वङ्कते । ववङ्के । वङ्कितेत्यादि प्रवङ्कनम् । प्राङ्कनम् ) । "कृत्यचः" इति णत्वम् "इजादेः सनुमः" इति नियमान्न भवति । ( कङ्कतम् ) । वाहुलका-दतच् । कङ्कत एव कङ्कतिका । संज्ञायां कनि टापि "प्रत्ययस्थात्" इतीत्वम् । ( श्वङ्कते । शश्वङ्के । श्वङ्किता । त्रङ्कते । तत्रङ्के । त्रङ्किता ॥ ढौकते । डुढौके । ढौकिता ॥ त्रौकते । तुत्रौके । त्रौकिता । ष्वष्कते । ष्वष्किता ) । [ सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः ] इति सत्वनिषेधः । ( वस्कते । ववस्के । वस्किता । मस्कते । ममस्के । मस्किता टेकते । टिटिके । टेकिता । "असंयोगाल्लिट् कित्" इति कित्त्वान्न गुणः । ( टीकते । टिटीके । टीकिता । रङ्घते । ररङ्घे । रङ्घिता । लङ्घते । ललङ्घे । लङ्घितेत्यादि ) ढौकतित्रौकत्योर्यङ्लु-कोरभ्यासस्य ह्रस्वे गुणः । न च ह्रस्वस्य "दीर्घोकितः" इत्यनेन बाधः । 'अभ्यासविकारेष्व-पवादा नोत्सर्गान् विधीन् बाधन्त' इति तत्राकित इत्यनेन ज्ञापितत्वात् । अस्ति च दीर्घस्य दीर्घत्वे प्रयोजनं स्वस्वनिवृत्तिः । कृते तु ह्रस्वे तस्य दीर्घे ऊकारो न भवति, "गुणो यङ्लुकोः" इत्यस्य निर्विषयत्वप्रसङ्गात् । ढौकतित्रौकतिटेकतिटीकतीनामृदित्त्वाण्णौ चङ्युपधाया ह्रस्वा-भावः । ( अडुढौकत् । अतुत्रौकत् । अटिटेकत् । अटिटीकदित्याह ) । लघु । "लङ्घिवंह्योर्न-लोपश्च" इत्युप्रत्ययनलोपौ । ( लघिमा ) । *पृथ्वादिभ्य इमनिज्वा* इति भावकर्मणोरि-मनिच् । इतीष्ठेमेयस्सु लोपः । वाग्रहणात् *इगन्ताच्च लघुपूर्वात्* इति अणि लाघव-मिति, लघुपूर्वान्तादिति सूत्रार्थः । रघुः । "बालमूललघ्वङ्गलीनां वा लो रत्वमापद्यते" इति पक्षे लकारस्य रेफः । श्वङ्कतिः संमतायां दन्त्यादिः पठ्यते । अत्र दण्डके तिकृ तीकृ इति क चित्पठ्येते, तदपि तिकः प्रतीक इति दर्शनाद् ग्राह्यमेव, इगुपधलक्षणकान्तौ । तिकस्यापत्यं, ( तैकायनिः ) । 'तिकादिभ्यः फिञ्" इति फिञ् । फस्यायनादेशः । तैकायनयश्च कैतवायनयश्च कितकितवाः । *तिककितवादिभ्यो द्वन्द्वे* इति द्वन्द्वे बहुषु फिञो लुक् । लघि भोजननिवृत्तौ चेति स्वाम्यादय । लघि शोषण इत्यग्रे । भाषार्थोयं चुरादौ ॥ १०६ ॥

अघि वघि मघि गत्याक्षेपे ॥ आक्षेपो निन्दा, गतौ गमनारम्भे चेति स्वामी । ( अङ्घते । आनङ्घे । अङ्घितेत्यादि । अञ्जिघिषते ) । "नन्द्राः" इति नवर्जं द्विरुच्यते । अभ्यासस्य चुत्वेन झकारे जश् वे जकारः । ( अङ्घ्यति । आञ्जिघत् । वङ्घते । मङ्घते ) । इत्यादि । प्रा-ङ्घनमित्यादौ "इजादेः सनुम" इति नियमादणत्वम् । मघि कैतवे च ॥ १०९ ॥

राघृ लाघृ सामर्थ्ये ॥ (राघते । रराघे । राघितेत्यादि । रिराघिषते । राराघ्यते । रारा-घीति । राराग्धि । लुङि । आराराक् । राघयति । अरराघत् । ) ऋदित्वादुपधाह्रस्वनिषेधः । एवमितरयोरपि ( उल्लाघः ) "अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" इति क्ते उडभावस्तलोपश्च निपात्यते । उल्लाघेतिवचनाद् अनुपसृष्टाच्च ( लाघितः प्रलाघित ) इति भवति । द्राघृ आ-यामे च । आयामो दैर्घ्यक्रियेति कौशिकः । कदर्थनमिति स्वामी । धाघृ इति तवर्गचतुर्थादि-मपि के चित्पठन्ति ॥ १११ ॥

श्लाघृ कत्थने ॥ कत्थनं श्लाघनम् (देवदत्ताय श्लाघते ।) देवदत्तं स्तुवँस्तमेव बोधयितु-मिच्छतीत्यर्थः । *श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः* । श्लाघ्यादीनां प्रयोगे ज्ञीप्स्यमानो ज्ञाप-यितुमिष्यमाणः संप्रदानमिति देवदत्ताच्चतुर्थी, के चिदाहुः । आत्मानं परं वा स्तुवन् तां स्तुतिं बोधयितुमिच्छतीत्यर्थ इति । तथा च भट्टिः, श्लाघमानः परस्त्रीभ्यस्तत्रागाद्राक्षसेश्वर इति । देव-दत्तं श्लाघत इति ज्ञीप्स्यमानत्वाविवक्षायां कर्मत्वम् ॥ शीकादय उदात्ता अनुदात्तेतो गताः ११२

अथ परस्मैपदिन आह—

फक्क नीचैर्गतौ ॥ इलः शिष्यन्ता उदात्ता उदात्तेतः । नीचैर्गतिर्मन्दगमनमसद्व्यवहारो वेति स्वामी ( फक्कति । पफक्क । फक्किता । फक्किष्यति फक्कतु । अफक्कत् । फक्केत् ।

आशिषि फक्यात् । अफक्कीत् । अफक्किष्यत् । कर्मादौ फक्यत इत्यादि । पिफक्किषति । पाफक्यते पाफक्कीति । पाफक्ति । फक्कयति । अपफक्कत् ॥ ११३ ॥

तक हसने ॥ ( तकति । तताक । तेकतुः । तकिता । अतकीत् । अताकीद् ) इत्यादि । अतो हलादे इति वा वृद्धिः । ( व्यतितकन्ति ) [ प्रतिषेधे हसादीनाम् ] इति तङ्निषेधः । ( तक्यम् ) । "तकिशसि" इति यत् ॥ ११४ ॥

तकि कृच्छ्रजीवने ॥ ( तङ्कति । ततङ्क । तङ्कितेत्यादि । यङ्लुकि लङि ईडभावे अतातन् ) । अस्यानन्तरं मैत्रेयः शुक गताविति पठित्वा शोकति, शुकः, शुक्र इत्युदाजहार, अस्मिन्हि सति शुकवल्कोल्का इति शुभेः कनि भलोपे शुकशब्दनिपातनमनर्थकं स्यात्, इगुपधलक्षणेन कप्रत्ययेनैव सिद्धत्वात्, तथा शुकेरग्विधानेनापि शुक्रशब्दे सिद्धे ऋजेन्द्रादौ शुचेर्निपातनमनर्थकं स्यादित्यस्य पाठोऽनार्ष इव प्रतीयते ॥ ११५ ॥

बुक्क भषणे ॥ भषणमिह श्वरवः । ( बुक्कति । बुबुक्क । बुक्कितेत्यादि ) । अयं चुरादावपि ॥ ११६ ॥

कख हसने । ( कखति । चकाख । कखितेत्यादि । अकखीत् । अकाखीत् ) । "अतो हलादेः" इति वा वृद्धिः ॥ ११७ ॥

ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः । ( ओखति । ओखांचकार । ओखितेत्यादि । ओचिखिषति । ओखयति । ( मा भवानोचिखत् ) । "द्विर्वचनेचि" इति णिलोपस्य स्थानित्त्वात् खिशब्दस्य द्वितीयस्यैकाचो द्विर्वचनमृद्धित्त्वान्नोपधाह्रस्वः । इदमेव ऋदित्त्वं ज्ञापकमन्तरङ्गादपि द्विर्वचनात्पूर्वमुपधाह्रस्वत्वं भवतीत्यस्य । अस्य च प्रयोजनं मा भवानिदिधदिति सिद्धिरित्येधतावुक्तम् । (प्रोखति) । *एङि पररूपम्* । अवर्णान्तादुपसर्गादेङि परे पूर्वपरयोः पररूपमिति पररूपत्वम् । ( राखति । अरराखत् । लाखति । द्राखति । धाखतीत्यादि ) ॥ १२२ ॥

शाखृ श्लाखृ व्याप्तौ ॥ ( शाखति । श्लाखतीत्यादि । शाखा ) । "गुरोश्च" इत्यकारः । शाखेव शाख्यम् । "शाखादिभ्यो यः" इति इवार्थे यः । ( प्रतिशाखं भवं प्रातिशाख्यम् । ) "अव्ययीभावाच्च" इति भवार्थे ण्यः । शाखा अस्य सन्तीति, शाखी । "व्रीह्यादिभ्यश्च" इति इनिः । विशिष्टा शाखा विशाखा । सा प्रयोजनं प्रयोजिका यस्य वैशाखो मन्थः । "विशाखाषाढादण्मन्थदण्डयोः" इति प्रयोजने णप्रत्ययः । विशाखेति नक्षत्रं तत्र जातः । "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" इत्यण् । तस्य "श्रविष्ठाफल्गुनी" इत्यादिना लुकि "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययस्य लुकि विशाखो माणवकः ॥ १२४ ॥

उख उखि वख वखि मख मखि णख णखि रख रखि लख लखि इख इखि ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः ॥ द्वितीयन्ताः पञ्चदश, तृतीयान्तास्त्रयोदश ॥ ( ओखति । प्रोखति ) 'एङि पररूपम्' । ( उवोख । ऊखतुः । उवोखिथ । उवोख ) । गुणविषये *अभ्यासस्यासवर्णे* इति अभ्यासस्येवर्णोवर्णयोरसवर्णेऽचि परत इयङुवङावित्युवङ् । लिटि पिद्वचनेषु गुणः, गुरुमानयं धातुरिति तेषां स्थानिवत्वेन लिट्त्वाद् आम् प्राप्तः । सन्निपातपरिभाषया निवर्त्तते । आमि गुणनिमित्तप्रत्ययस्य "आमः" इति लुक् स्यात् । ऊखतुरित्यादौ सवर्णदीर्घस्यान्तवत्त्वेनाभ्यासत्वाद् ह्रस्वो न भवति, अभ्यासमात्राश्रयत्वेनान्तरङ्गेऽस्मिन् पूर्वपराश्रयस्य बहिरङ्गस्य सवर्णदीर्घस्य 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यसिद्धत्वात् । ओखितेत्यादि । लुङि "नेटि" इति वृद्धेर्निषेधे लघूपधगुणेन मा भवानोखीदिति भवति । ( ओचिखिषति ) लघूपधगुणे कृते द्वितीयस्यैकाचो द्विर्वचनम् । ( ओखयति मा भवानुचिखत् ) । द्विर्वचनात् पूर्वमेवोपधाह्रस्वत्वमिति ज्ञापितम् । ( ओखित्वा ) "न क्त्वा सेट्" इति अकित्त्वाद्गुणः । भावादिकर्मणोर्निष्ठायाम् । "उदुपधाद्" इति कित्त्वविकल्पनादुखितमनेन, ओखितमनेनेत्यादि नेयम् । उखो मुनिः ।

इगुपधत्वात्कः । उखेन प्रोक्तं औखीयः श्लोकः । "तित्तिरिवरतन्तुखण्डिकोखाच्छण्" इति तृतीयान्तात् प्रोक्तार्थे छण्, णित्त्वाद्वृद्धिः । यदा तु प्रोक्तं छन्दो ब्राह्मणं वा तदा "छन्दोब्राह्मणानि च तद्विषयाणि" इति नियमाद् अध्येतृवेदितृप्रत्ययविषयमेव, तेन "तदधीते तद्वेद" इति औखीयशब्दाद् द्वितीयान्ताद् अध्येतृवेदित्रोरण, तस्य "प्रोक्तप्रत्ययाच्छणः परत्वेन लुकि औखीयो माणवकः । औखीया ब्राह्मणीत्यत्र प्रत्ययलक्षणेनाणन्तत्वाद् "टिड्ढाण्" इति न ङीप् भवति, अत इत्युनुवर्त्यांणोऽकारस्य च विशेषणविशेष्यत्वाद् 'वर्णाश्रये नास्ति प्रयलक्षणम्' इति प्रत्ययलक्षणनिषेधात् । ( उखायां संस्कृतमुख्यम् ) । *शूलोखाद्यत्* इति सप्तम्यन्तात्संस्कृतमित्यर्थे यत । प्रोंखणम् । "कृत्यचः" इति णत्वम् । ( उङ्खति । उङ्खांचकार । उङ्खित्वा । उञ्चिखिषति । उङ्खयति । औञ्चिखदित्यादि ) प्रोङ्खणम् । "इजादेः सनुमः" इति णत्वम् । ( वखति । ववाख । वखितेत्यादि, ववखतुरित्यादौ किति लिटि वकारादित्वादेत्वाभ्यासलोपौ न । लुङि "अतो हलादेः" इति वा वृद्धिः । ( अवाखीदिति ) एवं परेषामनिदिताम् । ( वङ्खति । प्रवङ्खनम् ) । "इजादेः" इति नियमादणत्वम् । ( मखति । ममाख । मखितेत्यादि । मङ्खति । नखति । नङ्खति ) । मूर्धन्यादेरुपदेश "उपसर्गात्" इति णत्वेन प्रणखतीत्याद्यपि यथा स्यादिति (रखति । रङ्खति । प्ररङ्खणम् ) । "रषाभ्याम्" इति णत्वम् । इजादेरिति नियमं उपसर्गात्कृत्यच इति प्राप्तस्यैव । ( लखति । लङ्खति । एखति । इयेख । एखितेत्यादि । ओखतिवत् । (इङ्खति । इङ्खां चकार ।ईखति । ईखां चकार) । यद्यपि मैत्रेयेणादितश्चय इदित उखिवखिमखयः । मूर्द्धन्यादिर्नेखिरनिदित, इखिश्च न पठ्यते, तथापि इतरानेकव्याख्यातॄणां प्रामाण्यादस्माभिः पठित । अत्र चन्द्रो मुखिमपि पपाठ । संमतायां तु त्रख त्रखि शिखि इति त्रयः पठ्यन्ते। द्रविडास्तु रिखमपि पठन्ति, एवमेकोनविंशतिः खान्ताः । वल्गति रङ्गति ) रङ्गन्त्यस्मिन् प्रेक्षकाणां मनांसीति, रङ्गः । "हलश्च" इति संज्ञायामधिकरणे घञ् । रङ्गेर्वा घो द्रष्टव्यः (लङ्गति । विलगितः) अनिदितां नलोपे [ लङ्गिकम्पोरुपतापशरीरविकारयोरुपसंख्यानम् ] इति नलोपः उपतापादन्यत्रावयवीत्यङ्गम् । रङ्गवद् घञ् । अङ्गिरगतौ विपरीतलक्षणया प्रवर्तते, दर्श इत्यत्र दृशिवत् । न दृश्यतेऽस्मिन् चन्द्र इतिं हि दर्शशब्दो धूर्तस्वामिना व्युत्पादितः । कल्याणान्यङ्गन्यस्याः सन्तीति अङ्गना । "अङ्गात् कल्याणे" इति पामादिपाठान्मत्वर्थीयो नः, विशिष्टं विहीनं वा ऽङ्गमस्येति व्यङ्गः, तस्यापत्यं व्याङ्गिः "अत इञ्" "स्वांगतादिनां च" इति वृद्धिप्रतिषेधैजागमयोर्निषेधः । एवं स्वाङ्गिरित्यत्रापि सर्वाङ्गं व्याप्नोतीति सर्वाङ्गीणः स्नायुः, *तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति* इति सर्वादेः पथ्याद्यन्ताद् द्वितीयान्ताद्व्याप्नोतीत्यर्थे खः । अग्निः । "आगोर्नेर्नलोपश्च" इति निप्रत्ययो नलोपश्च । अग्निर्देवता अस्य, आग्नेयं हविः । [सर्वत्र अग्निकलिभ्यां ढक् प्रत्ययः]। सर्वत्रेति वचनादर्थान्तरेप्ययमेव । ( अग्नीषोमौ अग्नीवरुणौ ) । "ईदग्नेः सोमवरुणयोः" इति देवताद्वन्द्वलक्षणस्यानङोपवाद ईकारः । अग्नीवरुणौ देवता अस्याग्निवारुणम् । "देवताद्वन्द्वे च" इत्युभयपदवृद्धिः "इद्वृद्धौ" इति वृद्धिमत्युत्तरपदे अग्नेरिकार ईत्वापवादः । अग्नायी । *वृषाकुप्यग्निकुसितकुसिदानामुदात्त* इति पुंयोगे ङीप्युदात्तऐकारान्तादेशे आयादेशः । आग्नायी देवता अस्य आग्नेयम् । लिङ्गविशिष्टपरिभाषया [ सर्वत्राग्निकलिभ्यां ढक्] इति ढकि [ भस्याढे तद्धिते] इति पुंवद्भावपर्युदासे स्त्रीभ्यो ढको ग्रहणमिति कैयटादावुक्तत्वात्पुंवद्भावः । अग्निमिनूद्ध इत्यग्निमिनूद्धः । [ भ्राष्ट्राग्न्येरिनुद्धे मुम्वक्तव्य] इति मुम् ॥ अयम् । "रुद्रेन्द्रा" इति निपातनाद्रकि नलोपः । अयं भवयमिम् ।। "अग्रादिपश्चाडिमीच् इति डिमच् । ( अङ्गारः ) "अगिमगिनन्दिभ्य आरन्" इत्यारन् । (अङ्गुलिः ) । "ऋतञो" इत्यादिना उलिप्रत्ययः ( अङ्गुरिः ) । "घालमूल" इत्यादिना पक्षे रः । पञ्चाङ्गुलयः प्रमाणमस्य पञ्चाङ्गुलः । *तद्धितार्थोत्तरपदसमाहारे च* तद्धितार्थे विषयभूते उत्तरपदे परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सम समस्येते इति प्रमाणे तद्धितार्थे विषयभूते समासः ॥ "सङ्ख्यापूर्वो

द्विगुः" इति द्विगुत्वे "द्विगुश्च" इति तत्पुरुषश्चार्थात्तत्र *प्रमाणे द्वयसज्दघ्नञ्मात्रचः* इति प्रमाणोपाधिकादस्मात्प्रमाणि मात्रच्, तस्य "द्विगोर्लुङ् नित्यम्" इति लुकि "तत्पुरुषस्याङ्गुलेः सङ्ख्याव्यादेः" इत्यचि "यस्येति च" इतीकारलोपः । अत्यङ्गुलम् । [अत्यादयः क्रान्ताद्यर्थे ] इति तपुरुषः, अव्ययादित्वादिच् । शोभनाङ्गुलिः स्वङ्गुलिः । *न पूजनात्* । यान् शब्दानुपादाय समासान्तो विधीयते ते यदा पूजावचनात्परे भवन्ति तदा समासान्तो नेत्यत्राचोभावः । (कुत्सिताङ्गुलिः किमङ्गुलिः) । *किं क्षेपे* । क्षपे यः किं शब्दः स समानाधिकरणेन सुबन्तेन समर्थेन समस्यत इति तत्पुरुषः । *किमः क्षेपे* इति क्षेपवचनादस्मात्परस्य समासान्तनिषेधाद् अच्न भवति । (माङ्गुलिः, अनङ्गूलिः) । यत्र *नञस्तत्पुरुषात्* इति समासान्तनिषेधः । नञः परे ये वक्ष्यमाणा ऋगादयस्तदन्तात्तत्पुषचिति सूत्रार्थः । पञ्चाङ्गुलिसदृशा अवयवा अस्य पञ्चाङ्गूल एरण्डः । धान्यादीनां विक्षेपदारु च पञ्चाङ्गुलमाहुः । *अङ्गुलेर्दारु* इति बहुव्रीहौ षच् (अङ्गुलीयकम् ) संज्ञायां कन् । "जिह्वामूलाङ्गुलेच्छः" इति सप्तम्यन्ताद्भवार्थे छः । ( वङ्गयीति वङ्गाः जनपदः ) । अङ्गवद्युत्पत्तिः । ( मङ्गलम् ) । "मङ्गेरलच्" इत्यलच् । तङ्गति । अङ्गति । श्लङ्गति । इङ्गति । रिङ्गति । लिङ्गति ) । लिगि चित्रीकरण इति चुरादौ च ।

त्वगि कम्पने च ( त्वङ्गति ) ॥ १९३ ॥

युगि जुगि रुगि वर्जने ॥ ( युङ्गति । जुङ्गतीत्यादि ) ॥ १९६ ॥

घघ हसने ॥ ( घघति । जघाश्च घिघितेत्यादि ) ॥ १९७ ॥

मघि मण्डने ॥ ( मङ्घति । । मङ्घते कन्या स्वयमेव । अमङ्घिष्ट कन्या स्वयमेव, भूषाकर्मत्वाद् यक्चिणौ । मङ्घनः । "क्रुडमण्डार्थेभ्यश्च" इति युच् ॥ १९८ ॥

शिघि आघ्राणे ॥ ( शिङ्घति ) । शिङ्घानको रोगविशेषः । "लृशिघिधाभ्यश्च" इत्यादिनानक् प्रत्ययः ॥ फक्कादय उदात्ता उदात्तेतः ॥ १९९ ॥

अथ क्रमप्राप्ताश्चवर्गान्तानात्मनेपदिन आह ॥

वर्च दीप्तौ ॥ एतदादय ईजन्ता उदात्ता अनुदात्तेतः ॥ ( वर्चते ॥ ववर्चे । वर्चिता । वर्चिष्यते । वर्चताम् ॥ अवर्चत । वर्चेत ) । आशिषि ( वर्चिषीष्ट । अवर्चिष्ट । अवर्चिष्यत । भावे वर्च्यते ) इत्यादि । (विवर्चिषते । वावर्च्यते । वावर्क्षीति ॥ वावर्क्ति ॥ अवावर्चीत् । अवावर्क् ) । "रात्सस्य" इति नियमान्न संयोगान्तलोपः ॥ अवावर्क् स्थातेत्यादौ कुत्वस्यासिद्धत्वात्स्कोः इति कलोपो न भवति, यद्वा तत्र निमित्तनिमित्तिनोः समानपदस्थत्व एव सलोप इतीह नैव प्रसङ्गः । ( वर्चयति । अववर्चत् ) । वर्चः दीप्तिः पुरीषं च ॥ "असुन्" इत्यसुन् । वर्चस्कः पुरीषम् । संज्ञायां कन्, "सोपदादौ" इति विसर्जनीयस्य सत्वं, "कुप्वोः ॥ इत्यस्यापवादः । ब्रह्मवर्चसम् । हस्तिवर्चसम् । "ब्रह्महस्तिभ्यां वर्चसः" इत्यच् समासान्तः । ( पल्यवर्चसम् । राजवर्चसम् ) । [ पल्यराजभ्याञ्च ] इत्यच् । ब्रह्मवर्चसनिमित्तं संयोग उत्पातो वा ब्रह्मवर्चस्यम् ॥ [ तस्य निमित्तप्रकरणे ब्रह्मवर्चसादुपसङ्ख्यानम् ] इति यत् । वर्च्यम् । ण्यति "चजोः कुघिण्ण्यतोः" इति कुत्वं न भवति । "न क्वादेः" इत्यत्र क्वाद्यजिव्रजियाचिरुच्यादीनां न प्रतिषेधो निष्ठायामनिटः कुत्ववचनात् ] अस्यार्थः । चजोः कुघिण्ण्यतोनिष्ठायामनिटः" इति सूत्रं कर्त्तव्यं, तेन "न क्वादेः" "अजिव्रज्योश्च" इति योगद्वयं "यजयाचरुचप्रवचर्चश्च" इत्यत्र याचिरुच्यृचिग्रहणं न कर्त्तव्यं भवतीति । तेषां सेट्त्वादित्यभिप्रायः । अयमत्र विवेकः । ये क्वादयोऽन्ये वा निष्ठायामनिटस्तेषां कुत्वं ये तु सेटस्तेषां नेति । एवञ्चात्र मते ग्लुचादीनां कवर्गादित्वेपि निष्ठायामनिट्त्वात्कुत्वेन भाव्यम् । अत्र हरदत्तः । [ यथोत्तरं मुनीनां प्रामाण्यम् ] इति वार्त्तिककारानुसारेण कुत्वस्य भावाभावौ व्यवस्थाप्याविति । कथन्तर्हि शोकः समङ्ग इति । यतः शुच्युजी निष्ठायां सेटौ । अत्र भाष्यं, [ शुच्युज्योर्घञि कुत्वं

वक्तव्यम्] इति । अत्र हरदत्तः । तच्च यथान्यासेपि वक्तव्यं घन्येव यथा स्यादूण्यति माभूदिति, तदेव वार्त्तिककारपक्षे विध्यर्थं भविष्यतीति ॥ १६० ॥

षच सेचने ॥ अयं सेवनार्थोपि, तथा च 'त्रय एनां महिमानः सचन्त' इत्यत्र क्षुरभट्टभास्करीययोः सचते सेवतइति । निरुक्ते च सक्तः सचित इति, सेव्यमानस्येति । अस्यैतौ वाचकावित्यर्थः । 'प्रनूमहित्वं वृषभस्त वोचं यं पुरवो वृत्रहणं सचन्त' इति । ( सचते । सेचे । सचिता । सचिष्यते । सचताम् । असचत । सचेत । आशिषि सचिषीष्ट । असचिष्ट ) । "स्तौतिण्योरेव" इति षत्वम् ( सासच्यते । सासक्ति । साचयति । असीषचत् ) सक्तुः । "सितनिगमिमसिसचि"इति तुन् "तितुत्र"इतीण्निषेधः । सक्तुलः । "सिध्मादिभ्य"इति मत्वर्थे लः । सचिवः । बाहुलकाद्वप्रत्ययः । यद्वा सचिः सेवा, इन प्रत्ययः, तां वातीति सचिवः, "आतोनुपसर्गे कः" । यद्वा "केशाद्वोन्यतरस्याम्" इति वप्रत्ययः "अन्येभ्योपि दृश्यते" इति मणिवराजीवादिवदस्मादपि । अयं समवाये स्वरितेदग्रे ॥ १६१ ॥

लोचृ दर्शने ॥ ( लोचते । लुलोचे । लोचितेत्यादि । लुलोचिषते । लोलोच्यते । लोलोचीति । लोलोक्ति । लोचयति । अलुलोचत् ) । ऋदित्वाण्णौ चङि ह्रस्वाभावः । भाषार्थोयं चुरादौ ॥ १६२ ॥

शच व्यक्तायां वाचि ॥ ( शचते । शेचे । शचितेत्यादि । शची ) इन्नन्तात्कृतम् "इकारादक्तिन" इति ङीप् ॥ १६३ ॥

श्वच श्वचि गतौ ॥ ( श्वचते । शश्वचे । श्वचिता । श्वञ्चते । शश्वञ्चे । श्वञ्चितेत्यादि ) । अच्यादयस्तालव्यादयः ॥ १६५ ॥

कच बन्धने ॥ ( कचते । चकचे । कचितेत्यादि ) कचते यूनां मनांसि बध्नातीति कचः । पचाद्यच् ( काचः ) "हलश्च"इति संज्ञायां घञ् ॥ १६६ ॥

कचि काचि दीप्तिबन्धनयोः ॥ ( कञ्चते । चकञ्चे । कञ्चिता । काञ्चत ) इत्यादि । ( कञ्चुकः ) । बाहुलकादुकः प्रत्ययः । ( काञ्चनम् ) । अनुदात्तेत्त्वाद्युच् । काञ्चनस्य विकारः । ( काञ्चनम् ) "प्राणिरजतादिभ्योञ्" इति । रजतादित्वादञ् "नित्यं वृद्धशरादिभ्यः" इति मयटोपवादः । ( काञ्चिः । काञ्ची । ) इन्नन्तात् कृदिकारादक्तिनः" इति वा ङीष् । ( काञ्चिकम् ) । संज्ञायां कल्कने कन् । दीप्तौ चेति वक्तव्ये बन्धनग्रहणं प्रपञ्चार्थम् १६८

मच मुचि कल्कने ॥ कल्कनं दम्भः शाठ्यं चेति मैत्रेयः । दम्भभः कत्थनं चेति स्वामी । मचते । मेचे । मचिता । मुञ्चते । मुमुञ्चे । मुञ्चितेत्यादि ) । मुचेति चन्द्रः । तन्मते मोचत इति । मुच्लृ मोक्षणइति तुदादौ । मुच प्रमोचन इति चुरादौ ॥ १७० ॥

मचि धारणोच्छ्रायपूजनेषु ॥ ( मञ्चते ) इत्यादि । ( मञ्चः ) । पचाद्यच् । शाकटायनस्तु मुचिं हित्वा द्वावेव धातू पपाठ । मचि कल्कने । मञ्चु धारणोच्छ्रायपूजनेष्विति । तेन चानुदात्तेत्स्थाने इडिद्विक्रियते । तस्य स्थाने वोदित्, धनपालस्तावत् शाकटायनानुसारी ॥ १७१ ॥

पचि व्यक्तीकरणे ॥ पञ्चते । पङ्क्तः । "चजोः कुघिण्ण्यतोः" इति कुत्वम् । वार्त्तिकमते न्यङ्क्वादिर्द्रष्टव्यः । तेन हि निष्ठायामनिटः कुत्वमुच्यते । पञ्चन् बाहुलकात्कनिन् बहुवचनान्तः । तत्र "ष्णान्ता षट्"इति षट्संज्ञाविधानात् । षड्भ्यो लुक्" इति जश्शसोर्लुक् । पञ्चानामित्यत्र "षट्चतुर्भ्यश्च" इत्यामो नुटि *नोपधायाः* नान्तस्योपधाया नामि दीर्घ इति दीर्घे "न लोपः प्रातिपदिकान्तस्य" इति नलोपः स्त्रियामपीदमेव रूपम् । "न षट्स्वस्रादिभ्य" इति टापो ङीपश्च निषेधात । अस्ति च टापः प्रसङ्गो नकारे लुप्ते । पञ्चानामपत्यं, पाञ्चिः । बाह्वादित्वादिञ् *नस्तद्धिते* नान्तस्य भस्य तद्धिते टिलोप इति टिलोपः । (पङ्क्तिः) । "पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम्" इति "तदस्य परिमाणम्" इति विषये तिप्रत्ययो निपात्यते । पञ्च परिणामस्य वर्गस्य पञ्चत् । "पङ्क्त्हशतौ

वर्गे वा" इति डत्यन्तो निपातितः। वाग्रहणात् "इत्संख्याया अतिशदन्ताया कन्" इति कनि पञ्चकः। पञ्चेति दुर्गः। तथा वर्धमानोपि, यदाह। अनिड्विधौ पच्यादिसूत्रे डुपचष्पाके पच व्यक्तीकरणइति। संमतायां तु वर्धमानवदुक्त्वाऽन्यैस्त्वयमिदित् पठ्यतइत्युक्तम्। "तिङो गोत्रादीनि" इत्यत्र प चतिगोत्रमित्युपादाय पच व्यक्तीकरणइति पठन् न्यासकारः पपरस्मैदिनं च मन्यते। डुपचष्पाकइत्यग्रे। पचि विस्तारवचनइति चुरादौ ॥ १७२ ॥

ष्टुच प्रसादे ॥ स्तोचते। "धात्वादेः षः सः"। ष्टुत्वं निमित्ताभावन्न भवति। सत्वात्पूर्वं तु पूर्वत्रासिद्धत्वेन न भवति। (तुष्टुचे)। "शपूर्वाः खयः" इति शेषः। (स्तोचितेत्यादि तुस्तुचिषते। तुस्तोचिषते। स्तुचित्वा। स्तोचित्वा) "रलो व्युपधात्" इति क्त्विवविकल्पः। "स्तौतिण्योरेव" इति नियमात्सन्यषत्वम्। (तोष्टुच्यते। तोष्टुचीति। तोष्टोक्ति स्तोचयति। अतुष्टुचत्। स्तोकः)। घञ्। (उदश्वित्स्तोकम्) अल्पमुदश्विदित्यर्थः। *पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः*। पोटादिभिः समानाधिकरणैः जातिवाचि सुबन्तं समस्यत इति तत्पुरुषः। अत्रैव निर्देशाद् वार्त्तिककारमते कुत्वम्। स हि "चजोः कु घिण्यतोर्निष्ठायामनिटः" इति सूत्रं न्यास्थत्। (स्तोकान्मुक्तः, स्तोकेन मुक्तः।) स्तोकत्वेन मुक्त इत्यर्थः। 'करणे च स्तोकाल्पकृच्छ्रकतिपायस्यासत्ववचनस्य" इति तृतीयापञ्चम्यौ। असत्ववचनस्येति वचनात् स्तोकेन विषेण हत इति सत्त्ववचनात्तृतीयैव। स्तोकान्मुक्त इत्यत्र 'स्तोकान्तिके' इत्यादिना समासे 'पञ्चम्याः स्तोकादिभ्यः" इत्यलुग्वचनात्तदेव रूपम्। संस्तोजा इति वर्णविकाराभ्युपगमादिति मैत्रेयः ॥ १७३ ॥

'ऋज गतिस्थानार्जनोपार्जनेषु' अयं पाठो मैत्रेयस्य। ऊर्जनेष्विति क्षीरस्वामिधनपालशाकटायनाः। अर्जते। "उरण् रपरः" इति रपरो गुणः। आनृजे। अत्र ऋजशब्दस्य द्विर्वचने हलादिशेषे "उरत्" इति ऋवर्णान्ताभ्यासत्वाद् इति नुट्॥ ऋकारैकदेशस्यापि रेफस्य हल्त्वाश्रयणाद् द्विहल्त्वम्। तत्र हि द्विहलपरत्वं गौणस्येदृशस्य हलः परिग्रहार्थम्। अन्यथा तस्मान्नुडित्येव ब्रूयात्। न चात्तुरित्यादावेकलहल्यतिप्रसङ्गः। "अश्नोतेश्च" इत्यनेनद्विहलो यदि भवत्यश्नोतेरेवेति नियमात्, अस्याश्नोतिमात्रनिवृत्त्यर्थत्वे नाश्न इत्येव ब्रूयात्। "ऐऔच्" इत्यत्र द्विहल्ग्रहणं न करिष्यत इति भाष्यम्। तत्र कैयटे। 'अवर्णोपधस्य यदि भवति अश्नोतेरेवेति नियमाश्रयेण द्विहल्ग्रहणं प्रत्याख्याय नुडुक्तः'। (अर्जिता। अर्जिष्यते। अर्जताम्। आर्जत)। आशिषि। (अर्जिषीष्ट। आर्जिष्ट। अर्जिष्यत। अजादित्वादाडागमः। (अर्जिजिषते) सनीटि गुणे "न न्द्राः" इति रेफवर्जं द्विरुच्यते। (अर्जयति। आर्जिजत्)। प्राज्यतइत्यत्र कर्मादौ यकि। *"उपसर्गादृति धातौ"* परे पूर्वपरयोर्वृद्धिरेकादेश इति आर्वृद्धिः। (अर्जित्वा)। "न क्त्वा सेट्" इत्यकित्त्वाद्गुणः। ऋज्यम्। 'ऋदुपधाच्चाक्लृपिचृतेः" ॥ इति भावकर्मणोः क्यप् ॥ १७४ ॥

ऋजि भृजी भर्जने ॥ द्वितीय ईदित्। भर्जनं पाकविशेषः। (ऋञ्जते। प्राञ्जते) ॥ "उपसर्गादृति" इति वृद्धिः। ऋञ्जां चक्रे। आनृञ्जइति संमतातरङ्गिण्योः। तदसत्। नुम्विधावुपदेशिवद्वचनात्। अत एव काश्यपमैत्रेयादय आममेव सर्वे उदाजह्रुः। (ऋञ्जिता। ऋञ्जिष्यते। ऋञ्जताम्। आर्ञ्जत। ऋञ्जेत। ऋञ्जिषीष्ट। आर्ञ्जिष्यत। "आटश्च" इति वृद्धिः। ऋञ्जिजिषते। "न न्द्राः" इति नवर्जं द्विरुच्यते। (ऋञ्जयति। मा भवान् ऋञ्जिजत्। भर्जते। बभृजे। भर्जितेत्यादि। बिभर्जिषते। बरीभृज्यते)। "रीगृदुपधस्य च" इति रीक्। (बर्भृजीति। बरिभृजीति। बरीभृजीति। बर्भर्क्ति। बरिभर्क्ति। बरीभर्क्ति)। "रुग्रिकौ च लुकि" इति रुग्रिकौ, (भर्जयति। अबीभृजत्।) उर्ऋद्वा। अन्यदा (अबभर्जत्। भृक्तः। भृक्तवान्)। "श्वीदितो निष्ठायाम्" इति अनिट्त्वम्। भर्गः। घञि कुत्वम्। भ्रस्ज पाक इति तुदादौ ॥ १७६ ॥

एजृ भ्रेजृ भ्राजृ दीप्तौ । ( एजते । भ्रेजते ) "एङि पररूपम्" । एजां चक्रे । एजितेत्यादि । एजिजिषते । एजयति । मा भवानेजिजत् ) ऋदित्त्वान्नोपधाह्रस्वः । अन्यथा इदिधदित्यादिवद् द्विर्वचनात्पूर्वमेवोपधाह्रस्वः स्यात् । अङ्गमेजयतीत्यङ्गमेजयः । "एजेः खश्" इति ण्यन्तादस्मात्कर्मण्युपपदे खशः शित्त्वात्सार्वधातुकत्वाच्छपि गुणायादेशौ । अन्यथार्धधातुकत्वात् "ण्यल्लोपः" इत्यादिना गुणं बाधित्वा णिलोपः स्यात् । खित्त्वात् "अरुर्द्विषदजन्तस्य" इति पूर्वपदस्य मुम् । वृत्तौ तु एजृ कम्पनइति परस्मैपदिण्यन्तात् खशुक्तः उदेजयतीत्युदेजयः । "अनुपसर्गाल्लिम्प०" इत्यादिना उत्पूर्वात् ण्यन्तादस्माच्छप्रत्यये शपि गुणायौ । अनुपसर्गग्रहणमर्थादन्यविशेषणम् । अत्राप्युपसर्गान्तरनिवृत्त्यर्थं च, तेन (समुद्) इत्यादौ अचि णिलोपः । ( भ्रेजते । भ्रेतितेत्यादि । विभ्रेजिषते । वेभ्रेज्यते । वेभ्रेजीति । वेभ्रेक्ति । भ्रेजयति । अविभ्रेजत् ) "ह्रस्वः" इति इकारोभ्यासस्य, पूर्ववद्दित्त्वान्नोपाधाह्रस्वः । भ्राजत इत्यादि भ्रेजिवत् । "व्रश्चभ्रस्जसृज" इत्यादिना झलि पदान्ते च विधीयमानं षत्वमस्य नास्ति । राजिसाहचर्यात्फणादिपठितस्यैव तत्र ग्रहणादिति मैत्रेयक्षीरस्वामिसंमताकारादयः । एवं चावश्यपठितव्येन फणादिकेन भ्राजत इत्यादीनां सिद्धेरिह पाठोऽनार्ष इवेति न्यासोक्तं दुरुक्तं, यद्वा तत्रापीवशब्देन पूर्वोक्त एव पक्षः सूच्यते । ( भ्राजयति । अबिभ्रजत् । अबभ्राजत् )। *भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्* इति चङ्परेणौ उपधाह्रस्वविकल्पः । एवं चास्य ऋदित्त्वमनुदात्तेत्त्वमात्रफलम् । भ्राजिष्णुः । "भुवश्च" इति चकारादिष्णुच् । विभ्राक् । "भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्" "चोः कुः" इति कुत्वम् । व्रश्चादिसूत्रे राजिसाहचर्यात् फणादिकस्यैव ग्रहणमित्युक्तत्वान्न षत्वम् । यत्तु वृत्तौ क्विप्सूत्रे विभ्राडिति कृतषत्वस्यैवोदाहरणं तद्यनुबन्धकत्वेपीह फणादिकमपि गृह्यत इति सूचयितुं न त्वस्यापि षत्वमस्तीति । अत्र रेजिरपि क्वचित्पठ्यते, तदनार्षमिव । यदाह भट्टभास्करः । 'रेजते अग्ने पृथिवीमलेभ्य' इत्यत्र राजतेश्छान्दसत्वमिति ॥ १७९ ॥

ईज गतिकुत्सनयोः । ( ईजते । ईजांचक्रे । ईजिता ) इत्यादि । कर्मणि ( ईज्यते ) इत्यादि । ( ईजिजिषते । ईजयति । मा भवानिजिजत् ) द्विर्वचनात्पूर्वं "णौ चङि"ति ह्रस्व इत्युक्तम् । वर्चादय उदात्ता अनुदात्तेतः ॥ १८० ॥

शुच शोके । एतदादयो व्रजन्ता उदात्ता उदात्तेतः ॥ ( शोचति । शुशोच । शोचिता । शुशुचिषति । शुशोचिषति । शुचित्वा ।) शोचित्वा । कित्त्वविकल्पः।(शोशुचीति । शोशोक्ति । शोचयति । अशूशुचत् )"दीर्घो लघोः" । (शोचनः) "जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वलशुचलषपतपदः"इति तच्छीलादौ युच् । प्रशुचितः । "उदुपधाद्०" इति कित्त्वविकल्पः । शूद्रः । "शुचेर्दश्च" इति रक्प्रत्ययो दकारोन्तादेशः दीर्घश्च, [ शूद्रा चामहत्पूर्वा जातिः ] इत्यजादिपाठात् "जातेरस्त्रीविषयाद्०" इति ङीषं बाधित्वा स्त्रियां टापि शूद्रा । जातिवचनात्पुंयोगे शूद्रीति ङीष् भवति । अमहत्पूर्वेत्युक्तेर्महाशूद्रशब्दाज्जातिलक्षणो ङीषेव भवति महाशूद्रीति । महाशूद्रशब्दो ह्याभीरजातिवचनः । अयमेवामहत्पूर्वस्येतिप्रतिषेधो ज्ञापकः स्त्रीप्रत्ययेषु तदन्तविधेः । ( शोकः ) । घञ् वार्त्तिकमते "तुन्दशोकयो०" इति निपातनान् कुत्वमेष्टव्यम् । शुचिर् पूतीभावइति दिवादौ ॥ १८१ ॥

कुच शब्दे तारे ॥ (कोचति । चुकोच । कोचिता) इत्यादि पूर्ववत् (कुचः) इगुपधात्कः । कुच गताविति स्वामी, अयं सम्पर्चनार्थे ज्वलादौ, पुनः पाठे प्रयोजनं तत्रैव वक्ष्यते । सङ्कोचनार्थस्तुदादौ ॥ १८२ ॥

कुञ्च क्रुञ्च कौटिल्याल्पीभावयोः ॥ दन्त्योपधौ । गतिकौटिल्याल्पीभावयोः, गतौ कौटिल्ये द्रव्याल्पत्वे चेति क्षीरस्वामी । ( कुञ्चति । चुकुञ्च । कुञ्चितेत्यादि । चुकुञ्चिषति चोकुच्यते ) "अनिदिताम्०" इति नलोपः ( चोकुञ्चीति ) "न लुमताङ्गस्य" इति निषेधात् प्रत्ययलक्षणेन नलोपो न भवति, "चोः कु" इति।कुत्वेन चकारे निवर्त्तिते निमित्ताभावे नैमित्ति-

कस्याप्यभाव इति ञकारे निवृत्तेऽनुस्वारस्य पुनः परसवर्णो ञकारः। ( अचोकुञ्चीत् अचोकुञ्चन् ) संयोगान्तलोपे सति पूर्ववन्निमित्ताभावात् ञकारेऽनुस्वारे च निवृत्ते नकारोऽवतिष्ठते ( कुञ्चयति। अचुकुञ्चत् ) चङ्पेक्षो "अनिदिताम्०" इति नलोपो णिलोपस्य स्थानिवत्त्वात् "असिद्धवदत्रा०" इत्यसिद्धत्वाव्यवधानान्न भवति। (कुचितः, कुचितवान्)। "अनिदिताम्०" इति नलोपः। कुञ्चित्वेत्यत्र तु "न क्त्वा सेट्" इत्यकित्त्वान्नलोपो न भवति। निकुचितमनेनेत्यादौ भावादिकर्मणोः "उदुपधाद्०" इति कित्त्वविकल्पो न भवति, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति। तथा चास्याः परिभाषायाः प्रयोजनवार्त्तिकम्—उदुधत्वमकित्वस्य निकुचितमिति, इदमेवास्य,नोपधत्वे मानम्। अत एवोदित्पाठिनौ चन्द्रतरङ्गिणीकारौ प्रत्युक्तौ, यतस्तन्मते "उदितो वा" इति क्त्वायामिटो विकल्पनान्निष्ठायां "यस्य विभाषा" इति प्रतिषेधात्सेटो निष्ठाया एवाभावः। इदित्पाठोऽप्यनेनैव प्रत्युक्तः। यत इदित्वान्नलोपस्य नैव प्रसङ्गः, निकुचितमित्यत्र "तितुत्रथसिसुसरकसेषु च" इति तिप्रत्ययस्य विधीयमानमनिट्त्वं तितुत्रेष्वग्रहादीनामित्युक्तत्वान्न भवति। एवं कुञ्चतीत्यादि क्रुङ् "ऋत्विक्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च" इति क्विन् तस्य सर्वापहारो लोपः। पदत्वे चकारस्य संयोगान्तलोपे "क्विन्प्रत्ययस्य कुः" क्विन्प्रत्ययो यस्माद्विहितस्तस्य पदस्य कवर्गादेश इति नकारस्य ङकारः। संयोगान्तलोपात्पूर्वं प्रत्ययलक्षणेन "अनिदिताम्०" इतिलोपो न भवति। ऋत्विगित्यादिभिर्निपातनैः साहचर्यात्। अन्तरस्याप्यलाक्षणिकस्य कार्यस्य ज्ञापनात्। तदुक्तं वृत्तौ। नलोपः कस्मान्न भवति। ऋत्विगित्यादिनिपातनैः साहचर्यादिति। अत एव साहचर्यादुपपदाधिकारेपि केवलात् क्विन्प्रत्ययः। ( क्रुञ्चा ) अजादिपाठाद्धलन्तादपि टाप् ( क्रुञ्चैव क्रौञ्चः ) "प्रज्ञादिभ्यश्चेति स्वार्थेण् प्रत्ययः (क्रुञ्चकीयो देशः)। "क्रुञ्चा ह्रस्वत्वं च" इति नडादिपाठात् चातुरर्थिकः छप्रत्ययस्तत्सन्नियोगेन कुगागमो ह्रस्वत्वं च। "चोः कुः" इत्यत्र यदुक्तं वामनेन। क्रुञ्चेत्यत्र सञ्ज्ञीतिवचनाञ्चकारस्य चकारे झलि परतः कुत्वं न भवति, "युजिक्रुञ्चांच"इति निपातनाद्वा। नकारोपधो वा धातुरपरै रेफवर्जितः कुञ्च कौटिल्याल्पीभावयोरिति पठ्यते, नलोपो निकुचित इत्यत्र दृश्यते, युजिक्रुञ्चामिति तस्यैव रेफाधिको नलोपाभावश्च निपात्यतइति तत्क्रुञ्चेर्नोपधत्वेपि क्रुञ्चाशब्दे दोष इत्येवंपरं न त्वयं धातुर्नास्ति। यद्वा ञकारोपध इत्येवं परम्। स्पष्टं चैवं तत्र न्यासपदमञ्जर्योः "न क्त्वासेट्" इत्यत्र च द्वावपि धातू न्यासकृतोपात्तौ। तथा "ऋत्विक्०" इत्यादिसूत्रे जयादित्यश्च, क्रुञ्चेर्नलोपः कस्मान्न भवति निपातनैः साहचर्यादिति ॥ १८४ ॥

लुञ्च अपनयने ॥ लुञ्चतीत्यादि पूर्ववत् ( लुञ्चित्वा। "वञ्चिलुञ्च्यृतश्च" इति सेटः क्त्वः कित्त्वविकल्पनात् पक्षे नलोपः। के चिदमुं "लुचितं पठन्ति तदनार्षं, राजदन्तादिषु लुचितमिति पाठाद्, उदित्त्वे हि क्त्वायाम् "उदितो वा" इतीटो विकल्पनाद् निष्ठायां "यस्य विभाषा" इति प्रतिषेधाल्लुचितमिति न स्यात् ॥ १८५ ॥

अञ्चु गतिपूजनयोः ॥ ( अञ्चति। आनञ्च। अञ्चितेत्यादि ) गतौ व्यत्यञ्चतीत्यत्र "न गतिहिंसा०" इति तङ्निषेधः। पूजायां तु"नाञ्चेः पूजायाम्" इति नलोपनिषेधाद् (अञ्च्यते गुरुः, अञ्च्यादिति,भवति। अञ्चित्वा। अङ्क्त्वा ) "उदितो वा" इति इड्विकल्पः। इटि "न क्त्वा सेट्" इत्यकित्त्वान्नलोपाभावः। निष्ठायां "यस्य विभाषा" इतीटः प्रतिषेधात्समक्नमिति, "अञ्चोनपादाने" इति निष्ठानत्वम्। अपादाने तूदक्तमुदकं कूपादिति। पूजायां तु क्त्वानिष्ठयोः "उदितो वा" इति विकल्पं "यस्य विभाषा" इति निषेधं च बाधित्वा "अञ्चेः पूजायाम्" इति नित्यमिट्। (अञ्चित्वा। अञ्चितोऽस्य गुरुः।) "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्त्तमाने क्तः। मतिरिच्छा, बुद्धिर्ज्ञानं, पूजा सत्कारः, "क्तस्य च वर्त्तमाने" इति "न लोकाव्यय०" इति निषेधं बाधित्वा कर्त्तरि षष्ठी। अस्याश्च "क्तेन च पूजायाम्" इति समासो निषिध्यते। पूजितो यः सुरासुरैरपीत्यत्र वर्त्तमानक्तेन तक्रकौण्डिन्यायेन भूते क्तस्य बाधात्

तृतीया चिन्त्या । यद्वा तेनेत्यधिकारे, "उपज्ञाते" इति भूते क्तेन निर्देशाद् अयं वर्त्तमानक्तेन न बाध्यत इति सामान्येन ज्ञापकाश्रयणेनायं प्रयोगः समर्थनीयः। तैलमुदच्यतेऽस्मिन्निति तैलोदञ्चः। सर्वमयत्रिकाण्डिः। "उदङ्कोऽनुदके" इति घञ्निपात्यते। उदके तूदकोदञ्चनम्। ल्युट्। "पुंसि संज्ञायाम्०" इति घस्तु न प्रत्युदाहृतः, घघञो रूपे स्वरे वा विशेषाभावात्। घञोपि कृदुत्तरपदप्रकृतिस्वरमाद्युदात्तत्वं बाधित्वा "थाथघञ्क्ताजबित्रकाणाम्" इति उत्तरपदं घञन्तोदात्तमेव। प्रत्यञ्चतीति (प्रत्यङ्) "ऋत्विक्०" इत्यादिना क्विनि "अनिदिताम्०" इत्यादिना नलोपे सौ "उगिदचां सर्वनामस्थाने०" इति नुमि हल्ङ्यादिसंयोगान्तलोपयोः 'क्विन्प्रत्ययस्य कुः' इति कुत्वं ङकारः, प्रत्यञ्चावित्यादि। भसंज्ञायां तु "अचः"। लुप्तनकारस्याञ्चतेरकारस्य लोपो भसंज्ञायामित्यल्लोपे *चौ* लुप्तनकारेऽञ्चतौ परे पूर्वपदस्य दीर्घ इति दीर्घे (प्रतीच इत्यादि) हलादौ जश्त्वे (प्रत्यग्भ्यामित्यादि) प्रत्यक्ष्वित्यत्र "खरि च" इति चर्त्वम्। नपुंसके तु स्वमोर्लुकि प्रत्यक्। द्विवचनबहुवचनयोः "नपुंसकाच्च" इति शीभावे भत्वे पूर्ववदल्लोपदीर्घयोः (प्रतीची) "जश्शसोः शिः" इति तस्य सर्वनामस्थानत्वाद् "नपुंसकस्य झलचः" इति नुमि (प्रत्यञ्चि) शेषं पूर्ववत्। स्त्रियां (प्रतीची) "अञ्चतेश्चोपसंख्यानम्" इति ङीपि भत्वे पूर्ववदल्लोपदीर्घत्वे। पूजायां तु सर्वत्र नकारस्य लोपनिषेधाच्छ्रवणम्। अत एव "अचः" "चौ" इति अल्लोपदीर्घत्वे न भवतः। (प्रत्यञ्चावित्यादि) पदत्वे संयोगान्तलोपे 'क्विन्प्रत्ययस्य' इति कुत्वं ङकारः, सप्तमीबहुवचने *ङ्णोः कुक् टुक् शरि*। ङकारणकारयोः पदान्तयोर्यथासंख्यं कुक्टुकौ शरि वेति कुकि [ चयो द्वितीयाः शरि पौष्करसादेः० ] इति वा खकारे (प्रत्यङ्क्षु प्रत्यङ्षु प्रत्यङ्ख्ष्विति) त्रीणि रूपाणि। नपुंसके शीभावे विशेषः। उत्पूर्वत्वे *उद ईत्* इति उदः परस्य लुप्तनकारस्याञ्चतेरादेः भसंज्ञायामीकारे (उदीचः) इत्यादि। अन्यत्सर्वं प्रत्यक्शब्दवत्। प्रतीच्यादिभ्यो *दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः* इति दिग्दिग्वृत्तिभ्यः सप्तम्याद्यन्तेभ्यः स्वार्थे वास्तातिः। दिशि दृष्टः शब्दो दिक्शब्दः। "अञ्चेर्लुक्" इत्यस्तातेर्लुक्। "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययस्य लुक्। (प्रत्यग्वसति। प्रत्यगागतः। प्रत्यग्रमणीयमित्यादि।) प्रत्ययलक्षणेन तद्धितान्तत्वात् "तद्धितश्चासर्वविभक्तिः" इति अव्ययत्वात्सुपो लुक्। अस्तातेरभावे प्रतीच्यामागतः, (प्रतीची रमणीया) इत्यादि। (प्रागेव पुरुषः प्राचीनः। प्रागेव कुलं प्राचीनम्। प्राच्येव ब्राह्मणी प्राचीना) इति "विभाषाञ्चेरदिक्स्त्रियाम्" इत्यञ्चत्यन्तात् प्रातिपदिकात्स्वार्थे वा खः। अदिक्स्त्रियामित्युक्तत्वाद् दिग्वृत्तेरप्यस्तात्यन्तादव्ययादलिङ्गादस्त्रीवृत्तित्वात्खो भवति प्राचीनं दिगिति। यदा सप्तमीपञ्चम्यर्थादस्मात् खस्तदापि सप्तमीपञ्चम्योरर्थस्याभिहितत्वात् प्रातिपदिकार्थत्वात् प्रथमैव, (प्राचीनं दिशि वसति, प्राचीनं दिश आगत) इति। तथा च स्थानिवत्सूत्रे भाष्यं, (प्राचीनं ग्रामादाम्रा) इति, प्राचि देश इत्यर्थः। खान्तोयं स्वभावान्नपुंसकलिङ्गः, (प्राच्यम्। अपाच्यम्। उदीच्यम्। प्रतीच्यम्) "द्युप्रागपागुदक्प्रतीचो यत्" इति शैषिको यत् (सम्यक्।) "समः समि" इति अञ्चतावप्रत्ययान्त उत्तरपदे समः सम्यादेशः। तिर्यङ्। "तिरसस्तिर्यलोपे" इति "अचः" इति लोपाभावे तिर्यादेशे यण् लोपे तु (तिरश्च) इत्यादि। सहाञ्चतीति (सध्र्यङ्) "सहस्य सध्रिः" इत्यञ्चतावप्रत्ययान्त उरपदे सध्र्यादेशः। विष्वगञ्चतीति (विष्वग्द्र्यङ्। देवानञ्चतीति देवद्र्यङ्) *विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये* अप्रत्ययान्तउत्तरपदे चकारात्सर्वनाम्नश्च। (सर्वद्र्यङ् इत्यादि) अदसोद्र्यादेशे मतभेदः। "अदसोसेर्दादु दो मः" इति असकारान्तस्यादसो दकारात्परस्य विधीयमानमुत्वमकारेफयोरपि, तथा दो म इति मत्वमपि द्वयोरपि दकारयोरिति (अमुमुयङ्) इति भवतीति केचित्। अदसो रेफादेशस्योकारस्य इकारापेक्षया यण् उत्वस्य पूर्वत्रासिद्धत्वान्न भवति। शसादौ भत्वे "अच" इत्यल्लोपे 'चौ' इति अद्रेरिकारस्य दीर्घे पूर्ववदुकारस्य रेफादेशस्य यणभावे (अमुमुईचः) इत्यादि। अपरे तूत्वमत्वे अन्त्यसदेशयोरेव रेफदकारयोरिति (अदमुयङिति)

रूपं प्रतिपन्नाः। अत्रापि पूर्ववदुकारस्य यणभावः शसादावल्लोपादि च। अन्ये च असेरि-तिपदमः सेः सकारस्थानिकोऽकारो यस्येति व्याचक्षाणा अद्र्यादेशे त्यदाद्यत्वाभावान्नोत्वसत्वे इति अद्र्यङिति रूपमाहुः। तथा च श्लोकवार्त्तिकम्—

अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येके ऽसेर्हि दृश्यते॥ इति

अञ्चु गतियाचनयोरित्यग्रे स्वरितेत्। विशेषणार्थो युजादौ॥ १८६॥

वञ्चु चञ्चु तञ्चु त्वञ्चु म्रुञ्चु म्लुञ्चु म्रुचु म्लुचु गत्यर्थाः॥ (वञ्चति। ववञ्च। वञ्चितेत्यादि) आशीर्लिङि यासुटः कित्वादनुनासिकलोपे वच्यात्। विवञ्चिषति। वनीवच्यते) "नीग्वञ्चु-स्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम्" इति यङ्लुकोरभ्यासस्य नीगागमः (वनीवञ्चीति। वनी-वङ्क्ति)। यङो लुका लुप्तत्वान्नलोपाभावः। वनीवक्त इत्यादौ तसादीनां ङित्वेन नलोपः। सा णवकं वञ्चयते। विप्रलभतइत्यर्थः। *गृधिवञ्च्योः प्रलम्भने* इति ण्यन्ताभ्यामाभ्यासकर्त्र-भिप्रायेपि तङ्। प्रलम्भनं मिथ्याफलाख्यानमतोऽन्यत्र वञ्चयति वञ्चयतइत्युभयं भवति। (व ङ्क्त्वा। वञ्चित्वा) "उदितो वा" इतीड्विकल्पः। "वञ्चिलुञ्च्यृ" इति सेटः क्त्वो वा कि-त्वविधानात्पक्षे नलोपः (वक्तः। वक्तवान्) "यस्य विभाषा" इत्यनिट्त्वं (वञ्च्यं वञ्चन्ति वणिजः)। गन्तव्यं गच्छन्तीत्यर्थः। "ऋहलोर्ण्यत्" इति ण्यति "चजोः कु घिण्ण्यतोः" इति कुत्वं "वञ्चेर्गतौ" इति निषिध्यते। अन्यत्र वङ्क्यं काष्ठमिति कुत्वं भवति। कुटिल-मित्यर्थः। वक्रम्। "स्फायितञ्चि" इत्यादिना रकि। चञ्चतीत्यादि पूर्ववत्। चञ्चत्। चञ्चन्नेव कश्चिद् विशेषश्चञ्चत्कः। यश्च मण्यादिः स्वयमचञ्चन्नपि प्रभया चञ्चन्निव लक्ष्यते सोपि चञ्चत्कः। "स्थूलादिभ्यः प्रकारवचने कन्" इत्यत्र [चञ्चद्बृहतोरुपसंख्या-नात्] कः। प्रकारश्च भेदः सादृश्यं च। अपरे [चञ्चाद्बृहतोरुपसंख्यानम्] इति पठन्ति,तृणमयः पुरुषश्चञ्चा, तत्प्रकारश्चञ्चकः। "केणः" इति ह्रस्वः। (तञ्चति। [illegible]क्रम्) "स्फायितञ्चि" इत्यादिना रक् (त्वञ्चति। म्लुञ्चति। म्रोचति म्लोञ्चति। अम्रुचत्। अम्रोचीत्। म्रुञ्चति। म्लुञ्चति। म्रुचति। म्लोचति। अम्रुचत्। अम्रुचीत्। अम्लुचत्। अम्लोचीत्) "जॄस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च" इति च्लेर्वा ङ। (मुमुचिषति। मुम्रोचिषति म्रुचित्वा। म्रोचित्वा) "रलो व्युपधाद्" इति कित्त्वविकल्पः। भावादिकर्मणोः उदुपधादिति-कित्वविकल्पनाद् (म्रुचितमनेन, म्रोचितमनेनेत्यादि) एवं म्लुचेरपि सर्वेषामुदित्वेन क्त्वा-यामिड्विकल्पनान्निष्ठायामनिट्त्वम्। वच प्रलम्भनइति चुरादौ। तञ्चू सङ्कोचनइति रुधादौ॥ १९४॥

ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे (ग्रोचति। जुग्रोच। ग्रोचितेत्यादि। ग्लोचतीत्यादि म्लुचिवत्।) जॄस्तम्भुसूत्रे ग्रुचिमपि केचित्पठन्ति (कोजति। खोजति) इमावपि म्लुचि-वत्, अङभावो विशेषः (प्रणिकोजति। प्रणिखोजति) *शेषे विभाषा* इति उपसर्गस्था-न्निमितात्परस्य नेर्णत्वं तत्रैव सूत्रे "कखादावषान्तउपदेशे" इति पर्युदासान्न भवति, शेषश्च गदादिव्यतिरिक्तो धातुः। (ग्रोकं, ग्रक्यं) घञ्ण्यतो "श्चजोः कु घिण्ण्यतोः" निष्ठायामनिटः इति वार्त्तिकसूत्रेण कुत्वम्॥ १९८॥

ग्लुञ्चु षस्ज गतौ॥ ग्लुञ्चति। जुग्लुञ्च। ग्लुञ्चितेत्यादि। लुङि "जॄस्तम्भु०" इत्या-दिना वाऽङ्नलोपे। (अग्लुचत्। अग्लुञ्चीत्) अङ्विधौ ग्लुचिग्लुञ्च्योरेकतरोपादानेनापि अग्लुचदग्लोचीदिति सिद्धौ उभयोपादानमर्थभेदादिति केचित्। अपरे तूभयोपादानसाम-र्थ्याद् ग्लुञ्चेर्नलोपो न भवतीति अग्लुञ्चदिति चतुर्थमपि रूपमाहुः। इदमुभाष्यमन्यतरो-पादानेनापि रूपत्रयसिद्धेरन्यतरच्छक्यमकर्तुमिति प्रतिपादितत्वात्। अनेकार्थत्वाद् धातु-नामत्र विषये ऽर्थभेदो न प्रयोजक इति तत्र कैयटे (ग्लुचित्वा सज्जति) "धात्वादेः षः सः" इ-ति द्वितीयस्य सकारस्य जश्त्वेन शकारे तस्य 'झलां जश् झशि'ति जश्त्वेन जकारः (ससज्ज।

सजितेत्यादि । सिसजिषति) "स्तौतिण्योरेव०" इति नियमादणावषत्वं, हेतुमति च" इत्यत्र यदभिप्रायेषु भाष्यप्रयोगादयमात्मनेपद्यपि, अतो ऽस्यात्मनेपदं दूषयन्तो वर्द्धमानक्षीरस्वाम्यादय एव दुष्टाः । अत्र सश्चिमपि के चित्पठन्ति 'तमजिक्कोसश्च'इत्यादि च दृश्यते ॥२००॥

गुजि अव्यक्ते शब्दे ॥ ( गुञ्जति । जुगुञ्ज । गुञ्जितेत्यादि । गुञ्जा ) *गुरोश्च हलः* गुरुमतो हलन्ताद्धातोरकार इत्यकरः, ( गुञ्ज्यते ) इदित्त्वान्नलोपाभावः । अत्र स्वामी अनिदिदित्येकइति स्वसूत्रे । सुधाकरस्तु अनिदित्पारायणेष्वपाठीत, लक्ष्ये पुनरिदमविगीतमिति । शाकटायनस्तु द्वावपि पपाठ । गुञ्जशब्दइति तुदादौ ॥ २०१ ॥

अर्च पूजायाम् ॥ ( अर्चति । आनर्च । अर्चितेत्यादि ) अयं युजादौ स्वरितेत् पठिष्यति । तत एवार्चतीति सिद्धे क्रियाफलस्य कर्तृगामित्वे परस्मैपदार्थं इह पाठः । अयमात्मनेपदीति शाकटायनः, प्रयोजनं तु तन्मते क्रियाफलस्याकर्तृगामित्वेपि तङ् । 'यः पूर्णादुदर्चति अविरञ्चीमुदचन्त्वाप' इत्यादिदर्शनात्, अञ्च इत्येकइत्याभरणोक्तं युक्तम् ॥ २०२ ॥

म्लेच्छ अव्यक्ते शब्दे ॥ इहाव्यक्तशब्दोऽस्फुटशब्दोपशब्दश्च । उक्तं हि पस्पशायां 'तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितव्यै म्लेच्छोह वा एष यदपशब्द' इति, न म्लेच्छितवा इत्यस्य पर्यायो नापभाषितवाइति कैयटे । ( म्लेच्छति । मिम्लेच्छ म्लेच्छितेत्यादि ) *दीर्घात्* दीर्घाच्छकारे परतो दीर्घस्य तुगिति तुक् *तस्मिन्निति निर्दिष्टे पूर्वस्य* इति सप्तमीनिर्देशे पूर्वस्य षष्ठी प्रकल्प्येति दीर्घस्य तुगागमः । ननु "तस्मादित्युत्तरस्य" इति पञ्चमीनिर्देशे उत्तरस्य षष्ठी प्रकल्प्येत्युक्तत्वादिह चानवकाशया दीर्घादितिपञ्चम्या "छे च" इत्यत्र सावकाशाया छइति सप्तम्या एव षष्ठी प्रक्लृप्तिर्युक्ता, ततश्च तुकः कित्त्वेन छकारात्परत्वे श्चुत्वचर्त्वयोर्म्लेच्चतीति द्विचकारकं रूपं स्यात् । नैष दोषः । यतः "विभाषा सेनासुराच्छाया०" इति निर्देशाल्लिङ्गात् पञ्चम्या एव षष्ठी प्रकल्पयिष्यते ( मिम्लेच्छिषति । मेम्लेच्छयते । मेम्लेच्छीति । मेम्लेष्टि । मेम्लेष्टः । मेम्लेच्छति) इत्यादि, झलि 'व्रश्च०' आदिना षत्वे ष्टुत्वम् । म्लेक्षि । "षढोः कः सि" इति कत्वे षत्वं, (म्लेशिम । म्लेश्म ) इत्यत्र *च्छ्वोः शूडनुनासिके च* च्छकारवकारयोर्यथासङ्ख्यं शकरोठौ भवतो ऽनुनासिकादौ प्रत्यये झलादौ च क्ङितीति च्छकारस्य शकारः । अयं च "क्रमश्च क्त्वि" "च्छ्वो" इतिनिर्देशात्सतुक्कस्य । अन्त्यादेशस्तु न भवति "नानर्थके ऽलोत्यस्य विधि" इति नञो ङित्करणाद्वा, अन्त्यादेशे विश्न इत्यत्रानिगुपधत्वादेव गुणाप्रसङ्गात् किं कित्त्वेन । अत एव ङित्त्वाच्छ्वोरितिनिर्देशः सतुक्कस्येत्यपि ज्ञायते, ये तद्विधौ क्ङितीति नानुवर्त्तयन्ति तेषां झलादिमात्रे शकारे कृते तस्यैव "व्रश्च०" आदिना षत्वं द्रष्टव्यम् । अत्र मते तत्र छग्रहणं व्यर्थं स्यात्, वृत्तिप्रदीपे तु छस्य शावादेश उक्तः, तुगभावस्तु "अकृतव्यूहाः पाणिनीयाः" कृतमपि शास्त्रं निवर्त्तयन्तीति । म्लिष्टम् । "क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरब्धफाण्टबाढानि मन्थमनस्तमः सक्ताविस्पष्टस्वरानायासभृशेषु' इति अविस्पष्टार्थे निपातितः । अपशब्दे तु म्लेच्छितमिति भवति. अस्य शपि पाठो म्लेच्छतीति "शप्श्यनोर्नित्यम्" इति नित्यनुमर्थः, शे हि विकल्पः स्यात, स्वरे भेदः । शपि शपः पित्त्वाद् "अनुदात्तौ सुप्पितौ" इति अनुदात्तः, शस्तु प्रत्ययस्वरेणाद्युदात्तः । एवमीदृशामन्येषामपि धातूनां विकरणभेदे फलत्रयम् । अयञ्चुरादावपि ॥ २०३ ॥

लछ लाछि लक्षणे ॥ (लच्छति । ललच्छ । लच्छितेत्यादि) *छे च* ह्रस्वस्य छे परतस्तुगिति तुक् । अलच्छीदित्यत्रान्तरङ्गत्वात्पूर्वं तुकि अकारस्यालघुत्वाद् "अतो हलादे०" इति वा वृद्धिर्न भवति । तथा ललच्छेत्यादौ "अत उपधायाः"इति वृद्धिरनुपधात्वान्न भवति । लाञ्छतीत्यादिपूर्ववत्, लालाञ्छ्यत इत्यादावविदित्त्वान्नलोपो न भवति ( लाञ्छः ) 'क्विप०' इति सोपपदनिरुपपदसाधरणे क्विपि तस्य लोपे "च्छ्वोः शू०" इत्यत्र द्विच्छकारनिर्देशः, एकः सतुक्को ऽपरः केवल इति न्यासपदमञ्जर्यादिषूक्तत्वात् ( लान् लांशौ

लांश ) इत्यादि भवति । च्छ्वोरिति निर्देशः पूर्वं वितुक्सतुक्योः समाहारद्वन्द्वे पश्चाद् वकारेणेतरेतरयोगे द्विवचनयथासङ्ख्ययोरुपपत्तिः, "द्वन्द्वाच्चुदषहान्तात्० इति समासान्तः सौत्रत्वान्न भवति । हरदत्तस्तु सतुक्छकारवकारयोः समाहारद्वन्द्वे पश्चाद्वितुक्छेनेतरेतरयोग इति समासान्ताभावो द्विवचनोपपत्तिश्चेति । अत्र मते सतुक्कस्यापि च्छकारस्योठ् स्यादिति तदभावे यत्नः कर्त्तव्यः । एवं च यङ्लुक्यपि शत्वे ( लालांष्टि लालांष्टि लालांष्ट इत्यादि पूर्ववद्भवति ) शूड्विधौ कुङ्ग्रहणानुवृत्तिपक्षे लालांष्टीत्यादौ व्रश्चादिसूत्रे छग्रहणे षत्वम्, तत्रापि पूर्ववत् केवलापि छो गृह्यते ॥२०५॥

वाञ्छि इच्छायाम् ॥ ( वाञ्छतीत्यादि लाञ्छिवत् ) ॥ २०६ ॥

आञ्छि आयामे ॥ (आञ्छति। आञ्छ । ) अत्र लिट्यभ्यासहस्वे "अत आदेः" इत्यत्र तपरकरणं स्वाभाविकह्रस्वपरिग्रहार्थमिति न्यासकारहरदत्तादिभिः प्रतिपादितत्वाद् दीर्घाभावाद् नुडभावे सवर्णदीर्घः । अन्ये तु तपरकरणं मुखसुखार्थमिति आनाञ्छेत्युदाहरन्तीति मैत्रेयः । ( आञ्छितेत्यादि । आञ्चिच्छिषति । ) "न न्द्राः" इति नकारवर्जं द्वितीयैकाच् द्विरुच्यते । ( आञ्छयति आञ्चिच्छत् ) ॥ २०७ ॥

ह्रीच्छ लज्जायाम् ( ह्रीच्छति जिह्रीच्छ । ह्रीच्छितेत्यादि ) म्लेच्छिवत् । ह्री लज्जायामिति जुहोत्यादौ ॥ २०८ ॥

हुर्छा कौटिल्ये ॥ इह कौटिल्यमपसरणमिति मैत्रेयस्य मतम् । (हूर्छति । जुहूर्छेत्यादि) "उपधायां च" इत्यत्र इको दीर्घः । ( जुहूर्छिषति । जोहूर्छीति । जोहोर्त्ति । जोहूर्तः । जोहोर्षि । जोहूर्मि । जोहूर्वः । जोहूर्मः ) । *राल्लोपः* इति रेफात्परयोः छ्वोर्लोपः क्वौ झलादावनुनासिकादौ प्रत्यये । अत्र सतुक्कस्य छस्याभावात् केवलो गृह्यत इति वृत्त्यादौ । हूः । हुरौ हुरः । "राल्लोपः" तत्र पदत्वे च *र्वोरुपधाया दीर्घ*" इति रेफवकारान्तस्य धातोः पदस्योपधाया इको दीर्घ इति इको दीर्घः । हूर्णः । हूर्णवान् । "आदि तश्च" इत्यनिट् निष्ठायाम् । राल्लोपे "रदाभ्याम्" इति नत्वे "रषाभ्याम्" इति णत्वम् । भावादिकर्मणोस्तु *विभाषा भावादिकर्मणो* इति आदितो निष्ठायाः पक्षे इड्विधानाद् हूर्णमनेन, हूर्छितमनेनेत्यादि द्रष्टव्यम् ॥ २०९ ॥

मूर्छा मोहसमुच्छ्राययोः ( मूर्छति ) हूर्छिवत् । विशेषस्त्वनिटो निष्ठायां "न ध्याख्यापॄमूर्छिमदाम्" इति नत्वनिषेधः ( मूर्त्तः । मूर्त्तवान् । मूर्त्तमनेनेत्यादि । मूर्छास्य सञ्जाता, मूर्छितः ) *तदस्य सञ्जातं तारकादिभ्य इतच्* । तदिति प्रथमासमर्थात् सञ्जातोपाधिकादस्येत्यर्थादितच् ॥ २१० ॥

स्फुर्छा विस्तृतौ ( स्फूर्छति ) । पुस्फूर्छेत्यादि ) पूर्ववत् । अभ्यासे खयः शेषः ॥२११॥

युच्छ प्रमादे ( युच्छति । युयुच्छ । युच्छितेत्यादि ) म्लेच्छादिवत् । अन्तरङ्गत्वात्तुकि अलघूपधत्वान्न गुणः । "वार्णादाङ्गं बलीयः" इत्याङ्गस्य बलीयस्त्वं यत्राङ्गवार्णयोर्युगपत्प्राप्तिः समानाश्रयत्वं च तत्रेति, इहवैपरीत्यान्न भवति ॥ २१२ ॥

उञ्छि उञ्छे ॥ 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवप्रकाशः । एवं विज्ञानेश्वरोपि । "उञ्छति" सूत्रे उञ्छति उच्चिनोतीत्यर्थ इति न्यासो बदराण्युञ्छति बादरिकः । श्यामाकानुञ्छति श्यामाकिक इत्युदाहरतो वृत्तिकारस्यापि व्यापित्वेनोच्चयनार्थ इत्यभिप्रायो लक्ष्यते ( उञ्छति । उञ्छांचकार । उञ्छितेत्यादि ) इदित्त्वाद् उञ्छ्यते इत्यादौ नलोपो न भवति ( उञ्चिच्छिषति ) "न न्द्रा०" इति छादेर्द्विर्वचनमभ्यासस्य चर्त्वे ह्रस्वे "छे च" इति तुकि हलादिशेषो न भवति, अवयवभक्तत्वेनाभ्यासभक्तत्वाभावात् । न च स्वङ्गुलिर्देवदत्त इत्यादिवत् इहावयववायवस्य समुदायवयवत्वम् । यतः "छेच" इत्यात्रागमिनो भावादेव पूर्वसूत्रात् ह्रस्वस्येत्यनुवृत्तिसिद्धावपि चकारेण तदनुकृष्यते, पूर्वसूत्रे ह्रस्वान्तस्येति स्थितम् । इह तु तथा माभूदिति हि भावः । (उञ्छयति मा भवानुञ्चिच्छत् ) अयं

तुदादौ पठिष्यते । स पाठ (उञ्छती उञ्छन्तीति) शीनद्योर्नुम्विकल्पार्थोऽवश्याभ्युपगन्तव्य इति पाठः किमर्थं इति चेत् स्वरार्थः । उञ्छतीत्यत्र शपि "अनुदात्तौ सुप्पितौ" इति शप्सि-पोरनुदात्तत्वेन । *धातोः* । धातोरन्त उदात्त इत्युकारस्योदात्तत्वे ।"उदात्तादनुदात्तस्य स्वरितः" इति शबकारस्य स्वरितत्वे "स्वरितात् संहितायामनुदात्तानाम्" इति तीकारस्य प्रचयत्वे अचः क्रमेणोदात्तस्वरितप्रचया भवन्ति, शे तु आद्युदात्तत्वे प्रत्ययादित्वेनाकारयोदात्तत्वे *अनुदात्तं पदमेकवर्जम्* यत्र पदे उदात्तः स्वरितो वा विधीयते तत्र तं वर्जयित्वाऽन्यदनुदात्तमिति धातोरप्यनुदात्तत्वे पूर्ववत्तिपः स्वरितत्वेऽचोनुदात्तोदात्तस्वरिता भवन्ति । विपर्ययः कस्मान्न भवति धातोरन्तोदात्तत्वेशस्यानुदात्तत्वमिति यतोऽयं स्वरभेदो न स्यात् । नैतदस्ति । सति शिष्टस्वरो बलीयानिति यस्मिन्नसति यः शिष्यते स बलीयानित्यर्थः । ननु "अन्यत्र विकारणेभ्य" इत्यपि तत्र पठ्यते । नायं पर्युदासो धातुस्वरविषयः । किंतु लसार्वधातुकस्वरविषयः । लादेशस्य सार्वधातुकस्य प्रत्ययाद्युदात्तत्वं सति शिष्टेपि विकरणस्वरो न बाधत इति, अस्य च ज्ञापकं तादृशमेव । तथाहि । "तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमनुह्विङोः" इति तासेः परस्य सार्वधातुकस्य सति शिष्टस्वरेणानुदात्तत्वेपि सिद्धे पुनर्विधानाज् ज्ञायतेऽन्यत्र विकरणेभ्य इति तच्च लसार्वधातुकविषयम् ॥ २१३ ॥

उच्छी विवासे ॥ समाप्तिर्विवास इति तरङ्गिण्यां, विपूर्वश्चायं प्रायः प्रयुज्यतइति पुरुषकारे (व्युच्छति । । व्युच्छां चकार । व्युच्छितेत्यादि ) आम्विधावागमनिमित्ता गुरुमत्ता गृह्यते, अत एव अनृच्छ" इति प्रतिषेधः (उचिच्छिषति) अत्र द्विर्वचने तुकि श्चुत्वस्य पूर्वत्रासिद्धत्वात् हलादिशेषेण तकारस्य शेषे प्राप्ते [षर्पूर्वाः खय इति वक्तव्यं ] शर्पूर्वाः खय इत्यत्र शर्ग्रहणमपनीय खर्ग्रहणं कर्त्तव्यमित्यर्थः । तेन शर्पूर्वाः खयः शिष्यन्ते अन्ये निवर्त्तन्त इति तकारस्य निवृत्तौ छकारस्य "अभ्यासे चर्च" इति चर्त्वे रूपम् । अभ्यासचर्त्वस्य तुक्यसिद्धत्वादुकारस्य पुनस्तुङ्ग भवति [अभ्यासजश्त्वचर्त्वमेत्वतुकोः सिद्धं वक्तव्यम् ] इति चर्त्वस्य सिद्धत्वात् । अत्र पूर्वत्रासिद्धीयमद्विर्वचनइति अनाश्रित्योक्तं षर्पूर्वाः खय इति । यदाहुर्हरदत्तादयः । तदाश्रयणे हि श्चुत्वस्य द्विर्वचने सिद्धत्वाद्धलादिशेषेण छस्य निवृत्ताविष्टसिद्धेः ( व्युष्टः । व्युष्टवान् ) "श्वीदितो निष्ठायाम्" इतीड्भावः ( व्युष्टे दीयते कार्यं वा वैयुष्टम् । "व्युष्टादिभ्योऽण्" इति "तत्र च दीयते कार्यम्०" इति विषयेऽण् प्रत्ययः । "न य्वाभ्याम्०" इति ऐच् वृद्धेरभावश्च । अयमपि तुदादौ पठिष्यते । पूर्ववदुभयत्र प्रयोजनम्॥२१४

ध्रज ध्रजि ध्रज ध्रजि ध्वज ध्वजि गतौ ॥ ( ध्रजति । दध्राज । ध्रजितेत्यादि । अध्रजीत् । अध्राजीत् ) । "अतो हलादे०" इति वा वृद्धिः । ( दिध्रजिषति । दाध्रज्यते । दाध्रजीति । दाध्रक्ति ) "चोः कुः" झलि पदान्ते च । "खरि च" इति चर्त्वम् ( ध्राजयति । अदिध्रजत् । ध्रञ्जति । दध्रञ्ज । ध्रञ्जितेत्यादि । दिध्रञ्जिषति । दाध्रञ्ज्यते । दिध्रञ्जिषति । दाध्रञ्ज्यते । दाध्रञ्जीति । दाध्रङ्क्ति ) लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च ( अदाध्रन् । धर्जति । दधर्ज । धर्जितेत्यादि । दिधर्जिषति । दरीधृज्यते ) "रीगृदुपधस्य च" इति रीक् ( दर्धर्जीति । दरिधर्जीति । दरीधर्जीति । दर्धर्क्ति । दरिधर्क्ति । दरीधर्क्ति )' 'रुग्रिकौ च लुकि" इति रुग्रिग्रीकः । "नाभ्यस्तस्याचि" इति पक्षे न गुणः, एवं तसादौ (दर्धर्क्तः)इत्याद्युदाहार्यम् । ( धर्जयति । अदधर्जत् । अदीधृजत् । उर्द्धृवा । धर्जित्वा ) "न क्त्वा सेट्" इत्यकित्त्वाद्गुणः, धृज्यम्, "ऋदुपधाच्चाक्लपिचृतेः" इति क्यप् । धर्जः । "चजोः कुघिण्ण्यतोर्निष्ठायामनिटः" इति वार्त्तिकसूत्रेणकुत्वम् ( धृञ्जति । दधृञ्ज । धृञ्जितेत्यादि । दिधृञ्जिषति । दरीधृञ्ज्यते ) पूर्ववद्रीक् । ( दाधृञ्जीति । दाधृङ्क्तीत्यादि धृञ्जिवत् ) लङि तिप्सिपोर्हल्ङ्यादिलोपसंयोगान्तलोपयोरदाधृन् । संयोगान्तलोपस्यासिद्धत्वात् अलघूपधत्वात् प्रत्ययलक्षणेन न गुणः ( धृञ्जयति । अदधृञ्जत् । ध्वजति । ध्वञ्जतीत्यादि ) ध्रजध्रजिवत् । तरङ्गिणीकाश्यपसंमतास्तु आद्यौ व्रजव्रजी इति दन्त्योष्ठ्यादी पठ्येते । सर्वत्र तवर्गीयादी एव २२०

कूज अव्यक्ते शब्दे ( कूजति । चुकूज । कूजिता । कूजिष्यति । चोकूज्यते । चोकूजीति । चोकूक्ति । कूजयति । अचुकुजत् । कूजः । कूज्यम् ) "न क्त्वादेः" इति निष्ठायां सेट्त्वात्कुत्वाभावः ॥ २२१ ॥

अर्ज षर्ज अर्जने ॥ ( आनर्ज । अर्जितेत्यादि । अर्जिजिषति । अर्जयति । आर्जिजत् । स्वर्गः ) वार्त्तिककारमते न्यङ्क्वादित्वात् कुत्वम् । ( ऋजुः ) "अर्जिदृशि" इत्यादिना कुप्रत्ययः, ऋजादेशश्च । अर्ज प्रयत्न इति चुरादौ । ( सर्जति । ससर्ज । सर्जिता । सिसर्जिषति ) "स्तौतिण्योरेव०" इतिनियमान्न षत्वम् । ( सासर्ज्यते । सासर्क्तीत्यादि । सर्जयति । अससर्जत् ) ॥ २२३ ॥

गर्ज शब्दे ॥ ( गर्जतीत्यादि ) ॥ २२४ ॥

तर्ज भर्त्सने ( तर्जति । ततर्जेत्यादि ) अयं चुरादावपि ॥ २२५ ॥

कर्ज व्यथने ॥

खर्ज पूजने च ॥ ( कर्जति । चकर्ज । कर्जिता । खर्जतीत्यादि ) ( खर्जूरः ) "खर्जपिञ्जादिभ्य ऊरोलचौ" इत्यूरः ॥ २२७ ॥

अज गतिक्षेपणयोः (अजति । विवाय । विव्यतु विव्युः । विवयिथ । विवेथ । विव्यथुः । विव्य । विवाय । विवय । विव्यिव । *अजेर्व्यघञपोः* ॥ घञपोरन्यस्मिन्नार्द्धधातुके विषयभूते वीभाव इति वीभावे द्विर्वचने *एरनेकाचोऽसंयोगपूर्वस्य* धातोरवयवः संयोगो यस्मादिवर्णात्पूर्वो नास्ति तदन्तस्यानेकाचोङ्गस्याजादौ यणिति यण् । अत्र वकारस्य हल्परत्वात् "उपधायां च" इति दीर्घे "अचः परस्मिन्" इति यणः स्थानिवत्त्वात् 'असिद्धं बहिरङ्गमन्तरङ्गे' इति असिद्धत्वाद्वा न भवति । वृद्धिगुणयोर्विषये परत्वात्तौ भवतः । "णलुत्तमो वा" इति उत्तमे णित्त्वविकल्पनात्पक्षे गुणः । वलादौ क्रादिनियमादिट्, वीभावो ह्यनुदात्तत्वाद् अनिट्, थलि तु *अचस्तास्वत्थल्यनिटो नित्यम्* अजन्तो यो धातुस्तासौ नित्यमनिट् तस्य तासाविव थलीड्निषेधे प्राप्ते । *ऋतो भारद्वाजस्य* । योयं तासौ नित्यानिटः स्थलीण्निषेधः स भारद्वाजस्य मतेन ऋकारान्तस्यैवेति नियमादन्यत्रार्थाद्विकल्प इतीडागमः पाक्षिकः, अजेरुदात्तत्वस्य इडर्थत्वात् वलादावार्द्धधातुकेऽयमादेशो विकल्पित इति पक्षे व्यादेशाऽभावात् आजिथेत्यपि भवति, तथा वमयोरपि ( आजिव आजिमेति ) उक्तञ्च वृत्तौ । वलादावार्द्धधातुके विकल्प इष्यते इत्यत्र केचिन्मतेवलादित्वस्य क्रयादिनियमेनेटः पर्यवसानान्न कदाचिदपि वलाद्यार्द्धधातुकव्यक्तिरिति न तत्रायमादेशविकल्पः, थलि तु भवत्येव यतस्तत्रेड्विकल्पित इति । ननु विव्यतुरित्यादौ द्विर्वचनात्पूर्वं परत्वादियङि "द्विर्वचनेचि" इति तस्य द्विर्वचने कर्त्तव्ये स्थानिवत्त्वादुत्तरखण्डेजगमुरित्यादिवत् आदेशरूपमेवावतिष्ठेतेति कुतो यणः प्रसङ्गः । उच्यते । द्विर्वचनार्थमियङि निवृत्ते पुनरयमिच्छतावश्यं प्रवर्त्तयितव्यः, तत्र दशायाम् "असिद्धवदत्रा०" इतीयङोऽसिद्धत्वादङ्गस्यानेकाचत्वादपवादत्वेन वा यणेव भविष्यतीति इट किटेत्यत्रायमर्थः प्रपञ्चयिष्यते । ( अजिता । वेता । अजिष्यति । वेष्यति । अजतु । आजत् । आशिषि । वीयात् ) वलाद्यार्द्धधातुकत्वान्नित्यं वीभावः ( आजीत् । अवैषीत् । आजिष्यत् । अवेष्यत् । अजिजिषति । विवीषति ) "इको झल्" इति सनः कित्त्वान्न गुणः । आर्द्धधातुक इत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तौ वीभावे हलादित्वाद्यङि (वेवीयते) नात्र यङ्लुगस्ति । यतो लुका यङार्द्धधातुकस्य विषयत्वापहारान्नार्द्धधातुकाभिव्यक्तिरिति वीभावस्य नैव प्रसङ्गः, उक्तञ्चैवं "न लुमताङ्गस्य" इत्यत्र कैयटे 'न लुमता यस्मिन्निति चेत् हनिणिङादेशा न सिद्ध्यन्ति' इति भाष्यवार्त्तिकयोरुक्तौ "लुङि च" इत्यादौ विषयसप्तम्याश्रयणेनादेशाः सेत्स्यन्तीत्याशङ्क्य लुका लुङो विषयत्वापहारााद्विषयसप्तम्याश्रयणेप्यसिद्धिरिति ( वाययति, अवीवयत् ) कर्मादौ ( वीयतइत्यादि ) स्यादिषु, स्यसिच्सीयुट्तासिपुवाचिण्वदिडिति वृद्ध्याययोः ( वायिष्यते । अवायिष्यत । अवायिष्यथ । अवायिष्यताम् ।

वायिषीष्ट । अवायिष्टेत्यादि ) चिण्वदिटोऽभावे ( वेष्यते, अवेष्यत, अवेष्ट । वेषीष्ट, वेतेत्यादि ) अत्र पक्षे वलाद्यार्धधातुकसद्भावात्पक्षे व्यादेशाभावे ( अजिष्यते । आजिष्यत आजिषाताम् । अजिषीष्ट । आजितेत्यादि ) इति त्रैरूप्यम् । लिटि ध्वमि चिण्डवत्पक्षे वृद्ध्यायादेशयोः "विभाषेटः" इति मूर्द्धन्यौ विकल्पेन, अन्यदा तु 'इणः षीध्वम्०" इति नित्यो व्यादेशाभावश्चेति चातूरूप्यम् (वायिषीध्वम् । वायिषीढ्वम् । वेषीढ्वम् । अजिषीध्वमिति) लुङि तु "धि च" इति सिचो लोपे चिण्वदिटि व्यादेशस्य वृद्ध्याययोर्मुर्द्धन्यस्य पूर्ववद्विकल्पः । अचिण्वत्पक्षे तु नित्यः, आदेशाभावे च सिज्लोपे इदमङ्गमिणन्तमिति नित्यो मूर्धन्यः ( अवायिध्वम् । अवायिढ्वम् । अवेढ्म् । आजिढ्वमिति ) चातूरूप्यम् , येषां तु दर्शनम् "इणः षीध्वम्" इत्यत्रेण् ग्रहणेनेटो न ग्रहणमिति तेषां मूर्द्धन्याभावात् लिङ्वदेव रूपाणि । कर्मकर्त्तरि तशब्दे "अचः कर्मकर्त्तरि "इति चिणो विकल्पनात्पक्षे सिचि चिण्वदिटि च ( अवायि अवेष्ट । अवायिष्टे) इति त्रैरूप्यम् , अन्यत् सर्वं कर्मवत्, संभवति च क्षेपणार्थस्य कर्मकर्त्ता ( प्रवयणम् । प्राजनम् ) "वा यौ" इति वीभावविकल्पः, "कृत्यच" इति विभाषा णत्वम् । (समजः) पशूनां संघ इत्यर्थः, (उदजः) तेषामेव प्रेरणम् । "समुदोरजःपशुषु" इत्यप् । धात्वर्थस्यापशुविषयत्वे (समाजः । उदाज) इति घञेव । अघञपोरिति पर्युदासान्न वीभावः। "अजिव्रज्योश्च"इति अकुत्वम् । (समज्या) । *संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः* इति स्त्रियां भावादौ क्यप् । [ प्रतिषेधे क्यप उपसंख्यानम् ] इति वीभावनिषेधः । (प्रवेयम् ।) आर्द्धधातुके इत्यस्य विषयसप्तमीत्वात् प्रागेव वीभावे "अचोयत्", अन्यथा ण्यति वृद्धौ प्रवेयमिति स्यात् । [ वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानम् ] इति खश् । अस्य शित्त्वेन सार्वधातुकत्वान्न वीभावः। अजिरम् । "अजिरशिशि०" इति निपातितः । (वेणुः ।) "अजिवृरीभ्यो निद्०" इति णुः । ( वेणुकीयम् ) "नडादीनां कुक् च" इति चातुरर्थिकश्छः कुगागमश्च । (आजिः) । "अज्यतिभ्यां च" इताणि वृद्धिः, "पादस्य पदाज्यात०" इति निर्देशान्न वीभावः । अच्, (अजा) अजादिपाठाट्टाप् । अत एव वीभावाभावः । अजानां समूहः (आजिकम् ) । "गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्" इति वुञ् ॥ २२८ ॥

तेज पालने ॥ (तेजति) ( तितेज । तेजितेत्यादि । तेजः । ) "असुम् तिजः' इति नित्यासुन्नन्तः । क्षमार्थोऽग्रे । तिज निशान इति चुरादौ ॥ २२९ ॥

खज मन्थे (खजति । चखाज । खजितेत्यादि । अखजीत् अखाजीत् ) "अतो हलादेः"इति वा वृद्धिः । ( खजाको मन्थः । "खजेराकः" इत्याकः । अत्र के चित् कज मद इत्यपि पठन्ति ॥

खजि गतिवैकल्ये ( खञ्जति । चखञ्ज । खञ्जितेत्यादि ) इदित्त्वान्नलोपाभावः ॥ २३० ॥

एज कम्पने ॥ एजति । एजां चकार । एजिता । एजिजिषति । एजयति । मा भवानेजिजत् । ऋदित्वान्नोपधाह्रस्वः । एजतिर्दीप्तौ गतः ॥ २३१ ॥

टुओस्फूर्जा वज्रनिर्घोषे ॥ टुशब्दस्य "आदिर्ञिटुडवः" इतीत्वे लोपः । "ट्वितोऽथुच्" इत्यथुचि (स्फूर्जथुरिति) । ओकार "ओदितश्च" इति निष्ठानत्वार्थः । (स्फूर्णवान् ) । "आदित" इत्यनिट्त्वम् । ननु,निष्ठानत्वार्थादोदित्करणसामर्थ्यादेवानिट्त्वं सिद्धम् । एवं तर्हि "विभाषा भावादिकर्म्मणोः" इति इड्विकल्पार्थमादित्वम् (स्फूर्णमनेन स्फूर्जितमनेनेत्यादि । स्फूर्जति । पुस्फूर्ज । स्फूर्ज्जिता । पुस्फूर्जिषति । पोस्फूर्ज्यते । पोस्फूर्क्ति । अपोस्फूर्क् । स्फूर्जयति । अपुस्फूर्जत् ) अस्य दीर्घोपदेशेन "उपधायां च" इति दीर्घस्यानित्यत्वज्ञापनात् (मुर्छति हुर्छति स्फुर्छति इत्यपि भवतीति के चिदिति मैत्रेयप्रतिपादिते ॥ २३२ ॥

क्षि क्षये ॥ अनिट् स्वरान्त इत्ययमनिट इह पाठस्तु उत्तरधातुसादृश्यादिति मैत्रेये प्रतिपादितम् । (क्षयति । चिक्षाय । चिक्षियतुः । चिक्षेथ । चिक्षयिथ । चिक्षियिव ) क्रादिनियमादिट् थलि "अचस्तास्वत्"इति निषेधाद् भारद्वाजनियमाच्च विकल्पितः । अजादौ "अचि श्नुधातु" इत्यादिनेयङ्, "एरनेकाच" इति यण् तु संयोगपूर्वत्वान्न भवति ( क्षेता । क्षेष्यति ।

क्षयतु । अक्षयत् । क्षयेत् । आशिषि क्षीयात् ) "अकृत्सार्वधातुकयोः" इति दीर्घः । ( अक्षैषीत् ) सिचि वृद्धिः । कर्मादौ (क्षीयते) इत्यादि वीवत् । अन्तर्भावितण्यर्थोऽयं सकर्मकः । 'न क्षीयतइत्यक्षरम्' इति भाष्ये दर्शनात् ( चिक्षीषति) *अज्झनगमां सनि* इति झलादौ सनि दीर्घः (चेक्षीयते । चेक्षयीति । "सार्वधातुकयोः" इति गुणः । "नाभ्यस्तस्य" इति निषेधो लघूपधगुणस्य । क्षीणः । ( क्षीणवान् । क्षीणमिदम् ) । अस्य ध्रौव्यार्थत्वात् क्तोधिकरणे क्तः । "अधिकरणवाचिनश्च" इति तद्योगे कर्तरि षष्ठी* निष्ठायामण्यदर्थे* इति क्षियो दीर्घः, ण्यदर्थो भावकर्मणी, "क्षीयो दीर्घात्" इति निष्ठानत्वम् । ण्यदर्थे तु (क्षितमनेन क्षितोयमनेन क्षीणस्तपस्वी । क्षीणो जाल्मः । क्षित इति,) *वाक्रोशदैन्ययोः* इति क्षियो निष्ठायां वा दीर्घः । पूर्ववद्दीर्घपक्षे नत्वम् ( क्षेतुं शक्यः क्षय्यः ) "क्षय्यजय्यौ शक्यार्थे" इति निपातनादयादेशो भवति । ( प्रक्षीय ) । 'क्षियः' इति ल्यपि दीर्घः । क्षी निवासगत्योरिति तुदादौ । क्षीष हिंसायामिति क्र्यादौ । क्षिणु हिंसायामिति तनादौ ॥ २३३ ॥

क्षीज अव्यक्ते शब्दे ॥ ( क्षीजति । चिक्षीज । क्षीजिता । चिक्षीजिषति । चेक्षीज्यते । चेक्षीक्ति । क्षीजयति । अचिक्षिजत् ) "णौ चङ्यु०" इति ह्रस्वः । कूजिना सहायं न पठितोऽप्रसिद्धत्वात् ॥ २३४ ॥

लज लजिभर्जने ॥

लाज लाजि भर्त्सने च ॥ चकारो भिन्नक्रमः एतावपि भर्जनइति मैत्रेयः । भर्त्सनग्रहणं भर्जनस्याप्युपलक्षणमिति पुरुषकारः । ( लजति । ललाज । लेजतुः । लजिता । अलजीत् ) अलाजीत् ) "अतो हलादे०" इति वा वृद्धिः ( लिलजिषति । लालज्यते । लालक्ति । लाजयति । अलीलजत् । लञ्जति । ललञ्ज । लञ्जिता । लिलञ्जिषति । लालञ्ज्यते) इदित्त्वान्नलोपाभावः ( लालङ्क्ति । लञ्जयति । अललञ्जत् । एवं लाजति लाञ्जतीत्यादि । लाजः ) । ओलजी ओलस्जी व्रीडनइति तुदादौ । लज प्रकाशनइति कथादौ । लजिति दण्डके भाषार्थः॥२३८

जज जजि युद्धे ( जजति । लजिवत् । जङ्गलम् ) बाहुलकात् कलप्रत्ययः कुत्वं च ( कुरुजङ्गलेषु भवं (कौरुजाङ्गलम्, कौरुजङ्गलम् ) । "तत्र भवः" इत्यण् । "जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्" इति पूर्वपदस्य नित्या वृद्धिः, उत्तरपदस्य तु वा ॥ २४० ॥

तुज हिंसायाम् ॥ तोजति । तुतोज । तोजिता । तुतोजिषति । तुतुजिषति । तुजित्वा । तोजित्वा । "रलोव्युपधाद्०" इति क्त्वविकल्पः । ( तोतुज्यते । तोतोक्ति । तोजयति । अतूतुजत् ) भावादिकर्मणोः "उदुपधाद्०" इति क्त्वविकल्पनात् तुजितमनेन तोजितमनेत्यादि ॥ २४१ ॥

तुजि पालने (तुञ्जति । तुतुञ्ज । तुञ्जिता तुतुञ्जिषति । तोतुञ्ज्यते । तोतुङ्क्ति । अतोतुन् । तुञ्जयति । अतुतुञ्जत् तुङ्गः) । वार्त्तिकमते न्यङ्क्वादित्वात् कुत्वम् । भाषार्थोयं युजादौ॥२४२॥

गज गजि गृज गृजि मुज मुजि शब्दार्थाः ॥ (गजति । गञ्जतीत्यादि) । लजलजिवत् । (जगजतुः) इत्यादावादेशादित्वान्नेत्वाभ्यासलोपौ।(गजः । अच् । गञ्जा तु मदिरागृहम् गर्जति । जगर्ज । गर्जिता । जिगर्जिषति । जरीगृज्यते । जर्गृजीतीत्यादि पूर्ववत् । ( गर्जयति । अजगर्जत् । अजीगृजत् ) "उऋत्" ( गृञ्जति । जगृञ्ज । गृञ्जिता । जिगृञ्जिषति । जरीगृञ्ज्यते ) "रीगृत्वतः" इति रीक् । (जरिगृञ्जीति ) इत्यादि । (मोजति । मुञ्जतीत्यादि । तुजिवत् । मृजमृजीति स्वामिचन्द्रौ । गज मदने च । अयं चुरादावपि शब्दार्थः । गर्ज शब्द इत्यग्रे ॥ २४८ ॥

वज व्रज गतौ । ( वजति । ववाज । ववजतुः । वजितेत्यादि ) 'न शसददवादिगुण०' इत्येत्वाभ्यासलोपनिषेधः (अवजीत् । अवाजीत् ) "अतो हलादे०" इति वा वृद्धिः । (वाजः । वाज्यम्) । वजूण्यतौ । "अजिव्रज्योश्च" इति चकारेण कुत्वनिषेधः । (व्रजति)इत्यादि । लुङि "वदव्रज"इतिनित्या वृद्धिः । (अव्राजीदिति । व्रज्या)"व्रजयजोर्भावे क्यप्" इति क्यप् । व्रजः ।

"गोचरसंचरवहव्रजव्यजापणनिगमाश्च" इति अधिकरणे घञन्तो निपातितः । परिव्राट् । *परौ व्रजेःषः पदान्ते* इति क्विपि षत्वं दीर्घश्च । एतौ चुरादावपि ॥ शुचादय उदात्ता उदात्तेतः क्षिवर्जम् ॥ २५० ॥

अथ क्रमेण प्रासानात्मनेपदिनष्टवर्गीयान्तानाह—

अट्ट अतिक्रमहिंसयोः ॥ इतः शाठ्यन्ता उदात्ता अनुदात्तेतः । दोपधोयं स्मर्यतइति मैत्रेयः । तोपधोयमिति "ष्टुना ष्टुः" इत्यत्र न्यासवृत्तिप्रदीपकारादयः । स्वाम्यपि क्विपि अदिति तकारश्रवणार्थं तोपधत्वमुक्त्वा दोपधत्वमप्याह । मैत्रेयस्तु स्वमते दोपधत्वमुक्त्वा तोपधत्वं मतान्तर आह । अड्ड इति डान्तपाठः प्रकरणविरोधादुपेक्ष्यः ( अट्टते । आनट्टे । अट्टताम् । आट्टत । अट्टेत । आशिषि । अट्टिषीष्ट । मा भवानट्टिष्ट । आट्टिष्यत ) ष्टुत्वं सर्वत्र, डोपधत्वे चर्त्वं ( अटिट्टिषते ) तोपधत्वे [ पूर्वत्रासिद्धीयमद्विर्वचने ] इति ष्टुत्वस्यासिद्धत्वाभावाद् द्विटकारस्य सन्नन्तस्य द्विर्वचने हलादिशेषे रूपम् । यद्यपि प्राणिणिषतीत्यादौ णत्वे कृते तस्यासिद्धत्वाभावात्सणस्य द्विर्वचनेनैवेष्टसिद्धौ "उभौ साभ्यासस्य" इति पुनर्णत्वविधानात् "पूर्वत्रासिद्धीयमद्विर्वचने" इत्यस्यानित्यत्वज्ञापनात् ष्टुत्वस्यासिद्धत्वात् तकारादेर्द्विर्वचनं तदापि "शर्पूर्वाः खयः" इति टकारस्यैव शेषादिदमेव रूपम् । एवं च पुरुषकारादिषु अतिट्टिषतीति तकारस्य शेषेणोदाहरणप्रदर्शनं चिन्त्यम् । दोपधत्वे तु "पूर्वत्रासिद्धीयमद्विर्वचने" इत्यस्य द्विर्वचनविषयत्वात् "नन्द्राः" इति द्विर्वचननिषेधे प्रवृत्त्यभावात् ष्टुत्वस्यासिद्धत्वात् दकारवर्जं द्विरुच्यते, दकारस्य पुनःष्टुत्वे चर्त्वं च अटिट्टिषत इति भाव्यम् । ( अट्टयति । आटिट्टत् दोपधत्वे तु अटिट्टत् । अट्टा ) । "गुरोश्च" इत्यकारः । अट्टां करोति । (अट्टायते ) । अटाट्येत्यादिना क्यप् । अयमनादरे चुरादिः ॥ २५१ ॥

वेष्ट वेष्टने ( वेष्टते । विवेष्टे । वेष्टिता । विवेष्टिषते । वेवेष्ट्यते । वेवेष्टीति । वेवेष्टि । वेवेष्टः । लङि अवेवेट् । वेष्टयति । अविवेष्टत् । अववेष्टत् ) "विभाषा वेष्टिचेष्ट्योः" इति चङ्परे णावभ्यासस्य पक्षे ऽकारः । कर्मादौ वेष्ट्यत इत्यादि ॥ २५२ ॥

चेष्ट चेष्टायाम् ॥ वेष्टिवत्, अकर्मकस्त्वयम् ॥ २५३ ॥

गोष्ट लोष्ट संघाते ॥ (गोष्टते । जुगोष्टे । गोष्टिता । लोष्टते । लुलोष्टे । लोष्टिता ) इत्यादि, वेष्टिवत् ॥ २५५ ॥

घट्ट चलने ॥ ( घट्टते । जघट्टे । घट्टितेत्यादि ) । अयं चुरादावपि ॥ २५६ ॥

स्फुट विकसने ॥ ( स्फोटते । पुस्फुटे । स्फोटितेत्यादि । पुस्फुटिषते । पुस्फोटिषते । स्फुटित्वा । स्फोटित्वा ) । "रलो व्युपधात्" इति कित्त्वविकल्पः । ( पोस्फुट्यते, पोस्फुटीति । पोस्फोट्टि । अपोस्फोट् । स्फोटयति । अपुस्फुटत् ) । अयं तुदादावपि, विशरणार्थोऽग्रे परस्मैपदिषु, भेदनार्थश्चुरादौ ॥ २५७ ॥

अठि गतौ ॥ ( अण्टते । आण्टे । अण्टिता । अण्टिटिषते । अण्टयति । आण्टिटत् ) । "न न्द्राः" इति नवर्जं द्विरुच्यते ॥ २५८ ॥

वठि एकचर्यायाम् ॥ एकचर्या सहायगमनम् । ( वण्ठते । ववण्ठे । विवण्ठिषते वावण्ठीति । वावण्टि । ) ष्टुत्वम् । चर्त्वम् । लोटि हेर्धित्वे ष्टुत्वे जश्त्वे (वावण्ढि) । लङि अवावन् । ( वण्ठयति । अववण्ठत् ) । अयमनिदित् स्थौल्यार्थः परस्मैपदिषु ॥ २५९ ॥

मठि कठि शोके ॥ इह शोक आध्यानम् । कर्तुमण्ठते उत्कण्ठत इत्यर्थः । "अधीगर्थ" इति कर्मणि शेषे षष्ठी । मठ मदनिवासयोः, कठ कृच्छ्रजीवनइत्यग्रे परस्मैपदिष्वनिदितौ । कठि शोकइतीदित् चुरादौ ॥ २६१ ॥

मुठि पालने ॥ मुण्ठतइत्यादि ॥ २६२ ॥

हेठ विबाधायाम् ॥ अमुं परस्मैपदिष्वपि केचित् पठन्ति । विबाधनं शाठ्यम् । ( हेठते । जिहेठे । हेठिता । इत्यादि, हेठयति । अजीहिठत्, अजिहेठत् ) । [काण्यादीनां वा] इति

णौ चङ्युपधाया ह्रस्वविकल्पः । काणेराणेस्तथा श्राणेर्भाणेहेठेर्लुठेरपीति ण्यन्तस्य भाष्यकारेण काण्यादित्वं प्रदर्शितम् ॥

बोधिन्यासकृता लोठिर्लोपिर्वाणिश्च न्हायिना ।
सहिताः पूर्वमुक्ताश्च काण्यादौ परिकीर्त्तिताः ॥
दुर्गश्चाणिं च काण्यादिं मन्यते शाकटायनः ।
लोठिं तदेव मैत्रेयो धातवो द्वादश स्मृताः ॥ २६३ ॥

एठ च ॥ विपूर्वोयमिति स्वामिकाश्यपौ । मैत्रेयादयस्तु केवलमेघोदाजह्रुः । ( एठते । एठांचक्रे । एठिता । एटिठिषते । एठयति । मा भवानिटिठत् ) द्विर्वचनात् पूर्वमुपधाह्रस्व इत्युक्तम् ॥ २६४ ॥

हिडि गत्यनादरयोः ॥ ( हिण्डते । जिहिण्डे । हिण्डिता । जिहिण्डिषते । जेहिण्डयते । जेहिण्डि । अजेहिन् । अजिहिण्डत् ) ॥ २६५ ॥

हुडि संघाते ॥ ( हुण्डते । जुहुण्डे । हुण्डितेत्यादि ) पूर्ववत् । अत्र काश्यपः । आर्यास्तु न पठन्ति । द्रविडास्तु पठन्तीति । भाष्यादौतु हुण्डेत्यविगीतमुदाह्रियते ॥ २६६ ॥

कुडि दाहे ॥ ( कुण्डते इत्यादि । कुण्डः । कुण्डम् ) अच् । स्त्रियां ( कुण्डी ) । "जानपदकुण्डगोणस्थलभाजनागकाशनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्रणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु" इति अमत्रे ङीष् । अन्यत्र कुण्डा । वैकल्यार्थोत्रैव पठिष्यते, रक्षणार्थश्चुरादौ ॥ २६७ ॥

वडि विभाजने ॥ २६८ ॥

मडि च ॥ अत्र स्वामी वडि विभाजने, मडि चेति पृथक् सूत्रणादर्थान्तरेपि । नन्दी तु वडि विभाजने, मडि वेष्टन इति भङ्क्त्वा पठतीति । ( वण्डते । ववण्डे । वण्डिता । ममण्डे । मण्डितेत्यादि । मण्डूकः ) । "शलिमण्डिभ्यामूकण्" इत्यूकण् । कूपमण्डूकः । ( उदपानमण्डूकः कच्छमण्डूकः ) "पात्रेसमितादयश्च" इति क्षेपे सप्तमीतत्पुरुषः । क्षेपश्च कूपे मण्डूक इवेत्यदृष्टविस्तारतावगमात् । "क्रुधमण्डार्थेभ्यश्च" इति युज्विधौ भूषणार्थ एव वृत्तौ उदाहृतः । तस्यानुदात्तेत इति युचः सिद्धत्वान्न त्वस्य युज् नेतीति । मण्डि भूषायामित्यग्रे परस्मैपदिषु, णौ हर्षे च ॥ २६९ ॥

भडि परिभाषणे ॥ परिहास इति देवः । परितो भाषणं परिभाषणमिति स्वाम्यादयः । यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणमिति निघण्टुः । भण्डतइत्यादि । भण्डिलो दूतः । "सलिकल्यनिमहिभडिभण्डि" इत्यादिना इलच् कल्याणार्थश्चुरादौ ॥ २७० ॥

पिडि संघाते ॥ ( पिण्डयते ) इत्यादि । पिण्डिलो माणवकः । पूर्ववदिलच् । चुरादावव्ययम् ॥ २७१ ॥

मुडि मार्जने ॥ शुद्धिन्यग्भावौ मार्जनम् । मुण्डतइत्यादि । खण्डनार्थः परस्मैपदिषु२७२॥

तुडि तोडने ॥ तोडनं दारणं हिंसनं च । ( तुण्डते ) इत्यादि । (तुण्डिः ) । "इन्" इतीन्प्रत्ययो नाभिवृद्धौ । सास्यास्तीति तुण्डिलः । "तुण्डादिभ्य इलच्च" इत्यत्र स्वाङ्गाद् वृद्धाविति गणसूत्रेण वृद्धौ वृत्तात्स्वाङ्गादस्मादिलच् तुण्डिल एव तुण्डिभः । "तुण्डिवलिवटेर्भः" इति मत्वर्थीयो भः । तुण्डिलो बहुभाषी । "सलिकल्पनी" इत्यादिनेलच् । अयमनिदित्परस्मैपदिषु ॥ २७३ ॥

हुडि वरणे ॥ वरणं स्वीकारः । हरणमिति मैत्रेयः । (हुण्डते । जुहुण्डे । हुण्डितेत्यादि ।) स्फुडि विकसनइत्येके पठन्ति ॥ २७४ ॥

चडि कोपे ॥ ( चण्डते ) इत्यादि । ( चण्डः ) । "क्रुधमण्ड०" इति वा "अनुदात्तेतः" इति वा युच् । ( चण्डालः ) । "चण्डपर्तिस्थिमालच्" इत्यालच् । चण्डालस्यापत्यं, ( चाण्डालिकः ) । अत इनि "सुधातुरकङ् च" "व्यासवरुडनिषादचण्डालबिम्बानाम्" इत्यकङा-

देशोन्त्यस्थ। चाण्डालीति शार्ङ्गरवादित्वात् ङीनि तद्युक्तादिति सूत्रकरणे। "[ कुलालवरुडनिषादचण्डालमित्रामित्रेभ्यश्छन्दस्युपसंख्यानम्" इति उक्तत्वाच्छान्दसः। (चण्डालः। चण्डीति) "कृदिकारादक्तिनः" इति ङीष्। अयं चुरादौ च॥ २७५॥

शडि रुजायां संघाते च॥ तालव्योष्मादिः। (शण्डते) इत्यादि। शण्डः, असुरपुरोहितः। शण्डिलः तीर्थमृषिश्च)। "सलिकल्पनी" इत्यादिनेलच्॥ २७६॥

तडि ताडने॥ (तडते) इत्यादि। तण्डः। अच्। (वतण्डः)। 'वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्युपसर्गस्याल्लोपः। वतण्डस्य गोत्रापत्यं, (वातण्ड्यः। वातण्डः)। "गर्गादिभ्यो यञ्", "शिवादिभ्योण्" इति यञणौ। यदा त्विदमपत्यमाङ्गिरसं भवति तदा "वतण्डाच्च" इति शिवाद्यणं बाधित्वायमेव अपत्ये तु स्त्री लिङ्गे "लुक् स्त्रियाम्" इति लुक्। "शार्ङ्गरवाद्यञो ङीन्" इति ङीना वतण्डी। अनाङ्गिरसे तु लुगभावात् वातण्ड्यायनी। "प्राचां ष्फ तद्धितः" इति यञन्तात् ष्फः, फस्यायनादेशः। षित्करणसामर्थ्यात् स्वार्थे ङीष्ष्फप्रत्ययाभावे "यञश्च" इति ङीषि "यस्येति च" इत्यल्लोपे *आपत्यस्य च तद्धितेनाति*। आपत्ययकारस्यानकारादौ भसंज्ञानिमित्ते तद्धितेइति च परे लोपे वातण्डी। अनातीति वचनात् वातड्यायनीत्यत्र यलोपो न भवति। (वितण्डा, तण्डुला)। "कुटिकशिकौतिभ्यः उलच्" इत्युलच्॥ २७७॥

पडि गतौ॥ (पण्डते। पण्डितः। गोष्ठेपण्डितः)। "पात्रेसमितादयश्च" इति क्षेपे सप्तमीतत्पुरुषः तत्रैव पाठादलुक्, गोष्ठएव पण्डितो न सदसीति क्षेपावगतिः। पण्डः। अच्। पणतेर्वा "जमन्ताड्डः" पण्डस्यापत्यं, पाण्डारः। "आरगुदीचाम्" इत्यत्र रकापि गोधार इति सिद्धे आरग्वचनादन्यत्रापि भवतीति वृत्तावुक्तम्। नाशार्थश्चुरादौ॥ २७८॥

कण्ड मदे॥ (कण्डते) इत्यादि। भेदने चुरादिः। अनिदिदिहैव। अदादौ च परस्मैपदी॥ २७९॥

खडि मन्थे॥ खुडीत्यप्येके पठन्ति। (खण्डते। खण्डः।) खडि भेदने चुरादिः॥२८०॥

हेडृ होडृ अनादरे॥ (हेडते। जिहेडे। हेडिता। जिहेडिषते। जेहेड्यते। जेहेड्डि। हेडयति। अजिहेडत्)। ऋदित्त्वान्नोपधाह्रस्वः। एवं (होडत जुहोडे) इत्यादि। होडः। पचाद्यच्। होडइवाचरति। (होडते) [आचारेऽवगल्भक्लीवहोडेभ्यः क्विब्वा] इति क्विपि "सनाद्यन्ताः"इति धातुत्वे लादयः। होडादीनामकारस्यानुदात्तत्वानुनासिकत्वयोः प्रतिज्ञानात् "अनुदात्तङितः" इति तङ्। तथा च भाष्यम्। सर्वप्रातिपदिकेभ्यः क्विबित्युक्त्वा न तर्हीदानीं गल्भाद्यनुक्रमणं कर्त्तव्यं, कर्त्तव्यं च, आत्मनेपदार्थमनुबन्धानासङ्क्ष्यामीति क्विब् भवति, "कर्तुः क्यङ्सलोपश्च" इति उपमानात्कर्तुः सुबन्तादाचारे क्यङिति क्यङ्। उपमानस्य कर्तृत्वं संनिधानादाचरणक्रियापेक्षं, लोपश्चेति चशब्दस्यान्वाचयशिष्टत्वात् यत्रान्त्यः सकारः संभवति तस्य लोपः, स च व्यवस्थितविभाषया, (होडायते) अनुनासिकत्वप्रतिज्ञानं क्विप्संनियोगेनैवेतीत्संज्ञाया अभावात् "अकृत्सार्वधातुकयोः" इति दीर्घः। हेडृ वेष्टनइति घटादौ। होडृ गतावित्यग्रे परस्मैपदी॥ २८२॥

वाडृ आप्लाव्ये॥ वशादिः। आप्लवनमाप्लवः। (वाडते। अववाडतेत्यादि) ॥२८३॥

द्राडृ ध्राडृ विशरणे॥ द्राडते। ध्राडतइत्यादि॥ २८४॥

शाडृ श्लाघायाम्॥ शाडतइत्यादि। लडयोरैक्यात् शालतइति काश्यपः। अत एव मैत्रेये रूपशाली शालेत्युदाहृतं, "लस्य" इत्यत्र भाष्यकैयटयोः शालेति श्यतेर्लप्रत्यये व्युत्पादनीयः। (शालीनः, अधृष्टः) "शालीनकौपीने अधृष्टाकार्ययोः" इति खञि निपातितः। गवां शाला, (गोशालं, गोशाला)। *विभाषा सेनासुराच्छायाशालानिशानाम्* इति सेनाद्यन्तस्य तत्पुरुषस्य वा नपुंसकत्वं, गोशाले जातः। गोशालः। "तत्र जातः" इत्यण्, "स्थानान्तगोशालखरशालाच्च" इति लुक्। लिङ्गविशिष्टपरिभाषया गोशालाशब्दादप्यणो

लुग्भवति । एवं खरशालः । वत्सशालायां जातः, वत्सशालः । वात्सशालो वा । "वत्सशालाभिजिदश्वयुक्शतभिषजो वा" इति अणो वा लुक् । शालिः, अत इनितीन् । शालीनां भवनं क्षेत्रं, शालेयम् । "व्रीहिशाल्योर्ढक्" इति ढक् ॥ अट्टादय उदात्ता अनुदात्तेतः ॥२८६॥

शौट्ट गर्वे ॥ इतो गड्यन्ता उदात्ता उदात्तेतः । ( शौटति । शुशोट । शौटिता । शौटिष्यति । शौटतु । अशौटत् । आशिषि शौट्यात् । अशौटीत् । अशौटिष्यत् । शुशोटिषति । शोशौट्यते । शोशौट्टि ) । अभ्यासस्य ह्रस्वः । गुणः । ( शौटयति, अशुशौटत् । शौटीरः ) । "कृशृपृकटिपटिशौटिभ्य ईरन्" इतीरन् ॥ २८७ ॥

यौट्ट बन्धे ॥ यौटतीत्यादि ॥ २८८ ॥

म्रेट्ट म्लेड्ट उन्मादे ॥ द्वितीयस्तृतीयान्तः । तथा च "तस्य परमाम्रेडितम्" इति दृश्यते, अत्र न्यासे आम्रेड्यते आधिक्येनोच्यतइति, टान्तमध्ये पाठस्तु तदर्थसाम्याज्ज्ञाथतिवत् । ( म्रेटति । म्लेडतीत्यादि ) ॥ २९० ॥

कटे वर्षावरणयोः ॥ अयमनेदिदेव । ( कटति चकाट कटित ) इत्यादि । ( अकटीत् ) । "अतो हलादेः" इति वा वृद्धिः "ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्" इति एदितां निषिध्यते । ( कटः ) । पचाद्यच् । ( कटी ) । कटात्तु श्रोणिवचनइति ङीष् । निकटे वसति नैकटिकः, "निकटे वसति" इति सप्तम्यन्ताद्वसत्यर्थे ठक् । (काटोङ्गनं,) अधिकरणे संज्ञायां घञ् । ( कटीरः ) । जघनं कन्चुकम् । कृशृगृइत्यादिना ङीरन् । कटिरं चर्म । असिन्त्रादिनेरन् । कटित्रं चर्म । अशित्रादिभ्य इतीत्रः ( कटकम् ) । "क्वुन् शिल्पिसंज्ञयोः" इति क्वुन् । (कटुः) बाहुलकादुप्रत्ययः । ( कट्वरः ) । "छित्वरछत्वरधीवरपीवरमीवरचीवरनीवरगह्वरकट्वरसय्वरा" इति वरचि निपात्यते । चटत्येकइति काश्यपः । चटतीत्यादि पूर्ववत् । ( चाटुः ) । "सनिजनिचटिहिभ्य उण्" इति उण् । ( चटुः ) । बाहुलकादुकारः । ( चटुलः ) । बाहुलकादुलच् । ( चटकः ) । "क्वुन् शिल्पिसंज्ञयोः" इति क्वुन् । ( चटका ) । अजादिपाठाट्टाप्, "प्रत्ययस्थात्" इतीत्वाभावश्च । चटकाया अपत्यं, चाटकैरः । "चटकाया ऐरक्" इत्यैरक् । [चटकाच्चेति वक्तव्यात्] चटकस्यापत्यमपि चाटकैरः, स्त्रियां त्वपत्ये [स्त्रियामपत्येलुग्वक्तव्यः] इति ऐरको लुकि चटकेति भवति । भेदनार्थोयं चुरादौ ॥ २९१ ॥

अट पट गतौ ॥ ( अटति । आट । अटिता । अटिष्यति । अटतु । आटत् । अटेत् ) । आशिषि ( अट्यात् मा भवानटीत् ) "नेटि" इति सिचि वृद्ध्यभावः । ( अटिटिषति । अटाट्यते ) [ सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनामुपसंख्यानम् ] इति यङ् अजादित्वात् ट्यशब्दस्य द्विर्वचने ऽभ्यासस्य "दीर्घोकित" इति दीर्घः । नन्वत्र यङेव कार्यी निमित्तं च, एकस्य कार्यिनिमित्तत्वं च विरुद्धं । नैतत् । आकारभेदात्, अनभ्यासाकारेण कार्यी यङाकारेण निमित्तम्, तथा हि । देवदत्तशालायां ब्राह्मण आनीयतामित्युक्ते यदि देवदत्तोपि ब्राह्मणश्च शालास्थश्च भवति तदा सोप्यानीयते, यङ्लुकि "सन्यङोः" इत्यस्य षष्ठ्यन्तत्वात् यङपेक्षया पूर्वस्य कार्याभावात् "न लुमत" इति प्रत्ययलक्षणस्य प्रतिषेधाभावाद्यङन्तत्वाद् अटशब्दस्य द्विर्वचने हलादिशेषे "दीर्घोकितः" इति दीर्घे सवर्णदीर्घे च तिपृष्टुत्वे (आट्टि) इति भवति । ईट्पक्षे तु । ( आटीति । आट्टः । आटति । आटसि । आट्ठः । आटांचकारेत्यादि ) । आड्ढीत्यत्र हेर्धिभावे ष्टुत्वे पूर्वस्य जश्त्वं डकारः । लङि हल्ङ्यादिना तिस्योर्लोपे (आट् । अटतीत्यटा ।) अचि टाप् । तां करोति । ( अटायते ) अटाट्येत्यादिना क्यङ्, कुलस्य (अटा कुलटा ।) शकन्ध्वादित्वात् "कुलटाया वा" इति निर्देशाद्वा पररूपं, कुलटाया अपत्यं, (कौलटिनेयः । कौलटेयः) । स्त्रीभ्यो ढकि "कुलटाया वा" इति पक्षे इनङादेशोऽन्त्यस्य । यदायं कुलटाशब्दः क्षुद्रायां वर्त्तते क्षुद्रा दुःशीला अङ्गहीना वा तदा "क्षुद्राभ्यो वा" इति ढ्रकि कौलटेर इति भवति, तदभावे वाशब्देन ढकि कौलटेय इति । अटाट्या । [ परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम् ] इति गमनमात्रे शप्रत्यये यकि द्विर्वचनहलादिशेषाभ्यासदीर्घेषु निपात्यते ।

( पटति । पपाट । पेटतुः । पेटिथ । पटिता अपटीत् । अपाटीत् ) "अतो हलादेः" इतिवृद्धिः । ( पिपटिषति । पापट्यते, पापटीति । पापट्टीत्यादि । पाटयति । अपीपटत् । पाटूपटः ) ण्यन्तात्पचाद्यचि [ पार्टेर्णिलुक् चोक् चाभ्यासस्य ] इति णिलुक्, द्विर्वचनमभ्यासस्योगाम उपधादीर्घश्च, ऊको दीर्घोच्चारणसामर्थ्यात् ह्रस्वस्याभावः अस्यागमत्वसामर्थ्याच्च हलादिशेषः । अन्यथादेशमेव विदध्यादुकारम् । "अभ्यासस्यानचि" इति वा हलादिशेषह्रस्वयोरभावः, अभ्यासस्य यदुक्तं तदचि नेति "णेरनिटि" इति णिलोपे सिद्धे लुग्वचनं प्रत्ययलक्षणे वृद्धेरभावार्थं, पाट्यका सुराविशेषः । पाट्यकालावदातसुरायामिति स्थूलादिपाठात् ण्यन्तादस्मात् क्कुन् । पटुः, "कलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च" इत्युप्रत्यये यथासंख्यात्पटादेशः, अत्र गुगेक आगमः, अन्ये आदेशाः, पटोर्भावकर्मणी । पटिमा । "पृथ्वादिभ्य इमनिज्वा" इतीमनिच्, "टेः" इति टिलोपः । तदभावे "इगन्ताच्च लघुपूर्वात्" इत्यणि पाटवम् । गोष्टेपटुः । "पात्रेसमितादयश्च" इति क्षेपे सप्तमीतत्पुरुषः तत्रैव पाठादलुक्, गोष्ठ एवपटुर्न सदसीति क्षेपावगतिः । (पटाका) । "शलिपटिपदिभ्यो निदित्याकिन्निच्च" । (पटलम्) । "वृषादिभ्यश्चित्" इति कलप्रत्ययः चिच्च । पटलिका, संज्ञायां कन् । ( पटीरः ) । कृदृइत्यादिनेरन् । ( पाटलम् ) । ण्यन्तात्कलप्रत्ययो बाहुलकात् । ( पाटली ) । "जातेरस्त्रीविषयादयोपधात्" इति ङीष् । पाटल्याः पुष्पाणि, पाटलानि । "बिल्वादिभ्योण्" इति विकारावयवयोरण्, तस्य "पुष्पफलमूलेषु बहुलम्" इति लुप् तत्रैव बहुलग्रहणान्न भवति, लुपि हि कौशीतक्याः फलानीत्यादिवत् "लुपि युक्तवद्व्यक्तिवचने" इति युक्तवद्भावः स्यात् ॥ २९३ ॥

रट परिभाषणे ॥ रटतीत्यादि । (परिराटी) । "संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च" इति परिपूर्वादस्मात्ताच्छीलिको घिनुण् । (परिराटकः) । "निन्दहिंसा" इत्यादिना वुन् ताच्छीलिकः ॥ २९४ ॥

लट बाल्ये ॥ लटतीत्यादि । लट्वा । "अशूप्रुषिलटि ~~लघुलंङ्गुषिलिकलि~~कणिखटिपिशिभ्यः क्वन्" इति क्वन् । लाटयतीति लाटः । ण्यन्तादच् । केवलाद्वासंज्ञायां घञ् ॥ २९५ ॥

शट रुजाविशरणगत्यवसादनेषु ॥ ( शटतीत्यादि । शाटकः ) । घञन्तात्संज्ञयां कन् । ( शाटी ) । जातिलक्षणो ङीष् ॥ २९६ ॥

वट वेष्टने ॥ ( वटति । ववाट । ववटतुः ) वादित्वादेत्वाभ्यासलोपाभावः । ( वटिः ) । "इन्" इतीन्प्रत्ययः । (वटिभः) "तुन्दवलिवटेर्भः" इति मत्वर्थे भः । ( वटकः ) । "संज्ञयां कन्" वटका अन्नमस्यां पौर्णमास्यां वटकिनी पौर्णमासी । "तदस्मिन्नन्नं प्राये संज्ञायाम्" इत्यत्र [ वटकेभ्य इनिर्वक्तव्यः ] इतीन् । घटादावयं परिभाषणार्थः । पट वट ग्रन्थइति कथादौ । वटवेष्टनइति क्षीरस्वामी । यस्तु तत्र विभाजनार्थः तं वटीति शाकटायनादयः पठन्ति । वटी विभाजनइति इहैवाग्रे चुरादौ चानदन्तेषु ॥ २९७ ॥

किट खिट त्रासे । ( केटति । चिकेट । केटिता । चिकिटिषति । चिकेटिषति । किटित्वा केटित्वेत्यादि । एवं खेटतीत्यादि । (खेटः) । "हलश्च" इति संज्ञयां घञ् इह त्रासो भयोत्पादनम् । किटिर्गत्यर्थोग्रे भविष्यति । इहैके न पठन्ति । मैत्रेयादीनामर्थभेदात् पुनः पाठ इत्यभिप्रायः ॥ २९९ ॥

शिट षिट अनादरे ॥ आद्यस्तालव्यादिः, अपरो मूर्द्धन्यादिः । ( शेटति ) । सेटतीत्यादि क्विवत् । (सिसेटिषति) इत्यत्र "स्तौतिण्योरेव" इति नियमान्न षत्वं, षोपदेशफलं तु (सेपिष्यते । असीषिटत् ) इत्यादौ ॥ ३०१ ॥

जट झट सङ्घाते ॥ ( जटति । जजाट । जेटतुः । जटिता । जटा । ) अजादित्वाट्टाप् । निन्दिता जटा अस्य जटालो जटिलः । जटाघटाकलाः क्षेपइति सिध्मादौ पिच्छादौ च पाठाल्लजिलचौ । जटीति भाष्यकारप्रयोगाद् अनदन्तत्वेपीनिः ( झटति । जझाट । जझटतुः । झटि-

तेत्यादि ॥ ३०३ ॥

भट भृतौ ॥ ( भटति )। भटित्रं शूलेन संस्कृतं मांसमिति निघण्टुः । वेतनमित्युणादिवृत्तौ। अशित्रादिभ्य इत्रोत्रः। अयं घटादिः परिभाषणार्थः ॥ ३०४ ॥

तट उच्छ्राये ॥ ( तटति )। तटोस्या अस्तीति तटिनी। "अत इनिठनौ" इति मत्वर्थे इनिः। ( तटी )। गौरादिपाठान् ङीष्। तड आघातइति डकारान्तश्चुरादौ ॥ ३०५ ॥

खट काङ्क्षायाम् ॥ ( खटति। खट्वा )। अशुप्रुषीत्यादिना क्वुन्। खट्वारूढो जाल्मः "खट्वा क्षेप" इति क्षेपे गम्यमाने द्वितीयान्तस्य खट्वाशब्दस्य क्तान्तेन तत्पुरुषः ॥ ३०६ ॥

णट नृतौ ॥ अत्र पुरुषकारे णट नृत्तावित्यपि क्षीरस्वामा, इत्युभयथापि नर्तनमेवार्थं इति, अयं णोपदेशः। नृतिनन्दीति णोपदेशपर्युदासवाक्ये नाटीति सवृद्धिकस्य ग्रहणादस्य घटादित्वान्मित्त्वात् नाटिरूपाभावादग्रहणम्। यदाह हरदत्तः। "जासिनिप्रहण" इत्यत्र नट नृता इत्यस्य घटादिपठितस्याग्रहणं, विकृतनिर्देशादिति, अत एव णोपदेशपर्युदासविवरणेऽपि न्यासपदमञ्जरीपुरुषकारादिभिरवस्यन्दनार्थस्य चौरादिकस्य ग्रहणं कृतम्। ननु क्षीरस्वामी घटादौ नट नृताविति पठित्वा नटयति शाखा इत्युदाहृत्य नृत्तौ नाटयतीति वक्ष्यति, अवश्यं हरदत्तादिभिरप्युभयत्र पाठसामर्थ्यादस्य नाटयतीत्यङ्गीकार्यं, तत्कथमुक्तं विकृतनिर्देशादिति । उच्यते। द्वयोर्ग्रहणे नटीत्येव निर्दिशेत् न नाटीति विकृतं, तत्सामर्थ्यात् यस्य नाटीत्येव रूपं तस्यैव पर्युदासो विज्ञास्यते न तु यस्य नटिरूपं नाटिरूपं च। ननु योऽस्ति घटादिधातुर्नित्यं नटिरूपमापन्नः, स एव विकृतनिर्देशेन व्यावर्त्यते, मैवम्। ये ऽप्यत्र पठिता घटादौ पठ्यन्ते न ते पृथग् धातवः, किन्तु मित्त्वार्थमेव तेषामनुवाद इति तत्र स्थितत्वात्। इह नृत्तिर्नर्त्तनं, यत्कारिषु नटव्यपदेशः। न तु मार्गदेशीशब्दाभ्यां प्रसिद्धं नृत्तं नृत्यं च, यत्कारिषु नर्त्तकव्यपदेशः। तत्र वाक्यार्थाभिनयो नाट्यं, पदार्थाभिनयस्तु नृत्यम्। अभिनयशून्यः पुनः शास्त्रोक्ताङ्गभङ्गः स्वगात्रविक्षेपो नृत्त इति तद्विदः, नैघण्टुकानां तु ताण्डवं नटनं नाट्य लास्यं नृत्यं च नर्त्तनमिति अभेदव्यवहारो निरूढलक्षणया नेयः। ( प्रणटतीत्यादि। नटी )। गौरादित्वान् ङीष् ॥ ३०७ ॥

पिट शब्दसङ्घातयोः ॥ (पेटति। पिपेट। पेटितेत्यादि। पिपिटिषति। पिपेटिषति। पिटित्वा। पेटित्वा। पेटयति। अपीपिठत्। पिटकम्) "क्वुन् शिल्पिसंज्ञयोः" इति क्वुन्। (पिटाकः)। पिंटाकादयश्चेत्याकः ॥ ३०८ ॥

हट दीप्तौ ॥ ( हटति। जहाट । हटिता। अहटीत । अहाटीदित्यादि। हाटकम् )। "संज्ञायां च" इति ण्वुल्, बाहुलकादयस्त्रियामपि हाटशब्दात् कन्वा ॥ ३०९ ॥

षट अवयवे। ( सेटवि । ससाट। सेटतुः। सटिता । सिसटिषति ) "स्तौतिण्योरेव" इत्यषत्वम्। ( साटयति। असीषटत्। सटा )। अजन्ताट्टाप् ॥ ३१० ॥

लुट विलोडने ॥ एतदादयः पाठत्यन्ताष्टवर्गतृतीयान्ता इति कौशिककाश्यपनन्दिद्रविडाः। ते चास्मादनन्तरे पिटहटी च पेठुः। ( लोटति। लुलोट। लोटिता। लुलुटिपति । लुलोटिषति। लुटित्वा। लोटित्वा। लोटयति। अलूलुटत्। अलुलोटत् )। काण्यादित्वादुपधाह्रस्वविकल्पः। लसूत्रे सुधाकरः, लुल विलोडन इति लान्तोपि दृश्यते। लोलद्भुजाकारबृहत्तरङ्गमिति माघः। डलयोरेकत्वस्मरणमिति वा प्रतिविधेयमिति । अयं दिवादावपि। भाषार्थश्चुरादौ। प्रतिघाते द्युतादौ इति। स्तेयार्थः परस्मैपदिषु। लुठतिः चुरादौ ॥ ३११ ॥

चिट परप्रेष्ये ॥ (चेटतीत्यादि)। पूर्ववत्। काण्यादित्वाभावो विशेषः। ( चेटी )। इनन्तात् "सर्वतोक्तिन्नर्थादित्येके" इति ङीष् ॥ ३१२ ॥

विट शब्दे ॥ ( वेटतीत्यादि। विटः )। इगुपधलक्षणः कः। ( विटपः ) विटपविष्टपविशिपोलपा इति निपातितः ॥ ३१३ ॥

बिट आक्रोशे ॥ बशादिः। बेटतीत्यादि। हिठेत्यत्र के चित्पठन्ति, हेठतीत्यादि ॥ ३१४ ॥

इट किट कटी गतौ ॥ अत्र मैत्रेयः । कटीति ह्रस्वान्तं पठन्तीति चतुर्थं धातुमुक्त्वा मतान्तरेण दीर्घान्तं पठन् ई इति चतुर्थं धातुं दीर्घमुक्त्वा फलं च व्यपदेशिवद्भावेन गुरुमत्त्वे इजादित्वात् अयांचकारेत्याम्सिद्धिमाह । क्षीरस्वामी तु त्रयो धातवः । तृतीय ईदिदित्यङ्गीकृत्य कटित्वा कट्वा, कट्वानित्युदाहृत्य अन्ये कटीति धात्वन्तरं प्रश्लिष्टमाहुरिति चोक्त्वा कण्टति । कण्टकः । 'उदयति दिननाथे याति शीतांशुरस्तम्' इति चोदाजहार । सम्मतातरङ्गिण्योस्तु कटि इति चत्वारो धातव इति व्याख्यायि । धनपालशाकटायनौ त्रीनेव धातूलाहतुः । अयं पक्षः समर्थितः पुरुषकारेण । यदाह, ईईइति ह्रस्वः दीर्घो धातुः प्रस्तुत्य अन्ये पुनरुभावपि न पठन्ति । व्यक्तं चैतत् धनपालशाकटायनवृत्त्योः । अपि च शौटृ गर्व इत्यादिकान् कांश्चन धातून्पठित्वा अन्ते चोदात्ता इत्युच्यन्ते तच्चास्मिन्प्रकरणे ऽयतेरपि पाठे सति तस्य अनिट्स्वरान्तो भवतीति ह्यश्यतामित्यनुदात्तत्वात् प्राचुर्याभिप्रायेण कथं चिन्नेयं स्यात्, यथाह मैत्रेयरक्षितः । उदात्तत्वमयतिवर्जं भट्टग्रामन्यायेनोदात्ता इत्युच्यन्ते इति, स चायं न्यायः सुनिश्चित एवायतेः पाठे शोभते, विप्रतिपन्ने पुनरुदात्तत्वोक्त्याऽस्यवशादपपाठ एव ज्यायान् । उदयतीत्यादि चैवमसाध्वेवास्त्विति हरदत्तस्याभिप्रायोयमेव पक्षोऽभिमतः । यदाह "उपसर्गस्यायतौ" इत्यत्रायतिरनुदात्तेत्कथं तर्हि उदयति विततोर्ध्वरश्मिरज्ञाविति परस्मैपदं, किमनेन वन्यगजशौचेन, यदि वा पचाद्यजन्तादुदयशब्दादाचारक्विपि लट् । केचित् तु इटकिटकटीत्यत्र इकारमपि धातुं पठन्तीति । वृत्तिकारोपि प्रायेणात्रैवानुकूलः । यदाह "एतिस्तुशास्तु" इत्यत्र क्यपि इत्य इत्युदाहृत्य कथमुपेयमिति, ईइत्यस्यैतद्रूपमिति । यदि हीमौ स्यातां प्राथम्यादनयोरेकमुपाददीत । अथोदाहरणानि । ( एकति । इयेट । ईयतुः । इयेटिथ ) । पिद्वचनेषु "द्विर्वचनेचि" इति गुणस्य स्थानिवत्त्वादिट्शब्दस्य द्विरुक्तौ हलादिशेषे "अभ्यासस्यासवर्णे" इति इयङ् । नन्वेवं गुणस्य स्थानिवत्त्वादवश्यं स पुनः प्रवर्त्तयितव्यः, तस्यां च दशायां गुणादन्तरङ्गत्वात् सवर्णदीर्घेण भाव्यम् । न चास्ति वार्णादाङ्गं बलीय इति, यत इदमाङ्गवार्णयोः समाननिमित्तत्वे प्रवर्त्तते । न च कार्यो निमित्तत्वेनाश्रीयते, सत्यम् इदानीमेवाग्रे परिहरिष्यते ( एटितेत्यादि । एटिटिषति । एटयति । मा भवानिटिटत् ) । णिलोपस्य "द्विर्वचनेचि" इति स्थानिवत्त्वाट्टिशब्दस्य द्विर्वचनम् । अतः पूर्वमेवोपधाह्रस्व इत्युक्तम् । ( केटति । चिकेट । केटिता । चिकेटिषति । किटित्वा । केटित्वेत्यादि ) । ( किटिः ) । इगुपधादितीन् कित्त्वान्न गुणः । ( कण्टति । चकण्ट । कण्टिता : कण्टकः ) । संज्ञायां क्वुन् । ( कण्टकितम् ) । तारकादित्वादितच् । अनिदिद्वा । एवं (कटतीत्यादि) । इ इति चतुर्थधातुवादिनाम्, ( अयति । इयाय । इयतुः । इयुः । इययिथ । इयेथ ) । भारद्वाजनियमादिड्विकल्पः । (इयय । इयाय । इयिव । इयिम ।) पिद्वचनेषु । गुणवृद्ध्योः "द्विर्वचनेचि" इति स्थानिवत्त्वाद् इकारस्य द्विर्वचने "अभ्यासस्यासवर्णे" इतीयङ् । अन्यत्र पूर्ववदियङ् । स्थानिवद्भावादिशब्दस्य द्विरुक्तौ पुनरियङः प्रवर्त्तनायां तं बाधित्वा "एरनेकाचः" इति प्राप्तं यणमन्तरङ्गत्वाद्बाधित्वा सवर्णदीर्घः । पुनरियङादेशः । यदापि सवर्णदीर्घस्य यणश्चेकार आश्रयो भवति स्थानिल्वेनेति समानाश्रयणे वार्णादाङ्गं बलीय इति दीर्घं बाधित्वा यण् प्रवर्त्तते ततोपीदमेव रूपम् । अत्र पक्षे इययिथेत्यत्रापि न दोषः । यतस्तत्रापि समानस्थानित्वे चास्ति समानाश्रयणत्वं दीर्घगुणयोः । एवमपि न सिद्ध्यति, यदत्र द्विर्वचनकाले ऽपहृतो गुणः पुनः प्रवर्त्तते, ततश्चानादिष्टादचः पूर्वत्वेनाभ्यासो दृष्ट इति तस्य "अभ्यासस्यासवर्णे" इति इयङि कर्त्तव्ये गुणस्य स्थानिवत्त्वाद् असवर्ण इति प्रतिषेधः स्यात्, एवं तर्हि अत एवासवर्णग्रहणसामर्थ्यात् स्थानिवत्त्वं न भविष्यति । नन्वयमस्ति वचनस्यावकाशोऽर्त्तेर्लिटि द्विर्वचने "अर्त्तिपिपर्त्योश्च" इति अभ्यासेत्वे इयर्त्ति इयृत इत्यादि । नैतत् । न ह्येकमुदाहरणं योगारम्भं प्रयोजयति । इयर्ति प्रयोजने अभ्यासस्यार्त्तावित्येव ब्रूयात् । उवोणादि तु न प्रयोजनं तस्य छान्दसत्वे तन्वादीनां छन्दस्युपसङ्ख्यानमिति सुवर्गादिवदुवङः

सिद्धत्वात् भाषायामामा भाव्यम् । ( एता । एष्यति ) । स्वरान्तत्वादनिट्त्वम् । ( अयतु । आयत् । अयेत ) । आशिषि ( ईयात् ) । "अकृत्सार्वधातुकयोः" इति दीर्घः । ऐषीत् । मा भवानेषीत् । ऐष्यत् । कर्म्मणि ईयत इत्यादि । स्यादौ चिण्वदिटि वृद्धौ आयिष्यतेत्यादि । ( ईषिषति ) । "अज्झनगमां सनि"ति दीर्घः । "इको झल्" इति सनः कित्त्वान्न गुणः । आययति । मा भवानयियत् । णौ चङि वृद्ध्यायायोः "णौ चङि" इति ह्रस्वे णिलोपे तस्य स्थानिवत्त्वेन यिशब्दस्य द्विर्वचनम् । ( इतः । इतवान् )। प्रेत्य । ल्यपि "षत्वतुकोरसिद्धः" इति एकादेशस्यासिद्धत्वाद् ह्रस्वनिबन्धनस्तुक् । किटेति मैत्रेयमतेन न्यासे गतः । कटिश्च वर्षावरणयोः ॥ ३१७ ॥

मडि भूषायाम् ॥ ( मडिति । ममण्ड । मण्डितेत्यादि ) । मण्डते कन्या स्वयमेव । अमण्डिष्ट कन्या स्वयमेव । भूषाकर्मत्वाद्यक्चिणोर्निषेधः । ( मिमण्डिषति । मामण्ड्यते । अमामन् । मण्डयति । अममण्डत् । मण्डनः ) । "क्रुधमण्डार्थेभ्यश्च" इति युच् । मण्ड इति विभागे गतः ॥ ३१८ ॥

कुडि वैकल्ये ॥ कुण्डतीत्यादि । कुण्डत इति दाहे गतम् । अत्र स्वामी । कुटीति कौशिकदुर्गावविति, शाकटायनः पुनः प्रकरणानुरोधेन डान्तमेवाध्यगीष्ट ॥ ३१९ ॥

मुट प्रमर्दने ॥ ( मोटति । मुमोट । मोटिता । मुमुटिषति । मुमोटिषति । मुटित्वा । मोटित्वा ) । "रलो व्युपधात्" इति कित्त्वविकल्पः । मुडेति धनपालः । पुडिति पकारादिडान्त इति शकटायनः । क्षीरस्वामी तु द्वावपीदितौ पपाठ । मैत्रेयस्त्वमुं टान्तमेव पठित्वा मुडि खण्डन इति चाग्रे पठित्वा पुडि चेत्येकइत्याह । मुट प्रमर्दनाक्षेपयोरिति तुदादौ । मुड संचूर्णनइति चुरादौ ॥ ३२० ॥

चुडि अल्पीभावे ॥ चुण्डतीत्यादि । चुटेति दुर्गः । चुटच्छेदनइति तुदादौ । चुटच्युटी द्वावपि चुरादौ ॥ ३२१ ॥

मुडि खण्डने ॥ मुण्डतीत्यादि । मुण्डः तं करोतीति(मुण्डयति ।) "मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्" इति करोत्यर्थे णिचि णाविष्ठवदिति टिलोपः । ( यवनमुण्डः । काम्बोजमुण्डः ) । मयूरव्यंसकादित्वाद्विशेषणस्य परनिपातः अत्र मैत्रेयः । पुडि चेत्येके । (पुण्डति । पुण्डः । पुण्डरीकमिति) । डकारवत् पवर्गादिप्रकारणादिहायं निर्दिश्यते, मुडि भूषायामित्युकारवन्न भवति इति डकारान्तोप्यकारवत्त्वादादौ निर्दिष्ट इति मैत्रेयः । अत्र शुठि खण्डनप्रमर्द्दनयोरिति क्वचिद्धातुकोशे पठ्यते । मैत्रेयादयस्तु न पठन्ति । तत्राद्यपाठ एव ज्यायान्यदिहैवाग्रे शुठि शोषणइति भविष्यति, अस्मिन् हि सति तस्य रूपाभेदाद् शोषणग्रहणमपीहैव कर्त्तव्यं स्यात् ॥ ३२२ ॥

रुठि लुठि स्तेये ॥ ( रुण्ठति । लुण्ठतीत्यादि ) । रुठिलुठीत्येकइति क्षीरस्वामी । शाकटायनस्तृतीयान्तौ पपाठ । लोठतीति विलोडने गतम् । लुठ प्रतिघातइति युजादौ । रुठ रोषणइति चुरादौ । तत्र रुठेत्येके ॥ ३२४ ॥

स्फुडिर्विशरणे ॥ अयं पाठो मैत्रेयादीनाम्(१) । ( स्फोडति । पुस्फोड । स्फोडिता । पुस्फुडिषति । पुस्फोडिषति । स्फुडित्वा । स्फोडित्वा ) इत्यादि । इकाररेफयोः "उपदेशेऽजनुनासिक इत्" "हलन्त्यम्" इतीत्त्वं, तेन लुङि "इरितो वा" इति परस्मैपदे विधीयमानोऽङ्विकल्पो भवति । ( अस्फुटत् । अस्फोटीदिति ) । "इदितो नुम् धातोः" इति नुम् अन्तेदितो विधानादस्य न भवति । स्फुटेति चन्द्रः । अस्याङ् नास्ति । स्वामिकाश्यपौ तु स्फट स्फुठि स्फुटिरिति त्रीन् धातून् पठतः । ( स्फुण्ठति । स्फोटतीत्यादि स्फुटा ) । अच्, टाप् । स्फुट विकाशनइत्यात्मनेपदिषु टान्तः ॥ ३२५ ॥

(१) देवेत्यधिकं क्वचित् पु० ।

पठ व्यक्तायां वाचि ॥ (पठति । पपाठ । पेठतुः । पठिता । अपाठीत्) पाठयति श्लोकं पुत्रमित्यादि ॥ ३२६ ॥

वठ स्थौल्ये ॥ (वठति । ववाठ । वठितेत्यादि) । वादित्वान्नैत्वाभ्यासलोपौ । वठि एकचर्यायामात्मनेपदी गतः ॥ ३२७॥

सठ कठ मदनिवासयोः ॥ अयं पाठो मैत्रेयस्य । अन्येषां मठ मदनिवासयोः । कठ कृच्छ्रजीवनइति । (मठति । कठति) । इत्यादि । (कठः) । अच् । कठेन प्रोक्तं च्छन्दः "कलापिवैशम्पायनान्तेवासिभ्यश्च" इति वैशम्पायनान्तेवासित्वाण्णिनिः । तस्य "कठचरकाल्लुक्" इति लुक् । "छन्दोब्राह्मणानि च तद्विषयाणि" इति नियमात् तदधीते तथैवं इति अध्येतृवेदितृप्रत्ययान्त एव प्रयोगार्हः । तस्य चाणः "प्रोक्ताद् लुक्" इति लुक् । तदव कठेन प्रोक्तं छन्दोधीयमानोपि (कठः । कठिनम् ।) औणादिक इन् । वंशकठिने व्यवहरति (वांशकठिनिकः । "कठिनान्तप्रस्तारसंस्थानेषु व्यवहारति" इति कठिनान्तादिभ्यः सप्तम्यन्तेभ्यो व्यवहरतीत्यर्थे ठगिति ठक् । (कठोरम्) । कठिचकिभ्यामोरजित्योरच् । अनन्तरं मठ गताविति क्वचित्पठ्यते । मैत्रेयादयस्तु न पठन्ति ॥ ३२९ ॥

रठ परिभाषणे ॥ रठतीत्यादि ॥ ३३० ॥

हठ प्लुतिशठत्वयोः ॥ (हठति । जहाठेत्यादि) । हठ बलात्कार इति चन्द्रदुर्गौ ॥३३१॥

रुठ लुठ उठ उपघाते ॥ (रोठति । । लोठतीत्यादि) अत्र मैत्रेयः । उठेत्यप्येकइति । धनपालशाकटायनौ तु रुठलुठेत्येव पेठतुः । क्षीरस्वामी तु उठिं पठित्वा रुठ लुठ इत्यपि दौर्गा इत्याह । (ऊठ्ठि । उवोठ । ऊठतुः) । ओठितेत्यादि । पठतिवत्प्रक्रिया । लुठः काण्यादित्वात् अलुलुठत् । अलुलोठदिति भवति अयं श्लेषणे तुदादिः । लुठि आलेख्ये प्रतिघाते च । रुठि लुठि गतावित्यग्रे इदितौ । लुठ श्लेषणइति तुदादौ । असौ डान्त इत्येकइति मैत्रेयः । तथा च स्वामी लुठतीति लक्ष्यदर्शनात् तुदादौ पाठ इति । लुठ प्रतिघात इति चुरादौ ॥ ३३४ ॥

पिठ हिंसासंक्लेशनयोः ॥ पेठतित्यादि । (पीठम्) । घञ् । "अन्येषामपि दृश्यते" इति दीर्घः । (पीठी) । इजन्तात् "कृदिकारादक्तिनः" इति ङीष् ॥ ३३५ ॥

शठ कैतवे च ॥ चकाराद्धि सासंक्लेशनयोश्च । शठति इत्यादि । स्वाम्यादयः पुनश्चकारं नैव पेठुः । गत्यसंस्कारकारयोरयं चुरादौ । तत्रैव श्लाघायामात्मनेपदिषु, सम्यग्अवभाषणे कठादौ ॥ ३३६ ॥

शुठ गतिप्रतिघाते ॥ प्रतिघात इत्येव धनपालः । तथा च कुठि इत्युत्तरधातौ प्रतिहतिमात्रं प्रतीयते इत्यर्थ इति स एवाह । शोठतीत्यादि । शुठीति क्षीरस्वामी । आलपइति चुरादौ । शुठि शोषणइत्यत्रैवाग्रे ॥ ३३७ ॥

कुठि च ॥ (कुण्ठतीत्यादि । कुण्ठः) ॥ ३३८ ॥

लुठ आलस्ये प्रतिघाते च ॥ (लुण्ठतीत्यादि) । लोठतीत्युपघाते गतम् ॥ ३३९ ॥

शुठि शोषणे । (शुण्ठति । शुण्ठः । शुण्ठी) । शोठतीति गतिप्रतिघाते गतः ॥ ३४० ॥

रुठि लुठि गतौ ॥ अर्थभेदात्पुनः पाठो लुण्ठेरित्याहुः । रुण्ठति । लुण्ठन्तीत्यादि ) ३४२ ॥

चुड्ड भावकरणे ॥ भावकरणमभिप्रायसूचनम् । (चुड्डति । चुचुड्ड । चुड्डितेत्यादि । चुचुड्डिषति । चोचुड्यते । अचोचुत्) अयं दोपध इति संयोगान्तलोपे तकारस्य श्रवणम् । (चुड्डयति । अचुचुड्डत्) ॥ ३४३ ॥

अड्ड अभियोगे ॥ अयमपि दोपध इति क्विप्यदिति भवति । (अड्डति । आनड्ड । अड्डिता । अड्डिडिषति) । "न न्द्राः" इति दकारवर्ज्जस्य द्विर्वचनम् । (अड्डयति आड्डिडत्) ॥ ३४४॥

कड्ड कार्कश्ये ॥ कड्डतीत्यादि अस्यापि दोपधात्वाद्यइलुकि क्विपि च । (अचीकत् कद्)

इति च भवति । कञ्च तत् जलं च (कज्जलम्) ॥ ३४५ ॥

क्रीडृ विहारे ॥ ( क्रीडति । चिक्रीड । क्रीडिता । चिक्रीडिषति । चेक्रीड्यते । चेक्रीड्टि । अचेक्रीट् । आक्रीडते ) । "क्रीडोऽनुसंपरिभ्यश्च" इति अन्वादिपूर्वाच्चकारादाङ् पूर्वात्तङ्, एवमनुक्रीडतइत्याद्युदाहार्यम् । समासाहचर्यादनोरुपसर्गस्य ग्रहणं, तेन "तृतीयार्थे" इति यदानोः कर्मप्रवचनीयत्वं तदा तङ न भवतीति (माणवकमनुक्रीडतीति) माणवकेन सह क्रीडतीत्यर्थः। "कर्मप्रवचनीययुक्ते द्वितीया" इति माणवकाद् द्वितीया । संक्रीडन्ति शकटानीत्यत्र । [समोकूजन इति वक्तव्यम् ] इति उक्तत्वान्न तङ् । कूजन्ति शकटानीति ह्यस्यार्थः ।

( आक्रीडी ) । "संपृचे" इत्यादिना घिनुण् । चिक्रीडः । "कृञादीनां के द्वे भवतः" इति कप्रत्यये द्विर्वचनम् ॥ ३४६ ॥

तुडृ तोडने ॥ तोडनं दारणं हिंसनं चेत्युक्तम् । ( तोडति । तुतोड । तोडितेत्यादि ) । तुड इति स्वामिशाकटायनौ, तुडतइत्यात्मनेपदी गतः ॥ ३४७ ॥

हूडृ हुडृ होडृ गतौ ॥ (हूडति । जुहूड । हूडिता । हूडयति । अजुहूडत् । होडति । जुहोड । होडिता । होडयति । अजुहोडदित्यादि ) हुडृ हूडृ गताविति धनपालशाकटायनौ । होडतइत्यनादरे गतः ॥ ३५० ॥

~~हौडृ~~ रौडृ अनादरे ॥ ~~हौडतीत्यादि ॥ ३५१ ॥~~ रौडतीत्यादि ॥ ३५१ ॥

रोडृ लोडृ उन्मादे ॥ ( रोडति । लोडतीत्यादि ) ॥ ३५३ ॥

अड उद्यमे ॥ ( अडति । अडो ) वृश्चिकलांगूलं तेन तैक्ष्ण्यं लक्ष्यते । विशिष्टो ऽडस्तैक्ष्ण्यमस्य व्यडः, तस्यापत्यं व्याडिः । "अत इञ्" "स्वागतादीनां च" इति वृद्धिप्रतिषेधैजागमयोर्निषेधः ॥ ३५४ ॥

लड विलासे ॥ लडतीत्यादि । जिह्वोन्मथने घटादौ । अनन्तरे लल ईप्सायामिति क्वचित्पठ्यते । तत् क्षीरस्वामिपुरुषकारादयो नानुमन्यते, यत् रलयोर्डलयोश्चैकत्व स्मरणात् ललयति ललनेत्याहुः । लड उपसेवायामिति चुरादौ ॥ ३५५ ॥

कड मदे ॥ कडतीत्यादि । क्षीरस्वामी तु कडीति पठित्वा कडेति दुर्गा इत्याह । अयं तुदादौ च उभयत्र पाठफलं तत्रैव वक्ष्यते । कण्डतइति गतः ॥ ३५६ ॥

गडि वदनैकदेशे ॥ आगण्डतीत्यादि । अत्र वक्तव्यं दन्त्यादिष्वसुं पठित्वोक्तम् । शौटादय उदात्ता उदात्तेतः तवर्गान्ताः ॥ ३५७ ॥

केचनैधत्यादयो गताः । केचन द्युतादौ वक्ष्यन्ते । इति क्रमप्राप्तानात्मनात्मनेपदिनः पवर्गान्तानाह ॥

तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः ॥ एतदायस्तोभत्यन्ता उदात्ता अनुदात्तेतः । तपिं तिपिं चापीत्यनिट्कारिकासु पाठात् तिपिरेकोऽनुदात्तः, ऋदित्पवर्गान्तात्मनेपदित्वसाम्याच्चेह पाठः । क्षीरस्वामिना त्वयं सेडुदाहृतः, तत्काश्यपवृत्तिन्यासपदमञ्जर्यादिविरोधात् तपिं तिपिसिति व्याघ्रभूतिवचनविरोधात् चोपेक्ष्यम् । ( तेपते । तितिपे । तितिपिषे । तितिपिवहे ) । क्रादिनियमादिट् । ( तेप्ता । तेप्स्यते । तेपताम् । अतेपत । तेपेत । आशिषि । तिप्सीष्ट । अतिप्त । अतिप्साताम् ) झलि सिजूलोपः *लिङ्सिचावात्मनेपदेषु* इति इक्समीपा द्धलः परयोर्झलाद्योर्लिङ्सिचोः कित्त्वान्न गुणः । आत्मनेपदेष्विति सिच एव विशेषणं न लिङः, परत्वासम्भवात् परस्मैपदिषु झलादित्वासंभवाच्च (तितिप्सते) । *हलन्ताच्च* इति इक्समीपाद्धलादेः सनः कित्त्वान्न गुणः, ( तेतिप्यते । तेतिपीति । तेतेप्ति । तेपयति । अतितेपत् ) । ऋदित्त्वाण्णौ चङि ह्रस्वाभावः । ( तेपते । तितेपे । तेपिता । तेपिष्यते । तेपताम् । अतेपत । तेपेत । तेपिषीष्ट । अतेपिष्ट । तितेपिषते, तेतिप्यते । तेतेपीति । तेतेप्ति । स्तेपते । तिष्टिपे । तिष्टिपाते ) । "अभ्यासे खयः शेषः, स्तेपितेत्यादि । तेपिवत् । (तिस्तेपिषते । तिस्तिपिषते, स्तिपित्वा, स्तेपित्वा)। "स्तौतिण्यो-

रेव" इत्यषत्वम् । "रलो व्युपधात्" इति वा कित्त्वम् । ( तेष्टिप्यते । तेष्टिपीति । तेष्टेप्सि । तेष्टिप्सि ः ) । तिपिवत् ष्टेपिः। अभ्यासे खयः शेषो विशेषः । दिपृ देपृ इति च काश्यपः ॥३६१॥

तेपृ कम्पने च ॥ ३६२ ॥

ग्लेपृ दैन्ये ॥ ग्लेपत इत्यादि ॥ ३६३ ॥

टुवेपृ कम्पने ॥ ( वेपते । वेपथुः ) । "ट्वितो ऽथुच्" इत्यथुच् । विपिनम् । "वेपितुह्योर्ह्रस्वश्च" इतीनचि ह्रस्वः ॥ ३६४ ॥

केपृ गेपृ ग्लेपृ च ॥ चकारात्कम्पने गतौ च । सूत्रविभागादिति स्वामी । मैत्रेयस्तु चकारमन्तरेण पठित्वा कम्पनइत्यपेक्षतइत्याह । वेपतिना सहैषामपाठोऽप्रसिद्धत्वज्ञापनायेति तस्याभिप्रायः । ग्लेपेरर्थभेदात्पुनः पाठः । केपतइत्यादि । केपादीनां वेपतेश्चलनार्थत्वात् "निगरणचलना" इति णौ परस्मैपदमेव । एषामनुदात्तेत्वात् "चलनशब्दार्थादकर्मकाद्युच्" इति युचि वेपन इत्युदाहार्यम् ॥ ३६७ ॥

मेपृ रेपृ लेपृ गतौ ॥ अयं पाठः स्वामिनः । मैत्रेयस्तु मेपृ लेपृ सेवने, रेपृ प्लवगतावित्याह । मेषते, रेपते, लेषत इत्यादि । क्वचित्पठ्येते हेपृ घेपृ इति च ॥ ३७० ॥

त्रपूष् लज्जायाम् ॥ त्रपते । त्रेपे । "तॄफलभजत्रपश्च" इति किति लिटि एत्वाभ्यासलोपौ त्रपेस्थलि नास्ति । (त्रपिता । त्रप्ता । त्रपिष्यते । त्रप्स्यते) । ऊदित्त्वादिड्विकल्पः । (त्रपताम् । अत्रपत । त्रपेत । आशिषि त्रपिषीष्ट । त्रप्सीष्ट । अत्रपि । अत्रप्त ) । झलि सिचो लोपः । ( तित्रपिषते तित्रप्सते । तात्रप्यते । तात्रपीति । तात्रप्ति । त्रपयति । अतित्रपत् ) । घटादित्वान्मित्त्वम् । ( त्रपित्वा । त्रप्त्वा । त्रप्तः । त्रप्तवान् ) । "यस्य विभाषा" इति निष्ठायामिण्निषेधः । त्राप्यम् । "आसुयुवपिरपिलपित्रपिचमश्च" इति भावे ण्यत् "पोरदुपधात्" इति यतोऽपवादः । ( त्रपा ) । "षिद्भिदादिभ्योऽङ्" इति स्त्रियामङ् । अपत्रविष्णुः । "अलङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्" इति तच्छीलादाविष्णुच् । त्रपु । "शस्स्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" इत्युप्रत्ययः । त्रपुणो विकारस्त्रापुषम् । *त्रपुजतुनोः षुक्* इति षुगागमोऽण्प्रत्ययश्च ॥ ३७१ ॥

कपि चलने ॥ (कम्पते । चकम्पे । कम्पितेत्यादि । कम्पयति) । "निगरणचलना" इति नित्यं परस्मैपदम् । कम्प्रः "नमिकम्पिस्म्यजसकमहिंसदीपो रः" इति तच्छीलादौ रः । वा सरूपविधिना "अनुदात्तेतः" इति वा "चलनशब्दा" इति वा युच् चिकम्पनः । ननु पदेरनुदात्तेत्वादेव युचि सिद्धे "जुचङ्क्रम्या" इत्यादिना पुनर्युज्विधानेन ताच्छीलिकेषु वासरूपविधिर्नेति ज्ञापितम् । अन्यथा लषपतपदेत्युकञा अनुदात्तेल्लक्षणयुचः समावेशे सिद्धे पुनस्तद्विधानमनर्थकं स्यात् । नैतदस्ति । "सूददीप" इतियुज्निषेधादस्यानित्यत्वज्ञापनात्, नित्ये हि "नमिकम्पि" इत्यादिना विशेषविहितेन रप्रत्ययेन युचो बाधस्य सिद्धत्वात् किं तन्निषेधेन । (विकम्पितः) । विकृतशरीर इत्यर्थः । "लगिकम्प्योरुपतापशरीरयोः" इति नलोपः । कपिः । "कटिकम्प्योर्नलोपश्च" इतीन्प्रत्यये नलोपः । कपेर्भावकर्मणी कापेयम् । "कपिज्ञात्योर्ढक्" इति ढक् । वृषो धर्मस्तस्याकपिः, अकम्पिता, वृषाकपिः विष्णुः रुद्रश्च । वृषाकपायी । श्री गौरी च । "वृषाकपी" इत्यादिना पुंयोगलक्षणे ङीषि अन्त्यस्यैकारः । कपिलः । "कपेश्च" इतीलच्प्रत्ययः बाहुलकादत एव निर्देशाद्वा नलोपः । (कबलः कम्बलः) बाहुलकात् कलप्रत्ययः पकारस्य बकारः पक्षे नलोपश्च । कम्बल्यमूर्णापलशतम् । कम्बलाय हितमिति विषये "कम्बलाच्च संज्ञायाम्" इति यत् । द्वाभ्यां कम्बल्याभ्यां क्रीता शाटी द्विकम्बल्या । "तद्धितार्थोत्तरपदसमाहारे च" इति तद्धितार्थे समासे "द्विगुश्च" इति द्विगुत्वं "प्राग्वतेष्ठञ्" इति प्राग्वतीयेष्वर्थेषु विहितस्य ठञः, 'अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम्" इतिलुक् ।

अत्र "द्विगोः" इति प्राप्तस्य ङीपः *अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि* इति निषेधः । अपरिमाणान्तात्परिमाणान्तेऽपि बिस्ताद्यन्ताच्च द्विगोस्तद्धितलुकि सति ङी-

ब्नेति सूत्रार्थः । पाण्डुकम्बलेन परिवृतो रथः पाण्डुकम्बली । "पाण्डुकम्बलादिनिः इति पाण्डुकम्बलशब्दात्तृतीयान्तात् परिवृतो रथ इत्यर्थे इनिः । येन तत्परिवृतं तत्तस्यास्ति इति मत्वर्थीयेन सिद्धे इदं वचनं ठनो निवृत्त्यर्थम् ॥ ३७२ ॥

रबि लबि अबि शब्दे ॥ ( रम्बते । ररम्बे । रम्बिता । रिरम्बिषते । रारम्ब्यते । रारम्बीति । रारम्प्ति । अरारन् । हे इति रम्बतइति हे रम्वः । लम्बतइत्यादि । अम्बते । आनम्बे । अम्बिबिषते । अम्बयति । आम्बिबत् । ) त्रीण्यम्बकानि चक्षूंषि अस्येति (त्र्यम्बः) त्रयाणां लोकानामम्बः पितेत्यागमविदः । द्यौर्भूमिरापस्तिस्रोम्बा अस्य इति भारतम् । शब्दा अकारोकाराः प्रतिपादका अस्यवेति भट्टभास्करः स एव सृष्टिस्थितिसंहारविषयास्तिस्रो वा शक्तयोऽस्येति च । (अम्बरीषम् ) । "भ्राष्टमम्बरीषम्" इति निपात्यते । अम्बा । हे अम्ब । "अम्बार्थनद्योः इति ह्रस्वः सम्बुद्धौ ॥ ३७५ ॥

लबि अवस्रंसने च ॥ 'नञि लम्बेर्नलोपश्च" इति नञ्युपपदे उकारप्रत्ययो नलोपश्च णिद्वद्भावात् वृद्धिश्च ॥ ३७६ ॥

कबृ वर्णे ॥ (कबते । चकबे : कबिता । चिकबिषते । चाकब्यते । चाकब्धि । काबयति । अचकाबत् । कबरः ). बाहुलकाद्रः । ( कबरी ) । "जानपद" इत्यादिना केशवेश ङीष् अन्यत्र कबरा । कर्बुरः । बाहुलकादुरः प्रत्ययो रेफोपजनश्च ॥ ३७७ ॥

क्लीबृ अधाष्ट्यें ॥ ( क्लीवते । चिक्लीवे । क्लीबिता । क्लीबयति । अचिक्लीबत् । क्लीब इवाचरति क्लीबते ) । "आचारेवगल्भक्लीब" इति क्विप् तत्सन्नियोगेन चैषामकारस्यानुदात्तताऽनुनासिकताप्रतिज्ञानादनुदात्तेत्त्वात्तङिति होडतौ प्रतिपादितम् । क्विबभावे "उपमानादाचारे" इति क्यङि क्लीबायते ॥ ३७८ ॥

क्षीबृ मदे ॥ ( क्षीवते । चिक्षीवे । क्षीविता । क्षीवयति । अचिक्षीवत् । क्षीवः ) । "अनुपसर्गात्फुल्लक्षीब" इति निष्ठायामिडभावस्तलोपश्च, इच्छब्दलोपो वा निपात्यते ॥ ३७९ ॥

शीभृ कत्थने ॥ ( शीभते ) शिशीभे । शोभिता । शिशीभिषते । शेशीभ्यते । शेशीब्धि "झषस्तथोः" इति तकारस्य धकारे "झलां जश् झशि" इति भकारस्य बकारः । ( शीभयति । अशिशीभत् । शीभरः बाहुलकादरः ॥ ३८० ॥

चीभृ च ॥ चीभतइत्यादि ॥ ३८१ ॥

रेभृ शब्दे ॥ ( रेभते । अरेभतेत्यादि । विरिब्धः ) "क्षुब्धस्वान्तः" इत्यादिना स्वरे निष्ठायामिडभावे उपधाह्रस्वत्वं च निपात्यते । अन्यत्र रेभितः । अभिरभी च क्वचित्पठ्येते । अम्भते रम्भतइत्यादि । (अम्भः) असुन् । अम्भसोपत्यं आम्भिः । 'अम्भसः सलोपश्चे'ति बाह्वादिपाठादिञि सलोपः ॥ ३८२ ॥

ष्टभि स्कभि प्रतिबन्धे ॥ (स्तम्भते । तस्तम्भे । खयः शेषः । स्तम्भिता । तिस्तम्भिषते) "स्तौतिण्योरेव" इत्यषत्वम् । षोपदेशफलं ण्यन्वात्सनि तिष्टम्भयिषतीति षत्वम् । ( उत्तम्भते । उत्तम्भिता । उत्तम्भितः) । *उदः स्था स्भस्तम्धोः पूर्वस्य* इति उदः परयोरनयोः सकारस्थाने पूर्वस्य सवर्णं इति तकारः स्तम्भेः" इत्यादावुपसर्गात्परस्य षत्वविधौ स्तम्भुस्तुम्भ्विति प्रतिपदोक्तस्यैव ग्रहणं स्तम्भेः, न त्वस्य लाक्षणिकस्येति विस्तम्भ इत्यादौ न षत्वम् । "उदः स्यास्तम्भोः" इत्यत्र तु नायं न्यायः, यतस्तम्भुरूपमुभयोरपि लाक्षणिकम् । अत्र स्वामिमैत्रैयो ष्टभेष्टकारमेकीयमतेनौपदेशिकमाहतुः । तत्र ष्टम्भते विष्टम्भतइत्यादौ सर्वत्र ष्टुत्वेन षत्वे लिडादावभ्यासे टकारस्य शेषे तष्टम्भइत्यादि भवति । स्कम्भते । (चस्कम्भे । स्कभित । स्कम्भिता ) "यसितस्कभत" इति निपातनं तु छन्दसि "वेः स्कम्भातेर्नित्य इति षत्वं श्नानिर्देशात् सौत्रस्यैव नास्त्येति विस्कम्भितइति भवति । स्तम्भु स्तुम्भुस्कम्भु स्कुम्भु इति सैत्राश्चत्वारो धातवस्ते च "स्तम्भुस्तुम्भु स्कम्भुस्कुम्भस्कुञ्भ्य श्नुश्चे" इति वा श्नाश्नुविकरणा इति तत्रोदाहियते । स्तोभतइ-

त्वग्रे स्तम्भार्थे ॥ ३८४ ॥

जभी जृभि गात्रविनामे ॥ जभीत्येके, जब्धमिति मैत्रेयः । अयमेव पाठः प्रायेण वृत्तिकारस्य संमतः । यदाह "रधिजभोरचि" इत्यत्र अजूग्रहणप्रत्युदाहरणे जब्धमिति, अनीदित्त्वे इटा भाव्यमिति कथमेवमुदाहरेत् । ( जम्भते । जजम्भे । जम्भिता । जम्भिष्यते । जम्भताम् । अजम्भत । जम्भेत । जम्भिषीष्ट । अजम्भिष्यत । जिजम्भिषते ) । "रधिजभोरचि" इति अजादौ प्रत्यये नुम् ( जञ्जभ्यते ) "लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्" इति यङ् । भावो धात्वर्थस्तस्य गर्हा भावगर्हा । अयं च यङ् पूर्वसूत्रान्नित्यग्रहणानुवृत्त्या तक्रकौण्डिन्यन्यायेन वा क्रियासमभिहारयङो बाधक इति भाष्यादौ स्थितम् । "जपजभदहदशभञ्जपशां च" इति अभ्यासस्य यङि यङ्लुकि च नुगागमः । इदं च नुग्रहणमनुस्वारोपलक्षणार्थं "नुगतोनुनासिकान्तस्य" इति अत्रान्तग्रहणात्, तद्धि तदन्तविधिनाप्यनुनासिकान्तस्य धातोरभ्यासस्य नुकि सिद्धे तदन्तस्य यत्कार्यं तद्यथा स्यादिति । न च नुकोन्यत्वे किंचित्कार्यमस्ति, अस्ति चानुस्वारस्य "वा पदान्तस्य" इति परसवर्णविकल्पः । "कर्तुः क्यङ् स०" इति वदनुनासिकेत्यविभक्तिको निर्देशः । तेन जञ्जभ्यते इत्यत्रानुस्वारस्यापि पक्षे श्रवणं भवति । (जञ्जभीति । जञ्जब्धि । जञ्जब्धः । जञ्जभतीत्यादि) । "रधिजभोरचि" इत्यत्र प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमिति अजादौ नुमागमः । ( जम्भयति । अजजम्भत् ) जम्भो दन्तविशेषो ऽभ्यवहार्यं च,शोभनो जम्भोस्यास्तीति सुजम्भा । "जम्भासुहरिततृणसोमेभ्यः" इति स्वाद्यादेर्जम्भात् बहुव्रीहेरनिचि "सर्वनामस्थाने चासंबुद्धौ" इति नान्तस्योपधाया दीर्घः । पदत्वे "न लोपः प्रातिपदिकान्तस्य" इति नलोपः भसंज्ञायां "अल्लोपोनः" इत्यल्लोपः । (सुजम्भ्न) इत्यादि । ङौ तु "विभाषा ङिश्योः" इति विकल्पित इति सुजम्भ्नि सुजम्भनीति भवतः । सम्बुद्धौ "न ङिसम्बुद्ध्योः" इति नलोपनिषेधः । नपुंसके तु "वा नपुंसकानाम्" इति पक्षे नलोपः । अन्यत्र तु नित्यः, दीर्घस्तु न भवति असर्वनामस्थानत्वात् । शौ सर्वनामस्थानपरत्वात् सुजम्भानीति "विभाषा ङिश्योः" इति श्यामल्लोपविकल्पनात् (सुजम्भ्नी सुजम्भनी) इति भवतः । स्त्रियां "ऋन्नेभ्यः" इति ङीपः "अनो बहुव्रीहेः" इति निषिद्धत्वात् पुंलीव रूपम् । यदा तु *डाबुभाभ्यामन्यतरस्याम्* । अन्नन्तात्प्रातिपदिकादनन्ताद्बहुव्रीहेश्च डाबिति डाप्तदा डित्त्वाट्टिलोपे (सुजम्भा सुजम्भे) इत्यादि । ङीपः प्रतिषेधस्य डापः श्रवणस्य च वचनद्वयप्रामाण्यादेव सिद्धौ अन्यतरस्यांग्रहणेन भिन्नेन योगेन ङीपोभ्यनुज्ञानात् (सुजम्भ्नी)इत्याद्यपि भवति । अत्र च योगे "अनो बहुव्रीहेः" इत्येवानुवर्त्तते न तु "मनः" इति सीमादेः प्रातिपदिकाद् ङीबभावः । (सुजम्भ्नी) इत्यादौ तु अन्नन्तबहुव्रीहित्वाद्भवत्येव । (सुपर्वा सुशर्मा)इत्यादौ तु "अन उपधालोपिनोन्यतरस्याम्" इति नियमान्न भवति । सिद्धे सत्यारभ्यमाणोयं नियमार्थः । यदन्यतरस्यां ङीब्विधानं तदुपधालोपिन एवेति,अत्र ह्यल्लोपो *न संयोगाद्वमन्तात्* इति निषिद्ध्यते । वमन्तात् संयोगात् भसंज्ञानिमित्ते प्रत्यये परे ऽल्लोपो नेति सूत्रार्थः । "जम्भा सुहरिततृण०" इत्यत्र जम्भेति भाविना समासान्तेन निर्देशात्समासार्थं तदुत्तरपदादकृते एव समासे समासान्ता इत्ययं पक्षो ज्ञाप्यते । तेन द्विपुरीत्यादि सिद्ध्यति । यदि ह्यत्र "ऋक्पूरब्धूः" इत्यकारः समासे कृते स्यात् तदा समासस्याकारान्तोत्तरपदत्वाभावात् [ अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्यते ] इति स्त्रीलिङ्गता न स्यात् । जृम्भते । जृम्भितेत्यादि । यङ्लुको "रीगृत्वतः" इति वचनाद्रुग्रिग्रीको भवन्ति । ( जरीजृम्भ्यते । जरीजृम्भीति । इत्यादि । जृम्भयति । अजजृम्भत् ) । जृभिति विनाशनार्थे चुरादौ । भाषार्थोयं परस्मैपदिष्वपि इति केचित् ॥ ३८६ ॥

शल्भ कत्थने ॥ शल्भते । शशल्भे । शल्भितेत्यादि ॥ ३८७ ॥

वल्भ भोजने ॥ दन्त्योष्ठ्यादिः । वल्भते । णौ निगरणार्थत्वात् नित्यं परस्मैपदम् । वल्भयति ॥ ३८८ ॥

गल्भ धार्ष्ट्ये ॥ (गल्भते । प्रगल्भः । अवगल्भ इवाचरति अवगल्भते)। "आचारे ऽवगल्भः" इति क्विप्, तत्संनियोगेनाकारस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञानात्प्रागेवोक्तमित्यनुदात्तत्वात्तङ् क्विपोरभावे क्यङि (अवगल्भायते)। अवगल्भेति विशिष्टग्रहणादनुपसृष्टादन्योपसृष्टाच्चाचारक्विपि (गल्भति । प्रगल्भति) इति भवति ॥ ३८९ ॥

श्रम्भु प्रमादे ॥ तालव्योष्मादिः, एवं काश्यपः । दन्त्यादिरिति चन्द्रः । स्वामी चैवं पठित्वा मतान्तरेण स्रम्सेति दन्त्यान्तमप्याह । मैत्रेयस्य त्वयमेव पक्षः । यदाह स संयोगान्तसाधर्म्येण सान्तोप्यत्र निर्दिश्यते । द्युतादावप्ययं पठिष्यते । तस्यैव च ध्वंसुसाहचर्यान्नीगित्याहुः । द्युत्वे पुनरसाहचर्यमिच्छन्तीति । दैवेप्येवमेवोक्तम् । तत्र तावदयं पक्षो वृत्तिव्याख्याकृतामनभिमत इव प्रतीयते, यद्दत्त्वसूत्रे।उभयोर्ग्रहणं नीक्सूत्रे नास्येति चाहुः । सति ह्येवमवश्यवक्तव्यं, तथैव स्वामिचन्द्रयोरपि पाठोनभिमत इव । यत् "वौ कषलसकत्थश्रम्भ" इत्यत्र श्रम्भु विश्वास इति वदन्नमुं नोपाददते, वृत्तिकारोऽग्रहणे कारणं चाचष्ट । तथा व्याख्याकृतोपि न वृत्तिकारवचनमुपलक्षणमाचक्षता नान्यग्रहणे कारणम् । ( श्रम्भते । शश्रम्भे । श्रम्भिता । श्रम्भित्वा श्रब्ध्वा ) । उदित्त्वादिड्विकल्पः "न क्त्वासेट्" इत्यकित्त्वान्नलोपाभावः । ( श्रब्धः ) । "यस्य विभाषा" इत्यनिट्त्वम् ॥ ३९० ॥

ष्टुभु स्तम्भे ॥ ( स्तोभते । तुष्टुभे । स्तोभितेत्यादि । तुस्तुभिषते । तुस्तोभिषते । स्तुभित्वा । स्तोभित्वा ) "रलो व्युपधात्" इति वा कित्त्वम् । उदित्त्वात्पक्षे क्त्वायामिडभावे "निष्ठा" इति निष्ठायां "यस्य विभाषा" इति (स्तुब्धम् ), सनि "स्तौतिण्योरेव" इत्यषत्वं, ( निष्टोभिता । निष्टोब्धा ) । "उपसर्गात्सुनोति" इत्यादिना "प्राक् सितादड्व्यवायेपि" इति नियम एवावतिष्ठते । ( अनुष्टुप् ) । पूर्ववत् षत्वं, ( त्रिष्टुप् ) "सुषामादिषु च" इति षत्वम् । अनुष्टुब्वेवआनुष्टुभम् । एवं (त्रैष्टुभं), [छन्दसः प्रत्ययविधाने नपुंसके स्वार्थउपसंख्यानम्] इति स्वार्थे उत्सादिभ्यः प्राग्दीव्यतीयोण् , स्वार्थेपि प्राग्दीव्यतीयः । तिप्यादय उदात्ता अनुदात्तेतः तिपिवर्जम् ॥ ३९१ ॥

गुपू रक्षणे ॥ एतदादयः शुम्भान्ता उदात्ता उदात्तेतः ॥ "गुपूधूपविच्छिपणिपनिभ्य आयः" इत्यायः स्वार्थे । "आयादय आर्द्धधातुके वा" इति आर्द्धधातुके विषये विकल्पेनायमुत्पाद्यते । तस्मिन् लघूपधगुणः, आयादय आयेयङ्णिङः । "सनाद्यन्ता धातवः" इति धातुत्वं, (गोपायति । गोपायांचकार) । "कास्प्रत्ययात्" इत्याम् । ( गोपायिता । गोपायिष्यति । गोपायतु । अगोपायत् । गोपायेत् । आशिषि गोपाय्यात् । अगोपायीत् । अगोपायिष्टाम् । अगोपायिष्यत् । जुगोपायिषति । गोपाययति । अजुगोपायत् ) । सर्वत्रार्द्धधातुके अतो लोपः अत एवाग्लोपित्वात् "णौ चङि" इति ह्रस्वाभावः । (गोपाय्यम्) । "अचो यत्" ( गोपायितः । गोपायित्वा । गोपाया) । "अप्रत्ययात्" इत्यकारः । आयाभावे ( जुगोप । जुगुपतुः । जुगोपिथ । जुगोप्थ । जुगुपिव । जुगुप्व ) । ऊदित्त्वादिड्विकल्पः । यावत् कश्चिदिडभावः प्रतिषेधनिबन्धनो वा विकल्पनिबन्धनो वा सर्वः क्रादिसूत्रेण नियम्यत इति मैत्रेयः सेधतावाह । तन्मते नित्यमिटा भाव्यम् । क्रादिनियमः प्रतिषेधविषय इति वादिनां हरदत्तादीनां विकल्प एव । आयादीनामुत्पत्तिविकल्प इत्युक्तेर्निवृत्तिविकल्पे हि प्रत्ययलक्षणेन प्रत्ययान्तत्वात् धातुत्वात् (गोपायांचकारेति स्यात् । गोपिता । गोप्ता । गोपिष्यति । गोप्स्यति । गुप्यात् )। "क्ङिति चिपि" इति कित्त्वान्न गुणः । ( अगौप्सीत् । अगोपीत् । अगोपिष्यत् । अगोप्स्यत् । जुगुप्सति । जुगुपिषति । गुप्त्वा । गुपित्वा । गोपित्वा ) । "रलो व्युपधात्" इति क्त्वासनोः कित्त्वविकल्पः । सनि अनिट् पक्षे "हलन्ताच्च" इति कित्त्वम् । ( जोगुप्यते ) । आयान्तस्यानेकाच्त्वात् न यङुदाहृतः । आयोत्पत्तिविकल्पस्य यङपि प्रयोजनम् । नात्र यङो लुगस्ति यत् "आयादय आर्द्धधातुके वा" इति आर्द्धधातुकव्यक्तेरभिव्यक्तावेवायं विकल्प उच्यते । लुकि हि तेन विषयत्वापहारान्नार्द्धधातुकव्यक्तेरभिव्यक्तिरि-

ति कथमायाभावः स्यात् । उपपादितश्चायं प्रकारोऽजगतिक्षेपणयोरित्यत्र । ( गोपयति । अजूगुपत् । गुप्तः । गुप्तिः ) । "तितुत्र" इति नेट्, "यस्य विभाषा" इति नेट उत्पत्तिः । उत्पत्तिविकल्पस्य चेदं प्रयोजनम् । अन्यथा प्रत्ययान्तत्वादकार एव स्यात् । (गोप्यम् ) । ण्यत् । (कुप्यम्)। "राजसूयसूर्यमृषोद्यरुच्यकुप्यकृष्टपच्याव्यथ्याः" इति क्यपि गुपेरादिकत्त्वं निपात्यते । अयं भाषार्थो रक्षणार्थश्चुरादौ । गुप गोपनइति इहैवाग्रे । गुप व्याकुलत्व इति दिवादौ ॥ ३९२ ॥

धूप संतापे ॥ अस्यापि पूर्ववदायस्तदभावश्च । ( धूपायति । धूपायांचकार । धूपायिता ) इत्यादि । नायाभावे वलादौ सर्वत्र नित्यमिडस्य विशेषो, "रलोव्युपधात्" इति कित्त्वविकल्पस्याप्यत्र न प्रयोजनम्, अलघूपधत्वात्, आयाभावेपि नास्य क्तिनस्ति गुरुमत्त्वात् । तेन (धूपा)इत्यकार एव भवति, भाषार्थेऽयं चुरादौ ॥ ३९३ ॥

जल्प जप व्यक्तायां वाचि ॥ जप मानसे च ॥ ( जल्पति । जजल्प । जल्पितेत्यादि । जल्पाकः ) । "जल्पभिक्षकुट्टलुण्टवृङः षाकन् ॥ इति तच्छीलादौ षाकन् । स्त्रियां जल्पाकी । जल्पति पुत्रं देवदत्तः । जल्पयति पुत्रं देवदत्तं यज्ञदत्तः । [ "जल्पत्यादीनामुपसंख्यानम् ] इति प्रयोज्यस्याशब्दकारकत्वेपि कर्मत्वम् । ( जपति । जजाप । जेपतुः । जपिता । अजपीत् । अजापीत् ) "अतो हलादेः" इति वा वृद्धिः ( जिजपिषति । जञ्जप्यते ) । "लुपसद" इत्यादिना । भावगर्हायां यङ् । "जपजभ" इत्यादिनाभ्यासस्य नुक्यनुस्वारे परसवर्णविकल्पो जभतिवत् । ( जञ्जपीति । जञ्जप्ति । जापयति । अजीजपत् । जप्यम् ) । "पोरदुपधात्" इति यत् । (कर्णेजपः) । *स्तम्बकर्णयोरमिजपोः* इति यथासंख्यं जपेः कर्णे सुबन्ते उपपदे च [हस्तिसूचकयोः] इति वचनात् सूचकविषयः, "तत्पुरुषे कृति बहुलम्" इति सप्तम्या अलुक् । (जञ्जपूकः) । "यजजप" इति यङन्तात्तच्छीलादावूकप्रत्यये "अतो लोपः" यस्य हलः" इति अतो लोपयलोपौ । (जपः) । "व्यधजपोरनुपसर्गे" इति अप् । उपसृष्टात्तु घञि (उपजापः) । अनयोः कर्मव्यतिहारे न तङस्ति । [ प्रतिषेधे हसादीनामुपसंख्यानम् ] इत्युक्तत्वात् ॥३९५॥

चप सान्त्वने ॥ ( चपति । चचाप । चेपतुः । चपिता ) इत्यादि जपिवत् । चपो वृक्ष इति मैत्रेयः । वेणुविशेष इति दण्डनाथः । तस्य विकारः । ( चापम् ) । "तालादिभ्योऽण्" इति विकारावयवयोरण् ॥ ३९६ ॥

षप समवाये ॥ समवायः संबन्धः सम्यगवबोधो वा । (सपति)इत्यादि जपिवत् । ( सिसपिषति ) । "स्तौतिण्योरेव" इति अषत्वम् । ( सापयति । असीषपत् । सप्तिः ) । "क्तिच्क्तौ च संज्ञायाम्" इति क्तिच् । (सप्त) । "सप्यशूभ्यां तुट् च" इति कनिन्प्रत्ययः तुडागमश्च । पञ्चशब्दवत् षट्संज्ञा तत्कार्यं च, सप्तानामपत्यं (साप्तिः) । "बह्वादिभ्यश्च" इतीञि "नस्तद्धिते" इति टिलोपः । अत्र शाकटायनः क्षीरस्वामी सचतिं चाहुरित्युक्त्वा (सचति सचितः) इत्यप्याह ॥ ३९७ ॥

रप लप व्यक्तायां वाचि॥ (रपति । लपति) इत्यादि जपिवत् । (विलापयति पुत्रम्) इत्यत्र जल्पत्यादित्वात्प्रयोज्यस्य कर्मत्वम् । ( अलीलपत् । अललापत् ) । काण्यादित्वाद् उपधाह्रस्वविकल्पः । ( राप्यः । लाप्यः ) । "आसुयुवपिरपिलपित्रपि" इति ण्यत् । यतोऽपवादः । अत एव जपतिना समानार्थत्वेपि पृथङ्निर्देशः । ( रिपुः ) । "रपेरिच्चोपधायाः" इति उप्रत्यय उपधाया इकारः ॥ ३९९ ॥

चुप मन्दायां गतौ ॥ (चोपति । चुचोप । चोपिता । चुचुपिषति । चुचोपिषति । चुपित्वा ) । "रलो व्युपधात्" इति कित्त्वविकल्पः । ( चोचुप्यते । चोचुपीति । चोचोप्ति । चोपयति । अचूचुपत् । चोपनः ) । चलनार्थत्वाद् युच् । णौ नित्यं परस्मैपदम् । गले चोप्यते (गलेचोपकः) । "कृत्यल्युटो बहुलम्" इति बहुलवचनाद् ण्यन्तादस्मात्कर्मणि ण्वुल् । "कर्तृकरणे कृता बहुलम्" इति बहुलवचनात् सप्तम्यन्तस्यापि समासः । "तत्पुरुषे कृति बहुलम्"

इति अलुक्, "अमूर्द्धमस्तकात्स्वाङ्गादकामे" इति च, "उदुपधाद्भावादिकर्मणोः"निष्ठायां वा क्त्वे (चुपितमनेन। चोपितमनेनेत्यादि। चुप्रम्)। ऋजेन्द्रादौ रकि निपातितः। "स्वरेण नीचेन शपिम्छुपि क्षिपिम्" इत्यनिट्कारिकापाठो द्वितीयादेरिति तत्र तौदादिकस्य छुप संस्पर्शन इत्यस्यैव ग्रहणं न त्वस्य ॥ ४०० ॥

तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ त्रुफ त्रुम्फ हिंसार्थाः ॥ तोपतीत्यादि चुपिवत्। (तुम्पति। तुतुम्पतुः)। संयोगान्तत्वाल्लिटो न कित्त्वम्। (तुम्पिता। तुम्पिष्यति। तुम्पतु। अतुम्पत्। तुप्यात्)। "किदाशिषि" इति कित्त्वात् अनिदितामिति नलोपः। (अतुम्पीत्। अतुम्पिष्यत्। तुतुम्पिषति। तोतुप्यते। तोतुम्पीति। तोतुम्प्सि। तोतुप्सः। तुम्पयति। अतुतुम्पत्। प्रस्तुम्पति गौः)। "प्राचुम्पतौ गवि कर्त्तरि"इति सुट्। तुम्पतेस्तुम्पताविति धातुनिर्देशो न तिङन्तानुकारणमिति प्रस्तुम्पः प्रस्तुम्पक इत्यादावपि भवति, प्रतोतुम्पीतीत्यादावत एव श्तिपा निर्देशान्न भवति। (त्रोपति। त्रुम्पति। तोफति। त्रुम्फति) इत्यादि तुपितुम्फिवत्। तत्रारेफसरेफयोः सानुषङ्गवद्द्वितीयान्तयोः सेट्त्वाद् "नोपधात्थफान्ताद्वा" इति कित्त्वविकल्पनात् पक्षे नलोपे (त्रुपित्वा। त्रुम्पित्वा।। त्रुफित्वा। त्रुम्फित्वा) इति भवति। अरेफाश्चत्वारस्तुदादावपि। आद्यस्तु चुरादावपि। तत्र त्वर्दनमर्थः ॥ ४०८ ॥

पर्प रफ रफि अर्ब पर्व लर्ब बर्ब मर्ब कर्ब खर्ब गर्ब शर्ब षर्ब चर्ब गतौ ॥ आद्यः प्रथमान्तः। परौ द्वावपि द्वियीयान्तौ। एकादश परे तृतीयान्ताः। द्वितीयतृतीयौ मुक्त्वा सर्वे रोपधाः। (पर्पति। पपर्प। पर्पितेत्यादि। पर्प्यतेनेनेति पर्पः,) येन पीठेन पङ्गवश्चरन्ति स उच्यते। "हलश्च" इति घञ्। पर्पेण चरति, (पर्पिकः)। *पर्पादिभ्यष्ठन्* इति तृतीयान्ताच्चरत्यर्थे ष्ठन्। षित्वात् स्त्रियां (पर्पिकी। रफति। अर्बति। आनर्ब। अर्बिता। पर्वति। लर्बति। बर्बति। मर्बति। कर्बति। खर्बति। गर्बति। शर्बति। सर्बति। असिपर्बत्। चर्बति)। अर्बादयो नोपधा इति कौशिकः ॥ ४२२ ॥ (अपार्ब)

कुबि छादने ॥ (कुम्बतीत्यादि। कुम्बा)। गुरुमत्त्वादकारः। "चिन्तिपूजिकथिकुम्बिचर्चश्च" इत्यङ्विधौ चौरादिकस्य ग्रहणम् ॥ ४२३ ॥

लुबि तुबि अर्दने ॥ (लुम्बति। तुम्बतीत्यादि। तुम्बी) अलाबूः। गौरादित्वान् ङीष् ॥४२५॥

चुबि वक्त्रसंयोगे ॥ चुम्बतीत्यादि। लुम्ब्यादश्चश्वशुरादौ ॥ ४२६ ॥

षृभु षृम्भु हिंसार्थौ ॥ अत्र मैत्रय एवं पठित्वा षिभु षिम्भु इत्येकइति ऋकारस्य स्थाने इकारमप्याह। तरङ्गिण्यां तु ऋकारवन्तौ दन्त्यादौ पठित्वा षोपदेशपर्युदासे सृग्रहणेनानर्थकस्यापि ग्रहणमित्युक्तम्। (सर्भति। ससर्भ। सर्भितेत्यादि। सिषर्भिषति)। मैत्रेयपाठे "स्तौतिण्योरेव" इत्यषत्वम्। (सरीसृभ्यते। सरीसृभीति। सरिसृभीति। सर्सृभीति। सरीसृब्धि। सरिसृब्धि। सर्सृब्धि। सर्भयति। असससर्भत्।) असीसृभत्। "उर्ऋद्वा"। (सिषर्भिषति) तरङ्गिणीमते तु षत्वं न भवति। (सर्भित्वा। सृप्त्वा)। ऊदित्त्वादिड्विकल्पः। (सृब्धम्)। "यस्य विभाषा" इत्यनिट्त्वम्। (सृम्भ्यम्)। ऋदुपधत्वात् क्यप्। (सृम्भति। ससृम्भ। सृभ्यात्। ससृम्भतुः)। नलोपः क्ङितोः। इकारवत्पाठपक्षे (सेभति। सिम्भतीत्यादि) ॥४२८॥

शुभ शुम्भ भाषणे ॥ हिंसायां द्वाविमौ देवमैत्रेयादयः पठन्ति। स्वामी तु निरनुषङ्गेन पपाठ। इदमेवात्रेयस्यापि मतम्। तुदादौ शोभतइति शपीतिवचनात्। दुर्गस्तु भासनइत्यस्यार्थमाह। एवं धनपालशाकटायनौ। गुप्तस्तु 'सावष्टम्भनिपुम्भसम्भ्रमनमद्भूगोल' इत्यादिदर्शनान्मूर्धन्यादित्वमाह (शोभति। शुम्भतीत्यादि), तोपति तुम्पतिवत्। (शुभः)। इगुपधलक्षणः कः। (शुभ्रम्)। स्फायितञ्चीत्यादिना रक्। इमौ शोभार्थौ तुदादौ। निरनुषङ्गस्त्वग्रे। गुपादय उदात्ता उदात्तेतः ॥ ४३० ॥

अथानुनासिकान्ताः ॥

घिणि घुणि घृणि ग्रहणे ॥ एतदादयः कम्यन्ता उदात्ता अनुदात्तेतः। (घिण्णते। जिघि-

ण्णे । घिण्णिता । घिण्णिष्यते । घिण्णताम् । अघिण्णत । घिण्णेत । आशिषि घिण्णिषीष्ट । अघिण्णिष्ट । अघिण्णिष्यत । जिघिण्णिषते । जेघिण्ण्यते । जेघिण्णीति । जेघिण्टि । लङि । अजेघिन् । घिण्णयति । अजिघिण्णत् । घिण्णित्वा ) । सर्वत्र नुमि ष्टुत्वम् । यङ्लुकि लङि संयोगान्तलोपस्यासिद्धत्वात् नकारान्त एव । ( घुण्णते । घृण्णते । जघृण्णे ) इत्यादि । (जरिघृण्ण्यते) । "रीगृत्वतः" इति रीक् । ( जरीघृण्णीति । (जर्घृण्णीति)इत्यादि । (अजर्घृन्) इत्यत्र संयोगान्तलोपस्यासिद्धत्वान्न गुणः, "पदान्तस्य",इति णत्वं न ॥ ४३३ ॥

घुण घूर्ण भ्रमणे ॥ ( घोणते । जुघुणे । घोणिता । जुघुणिषते । जुघोणिषते । घुणित्वा । घोणित्वा ) । "रलो व्युपधात्" इति कित्त्वविकल्पः । ( जोघुण्यते । जोघुणीति । जोघुण्टि । जोघूण्टः ) इत्यादौ अनुनासिकान्तत्वात् "अनुनासिकस्य क्विझलोः क्ङिति" इति दीर्घे उपधायाः । झलिति क्ङितोर्विशेषणम् । ( घोणयति । अजूघुणत् ) उदुपधाद्भावादिकर्मणोः (घुणितमनेनत्यादि) (घोणा) । क्रोडादिनिपातनादचि टाप् । (कल्याणघोणा) । अत्र *स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्* इति उपसर्जनसंयोगोपधस्वाङ्गान्ताद्बहुव्रीहेर्वा ङीषिति प्राप्तस्य ङीषः *न क्रोडादिबह्वचः* इति निषेधः । अयं ङीप् क्रोडाद्यन्ताद्बह्वजन्ताच्च नेत्यर्थः । (घूर्णते) इत्यादि । यङ्लुकि लुङि (अजोघूर्ण्) । "रात्सस्य" इति नियमात् संयोगान्तलोपाभावः । इमौ तुदादौ परस्मैपदिनौ ॥ ४३४ ॥

पण व्यवहारे स्तुतौ च ॥ ४३५ ॥

पन च ॥ पृथङ्निर्देशात् स्तुतावित्यनेनैवायं सम्बध्यते । (शतस्य पणते। शतं पणते ) । *व्यवहृपणोः समर्थयोः* इति कर्मणि शेषे षष्ठी । अन्यदा द्वितीयैव । समर्थयोरिति समानार्थयोरित्यर्थः, शकन्ध्वादित्वात् समशब्दाकारस्य पररूपम् । द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः । ( पेणे । पणिता । पणिष्यते । पणताम् । अपणत । पणिषीष्ट । अपणिष्ट । अपणिष्यत । पिपणिषते । पम्पण्यते ) । "नुगतोनुनासिकान्तस्य" इति नुक् । पम्पणीति । पम्पण्टि । पम्पाण्टः ) । "अनुनासिकस्य क्विझलोः" इति दीर्घः ( अपम्पण् । पाणयति । अपीपणत् । पण्यम् ) । "अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु" इति पणितव्ये व्यवहर्तव्ये निपातितः । अन्यत्र ण्यति (पाण्यम् । मूलकपणः । शाकपणः ) । यः संव्यवहाराय मूलकादीनां परिमितो मुष्टिर्बध्यते स उच्यते । *नित्यं पणः परिमाणे* इति परिमाणे गम्यमाने अप् प्रत्ययः । अन्यत्र (पाणः) । व्यावहारिकोप्युन्मानलक्षणपरिमाणयोगात् पण इत्युच्यते, स पणश्चेद्विवादः स्यादित्यादौ इदं दास्यामीति पणनस्य परिच्छेदनात् पणोक्तिः । ( अध्यर्द्धपण्यम् । द्विपण्यम् ) *पणपादमाषशतात्यत्* इति अध्यर्धपूर्वात् प्रातिपदिकात् पणाद्यन्ताद् द्विगोश्चार्हीयेष्वर्थेषु यत् । एत्यात्र आपणतइति (आपणः) । "गोचरसञ्चरवहव्रजव्यजापणनिगमाश्च" इत्यधिकरणे घान्तो निपातितः । (पणितम् ) । क्विपि (पाण् ) । "अनुनासिकस्य" इति दीर्घः । (वणिक्) । "पणोरिज्यादेश्च वः"इति इजिप्रत्ययः, पकारस्य च वकारः । वणिजो भावो (वाणिज्या) "दूतवणिग्भ्यां च" इति यत् । यद्यप्ययं भावकर्माधिकारे तथापि स्वभावाद्भाव एव स्त्रियां च । (वाणिज्यमिति) "प्रज्ञादिभ्यश्च" इत्यणन्ताद् वाणिजशब्दात् "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ब्राह्मणादेराकृतिगणत्वात् ष्यञि कर्मणि चेति चकारेण भावः समुच्चीयते । विविधमत्र पणन्तइति (विपणिः) । इनितीन् । (पणसम् ) । पण्यपर्यायः । "अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्" इत्यसच् । "गुपूधूप" इत्यायो व्यवहारार्थस्य नेत्युक्तान्युदाहरणानि तद्विषयाणि । तथा च वृत्तिः, स्तुत्यर्थेन पनिना साहचर्यात्तदर्थः पणिः प्रत्ययमुत्पादयतीति । एवं न्यासपदमञ्जर्यादिष्वपि । अत एव तरङ्गिण्यामपि । 'न चोपलेभे वणिजां पणायाः' इति प्रयुञ्जानो भट्टिर्भ्रान्त इत्युक्तम् । (पणायति राजानम् । पणायां चकार । पणायिता )इत्यादि । आर्द्धधातुकविवक्षायामायाजुत्पत्तौउक्तान्येवोदाहरणानि । गुप्यादिवदायोत्पत्तिविकल्पस्य प्रयोजनं पणतइत्यादिसिद्धिः । पणां चकारेत्यादिनिवृत्तिश्च । निवृत्तिविकल्पे हि

प्रत्ययलक्षणेन प्रत्ययान्तादाम् स्यात् । एवमन्यत्रापि प्रयोजनानि गुपिवन्नेयानि । अत्र स्वामिकाश्यपसम्मताकारवासुदेवादयः पणायतइत्यायान्तादात्मनेपदमुदाहरन्ति । तदसत् । यदस्यानुदात्तत्वं व्यवहारार्थस्यायाभावात् स्तुत्यर्थस्यार्द्धधातुक आयविकल्पनात् प्रकृतावेव चरितार्थम् । अवयवे चाचरितार्थं लिङ्गं समुदायस्य विशेषकं यथा जुगुप्सतइति, स्पष्टं चैवं "गुपूधूप" इत्यत्र न्यासपदमञ्जर्यादिषु । अत्र मैत्रेयेन्द्रन्यासे पणतेः सार्वधातुकादिपाठाल्लिङ्गात सार्वधातुके ऽपि विकल्पमाहुः नित्ये ह्याये विच्छायतीति शपापि सिद्ध्यतीति किं तत्र पाठेन । न चास्ति स्वरभेदः । ने कृते प्रत्ययस्वरेण तस्योदात्तत्वे धातुवर्ज्यमानस्वरेणानुदात्तः शपि तु अस्य पित्त्वेनानुदात्तत्वात् धातोरन्त इति धातुरन्तोदात्तः । तत्र "एकादेश उदात्तेनोदात्तः" इत्युभयथापि विकरणान्तस्योदात्तत्वात् । अनेनैवाभिप्रायेण "च्छ्वोः शूट्" इत्यत्र न्यासे गां विच्छति गोविडित्युक्तम् । नैतत्साधु । (विच्छायती विच्छायन्ती) "आच्छीनद्योः" इति नुम्विकल्पस्य प्रयोजनस्य सम्भवात् । शपि तु "शप्श्यनोर्नित्यम्" इति नित्यो नुम् स्यात् । "गुपूधूपविच्छि" इत्यत्र कैयटपदमञ्जर्यादिष्वप्येवमेव स्थितम् । विच्छ गताविन्यत्रात्रेयमैत्रेयावप्येवमेवाहतुः । तथा देवोपि विच्छेरपि शतुर्वा नुम् स्यादिति तुदादितेति । अत्र पुरुषकारे तुतादौ विच्छिः पठ्यते, न तु विच्छायतिरिति विच्छेरेवानन्तरेण शेन भाव्यम् । स चैवं भवन्नाय विकल्पस्य कल्पकः स्यादेव । अत्रैव "आयादय आर्द्धधातुके वा" इत्यत्र न्यासान्तरम्, आयादयः शपि नित्यमिति भाष्यं चानुकूलम् । नित्ये विच्छेराये शब्ग्रहणं शित उपलक्षणमिति कल्प्यं स्यादिति सुधाकराद्युक्तमेव समर्थितं, नायं भाष्यस्यार्थः । तत्र हि परसप्तमीत्वमाश्रित्य सूत्रं दूषयित्वा तत्परिहाराय सार्वधातुके नित्यमित्यभिहितम् । तत्राप्यायेनानवकाशेन विकरणानां बाधदोषमुद्भाव्य तत्परिहारायैव तथा पुनरयं सूत्रभेदेन परिहारः, यदि पुनः शपि नित्यमित्युच्येत तदा सिध्यतीत्युक्तं, तेनापि न्यासेन सार्वधातुके नित्यमित्यनेन समानफलेन भाव्यं, तच्च शब्ग्रहणस्य शित उपलक्षणत्वेन युज्यते, अतश्चोपलक्षणत्वमेष्टव्यम्, तत्तत्र यथान्यासमेवास्तु इति सूत्रमेव विषयसप्तम्याश्रयणेन सिद्धान्तितम् । अत एव च तत्र कैयटेन तौदादिकाद्विच्छेः शेन भाव्यं न तु शपा, एवं तर्हि न्यासभेदोपलक्षणार्थमिदं शिति नित्यमिति न्यासः कर्त्तव्य इत्युक्तम् । यदप्युक्तं पुरुषकारे "तुदादिभ्यः शः" इति हि शो विधीयते न तु विच्छाये, विच्छेरेव तुदादिषु पाठात्तच्चैतद्विच्छेः शविधानमाये नित्ये सति गुणादिष्वनुबन्धकरणवत् विच्छेः पाठोऽपि समुदायार्थतया युज्यतइति न संकटम् । तथा च हरदत्तः । विच्छिरयं तुदादौ पठ्यते तत्सामर्थ्यादायप्रत्ययान्ताऽपि शविकरणो भवति न तु शप्, यथा जुगुप्सते इत्यात्मनेपदं, तेन (विच्छयती विच्छायन्तीति) "अच्छीनद्योः" इति नुम्विकल्पो भवतीति । पनायतीत्यादि । पणिवत् । ( पनसः ) । "अत्यमि" इत्यादिना असच् ॥ ४३६ ॥

भाम क्रोधे । (भामते । बभामे । भामितेत्यादि । बिभामिषति । बाभान्ति । बाभान्मि बाभान्मः ) । "नुगतः" इति तपरकरणात् यङ्लुकोरभ्यासस्य न नुगागमः । "म्वोश्च" इति मकारान्तस्य धातोर्नकारादेशो भवति मकारवकारयोः परत इति मकारस्य नकारः । लुङि- (अबाभान्) । "मो नो धातोः" इति नकारः पदस्येति शेषः । एवं क्विपि (भान्) । (भामः) क्रोधः । सोऽस्यास्तीति (भामिनी) । देवदत्ताय भामत इत्यत्र *क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः* इति कोपविषयत्वेन देवदत्तस्य संप्रदानत्वम् । अमर्षः क्रोधः । अपकारो द्रोहः । अक्षमा ईर्ष्या । गुणेषु दोषाविष्करणमसूया ॥ ४३७ ॥

क्षमूष् सहने ॥ ( क्षमते । चक्षमे । चक्षमिषे । चक्षंसे । चक्षमिध्वे । चक्षन्ध्वे । चक्षमिवहे । चक्षण्वहे । चक्षमिमहे । चक्षण्महे ) । ऊदित्त्वात्सर्वत्र वलाद्यार्द्धधातुक इड्विकल्पः । अनिट्पक्षे "म्वोश्च" इति नत्वे "रषाभ्याम्" इति णत्वं, (क्षमिष्यते । क्षंस्यते । क्षमताम् । अक्षमत । क्षमेत । आशिषि । क्षमिषीष्ट । क्षंसीष्ट । अक्षमिष्ट । अक्षंस्त । अक्षमिष्यत,

अक्षंस्यत ) कर्मादौ ( क्षम्यते । अक्षमि ) *नोदात्तोपदेशस्य मान्तस्यानाचमेः* इति चिणि ञ्णिति कृति च वृद्धिनिषेधः । (चिक्षमिषते । चिक्षंसते । चङ्क्षम्यते । चङ्क्षमीति । चङ्क्षन्ति)। "नुगतः" इत्यभ्यासस्य नुक् । लुङि "ह्मयन्त" इति वृद्धिनिषेधात् ( अचङ्क्षमीत् । क्षमयति । अचिक्षमत् ) । 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च" इति अमन्तत्वलक्षणे मित्त्वे "मितां ह्रस्वः" इत्युपधाया ह्रस्वः । (क्षमित्वा । क्षान्तः । क्षान्त्वा ) । "यस्य विभाषा"इत्यनिट्त्वम् । (क्षमः) । घञ् । ( क्षमकः ) । ण्वुल् । ( अपराधक्षमः अपराधक्षमा ) । "ईक्षिक्षमिभ्यां च" इत्यणोपवादो णः । अणि हि ङीप्स्यात् । ( क्षमा ) "षिद्भिदादिभ्योऽङ्" इति षित्त्वात् स्त्रियामङ् , ण्यन्तस्यास्य "चिण्णमुलोर्दीर्घोऽन्यतरस्याम्" इति चिण्णमुल्परे णौ मितामुपधाया दीर्घविकल्पनात् (अक्षमि । अक्षामि । क्षमंक्षमम् क्षामंक्षामम्) इति भवति । "आभीक्ष्ण्ये णमुल्" । चकारः क्त्वासमुच्चयार्थः । "आभीक्ष्ण्ये द्वे भवत" इति द्विर्वचनम् । पौनःपुन्यमाभीक्ष्ण्यम् । स्यादिष्वपि दीर्घविकल्पः चिण्वदिट्पक्षे भवति । (क्षामिष्यते । क्षमिष्यते । अक्षामिषाताम् । अक्षमिषाताम् । क्षामिषीष्ट । क्षामिता । क्षमितेत्यादि) चिण्वदिटोभावे (क्षमयिष्यते । अक्षमिषाताम् । क्षमयिषीष्ट । क्षमयितेति ) । लुङ्येकवचने चिण्परो णिरिति पक्षे दीर्घो भवति । (अक्षमि, अक्षामीति ) । यङ्लुगन्तादपि चिण्णमुलोश्चिण्वदिटि च अयं दीर्घविकल्पो द्रष्टव्यः । (अचङ्क्षामि । अचङ्क्षमि चङ्क्षामं चङ्क्षामम् । चङ्क्षमं चङ्क्षमम् । चङ्क्षामिष्यते । चङ्क्षमिष्यते ) इत्यादि । अत्राप्यचिण्वत्पक्षे (चङ्क्षमिष्यते) इत्यादि । अत्र "चिण्णमुलोरन्यतरस्याम्" इति ह्रस्वविकल्पेनापि सिद्धे दीर्घग्रहणं ण्यन्ताद्यङन्ताच्च णौ चिण्णमुल्परे दीर्घार्थम् , अक्रियमाणेऽस्मिन् णिलोपाल्लोपयोः परनिमित्तयोः पूर्वस्य ह्रस्वविकल्पे कर्त्तव्ये स्थानिवत्त्वान्न चिण्णमुल्परे णौ यदङ्गमनन्तरमित्यसौ न स्यात्, क्रियमाणे तु दीर्घविधिं प्रति न स्थानिवदिति स्थानिवत्त्वं निषिध्यते । एवमपि दीर्घे कर्त्तव्ये ण्यल्लोपयोः "असिद्ध" इत्यसिद्धत्वात् व्यवधानं दुर्वारम् । नैतत् । व्याश्रयत्वेनासिद्धत्वाभावात्, तथा च वामनः, णौ हि णियङोर्लोपः, चिण्णमुल्परे णावङ्गस्येति दीर्घत्वमिति । अयमपि दिवादौ ॥ ४३८ ॥

कमु कान्तौ ॥ "कमेर्णिङ्" इति स्वार्थे णिङ् , अयमार्द्धधातुके विकल्पनोत्पद्यते । अत्राप्युत्पत्तिविकल्पस्य प्रयोजनं गुपिवद् द्रष्टव्यम् । कामयतेर्ङित्त्वात्तङ्, (कामयाञ्चक्रे । कामयिता कामयिष्यते । कामयताम् । अकामयत । कामयेत । आशिषि कामयिषीष्ट । अचीकमत ) । णिग्रहणेष्वयमपि गृह्यत इति "णिश्रि" इति कर्तरि चङ् । "णेरनिटि" इति णिलोपे "णौ च" ति ह्रस्वः । (चिकामयिषते । कामयति) णिङन्ताण्णौ "णेरनिटि" इति लोपः (कामयित्वा । कामना ) । "ण्यासश्रन्थः" इति युच् । (मांसकामः । मांसकामा ) । "शीलिकामिभिक्षिचरिभ्यो णः" इति अणोऽपवादो णः । अणि हि सति स्त्रियां ङीप्स्यात् । णिङभावे (चकमे । कमिता । कमिष्यते । कमिषीष्ट । अचकमत ) ।

[ "कमेरुपसंख्यानम् ] इति कर्तरि चङ् । ( अकमिष्यत । चिकमिषते । चङ्क्रम्यते ) । अत्र यङ्लुङ् नेति गुपू रक्षण इत्यत्र स्थापितं तत एवावगन्तव्यम् । (कामयति) । "न कम्यमिचमाम्" इति मित्त्वनिषेधाद् वृद्धिः । "चिण्णमुलोः" इति दीर्घविकल्पो मिद्विषय इत्यस्यामित्त्वात् चिण्णमुल्परेपि णौ नित्या वृद्धिः । (कामङ्कामममिति) । तथा चिण्वदिट्यपि मित्त्वाभावात् (अकामिष्यत) इत्याद्येव भवति न तु कमिष्यत इत्यादि । अचिण्वत्पक्षे तु गुणाययोः (कामयिष्यत) इत्यादि। अस्योदित्त्वमणिङ्पक्षे क्त्वायामिड्विकल्पार्थं,तेन (कामित्वा, कान्त्वेति) । निष्ठायां तु "यस्य विभाषा" इति निषेधात् (कान्त इति । कामुकः)। "लषपत" इत्यादिना उकञ् । (कामङ्कामम्) । "नादात्तोपदेशस्य" इति चिणि ञिति णिति कृति वृद्धिनिषेधोऽस्य न भवति । तत्राचमिकमिवमीनामिति पर्युदासात् । (कामुकी)।"जानपद" इत्यादिना ङीष् । (कमन) इति वासरूपेणानुदात्तेल्लक्षणे युचि।(कन्तुः) कामः । अजिह्वशीत्यादिनो-

प्रत्ययस्तुगागमश्च । (कन्तुकम्) । "कुमारीक्रीडनकानि च" इति कुमारीक्रीडनकादस्मात् कन् । (कंसः)। "वृतॄवदिहनिकमिकपिभ्यः सः" इति सः । (कंसाय हितं, कंसीयम्)। "तस्मै हितम्" इति विषये "प्राक् क्रीताच्छः" इति छः । तस्य विकारः (कांस्यम्)। "कंसीयपरशव्ययोर्यञञौ लुक्च" इति यथासंख्यादस्माद्विकारे यञि प्रातिपदिकादित्यधिकारात्ततः परस्य छस्य यतश्च लुक्, यञञोस्तु विधानसामर्थ्यान्न भवति। कंसेन क्रीतं (कंसिकम्)। *'कंसाट्टिठन्*इति टिठन् आर्हीयेष्वर्थेषु । टित्त्वात् स्त्रियां (कंसिकी) ॥ घिण्णादय उदात्ता अनुदात्तेतः ॥ ४३९ ॥

अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण शब्दार्थाः ॥ इतः क्रमन्ता उदात्ता उदात्तेतः । (अणति । आण । अणिता । अणिणिषति आणयति । मा भवानणिणत् । अणुः ) स्वल्पो धान्यविशेषश्च । "अणश्च" "धान्येनित्" इत्युप्रत्ययः । अणूनां धान्यानां भवनं क्षेत्रम् । ( अणव्यम् आणवीनम् ) । "विभाषा तिलमाषोमाभङ्गाणुभ्यः" इति षष्ठ्यन्ताद्भवने क्षेत्रे यत्, विभाषाग्रहणात् खञ्च । यति *ओर्गुणः* । उवर्णान्तस्य गुणो भवति भसंज्ञानिमित्ते तद्धिते पर इति गुणे "वान्तो यि"इत्यावादेशः अणुप्रकारः(अणुकः)*स्थूलादिभ्यः प्रकारवचने कन्* इति कन् प्रकारो भेदः सादृश्यं च, (अणुकः) सूक्ष्मदृक्। अणु निपुण इतियावादिपाठात् कन् । ( अण्डः ) "यमन्ताड्डः" इति डः । बाहुकाड्डकारस्य नेत्त्वम् । (अड्डुः) (जलतरणिः ) । "अणो डश्च" इत्युक्कारप्रत्ययो डश्चान्तादेशः । (रणति । ररण । रणिता अरणीत् । अराणीत् )"अतो हलादेः" इति वा वृद्धिः । (रिरणिषति । रंरण्यते । रंरणीति । रंरण्टि । रंराण्टः ) "नुगतोऽनुनासिकान्तस्य" इत्यभ्यासस्यानुस्वारः, "अनुनासिकस्य क्विझलोः क्ङिति" इति दीर्घः । (रणयति । अरीरणत । अरराणत् ) काण्यादित्वाद् ह्रस्वविकल्पः । राणयतीति गतौ घटादिः । (रणनं) शब्दः। रणन्त्यस्मिन्निति (रणो) तेजः संग्रामश्च। [ वशिरण्योरुपसंख्यानम् ] इति अकर्त्तरि कारके अच् प्रत्ययः । (रणितं, रण्डा) । "ञमन्ताड्डः"। (रणरणको) हृल्लेखः। [घञ कविधानम्] इति कः। [क्रम्यादीनां के द्वे भवतः] इति द्विर्वचनं, संज्ञायां कन् । पृषोदरादित्वाद्धलादिशेषाभावो ऽभ्यासस्याकारश्च । (वणति । ववाण । ववणतुरित्यादि ) । वकारादित्वादेत्वाभ्यासलोपाभावः । अयमपि काण्यादिः । (वाणः) शतं तनुः । "हलश्च" इति संज्ञायां घञ् । (वाणी) "इञ् लपाकादिभ्यः" इति इञन्तात् [सर्वतोक्तिन्नर्थादित्येके] इति ङीप् । अन्तर्वाण्यस्येति (अन्तर्वाणिः), विपश्चित् । "निष्प्रवाणिश्च" इति चकारात् "नद्यृतश्च" इति कपो निषेधः । अवश्यं वणतीति (वाणिनी) आवश्यकणिन्यन्तान्ङीप्। (वण्डः) । पूर्ववड्डः । अल्पतनुः पङ्गुः । (भणति । बभाण । भणितेत्यादि ) अयमपि काण्यादिः । भण्यत इति (भाणः) । कर्मणि घञ् । ( भणितिः । ) "तितुत्र" इतीण्निषेधे [तितुत्रेष्वग्रहादीनाम्]इति वचनादिडागमः ।(भण्डः । भाण्डः)। भण्डेर्वा "पुच्छभाण्ड" इति निर्देशाद्दीर्घः । भामेर्वा डप्रत्यये । (संभाण्डयति), भाण्डानि सञ्चिनोतीत्यर्थः । "पुच्छभाण्डचीवराण्णिङ्" इति णिङ्, "भाण्डात्समाचयने" इति च वृत्तिः । ङित्त्वात्तङ्। (समबभाण्डत) । "णिश्रि" इति चङ् । (मणति। ममाण । मेणतुः। मणितेत्यादि । मणितम् । मणिः।) । इन्प्रत्ययः । मणिप्रकारो मणिकः । स्थूलदित्वात् कन् मणिरेव ( मणिकः ) यावादित्वात्कन् । ( मणिको ) लञ्जरः । संज्ञायां कन् । (मण्डः) । मण्डतेर्वा । ( कणति चकाण । कणितेत्यादि ) । अयमपि काण्यादिः । कणयतीति गतौ घटादित्वात् । ( कणः ) । लेशः सूक्ष्मतण्डुलश्च । गोचरादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वाद् घः । ( कणिका ) । संज्ञायां कनि "प्रत्ययस्थात्" इतीत्वम् । ( कण्ठः ) । कणेष्ठः । बाहुलकात् ठस्येकाभावः । अयं निमीलनार्थश्चुरादौ । ( क्वणति । चक्वाण । क्वणितेत्यादि । क्वाणः । क्वणः । निक्वाणः निक्वणः । कल्याणप्रक्वणा वीणा । कल्याणप्रक्वाणेति वा ) । *क्वणो वीणायां च* । अनुपसृष्टान्निपूर्वात् वीणाविषयाच्च क्वणेर्वा ऽप्प्रत्ययः । सोपसर्गार्थं वीणाग्रहणम् । (कुणालो) धान्यं यज्ञोपकरणं च । "पीयुकणिभ्यां कलायन्

ह्रस्वः संप्रसारणं च" इति कालन्प्रत्ययः यथासंख्यात्संप्रसारणं च ।(कुणपम्) । "क्वणः संप्रसारणं च" इति पन्प्रत्ययः संप्रसारणं च । (कङ्कणीका) । प्रतिसरः । "चङ्क्वणेः कङ्कणश्च" इति यङ्लुगन्तादीकन्प्रत्ययः कङ्कणादेशश्च । ( व्रणति । वव्राण । व्रणितेत्यादि ) । अयं बशादिः क्वचित्पठ्यते । दन्तोष्ठ्यादिरेव सर्वत्र, तथा च यादवः, व्रणेश्शब्दार्थविषये, व्रणगात्रचूर्णने इति गात्रचूर्णनार्थोयं कथादिः । ( ब्रणति । बब्राण । ब्रणिता । ध्वणति । दध्वाण । ध्वणितेत्यादि ) । ध्रणिरपि संमतायामत्र पठ्यते ॥ ४४९ ॥

ओणृ अपनयने ॥ ( ओणति । प्रोणति । ओणां चकार । ओणिता । ओणिणिषति । ओणयति ) । मा भवानौणिणत् । ऋदित्वान्नोपधाह्रस्वः । इदमेव ऋदित्वं द्विर्वचनात् पूर्वं सुपधाह्रस्वत्वे ज्ञापकमित्युक्तम् । (अवावा) । "अन्येभ्योपि दृश्यते" इति वनिपि "विड्वनोरनुनासिकस्यात्" इति णकारस्याकारेऽवादेशे "सर्वनामस्थाने" इत्युपधादीर्घे नलोपः । स्त्रियाम् (अवावरी) । *वनो र च* इति वन्नन्तप्रातिपदिकत्वात् ङीब्रौ । [वनो न हशः] । हशन्ताद्यो वन् विहितस्तदन्तान् ङीब्रौ नेत्ययं प्रतिषेधः प्रायिकत्वादत्र नेति न्यासादौ ॥४५०॥

शोणृ वर्णगत्योः ॥ ( शोणति । शुशोण । शोणिता । शुशोणिषति । शोशोण्यते । शोशोण्टि । शोणयति । अशुशोणत् । शोणितम् । शोणः । शोणी । शोणा ) । "शोणात्प्राचाम्" इति वा ङीष् ॥ ४५१ ॥

श्रोणृ संघाते ॥ (श्रोणतीत्यादि । श्रोणिः)। इन्प्रत्ययः । (श्रोणी) । कृदिकारत्वाद्वा ङीष् । (श्रोणा) । नक्षत्रम् । अजन्ताट्टाप् ॥ ४५२ ॥

श्लोणृ च ॥ (श्लोणतीत्यादि) । शोणादयः तालव्योष्मादयः ॥ ४५३ ॥

पैणृ गतिप्रेरणश्लेषणेषु ॥ लेणृ इति क्वचित्पठ्यते । पैणतीत्यादौ ॥ ४५४ ॥

ध्रण शब्दे ॥ उपदेशे नान्तोयमिति प्रागस्य निर्देशो न कृतः । तस्य प्रयोजनं यङ्लुकीति मैत्रेयः' अतोस्य दण्डके पाठः प्रत्युक्तः । ध्रणतीत्यादि । "रषाभ्याम्" इति णत्वम् । यङ्लुकि (दन्ध्रन्ति दन्ध्रान्त) इत्यादौ णत्वस्य "नश्चापदान्तस्य" इत्यनुस्वारेऽसिद्धत्वात् कृते तस्मिन्परसवर्णः, तस्यासिद्धत्वात् पुनर्णत्वं न भवति । अभ्यासस्य "नुगत" इति नुक् । अस्मादनन्तरं क्वचित् कोशे वण भण धण इति त्रयः पठ्यन्ते, तत्र भणिर्मैत्रेयानुसारेण दण्डके पठितः । धणिरपि संमतायामिति तत्रैवोक्तम् । ( वणतिः । वणः ) । "उद्वण" इत्यच् ॥४५५॥

कनी दीप्तिकान्तिगतिषु ॥ (कनति । चकान । कनितेत्यादि । कन्या) । कन्याया अपत्यं (कानीनः ) "कन्यायाः कनीन च" इति अण् कनीनादेशश्च । अत एव निर्देशाद्यत्, स्वरितान्तत्वं तु "तिल्यशिक्यमर्त्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः" इति,अन्यथा *यतोनावः* इति यदन्तस्य द्व्यचो विधीयमान आद्युदात्तः स्यात् । (कनकम् )"कुन् शिल्पिसंज्ञयोः" इति कुन् ॥ ४५६ ॥

ष्टन वन शब्दे ॥ ( स्तनति । तस्तान । स्तनितेत्यादि । तिस्तनिषति । तंस्तन्यते । तंस्तनीति । तंस्तन्ति ) । ध्वनतिवत्प्रक्रिया । ( स्तनयति । अतिष्टनत् । अभिनिष्टानः ) । विसर्जनीयः । "अभिनिसः स्तनः शब्दसंज्ञायाम्" इति षत्वम् , अन्यत्राभिनिस्तनति मृदङ्गः अत्र न्यासे सकारादिरयं पठितः । तदस्य षोपदेशपर्युदासवाक्ये उपादानान्निर्मूलम् । अत एव पुरुषकारे मूर्द्धन्यादिरेवायं दर्शितः । ( स्तान्यम् ) ण्यत् । ( स्तनः ) । अच् । ( स्तन्यम् ) "शरीरावयवाद्यत्" इति भवार्थे यत् । ( स्तनितम् । स्तनयतीति देवशब्दार्थस्य कथादिपठितस्य । ( वनति । ववान । ववनतुः । वनितेत्यादि । वनितम् । वनित्वा । वतिः ) क्तिनि "तितुत्र" इतीण्निषेधात् "अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति" इत्यनुनासिकलोपे (वतिः) इति भवति । अनुदात्तोपदेशा यमिरमिनमिहनिगमिमन्यतयः । (प्रवत्य) । "वा ल्यपि" इत्यनुदात्तोपदेशादीनां विधीयमानोयमनुनासिकलोपविकल्पो व्यवस्थितविभाषाविज्ञानात् नान्तेषु नित्यः, अन्यत्र विकल्प इतीह नित्यः । ( वन्तिः ) ।

क्तिच् "न क्तिचि दीर्घश्च" इति दीर्घानुनासिकलोपयोर्निषेधः। "अनुदात्तोपदेशवनति" इति-श्तिपा निर्देशात् (वंवान्त) इत्यादावनुनासिकलोपो न भवति। वनोतिनिवृत्त्यर्थं तु श्तिपा निर्देशो न भवति। तनोत्यादित्वेन तस्यानुनासिकलोपस्येष्टत्वात्। (वनिष्ठः)। अपानं मांस-विशेषश्च। ऋतन्यञ्जिवन्यञ्जिचत्यादिनेष्ठच् (वनम्) अच्। वनानां समूहो (वन्या) "पाशा-दिभ्यो यः" इति समूहे यः। तदेतत्स्वभावात् स्त्रीलिङ्गम् (वन्यम्) दिगादित्वाद्भवार्थे यत्। (वानेयम्) पूर्वनगरीतिनद्यादित्वात् ढक् शैषिकः। (वनिः। वनी)। "कृदिकारादक्तिनः" इति वा ङीष्॥ ४५८॥

वन षण संभक्तौ॥ वनेरर्थभेदात्पुनः पाठ इति मैत्रेयः। तथैवेदाहरणानि। (सनति। ससान। सेनतुः। सनितेत्यादि। सायात्। सन्यात्) "किदाशिषि" इति कित्त्वाद्। * ये विभाषा * जनसनखनां यकारादौ क्ङित्यात्वं वेति तद्विकल्पः। एवं यङ्यङोरपि। धातुपारा-यणे तु "लोपोयि" इतिवद्वर्णमात्रे निर्दिष्टव्ये य इत्यत्त्वतो निर्देशाद्यासुट्रथात्वं नेत्युक्तम्। (सिसनिषति। सिषासति)। "सनीवन्तर्द्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इतीड्वि-कल्पः। इडभावे "जनसनखनां सन्झलोः" इति झलादौ सनि क्ङिति विधीयमानमात्वं भवति (सासायते। संसन्यते) "ये विभाषा" इत्यात्वम्। इदं च क्ङित्येवेति ण्यति न भवति (सान्यमिति। संसनीति। संसन्ति। संसातः)। प्रकृतिग्रहणन्यायेन "जनसन" इत्यात्वे "अनुनासिकस्य" इतिदीर्घे परत्वाद् बाधित्वा ऽत्रापि भवति (सातिः। सातः। सातवान्) आत्वसूत्रे च झलादिसन् जनसनोर्न संभवतीति सनोतेरेव विशेषणमिति वदता वृत्तिकारेण सनोतेः "सनीवन्त" इति पक्ष इडागमः, तदिह सनोत्यर्थमेव सन्ग्रहणमित्यभिधा-नादिड्विधावात्वे च तानादिकस्यैव ग्रहणमिति च प्रतीयते। अन्ये तु पुनरुभयत्रोभयोर्ग्रहण-माहुः। एवं वृत्तौ सनोतेरित्युपादानं [तस्यानुनासिकलोपादात्वं विप्रतिषेधेन]इति वक्ष्यामी-त्येवमर्थं मन्तव्यम्। (सानुः) "दसनिजनिचरिचटिभ्यो ञुण्" इति ञुण्प्रत्ययः। वनु पाने, षणु दानइति द्वयं तनादौ॥ ४६०॥

अम गत्यादिषु॥ कनी दीप्तिगतीत्यत्र गतेः परयोः शब्दसम्भक्त्योरादिशब्देन ग्रहः। (अमति। आम। आमतुः। अमितेत्यादि। अमिमिषति)। आमयतीत्यत्र "न कम्यमि-चमाम्" इति मित्त्वनिषेधात् "मितां ह्रस्वः" इति ह्रस्वाभावः। (अम्यम्। अमितवान्) "पोरदुपधात्" इति यत्। अमित्त्वात् निष्ठायां "हृष्यमत्वरसंघुषास्वनाम्" इतीड्विकल्पनात् (अमितः। आन्तः। अमितवान्, आन्तवान्) इति भवति। इडभावे "अनुनासिकस्य क्विझलोः क्ङिति" इति दीर्घः क्विपि पूर्ववत्। दीर्घे "मो नो धातोः" इति नत्वे आनिति भवति। नलोपस्तु न भवति असिद्धत्वादिति प्रागेवोक्तम्। (अमः)। घञि "नोदात्तोपदेश" इति वृद्धिनिषेधः। अत एव चिण्यपि ण्यन्तात् "न कम्यमि" इति मित्त्वनिषेधात्। ण्यपेक्षया वृद्धौ (मा भवान् आमीति) भवति। (आमयः) इत्यम रोगइति चौरादिकस्य। (अमत्रम्)। "अनिनक्षियजिवञ्चिपतिभ्यो ऽत्रन्" इत्यत्रन्। (अमित्रः)। "अमेर्द्विषि चित्" इतीत्रप्रत्य-यः। (आम्राः)। "अमितम्योर्दीर्घश्च" इति रप्रत्यये दीर्घः। (आन्त्रम्)। "अत्यमिचमिश-सिभ्यः क्रन्" इति क्रन्॥ ४६१॥

द्रम हम्म मीमृ गतौ॥ (द्रमति। दद्राम। द्रमितेत्यादि)। लुङि "ह्मयन्त" इति वृद्धिनिषेधात् (अद्रमीत्। दिद्रमिषति। दन्द्रमीति। दन्द्रन्ति। दन्द्रान्त इत्यादि) उत्तमे "म्वोश्च" इति नत्वे णत्वम्। (दन्द्रणमीत्यादि)। (अदन्द्रन्)इत्यत्र तिप्सिपोर्हल्ङ्यादिलोपे "मो नो धातोः" इति नत्वे "पदान्तस्य" इति णत्वं न भवति। (द्रमयति। अदिद्रमत) अम-न्तत्वान्मित्त्वम्। (अद्रमि। अद्रामि। द्रमन्द्रमम्। द्रामन्द्रामम्) "चिण्णमुलोः" इति दीर्घविकल्पः। स्यादिषु चिण्वदिट्पक्षे दीर्घविकल्पे णिलोपेच (द्रमिष्यते द्रामिष्यत)इत्यादि। शुद्धे पुनरिटि णेर्गुणायादेशयोः(द्रमयिष्यते),इत्यादि। अण्यन्तात् चिणि "नोदात्तोपदेश" इति

वृद्धिनिषेधात् (अद्रमि)इत्येवेति । एवं णिति कृति च (द्रमः द्रमक) इत्यादि। (दन्द्रमणः)' जुचङ्क्रम्य" इत्यादिना तच्छीलादौ यङन्तादस्माद्युचि अल्लोपयलोपौ । (द्रमिडः) । "अमत्ताड्डः" इति डः । 'नेड्वशि कृति" इति निषेधो बाहुलकान्न भवति । ( हम्मति । जहम्म हम्मितेत्यादि । जिहम्मिषति । जेहम्म्यते । जंहम्मीति । जंहन्ति जंहन्त ) इत्यादावनुपधात्वान्नोपधादीर्घः । लङि हल्ङ्यादिसंयोगान्तलोपयोः "मो नो धातोः" इति नत्वे (अजंहन् हम्मयति । अजहम्मत् । हम्मित्वा । हम्मतिः) । ज्ञानं, गत्यर्थो बुद्ध्यर्थः, न हम्मतिः (अहम्मति) अज्ञानम् । यद्वा अहमिति मतिः । अहंशब्दो मान्तोहङ्कारवचनोव्ययम् । ( मीमति । मिमीम । मिमीमतुः । मीमितेत्यादि । मिमीमिषति । मेमीम्यते । मेमीमीति । मेमीन्त इत्यादि । लङि अमेमीन् । मीमयति । अमिमीमत् । मीमित्वा मीमितः ) अयं शब्दे चेति क्वचित्पठ्यते ॥ ४६४ ॥

चमु छमु जमु झमु अदने ॥ ( चमति । चचाम । चेमतुः । चमितेत्यादि ) । आङ्पूर्वत्वे तु "ष्ठिवुक्लमुचमां शिति" इति दीर्घः । ( आचामति । आचामतु । आचामत् । आचामि । आचामयति ) चिणिञ्णिति णिति कृति च "नोदात्तोपदेश" इति वृद्धिनिषेधात् (अचमि । चमः चमक) इत्यादि अत्रापि "अनाचमि"इति वचनात् (आचामि आचाम) इति वृद्धिरेव । ननु वार्त्तिके"अचमिकमिवमोनाम्"इति केवलस्योपादानात् सर्वत्र वृद्ध्या भाव्यम्। नैतत्। यत इदं वार्तिकं धात्वन्तरमपि पर्युदसनीयं न केवलं सूत्रोपात्त इत्येवं परम् । तथा च भाष्ये "अध्यगीष्ट । अत्यल्पमिदमुच्यते अनाचमेरिति" । अत एव न्यासश्चमेस्तावत् अनाचमेरिति सूत्र एवोपादानात् प्रतिषेध इति । तथा वर्द्धमानोपि उपसर्गोपादानात्(अचमि, पर्यचमीति) । अपि च वृत्तावपि वार्त्तिकस्योदाहरणमाङ्पूर्वमेव दर्शितम् । ( चिचमिषति । चञ्चम्यते । चञ्चन्ति । चञ्चान्त) इत्यादि । अत्रापि प्रकृतिवदाङः पूर्वत्वे चिणि ञिति णिति कृति वृद्धिः, अन्यत्र तदभावश्च । (चामयति)। "न कम्यमिचमाम्" इति मित्त्वनिषेधः। चम्यतेत्रेति (चमसः) "अत्ममिचमि" इत्यसन् । ( चमूः ) । "कृषिचमितनिरमिसर्जिभ्य ऊः" इत्यूकारप्रत्ययः । ( छमति । चच्छाम । छमितेत्यादि । चिच्छमिषति । चञ्छम्यते । चञ्छमीति । चञ्छन्ति । चञ्छान्त) इत्यादि । (छमयति) अमन्तत्वान्मित्त्वम् । चिण्णमुल्परे णौ "चिण्णमुलोर्दीर्घोन्यतरस्याम्" इति वा दीर्घः । ( अच्छमि । अच्छामि, छमंछमम् । छामछाममिति ) । चिण्वदिटि वृद्धेर्भावाभावाभ्यां, णिलोपे ( छमिष्यते, छामिष्यते ) इत्यादि । शुद्धे पुनरिटि गुणाययोः (छमयिष्यत)इत्यादि। णिचोभावे चिणि ञिति णिति कृति च "नोदात्तोपदेशस्य" इति वृद्धिनिषेधात् (अच्छमि) इत्यादिरेव भवति । ( जमति । जजाम । जेमतुः । जमिता । झमति । जझाम । झमिता) इत्यादि पूर्ववत् । अत्र मैत्रेयः । जिमिं केचिदिच्छन्ति, (जेमनमिति)। एषामुदित्त्वात्क्त्वायामिड्विकल्पे (चमित्वा । चान्त्वेत्यादि भवति)। निष्ठायां "यस्य विभाषा" इत्यनिट्त्वात् (चान्त) इत्यादि । अनिटि । "अनुनासिकस्य क्विझलोः क्ङिति" इति दीर्घः ॥ ४६८ ॥

क्रमु पादविक्षेपे ॥ (क्रामति । चक्राम । चक्रमतुः । क्रमिता । क्रमिष्यति । क्रामतु । अक्रामत् ।क्रामेत् । आशिषि । क्रम्यात् । अक्रमीत् )। "ह्यन्तक्षण" इति वृद्धिनिषेधः ।(अक्रमिष्यत् ) । *क्रमः परस्मैपदेषु* (क्राम)इति परस्मैपदे शिति दीर्घः। इत्यत्र हेर्लुकि प्रत्ययलक्षणेन परस्मैपदपरशितपरत्वेन दीर्घः । न च "न लुमता" इति निषेधः । तस्य लुमता लुप्तप्रत्ययनिमित्ताङ्गसंज्ञाविषयत्वात् । इह च हौ विकरणान्तमङ्गं क्रमस्तु विकरणे, विकरणश्च नित्यत्वात् पूर्वमत्र भवति । "वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः" इति शब्विषये पक्षे श्यनो विधानात् ( क्राम्यति, क्राम्यतु, अक्राम्यत् । क्राम्येत् ) इत्यपि भवति । पूर्ववद्दीर्घः । ( चिक्रमिषति । चङ्क्रम्यते । चङ्क्रमीति । चङ्क्रन्ति ) । इत्यादि । ( क्रमयति । अचिक्रमत् ) । "मितां ह्रस्वः" इत्यत्र वृत्तिः । के चिदत्र वेत्यनुवर्त्तयन्ति सा च व्यवस्थितविभा-

षा, तेन संक्रामयतीत्येवमादि सिद्धं भवति, अविगीतस्तु संक्रमयतीति, अत्रैव रसातले सं-क्रमितेत्यादिप्रयोगोनुकूलः । ( क्रमते । चक्रमे । क्रन्ता । क्रंस्यते । अक्रमत । क्रमेत, क्रंसीष्ट । अक्रंस्त । अक्रंस्यत )। 'अनुपसर्गाद्वा" इति पक्षे तङ् । अत्रापि शब्विषये वा श्यनि (क्रम्यते) इत्यादि *वृत्तिसर्गतायनेषु क्रमः* इति वृत्त्यादिषु नित्यस्तङुदाहार्यः । वृत्तिरप्रतिबन्धः । सग उत्साहः । तायनं स्फीतता, अयं वृत्त्यादिविषयस्तङ् "उपपराभ्याम्" इति सिद्धे सत्यारम्भान्नियमादन्योपसृष्टान्न भवति, तेन संक्रामतीति परस्मैपदमेव । यदायमाङ्पूर्व उद्गमनार्थस्तदा "आङ उद्गमने" इति वचनात् नित्यस्तङुदाहार्यः (आक्रमते भानुः) इत्यादि। अत्र [ज्योतिरुद्गमनइतिवक्तव्यम्]इत्युक्तत्वात (आक्रामति धूमो हर्म्यतलात्)इत्यत्र न भवति। उद्गमने वर्तमानोयमकर्मक इति कैयट उक्तम् । पदमञ्जर्यां तु आक्रमति धूमो हर्म्यतलमिति वृत्तिमुपादाय उद्गमने क्रमिरकर्मकः तस्मादाक्रामति धूमो हर्म्यतलादिति पठितव्यमित्युक्तम् । यद्वा उद्गमनपूर्विकायां व्याप्तौ अत्र क्रमिर्द्रष्टव्य इति द्वितीया समर्थिता । (नभः समाक्रामति चन्द्रमाः) इत्यत्र नोद्गमनं विवक्षितं किं तर्हि व्याप्तिरिति परस्मैपदमिति तत्रैवोक्तम्।(विक्रमते)। सुष्ठु पदानि विक्षिपतीत्यर्थः । अश्वादीनां गतिविशेषो विक्रम इति वृत्तिः । "वेः पादविहरणे" इति नित्यस्तङ् अण्यत्र(विक्रामत्यजिनसन्धिः)इति। त्रुट्यतीत्यर्थः।(प्रपक्रमते भोक्तुम्)।उपक्रमते भोक्तुम् ) । "प्रोपाभ्यां समर्थाभ्याम्" इति नित्यस्तङ् । समर्थौ समानार्थौ । तच्च समानार्थत्वमादिकर्मणि । अन्यत्र (प्रक्रामति उपक्रामतीति) आगच्छति उपगच्छतीति चार्थः । आत्मनेपदेषु वलाद्यार्धधातुकस्य *स्नुक्रमोरनात्मनेपदनिमित्त* इतीडभावः । स्नुक्रमोर्वलाद्यार्द्धधातुकस्येडागमो भवति आत्मनेपदनिमित्ताभाव इत्यक्षरार्थः । तदर्थादनयोरुदात्तत्वादेवेटः सिद्धावारम्भादात्मनेपदनिमित्तत्वे निषेधार्थं सूत्रं भवति । निमित्तग्रहणं कुर्वद्रूपताप्रतिपत्त्यर्थं,न तु ,योग्यतापरमिति कर्मकर्तृविषयाद्भावकर्मविषयाच्चास्मात् कृतः सत्यामपि योग्यतायामात्मनेपदाभावात् (प्रक्रमिता प्रक्रमितुं प्रक्रमितव्यम्)इतीड् भवत्येव। न चार्थविशेषादुपसर्गविशेषाच्चात्मनेपदस्य निमित्तं न क्रामतिरिति कथमस्यात्मनेपदनिमित्तत्वमिति मन्तव्यम् । यतस्तेषां विषयतया विशेषणत्वात् तद्विशिष्टो धातुरेव निमित्तम् । (चिक्रंसते) इत्यादौ "पूर्ववत् सनः" इत्यतिदेशात्प्रकृतिगतमेव सनन्तेप्यात्मनेपदस्य निमित्तमिति तस्य क्रमिनिमित्तत्वादिडभावः । (चिक्रंस्यत)इत्यादौ भावकर्मणोरपि परत्वात् "पूर्ववत् सनः" इत्यात्मनेपदमिति प्रकृतेरेवात्मनेपदनिमित्तत्वमितिड्भावः सिद्धः । अस्ति च विप्रतिषेधः, "भावकर्मणोः इत्यात्मनेपदक्रमिनिमित्तत्वाभावादिट् स्यात्, अनेन तु सति नेति । यदा तु सनन्ताण्णिच् तदात्मनेपदस्य क्रमिनिमित्तत्वाभावात् चिक्रमीषयतीतीटा भाव्यम् । तथा (चिक्रमिषते स्वयमेव) इति कर्मकर्तर्यपि । अत्र तु कर्मवदतिदेशनिमित्तमेवात्मनेपदं न तु क्रमिनिमित्तम् । अत्र हरदत्तः सिद्धं स्नुक्रमोरात्मनेपदेन समानपदस्तस्येण्णिषेधात् । "क्रमेश्च" इति वार्त्तिककारवचनादिहाप्यत्मनेपदेन समानपदस्य लाभादिटा न भाव्यमित्याह । भाष्यवार्तिकपूर्वापरपर्यालोचनायां समानपदस्थत्वे तात्पर्यं नेति प्रतीयते । यतस्तु वार्त्तिकाकार आत्मनेपदे परे स्नुक्रमोर्नेत्येवं सूत्रार्थे आश्रीयमाणे निर्दिष्टपरिभाषायाः आनन्तर्यं एव भाव्यत्वात् प्रचिक्रमिष्यतइत्यत्र स्येन व्यवधानात् प्रक्रसिष्टेत्यत्र च सीयुट आत्मनेपदभक्तत्वात् प्रक्रस्येते इत्यत्र व्यपवर्गाभावात् आत्मनेपदपरत्वाभावादिण्निषेधाप्रसङ्गाद् [आत्मनेपदपरतङ्परसीयुडेकादेशेषु च प्रतिषेधो वक्तव्यः]इत्युक्तत्वात्, परिहारमात्रीयं [सिद्धं त्वात्मनेपदेन समानपदस्यस्येण्णिषेधाद्[इत्याह । भाष्यकृता च यथान्यासमेवास्त्विति सूत्रमेव स्थापितम्। न च तत्र समानपदस्थत्वावगतिः, तथा वृत्तावपि, न चेत्स्नुक्रमी आत्मनेपदस्य निमित्ते, निमित्तग्रहणं सीयुडादेस्तत्परस्य च प्रतिषेधार्थमित्युक्तम् । गतमदः, प्रक्रान्तेत्यादावात्मनेपदाभावेपि क्रमेस्तु कर्त्तर्यात्मनेपदविषयादसत्यप्यात्मनेपदे [प्रकृतिप्रतिषेधो वक्तव्य] इति इडभावः। अनुपसर्गात् क्रमेः(क्रन्ता क्रमिता)इत्युभयमपि भवति। "अनुपसर्गाद्वा" इति विकल्पेनात्मनेपदविषयादित्येके । अन्येत्वात्मनेपदविषयादिति अनन्यभावे विषयशब्दं वर्णयन्तः क्रमितेत्येव

भवितव्यमित्याहुरिति पदमञ्जर्याम्। क्रमेरात्मनेपदे तासावनिट्त्वात् "उपदेशेत्वतः" इति थल इण्निषेधो नाशङ्क्यः। यतः परस्मैपदे तासौ सेट्त्वान्नित्यानिट्त्वाभावः (क्रान्त्वा क्रमित्वा)। उदित्त्वादिड्विकल्पः, इडभावे "क्रमश्च क्त्वि" इति वा दीर्घः। (क्रान्तः।) "यस्य विभाषा" इतीण्निषेधः (क्रमः) घञ्। "नोदात्तोपदेश" इति वृद्धिनिषेधः। क्रममधीते (क्रमकः)। "क्रमादिभ्यो वुन्" इति तदधीते तद्वेदेति विषये वुन्। (चङ्क्रमणः)। "जुचङ्क्रम्य इति युच्। न क्रामतीति नक्रः। "डोन्यत्रापि दृश्यते" इति डः। "नभ्राणनपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या" इति निपातनान्नञो नलोपाभावः। (क्रिमिः)। क्रमिगमिनमिस्थम्भासच इच्चेतीन्प्रत्यये अकारस्येकारः। (क्रिमिणः)। "लोमादिपामादिपिच्छादिभ्यः शनेलचः" इति पामादिपाठान्मत्वर्थीयो नः॥

यज्ञनारायणार्येण (१)प्रक्रियेयं प्रपञ्चिता।
तस्या निःशेषतस्सन्तु बोद्धारो भाष्यपारगाः॥

अणादय उदात्ता उदात्तेतः॥ ४६९॥

अय वय पय मय चय तय णय गतौ॥ इत आरभ्य रेवत्यन्ता उदात्ता अनुदात्तेतः। (अयते। अयां चक्रे)। "दयायासश्च" इत्याम्। (अयिता। अयिष्यते। अयताम्। आयत। अयेत। आशिषि। अयिषीष्ट। आयिष्यत।) अस्य लुङ्लिटोर्ध्वमि "विभाषेटः" इति मूर्द्धन्यविकल्प उदाहार्यः। एवमन्येष्वपि यान्तेषु। (अयियिषते। अयुयति माभवानयियत्। आयः अयः) घञचौ। चलनार्थत्वेपि नास्य युजस्ति, "न ये" इति यान्तानां तन्निषेधात्। तेन अयितेति सामान्यतृन् भवति। (प्लायते) *उपसर्गस्यायतौ* इति उपसर्गस्थस्य रेफस्यायतिपरत्वाल्लत्वम्। नन्वेकादेशस्य स्थानिवत्त्वाद्रेफस्यायतिः परो न भवति। सत्यम्। 'येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यात्' इति एकेन वर्णेन व्यवधानमाश्रयिष्यते। न चास्ति "पूर्वत्रासिद्धे न स्थानिवद्" इति, "तस्य दोषः संयोगादिलोपलत्वणत्वेषु" इति तस्य सापवादत्वात्। एवं च (पल्ययते) इत्यत्रापि लत्वं भवति। न चानन्तरो निर्दुरो रेफोवकाश इति वाच्यम्। तर्हि लाघवार्थं तावेवोपाददीत। येषामुपसर्गविशेषणमयतिग्रहणम्। अयतिपरस्योपसर्गस्य यो रेफ इति तेषां नैवास्य चोद्यस्यावसरः, किं तु प्रत्यय इत्यत्रापि लत्वं स्यात्। भवितव्यमेवेति तेषामेव के चित्, अपरे तु प्रतिपूर्वस्यायतेर्नैष प्रयोग इति, तेषां प्रत्ययशब्दः प्रतिपूर्वादिणोचि, प्रत्ययितशब्दोप्यस्मादेव तारकादित्वादितचि। (निरयते। दुरयते।) इति प्रयोगस्सान्तयोर्द्रष्टव्यः। नह्यत्र लत्वप्रसङ्गः, "ससजुषोः" इत्यस्यासिद्धत्वात्। (वयते। ववये।) वादित्वान्नैत्त्वाभ्यासलोपौ। (वयिता) इत्यादि पूर्ववत्। (विवयिषते। वावय्यते। वावयीति। वावति। वावतः। वावयति। वावयीषि। वावसि। वावथः। वावथ। वावयीमि। वावामि। वावावः। वावामः)। वलि यलोपः। यञादौ तु कृते लोपे "अतो दीर्घो यञि" इति दीर्घः। ह्मो यलोपात्पूर्वं नित्यत्वादह्माचे वल्परत्वाभावाद्यलोपाभावः, लोटि सेर्हिभावात् परत्वात्पूर्वं वलि लोपे तदनन्तरं हिरादेशः, तस्यैव "अतो हेः" इति लुकि (वाव) इति भवति। पूर्वं तु हिभावे तमाश्रित्य वलि लोपे सन्निपातपरिभाषया हेर्लुङ् न स्यात्, उत्तमे तु नित्यत्वादाटि यलोपाप्रसङ्गात्, (वावयानि) इत्यादि भवति, लङि तिप्सिपोः परमपि हल्ङ्यादिलोपं यलोपो बाधत इति (अवावत्, अवाव) इति भवति। इदं च व्योर्वलि लोप इत्यनुवादपूर्वं विधेयं निर्दिश्य तस्य पूर्वनिर्देशेन विध्यन्तराद्बलीयस्त्वज्ञापनादवगम्यते, यत्तु तत्र वृत्तावुक्तं पूर्वनिर्देशस्य फलं वेरपृक्तलोपात्पूर्वं वलि लोप इति, तद्विध्यन्तरोपलक्षणम्। आहुश्चैवं तत्र व्याख्यातारः। यद्वा प्रकृतिविशेषं प्रत्ययविशेषं चापेक्षमाणाद्धल्ङ्यादिलोपात् वर्णमात्रापेक्ष-

(१) ग्रन्थकर्तुरपरं नामैतत्।

स्वादन्तरङ्गो वलि लोप इति पूर्वमेवासावत्र प्रवर्त्तिष्यते। ( पयते । पेये । पयिता । मयते । मेये । मयिता । चयते । चेये । चयिता । तयते । तेये । तयिता । नयते । नेये । नयिता) इत्यादि । चयिवत् । नयतेर्णोपदेशत्वात् प्रणयतइति णत्वं भवति । अत्र पयीति मूर्द्धन्योष्मादिरपि क्वचित् कोशे पठ्यते, मैत्रेयादिभिस्तु न पठ्यते । नयादीनामपि अयिवत् "न ये" इति युजूनिषेधात् तच्छीलादौ तृनेव । णय रक्षणे चेति मैत्रेयः । तय णयेत्येके । अयादीनां क्वौ वलि लोपे तुकि (यत्, वत्,) इत्यादि भवति । अतो लोपस्तु न भवति, आर्द्धधातुकोपदेशे यदकारान्तं तस्य तद्विधानात् ॥ ४७६ ॥

दय दानगतिरक्षणहिंसादानेषु॥ (सर्पिषो दयते । सर्पिर्दयते) "अधीगर्थदयेशां कर्मणि" इति कर्मणि शेषे षष्ठी । अशेषे तु द्वितीयैव । दयां चक्रे । "दयायासश्च" इत्याम् । (दयिता) इत्यादि वयिवत् । (दयालुः । ) "स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुच्" इति ताच्छीलिक आलुच्, दया । दयतिर्भिदादिषु द्रष्टव्यः ॥ ४७७ ॥

रय गतौ ॥ (रयते) इत्यादि वयिवत् । (रायः,) घञ् । (रयः) तु अचि ॥ ४७८ ॥

ऊयी तन्तुसंताने ॥ (ऊयते । ऊयां चक्रे ।) "इजादेश्च गुरुमतः" इत्याम् । (ऊयितेत्यादि। ऊययति । मा भवानूयियत् )। द्विर्वचनात्पूर्वमुपधाह्रस्वत्वमित्युक्तम् । (ऊयित्वा, ऊतः, ऊतवान् । ) ईदित्त्वान्निष्ठायामनिट्त्वम् । ( ऊतिः ) । बाहुलकात् क्तिन् "ऊतियूति" इति निपातनमञ्जतः क्तिनि उदात्तार्थमिति वृत्तावुक्तम् ॥ ४७९ ॥

पूयी विशरणे दुर्गन्धे च ॥ ( पूयते । पुपूये । पूयितेत्यादि । पुपूयिषते । पोपूयते । पोपूयीति । पोपोति । पोपूतः ) । इत्यादि वयतिवत् । तसादौ ङित्त्वान्न गुणः । (पूययति । अपूपुयत् । पूयित्वा । पूतः । पूतवान् ) । ईदित्त्वान्निष्ठायामनिट्त्वम् । (पूतिः) । "गन्धस्येदुत्पूति" इत्यादिनिर्देशात् क्तिन् । (पूयः) । पचाद्यच् ॥ ४८० ॥

क्नूयी शब्दे उन्दे च ॥ (क्नूयते) । चुक्नूये । क्नूयिता) इत्यादि पूयतिवत् । क्नोपयति "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" इति पुकि यलोपे "पुगन्तलघूपधस्य च" इति गुणः । (अचुक्नूपत्) कृतेपि गुणे "णौ चङि" इति ह्रस्वः । क्नूयीति सानुबन्धकस्य निर्देशाद्यङ्लुकि (चोक्नूयीतीति) भवति । (चेलक्नोपं वृष्टो देवः) । "चेले क्नोपेः" इति ण्यन्तादस्मात् कर्मणि चेल उपपदे वर्षप्रमाणे गम्यमाने णमुल् । यावता वर्षेण चेलं क्नूप्यते तावद् वृष्ट इत्यर्थः । चेलइत्यर्थग्रहणमिति । (वस्त्रक्नोपम्) इत्याद्यपि भवति। अस्यापीदित्त्वान्निष्ठायामनिट्त्वम् ॥४८१॥

क्ष्मायी शब्दे विधूनने ॥ ( क्ष्मायते । चक्ष्माये । क्ष्मायितेत्यादि । चिक्ष्मायिषते । चाक्ष्माय्यते । चाक्ष्मायीति । चाक्ष्माति ) । तसादौ क्ङिति सार्वधातुके "श्नाभ्यस्तयोरातः" "ईहल्यघोः" इतीत्वम् । (चाक्ष्मीत) इत्यादि । लोटि तातङ्पक्षे तस्य ङित्त्वात् (चाक्ष्मीतात्) इति भवति, हेरप्यपित्त्वात् ङित्त्वात् चाक्ष्मीहि । लङि नित्यत्वाद्यलोपात्पूर्वं "सिजभ्यस्त" इति जुसभावो भवति । (अचाक्ष्मायीत् ।अचाक्ष्मीताम् । अचाक्ष्मायुरित्यादि । क्ष्मापयति। अचिक्ष्मपत् ) "अर्त्तिह्री" इत्यादिना पुक् । अस्यापि सानुबन्धकस्य निर्देशात् यङ्लुकि (चाक्ष्माययतीति) । ईदित्त्वान्निष्ठायां क्ष्मातः । ( क्ष्मातवान् ) ॥ ४८२ ॥

स्फायी ओप्यायी वृद्धौ । (स्फायते । पस्फाये) अभ्यासे "शर्पूर्वाः खयः" इति खयः शेषः ( स्फायितेत्यादि ) क्ष्मायिवत् । णौ "स्फायो वः" इति यकारस्य वकारे ( स्फावयति । अपिस्फवदिति भवति, स्फीतः, स्फीतवान् ) "स्फायः स्फी निष्ठायाम्" इति स्फीभावः । वत्वस्फीभावौ प्रकृतिग्रहणन्यायेन यङ्लुक्यपि भवत इति ( पास्फावयति । स्फीतः स्फीतवानिति भवति । स्फायतइति स्फाः ) क्विपि वलि लोपः । अयं वेरपृक्तलोपात्पूर्वं भवतीति वयतौ प्रतिपादितम् । स्फाश्च तदण्डं च (स्फाण्डम् । एवं स्फाण्त्रम्) । वृद्धाण्डमुच्यते (स्फारः ) । "स्फायितञ्चि" इत्यादिना रक् ( प्यायते । पिप्ये । पिप्यिषे । पिप्याथे । पिप्यिध्वे ।

पिप्यिवद्दे ) परत्वात् "लिड्यङोश्च" इति प्यायः पीभावः । पुनः प्रसङ्गविज्ञानात् पीशब्दस्य द्विर्वचनम् । "एरनेकाच०" इत्यजादौ यण् ( प्यायितेत्यादि ) पूर्ववत् । लुङि "दीपजन-बुधपूरितायिप्यायिभ्योन्यतरस्याम्" इति कर्त्तरि तशब्दे वा चिणि (अप्यायि अप्यायिष्टेति) भवति । यङि लिड्वत्पीभावे (पेपीयते)इत्यादि। यङ्लुकि तु (पाप्याति । पाप्यात इत्यादि) पूर्ववत् ( पीनः पीनवान् ), "प्यायः पीनिष्ठायाम्" इति वा पीभावात् । इयं च व्यवस्थित विभाषेति अनुपसृष्टे नित्यम्, उपसृष्टे तु नैव। (आप्यानः प्रप्यानश्चन्द्रमा) इति, आङ्पूर्वाद-न्धूधसोर्भवत्येव । (आपीनोन्धुः, आपीनमूधः) इति। "ओदितश्च" इति निष्ठानत्वम् । ईदित्वं पीभावाभावे निष्ठाया इण्निवृत्त्यर्थम् । ईदितोनन्तराया निष्ठाया नत्वार्थमिदमोदित्वम् । कृते । पीभावे स्वरान्तत्वादनिट्स्वरान्तइत्यनिट्त्वे सावकाश इति पीभाव इण्निवृत्तेर्न ज्ञापकः। स्फायसस्त्वीदित्वे स्फीभावस्य नित्यत्वात् स्वरान्तत्वादनिट्त्वे सिद्धे अनुदात्तेत्व-मात्रं फलम् । न च सत्यपीटि सवर्णदार्घत्वेनेदमेव रूपमिति मन्तव्यम् । परत्वादि-यङ्प्रसङ्गात् ॥ ४८४ ॥

तायृ सन्तानपालनयोः ॥ संतानः प्रबन्धः ( तायते । तताये । तायितेत्यादि ।पूर्ववत् । लुङि "दीपजन०" इत्यादिना कर्त्तरी तशब्दे वा चिणि ( अतायि अतायिष्टेति भवति ) ऋदित्त्वाण्णौ चङ्युपधाया ह्रस्वाभावात् (अततायत् ) अनीदित्त्वान्निष्ठायां (तायितः ता-यितवान् ) ॥ ४८५ ॥

शल चलनसंवरणयोः ( शलते शेले । शलिता । शलिष्यते । शलताम् । अशलत । शलेत् ) आशिषि शलिषीष्ट । अशलिष्ट । शाशल्यते । शाशलीति । शाशल्ति ) लङि ति-प्सिपोर्हल्ङ्यादिलोपः । ( अशाशल् । शालयति । अशीशलत् । शलित्वा । शलितः । शल-भः ) "कृगृशृशलिभ्यो भच्" (शल्कम्) । "इणिकापाशल०" इति कन् । शलाका । "शलि-पतिपटिभ्यो नित्" इत्याकः । (शालूकः) । "शलिमण्डिभ्यामूकण्" इत्यूकण् । शललं, कल-प्रत्ययश्चेत्यत्र प्रत्ययस्य पूर्वनिर्देशस्य धात्वन्तरादप्ययं भवतीति सूचनार्थत्वात् कुण्डला-दिवत् कलः प्रत्ययः (शलली) । पिप्पल्यादित्वात् ङीष् जातिलक्षणो वा ( शलालुः ) गन्ध-द्रव्यविशेषः, शलालुः पण्यं व्यवहार्यमस्य (शलालुकः) । "शलालुनोन्यतरस्याम्" इति प्रथ-मान्तादस्य पण्यमित्यर्थे ष्ठन् , षित्त्वात् स्त्रियां ( शलालुकी ) । अन्यतरस्यांग्रहणात् "प्रा-ग्वहतेष्ठक्" इति ठकि "किति च" इत्यादिवृद्धौ (शालालुकः)। उभयोरपि ठशब्दयोरुकः पर-त्वात् "इसुसुक्तान्तात्कः" इति कादेशः । अत एव शलालुन इति निर्देशादालुप्रत्ययः । शा-लेति शालतावुक्तम् । अयं गत्यर्थो ज्वलादौ परस्मैपदी ॥ ४८६ ॥

वल वल्ल संवरणे सञ्चरणे च ॥ (वलते । ववले । वलितेत्यादि) शलिवत् । णौ घटादि-त्वाद्वलयतीति। (वालः)।"हलश्च" इति करणे घञ् । (वारः) । वालमूलेत्यादिना पक्षेरः (वलिः) (वली) इन्नन्तात् "कृदिकारादक्तिनः" इति वा ङीष् । (वलिनः) पामादित्वान्मत्वर्थे नः।वलिभः। 'तुन्दिवलिवटेर्भः,' अयमपि मत्वर्थीयः (वलिः) "वलेर्वलश्चाहिरण्य" इति इनूप्रत्यये वलादेशः। वलभी । बाहुलकादभचिपिप्पल्यादिदर्शनात् ङीष् (वलयः) वलि मलि तनिभ्यः कयन् इति कयन्(वल्गुः) "वलेर्गुक्च" इति उक्प्रत्ययो गुगागमश्च (वलाकः) "वलाकादयश्च" इत्याक-नन्तो निपातितः । वलाकाया अपत्यं (वालाकिः) "बाह्वादिभ्यश्च" इतीञ्प्रत्ययः । अत्र पा-ठात् जातिलक्षणङीषं बाधित्वा टाप् अजादित्वाद्वा । वलाका अस्य सन्तीति वलाकी. "व्रीह्या-दिभ्यश्च" इति मत्वर्थइनिः। (वलिकं लिङ्गम् )। "अलीकादयश्च" इतीकन् । वल्मीके बाहुलका-न्मुडागमः । (वल्लते । ववल्ले । वल्लितेत्यादि) । यङ्लुकि तिप्सिपोर्हल्ङ्यादिलोपे संयो-गान्तलोपे च अवावल् । ( वल्लभः ) । "रासिवल्लिभ्यां च" इत्यभच् । ( वल्लरी ) । बाहुलकादरप्रत्यये पिप्पल्यादिदर्शनात् ङीष् । ( वल्लिः वल्ली ) इति कृदिकारत्वाद्वा ङीष् ।

(वल्लूरं) शुष्कमांसम् । खर्जपिञ्जादिभ्य ऊरोलचाविति ऊरः ॥ ४८८ ॥

मल मल्ल धारणे ॥ ( मलते । मेले । मलिता ) । मल्लतइत्यादि पूर्ववत् । ( माला ) । "अकर्त्तरि च कारके०" इति कर्मणि घञ् । "लस्य" इत्यत्र भाष्यकैयटयोर्माङो ऽयं लप्रत्यय उक्तः । ( माली ) व्रीह्यादित्वादिनिः । ( मालभारी ) "इष्टकेषीकामालानां चिततूलभारीषु" इति यथासंख्यान्मालाया भारिण्युत्तरपदे ह्रस्वः । के चित्तु तत्र हारीति पठन्ति । (माल्यम् ) । ऋहलोर्ण्यत्" । ( मलयः ) । वलिमलीति कयन् । शरीरं धार्यतइति (मलम्) । अच् । मृजेर्वा व्युत्पादयिष्यते । (मलिनः मलीमसः) "ज्योत्स्नातमिस्राश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः" इतीनजीमसजन्तौ मत्वर्थे निपातितौ । केन मल्यतइति (कमलम्) । घञर्थे कविधानमिति कः, "कर्तृकरणे कृता" इति समासः । कमेर्वा कलप्रत्यये व्युत्पादनीयः । (आमलकी) । "क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि" इति क्वुनि गौरादित्वान्ङीष् । (मल्लः) । अच्प्रत्ययः । (मल्लिका) । "संज्ञायाम्" इति स्त्रियां ण्वुल् । मल्लकः । क्वन् । मलं मल्लते धारयतीति (मलमल्लं कौपीनम्) ॥ ४९० ॥

भल भल्ल परिभाषणहिंसादानेषु ॥ (भलते भल्लतइत्यादि । भालम् ।) "अकर्त्तरि च कारके" इति घञ् । भां दीप्तिं लातीति वा ( भालः । भल्लूकः श्वापदः ।) "उलूकादयश्च" इति ऊकनन्तो निपातितः भल्लूकोप्युलूकादिः । भल्यते हिंस्यतेऽनेनेति (भल्लः ।) "पुंसि संज्ञायाम्" इति घः, "हलश्च" इति घञ् वा । (भल्ली) । "जातेरस्त्रीविषयादयोपधात्" इति ङीष् । अयमाभण्डने चुरादिः ॥ ४९२ ॥

कल शब्दसंख्यानयोः ॥ (कलतइत्यादि । कालः) । "अकर्त्तरि च कारके" इति घञ् । काले भवं (काल्यम्) । "दिगादिभ्यो यत्" इति सप्तम्यन्ताद्भवार्थे यत् । कालः प्राप्तोस्य (काल्य उत्सवः) । *कालाद्यत्* इति प्रथमान्तादस्य प्राप्तमित्यर्थे यत् । अनित्यो वर्णः कालेन रक्तो वा (कालकः) *कालाच्च* इति अनित्ये वर्णे रक्ते च वर्त्तमानात्स्वार्थे कन् । (काली) । "जानपद०"इत्यादिना वर्णे ङीष् । अन्यत्र (काला कालिका) संज्ञायां कनि "केणः" इति ह्रस्वः । (कलिकम्) । "सलिकलि" इति इलच् । (कलभः) । "कृगृसृसलिकलि" इत्यभच् । ( कलिः ) । इनितीन्प्रत्ययः । कलिना दृष्टं साम (कालेयम्) । "कलेर्ढक्" इति तृतीयान्ताद् दृष्टं सामेत्यर्थे ढक्, "आयनेयी इत्यादिनैयादेशः । [ सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः ] इत्युक्तत्वात् सर्व्वेष्वर्थेष्वयं ढग्भवति । ( कलिका ) । संज्ञायां क्वुन् प्रत्ययः । कलिं गृह्णाति (कलयति) "मुण्डमिश्र०" इत्यादिना गृह्णात्यर्थे णिचि णाविष्ठवदिति टिलोपः । अत्र हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति णिसंनियोगेनाकारविधानादग्लोपित्वाद् ह्रस्वाभावात् अचकालदिति भवति । अत्र यद्यपीकारोप्यगेव तथापि तस्य टेरिति लोपात्परत्वाद्वृद्धौ ऐकारे तस्य चायादेशात्पूर्वं परत्वाट्टिलोपे ऽयमग्लोपि न स्यात् कृते त्वत्त्वे वृद्धौ कृतायामप्यग्लोप्येव । ननु च वृद्धावात्वे पुकि च तत्सहितस्य टिलोपेन भाव्यमित्यनग्लोपित्वात् कथमग्लोपः । नैषः दोषः । तत्राग्लोपिग्रहणस्य समुदायार्थत्वात्, अन्यथा मालामाख्यत् (अममालत) इत्यादौ केवलस्याप्यको लोपे अचः परस्मिन् इति तस्य स्थानिवत्त्वात् अभ्यासस्य चङ्परणिपरत्वाभावादेव सन्वद्भावो न भविष्यतीति किमग्लोपिग्रहणेन । न च मन्तव्यं सर्वत्राभ्यासस्य चङ्परणिपरत्वायोगाद्व्यवधानेन भाव्यमेवेत्यका प्राप्तेन स्थानिवद्भावेन व्यवधानेपि तदिति तत्रैव निषेधार्थमेतदस्त्विति । येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यादिति न्यायेनावर्जनीयोत्तरव्यंजनव्यवधानस्यैवाश्रयणं युक्तम् । अयं क्षेपे चुरादिः, गतिसंख्यानयोः कथादिः ॥ ४९३ ॥

कल्ल अव्यक्ते शब्दे ॥ ( कल्लतइत्यादि । कल्लोलः ) । किशोरादित्वादोरप्रत्ययः, कपिलकादित्वाल्लत्वम् । अशब्दइति स्वामी । अशब्दस्तूर्ष्णीभाव इति च ॥ ४९४ ॥

तेवृ देवृ देवने ॥ ( तेवते । तेविता । तेविष्यते । तेवताम् । अतेवत । तेवेत । तेविषीष्ट । अतेविष्यत इत्यादि । तितेविषते । तेतेव्यते । तेवयति । अतितेवत् ) ऋदित्वान्नोपधाह्रस्वः । वकारान्तानामूठ्भाविनां भाषायां यङ्लुङ्नास्ति "च्छ्वोः शूठ्" इत्यत्र क्ङिद्ग्रहणानुवृत्त्यननुवृत्ती प्रस्तुत्य तत्र त्वेतावानेव विशेषः, अनुवर्त्तमाने क्ङिद्ग्रहणे छः षत्वं वक्तव्यमिति भाष्य उक्तत्वात् । छः षत्वमित्यक्ङिति झलादौ षत्वार्थं "व्रश्चभ्रस्ज" इत्यत्र छग्रहणं कर्त्तव्यं क्ङिदधिकाराभावे तु झलादिमात्रे छः षत्वं षकारान्तत्वादेव सिद्धमित्यर्थः । यदि च वकारान्तानामपि यङ्लुक् स्यात्तत्रापि क्ङिद्ग्रहणानुवृत्तौ ऊठा न भाव्यमन्यदा तु भाव्यमिति विशेषस्य विद्यमानत्वाद् तत्रैतावान् विशेष इत्यादि भाष्यं कथं संगच्छेत, स्पष्टं चैतत्तत्र कैयटे । (देवत) इत्यादि पूर्ववत् । (आदेवकः) । 'देविक्रुशोश्चोपसर्गे' इति तच्छीलादौ वुन् । (देवरः) । "अर्तिकमिभूमिवाशिभ्यश्च" इत्यरः (देवलः) "कपिलकादीनां संज्ञाच्छन्दसोः" इति वा लत्वम्, यद्वा देवाँल्लाति आदत्ते इति (देवलः) । अनयोः क्विपि वलि लोपात्परत्वात् "च्छ्वोः शूठ्" इत्यूठ्ययादेशे (तयूदेयूः) इति भवति । एवमन्यत्रापि वकारान्तेषु द्विवीति प्रीणनार्थौ परस्मैपदी, दिवु इति क्रीडार्थो दिवादिः परिपूजनार्थश्चुरादिः ॥ ४९६ ॥

षेवृ गेवृ ग्लेवृ पेवृ म्लेवृ सेचने ॥ शेवृ खेवृ मेवृ इत्यप्येकइति मैत्रेयः ( सेवते । सिषेवे । सेवितेत्यादि । सिसेविषते ) । "स्तौतिण्योरेव" इत्यषत्वम् । ( सेषेव्यते । सेवयति । असिषेवत् ) । एषाम् ऋदित्त्वात् "णौचङि" इति न ह्रस्वः । ( परिषेवयते ) "परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्" इति षत्वं "सात्पदाद्योः" इति निषेधापवादः । "प्राक्सितादड्व्यवायेपि" इति वचनात्पर्यषेवतेत्यादावपि भवति । ( परिषिषेविषते ) इत्यषणीति नियमः "स्थादिष्वभ्यासेन चाभ्यासस्य" इत्यनेन बाध्यते । एवं विनिभ्यामप्युदाहार्यम् । ( सेवित्वा । सेवितः । क्विप् सयूः ।) अत्र मैत्रेयादयोदन्त्यादिमपि वदन्ति । तथा च "परिनिविभ्यः सेव" इत्यत्र न्यासेपि षोपदेशस्य "सात्पदाद्योः" इति निषेधे प्राप्ते ऽपरस्य त्वप्राप्ते चेति तदिदं षोपदेशलक्षणपर्युदासे सेक्सृवर्जमिति स्त्यायतिवदनुपादानाद्भाष्यकारस्यानभिमतत्वमिव प्रतीयते । अत एव "परिनिविभ्यः" इत्यत्र हरदत्तः । सेवतिर्भूवादिष्वनुदात्तेदित्याह न तु सेवतीति ( पेवते । ग्लेवते । तेवते । म्लेवते । शेवते । खेवते । मेवते ) क्लेवृ इत्यपि क्वचित्पठ्यते ॥ ५०१ ॥

रेवृ प्लवगतौ ॥ प्लवगतिः प्लुतिगतिः (रेवतइत्यादि । रेवा) अचि टाप् (रेवणः) । अनुदात्तादित्वाद्वाचलनार्थत्वाद्वा युच् । अत्र मैत्रेयः प्लव इति धात्वन्तरमाह तच्चिन्त्यं यदि हि स्यात् आप्लवशब्दस्यास्मात घञि सिद्धौ तदर्थं "विभाषाङि रुप्लुवोः" इति प्लुवः पक्षे घञ्विधानमनर्थकं स्यात् । तथा प्लुङेर्णौ वृध्यावादेशयोश्चङि णौ कृतस्य स्थानिवत्त्वात् प्लुशब्दस्य द्विरुक्तावपुप्लुवदिति नित्ये प्राप्ते पक्षे अपिप्लवदिति सिद्ध्यर्थं "स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा" इत्युकारस्येत्त्वविधानमनर्थकं स्यादिति, सति ह्यस्मिन्ननेनैवापिप्लवदिति भविष्यति । अत एव किलापरितुष्यन्मैत्रेयोपि प्लव इत्येकइत्याह । आयादय उदात्ता अनुदात्तेतः ॥ ५०२ ॥

मव्य बन्धने ॥ एतदादयो वन्यन्ता उदात्तेतः । ( मव्यति । ममव्य । मव्यिता । मव्यिष्यति । मव्यतु । अमव्यत् । मव्येत् ) आशिषि ( मव्यात् ) । "हलो यमां यमि लोपः" इति वायलोपः' (अमव्यीत्) "नेटि" इति न वृद्धिः "ह्म्यन्त०" इति वा, (मिमव्यिषति । मामव्यते ) अत्र वृजादौ यदा "हलो यमाम्" इति धातुयकारस्य लोपः, तदार्धधातुकमाश्रित्याल्लोपः, "यस्य हलः" इति यङोपि लोपः । (मामवितेत्यादि,) यदा "हलो यमाम्" इति न भवति तदा पूर्ववद्यङोलोपे (मामव्यितेत्यादि । मामव्यीती । मामति) इडभावे "लोपो व्योर्वलि" इति वयोर्लोपः (मामौतः) यलोपे वकारस्याङ्गात्परत्वाद्वलि लोपमपवादत्वाद्वा-

धित्वोठि वृद्धिः। (मामव्यति)। अञ्भावो नित्यत्वाद्वलि लोपं बाधते। (मामव्यति। मामसि। व्योर्लोपः। मामौथः। मामौथ)। यलोपः ऊठि वृद्धिः। (मामव्यीमि, मामौमि)। अनुनासिकत्वादूठि वृद्धिः (मामौवः), व्योर्लोपः "अतो दीर्घो यञि" इति दीर्घः। (मामौमः। मामव्यीतु। मामतु। मामौतात्। मामौताम्। मामव्यतु। मामौहि। मामौतात्। मामौतम्। मामौत। मामव्यानि। मामव्याव)। उत्वहित्वाभ्यां परत्वात्पूर्वमेव व्योर्लोपे पश्चात् "तु ह्योः" इति तातङि तदाश्रय उठ् नाशङ्कनीयः। पूर्वमेव वकारस्य लुप्तत्वात्, हेस्तु "अतो हेः" इति लुक्। उत्तमे नित्यत्वादाटि न व्योर्लोपः। (अमामव्यीत्। अमामौताम्। अमामव्युः। अमामः। अमामव्यम्। अमामाव। अमामौम) तिप्सिपोर्हल्ङ्याादिलोपादान्तरङ्गत्वात् द्वलिलोपः। झिसिपोर्जुस्भावात्भावौ वलिलोपं नित्यत्वात्बाधेते। वसि व्योर्लोपे "अतो दीर्घो यञि" इति दीर्घः। मसि यलोपेऽनुनासिकादित्वादूठि वृद्धिः (मव्ययति। अममव्यत्। मव्यित्वा। मव्यितः)। क्विपि "लोपो व्योर्वलि" इति विधेयस्य लोपस्य पूर्वनिर्देशाद् वेरपृक्तलोपाद्वलिलोपस्य वलीयस्त्वस्य ज्ञापनादपृक्तलोपात् पूर्वं यकारस्य वलि लोपः, वकारस्य त्वपवादेनोठा बाधान्न भवतीति ऊड्वृद्ध्योर्मौः यथातु भाष्यं तथास्य न यङ्लुगस्ति तच्च तेवतावुक्तमुपपादितं च॥

अत्रापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता।
यज्ञनारायणार्येण बुध्यतां भाष्यपारगैः॥ ६०३॥

सूक्ष्यं ईक्ष्यं इर्ष्यं ईर्ष्यार्थाः॥ (सूक्ष्यति। सुपूक्ष्यं। सूक्ष्यिता। सूक्ष्यिष्यति। सूक्ष्यतु। असूक्ष्यत्। सूक्ष्येत्। आशिषि। सुक्ष्यात्। असूक्ष्यीत् असूक्ष्यिष्यत्। सुसूक्ष्यिषति) "स्तौतिण्योरेव" इति नियमान्न षत्वम्। (सोसूक्ष्यते)। "हलो यमाम्" इति पक्षे यलोपः। अन्यदा तु यकारद्वयम्। (सोसूक्ष्यीति। सोसूष्टि।) बहूनां समवाये द्वयोरपि संयोगसंज्ञाया आश्रितत्वात् "स्कोः" इति कलोपः। लङि तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगादित्वात् कलोपे जश्त्वचर्त्वयोः (असोसूट्। सर्वत्र यकारस्य वलि लोपः। (सूक्ष्ययति। असुसूक्ष्यत्। सूक्ष्यं आदरइत्यन्ये। (ईक्ष्यति। ईक्ष्यांचकार) ईक्ष्यिता। ईक्ष्यिष्यति। ईक्ष्यतु। ऐक्ष्यत्। ईक्ष्येत्। ईक्ष्यात्। ऐक्ष्यिष्यत्। ईचिक्ष्यिषति)। "न न्द्राः" इति रेफवर्जस्य द्विर्वचनहलादिशेषे चर्त्वम्, (ईक्ष्ययति। ऐचिक्ष्यत्। ईर्ष्यति। ईर्ष्यां चकार। ईर्ष्यितेत्यादि)। सनि [ईर्ष्यतेस्तृतीयस्य द्वे भवत इति वक्तव्यम्] इत्यत्र वृत्तौ कस्य तृतीयस्य केचिदाहुर्व्यञ्जनस्य। अपरे पुनराहुस्तृतीयस्यैकाच इति। तत्र तृतीयस्य व्यञ्जनस्येति पक्षे यकारादेर्द्वितीयस्यैकाचो द्विर्वचनम्। (ईर्ष्यियिषति) पक्षान्तरे तु तृतीयस्यैकाचः सन एव द्विर्वचनम्। (ईर्ष्यिषिषतीति) भवति। (ईर्ष्ययति, ऐर्षिष्यत्। ईर्ष्या) "गुरोश्च हलः" इत्यकारप्रत्ययः। एषामीर्ष्यार्थत्वात् "क्रुधद्रुह०" इति कोपविषयस्य सम्प्रादानत्वाच्चतुर्थी। (देवदत्ताय सूक्ष्यतीत्यादि) क्विपि वलि लोपे च पदान्तसंयोगादित्वात् "स्कोः" इति कलोपे जश्त्वचर्त्वयोः (सूट्) "रात्सस्य" इति नियमान्न संयोगान्तलोपः। एवमीक्ष्यतेरपि। ईर्ष्यतेरपीदमेव रूपम्॥ ६०६॥

हय गतौ॥ भक्तिशब्दयोरपीति केचित्॥ हयति। जहाय। जहयिथ। हयिता। अहयीत्)। "ह्मन्त०" इति न वृद्धिः। (जिहयिषति। जाहय्यते। जाहयीति। जाहति। जाहतः। जाहयति); [अदादेशो वलि लोपान्नित्यः] इत्युक्तम्। (जाहसि। जाहमि) यलोपे यञौ दीर्घः। (हाययति। अजीहयत्। हयित्वा) हयतेः क्वौ वलि लोपे तुकि (हत्) अतो लोपो नेत्ययतावुक्तम्। (हयः हयी वडवा) गौरादित्वान् ङीष्॥ ६०७॥

शुच्य अभिषवे॥ अवयवानां शिथिलीकरणं सुरायाः संधानं वाऽभिषवस्तथा सोममभिषुणोत्यृजीषमभिषुणोतीति सुराप्रकरणे च संधानं स्यादभिषव इति। अभिषवः स्नानमिति

चन्द्रः । (शुच्यति । शुशुच्य । शुच्यिता । शुशुच्यिषति । शोशुच्यते) । "हलो यमाम्" इति यलोपपक्षेऽतो लोपे "यस्य हलः" इति चार्धधातुके यशब्दलोप इति चाल्लोपस्य असिद्धत्वात् स्थानिवत्त्वाद्वा गुणाभावे (शोशुचिता) । यङो लोपाभावे तु (शोशुच्यिता। शोशुच्यीति । शोशोक्ति) वलिलोपे लघूपधत्वाद्गुणः । यङ्लुकोनैमित्तिकत्वाद्गुणस्यानार्द्धधातुकनिमित्तत्वाद्वा "न धातुलोपः" इति निषेधाभावः । (शोशुक्तः । शोशुच्यति । शोशुच्यीषि । शोशोक्षि । शोशुच्यीसि । शोशोच्मि । शोशुच्वः । शोशोक्तु । शोशुग्धि ) । हेर्धित्वम् । "चोः कुः" इति चकारस्य ककारे "झलां जश् झशि" इति गकारः अशोशुच्युरित्यत्र वलि लोपान्नित्यत्वाज्जुस्भावः । इगन्तविषयत्वाज्जुसिगुणो न भवति, ( अशोशुच्यम् ) नित्यत्वाद्धलि लोपात् पूर्वसम्भावः । (शुच्ययति, अशुशुच्यत् । शुच्यित्वा, शुच्यितः) शुक्तिरित्यत्र "तितुत्र" इत्यनिट्त्वम् । चुच्य इत्यपि पठन्तीति मैत्रेयः चुच्यतीत्यादि ॥ ५०८ ॥

हय गतिकान्त्योः ॥ (हर्यति । जहर्य्य । हर्यिता । अहर्य्यीत्) । "नेटि" इति न वृद्धिः । (जिहर्यिषति । जाहर्य्यते) । पूर्ववदार्धधातुके यमो यमि लोपे यलोपाल्लोपाभ्यां (जाहर्ता ।) अन्यदा जाहर्यितेत्यादि ( जाहर्य्यीति । जाहर्ति । जाहर्तः जाहर्यति । जाहर्षि । *शरोचि* अचो रहाभ्यां शरोचि न द्वित्वमिति षकारस्य द्वित्वाभावः । (जाहर्मि) । लोटि (जाहर्हि )। ( जाहर्य्याणि ) इत्यत्राड् नित्यत्वाद्धलि लोपं बाधते। ( अजाहर्यीत् ) । इडभावे वलिलोपहलङ्यादिलोपयोः (अजाहः । अजाहर्त्ताम् । अजाहर्युः। अजाहर्य्यम् । हर्य्ययति । अजहर्यत् हर्य्यित्वा । हर्य्या) स्त्रियामकारः । क्विपि वलि लोपे (हः । हर्य्यतो) यज्ञः । "हशियजियच्यनि महर्य्येभ्योतच्" इत्यतच् ॥ ५०९ ॥

अल भूषणपर्याप्तिवारणेषु ॥ अलति । आल । अलिता । मा भवानालीत् । *अतो ल्रान्तस्य* अकारसमीपरेफलकारान्ताद्धातोः परस्मैपदपरे सेटि सिच्यितो वृद्धिरिति वृद्धिः। (अलिषति । आलयति । आलिलत् । अलित्वा । अलितः। अलकम् ) "संज्ञायाम्" इति क्वुन् । (अलका) । टापि "प्रत्ययस्थात्कात्" इति । क्षिपकादित्वान्नभवति (अलिः) इगुपधादिभ्यः" (आली) कृदिकारत्वात् ङीप् ) (अलीकम् ) । अलीकादयश्चेति कन् । अत्र मैत्रेयोऽकारमनुनासिकस्वरितमिच्छतीत्याह । तत्रालतइत्यादि ॥५१० ॥

ञिफला विशरणे ॥ ञित्त्वं "ञीतः क्तः" इति वर्त्तमानक्तार्थम् । ( फलति । पफाल । फेलतुः ) । "तृफलभजत्रपश्च" इति किति लिटि थलि च सेट्येत्वाभ्यासलोपौ । निरनुबन्धकपरिभाषायाः प्रत्ययग्रहणविषयत्वादस्यापि तत्र ग्रहणं, न केवलं फलनिष्पत्तावित्यस्यैव । अन्ये त्वियं परिभाषा सार्वत्रिकीति भजत्रपश्चेति च शब्देन सानुबन्धकमस्मुं समुच्चिन्वन्ति। उभयथा रूपे न विवादः । (फलितेत्यादि । अफालीत् ) इत्यत्र "अतो लरान्त इति" वृद्धिः (पिफलिषति । पम्फुल्यते । पम्फुलीति । पम्फुल्तः । पम्फुल्मि। । "चरफलोश्च" इति यङि यङ्लुकि अभ्यासस्य नुक् । अत्रापि पूर्ववत् सानुबन्धकस्यापि "उत्परस्यात" इत्यभ्यासाच्चरफलाकारस्योत्वम् । तपरकरणं लघूपधगुणनिवृत्त्यर्थम् । (फालयति । अपीफलत् । फलम्) । अच् । (फलित्वा । फुल्लः) अस्याकर्मकत्वात्कर्तृभावाधिकरणे क्तः। "आदितश्च" इति निषेधे "अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः" इति निपातनान्निष्ठातकारस्य लत्वत् । अत एव निपातनादुत्वं च । यद्वा लत्वस्यासिद्धत्वात्तकारादिप्रत्ययपरत्वात् "ति च" इत्युक्ते "आदितश्च" इतिनिषेधस्य "विभाषा भावादिकर्मणोः" विकल्पनात् (फलित न) इत्यपि भवति । अनुपसर्गादिति वचनादुपसृष्टस्योत्वे (लत्वाभावात्प्रफुल्तम् ) इति भवति । समुत्पूर्वत्वे तु [उत्फुल्लसंफुल्लवोरुपसंख्यानम्"] इति लत्वम् । क्तवतोरप्येतल्लत्वमिष्यतइति वृत्तिः। तेन (फुल्लवान्) इति भवति । (फल्गुः) फलिपाटीत्यादिनोप्रत्यये गुगागमः । क्विपि (फल्) फलिवाचरतीति "सर्वप्रातिपदिकेभ्यः" इति क्विपि फलो धातुत्वे (फलति । प-

फाल । फेलतुः । फेलुः पम्फुल्यते ) इत्यादि प्रकृतिवत् । प्रत्ययान्तधातुत्वे आम् न भवति, [ कास्य नेकाच ] इति उक्तत्वात् । निष्ठायां फलितिमिति नित्यमिडेवादित्त्वाभावात् ॥ ५११ ॥

मील श्मील क्ष्मील निमेषणे ॥ निमेषणं सङ्कोचः द्वितीयस्तालव्यादि । तृतीयो दन्त्यादिः ( मीलति । मिमील । मीलिता ) इत्यादि । ( मिमीलिषति । मेमील्यते । मेमीलीति । मेमील्ति । मीलयति । अमीमिलत् । अमिमीलत् ) "भ्राजभास०" इत्यादिना णौ चङ्युपधाया ह्रस्वविकल्पः। श्मीलति । क्ष्मीलतीत्यादि। मिल श्लेषणइति ह्रस्वोपधस्तुदादौ॥५१४॥

पील प्रतिष्टम्भे ॥ प्रतिष्टम्भो रोधनम् । ( पीलति पिपील । पीलितेत्यादि । पीला नाम) का चित् । इगुपधलक्षणे कप्रत्यये टाप् । पीलाया अपत्यं (पैलः) । "पीलाया वा" इत्यण् । तदभावे ढक् च इति (पैलेयः) । अणन्तादपत्याञि "तस्य "पैलादिभ्यश्च" इति लुकि (पैलः) पुत्रः । (पीलुः) । मृगय्वादिभ्यश्चेति उप्रत्ययः । (पीलोः पाकः, पीलुकुणः,) "तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ" इति षष्ठ्यन्तात्पील्वादेः कर्णादेश्च यथासंख्यंपाकमूलयोः कुणब्जाहचोविधानादस्मात् कुणप् , ककारस्य "लशक्वतद्धिते" इति तद्धितत्वान्नेत्वम् ॥५१५॥

णील वर्णे (नीलति । प्रणीलति । निनील । नीलिता इत्यादि । नीलः) इगुपधलक्षणः कः । (नीली) औषधिर्वडवा च । "जानपद०" इत्यत्र [नीलादोषधौ प्राणिनिच ] इति ङीप् । अन्यत्र नीला शाटी । जानपदाभावे च संज्ञयां वेति वचनात्संज्ञायां (नीलि नीला) इत्युभयं भवति । नील्या रक्तं वस्त्रं (नीलं) "तेन रक्तं रागात्" । रज्यतेऽनेनेति रागः, शुक्लस्य वर्णान्तरापादनमिह रञ्जेर्धर्म इति वृत्तिः । रागवचनातृतीयान्ताद्रक्तार्थे यथाविहितं प्रत्यय इत्यणि प्राप्ते [नील्या अन्वक्तव्यः ] इत्यन् । णिल गतौ इति ह्रस्वोपधस्तुदादौ ॥ ५१६ ॥

शील समाधौ ॥ (शीलतीत्यादि । शीलम् ) इगुपधलक्षणः कः, घञ् च । शीले समाधाने भवा वृत्तिः (शैली) । अणि ङीप् । शील उपधारणइति चुरादौ । शिल उञ्छइति ह्रस्वोपधस्तुदादौ ॥ ५१७ ॥

कील बन्धने ॥ कीलतीत्यादि । कीलः । इगुपधलक्षणः कः, "हलश्च" इति घञ् वा । (कीलकं) संज्ञायां कन् , कुन्चा ॥ ५१८ ॥

कूल आवरणे ॥ (कूलतीत्यादि । कूलं) पूर्ववत्कः ॥ ५१९ ॥

शूल रुजायां संघाते च ॥ (शूलति । शूलम्)शूलेषु संस्कृतं (शूल्यम्) *शूलोखाद्यत्*इति सप्तम्यन्तत्संस्कृतमित्यर्थे यत् । शूले पचति (शूलाकरोति)।शूले प्रोप्य पचतीत्यर्थः, "शूलात्पाके"इति कृञा योगे डाच् । (डाचि बहुलं द्वे भवतः) इति द्वित्वम् , अव्यक्तानुकरणस्य डाजन्तस्य नेष्यतइत्युक्तत्वान्न भवति । "ऊर्यादिच्विडाचश्च" इति डाजन्तस्य निपातत्वं गतित्वं च । तत्र निपातत्वेऽव्ययत्वात्सोर्लुक्, गतित्वात् शूलाकृत्येत्यत्र "कुगतिप्रादयः" इति समासे क्त्वो ल्यप् , अयःशूलेनान्विच्छति ( आयःशूलिकः ) "अयःशूलदण्डाजिनाभ्यां ठक्ठञौ" इति तृतीयान्तादस्मादन्विच्छतीत्यर्थे यथासंख्यं ठक् । अयःशूलशब्देन क्रूराकार उच्यते ॥ ५२० ॥

तूल निष्कर्षे ॥ निष्कर्षो निष्कोषणं तच्चान्तर्गतस्य बहिर्निःसारणम् ( तूलति । तूलम् । तूलेनानुकुष्णाति, अनुतूलयति ) "सत्यापपाश०" इत्यादिना णिचि टिलोपः । णौ चङ्यग्लोपित्वात् ( अतुतूलत् ) ॥ ५२१ ॥

पूल संघाते ( पूलति । पूलः ) ॥ ५२२ ॥

मूल प्रतिष्ठायाम् ( मूलति । मूलम् । मूले जातो मूलकः ) "पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करादुवुन्" इति तत्र जात इति विषये वुन् । नक्षत्राणोपवादः । उत्पाटनीयं मूलमस्य इति मूल्यो मुद्गः मूलमस्याबर्हि इत्यौपाधिकात्प्रथमान्तान्मूलादस्येत्यर्थे यत् । आबर्हीति बृहू

उद्यमनइत्यस्माद्भावे घञा वर्हः । सोस्यास्तीतीनिः । उद्यमनमिहोत्पाटनं, ये सुपक्वा मूलो-त्पाटनमन्तरेण ग्रहीतुं न शक्यन्तइति ते एवमुच्यन्ते, मुद्गादिषु मध्यतो लूयमानेषु कोशा अ-पि लूयेरन्नित्यवश्यमेषां मूलमुत्पाटनीयम्, मूलेनानाम्यं (मूल्यं) लाभाख्यं द्रव्यम् । "नौ-वयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्य्यतुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु" इति यथासंख्यं मूलादानाम्ये यत्, आनाम्यमभिभवनीयं शेषीक्रियमाणमित्यर्थः । मूलं नाम पादादीनामुत्पत्त्यर्थं वणिग्भिर्विनियुक्तं द्रव्यं, तेन हि स्वस्मादतिरिक्तं लाभाख्यं शेषीक्रियते । आत्मन उपकारकं क्रियते, यतः स्वयं तेन सगुणी, गुणो भागः, इदमेव मूलमस्य भागीकरणं, तत्प्रति मूलस्योपकारकत्वं शेषत्वमानाम्यत्वं च । मूलेन समो (मूल्यः) पटः । उपादानसमानफल इत्यर्थः । अनेनैव सूत्रेण तृतीयान्तान्मूलात्समे यत् । न विद्यते मू-लमस्याः सा (अमूला) "पाककर्ण०" इत्यादिना प्राप्तं ङीषं बाधित्वा "मूलान्नञः" इत्यजा-दिपाठाट्टाप् । (शतमूली) । "पाककर्ण०" इत्यादिना ङीष् । अयं रोहणार्थश्चुरादिः ॥५२३॥

फल निष्पत्तौ ॥ (फलति) इत्यादि ञिफलावत् । (फलितम्) इति निष्ठायामिडत्र । फलतीति फलं (संफल) । पाककर्ण०" इति ङीषं बाधित्वा संभस्त्राजिनशणपिण्डेभ्यः फलात्" इत्यजादि-पाठाट्टाप् । भस्त्रफलादयोप्येवम् । "ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्" इति ह्रस्वः । अल्पं फलं, (फलिका) । ततोन्यत्फलम् । फलं च तत्फलिका च (फलाफलिका) । [कृतापकृतादीनामुपसं-ख्यानम् ] इति कर्मधारयः । "अन्येषामपि दृश्यते" इति दीर्घः पूर्वपदस्य । एकमेव फलमत्र-स्थाभेदादल्पत्वमहत्त्वाभ्यां युज्यते । (त्रिफला) । अजा दिदर्शनाट्टाप् । (फलिनः) । [फलबर्हाभ्यामिनज्वक्तव्यः] इति मत्वर्थे इनच् । (फलकं) संज्ञायाम् कन् । निष्पाद्यते कृषि-रनेनेति फालः । "हलश्च" इति करणे घञ् ॥ ५२४ ॥

चुल्ल भावकरणे ॥ भावकरणमभिप्रायाविष्कारः । चुल्लिः । (चुल्ली) । इनन्तत्वा-द्वा ङीष् ॥ ५२५ ॥

फुल्ल विकसने ॥ (फुल्लति । फुल्लः । अच् । फुल्लित्वा । फुल्लितः) ॥ ५२६ ॥

चिल्ल शैथिल्ये भावकरणे च ॥ (चिल्लति । चिल्लः) तिल गतौ इति दुर्गमैत्रयौ । तिल्लेत्यन्ये । (तेलतीत्यादि । तिलः) । इगुपधलक्षणः कः । तिल स्नेहनइति तौदादिकाद्वा । तिलानां भवनं क्षेत्रं (तिल्यं तैलीनम् ।) "विभाषा तिल०" इति यत्खञौ । तिलेभ्यो हितं (तिल्यम्) "खलयवमाषतिलवृषब्रह्मणश्च इति चतुर्थ्यान्ताद्धितार्थे यत् । निष्फलस्तिलः (तिलपेजः) । तिलपिञ्जः) । "तिलान्निष्फलात्पिञ्जपेजौ" इति तौ । (तिलकम्) संज्ञायां क्वुन् । तिल स्नेहनइति चुरादौ च ॥ ५२७ ॥

वेल्ल चेल्ल केल्ल खेल्ल क्ष्वेल्ल वेल्ल चलने ॥ (वेलतीत्यादि । वेला) । "गुरोश्च" इत्यकारः । (चेलति । चेलः) । पचादौ चेलडिति पाठात् अच्, टित्वं स्त्रियां ङीबर्थं, चिल वसनइत्य-स्माद्वा चेलम् । प्रसङ्गादत्र किं चिदुच्यते । कुत्सिता ब्राह्मणी ब्राह्मणिचेलीति "कुत्सितानि कुत्सनैः" कुत्साहेतुधर्मवचनैः समानाधिकरणैः समस्यन्तइति तत्पुरुषः । "घरूप" इत्यादिना ह्रस्वः । चेलादयो वृत्तिविषये कुत्सनवचना इति भवताबुक्तम् । तत्र चेलमकुशलेनेन तन्तुवा-येनोत्पादितं भवति, तत्सादृश्याद् ब्राह्मण्यादिषु वृत्त्या चेलशब्दस्य कुत्सनवचनत्वम् । (स्त्रि-चेली, स्त्रीचेली वा, वामोरुचेली, वामोरूचेली वा ।) *नद्याः शेषस्यान्यतरस्याम्* इति ह्रस्व विकल्पः अङीच या नदी ङ्यन्तं च यदेकाच् सशेषः तस्य घादिषु वा ह्रस्व इति सूत्रा-र्थः । अत्रान्तरेणापि शेषग्रहणं पूर्वसूत्रव्यतिरिक्तविषयत्वे सिद्धे तत्सामर्थ्यात्पूर्वश्रुतङ्यन्ता-नेकाजपेक्षं शेषत्वं बोधयितुं, तेन यद्ङ्यन्तमनेकाच्च ङ्यन्तमेकाच् तत्रैवायं विकल्प इति यद्भाषितपुंस्कमामलक्यादि यच्च समानायामाकृतौ अभाषितपुंस्कं द्रोण्यादि पूर्वसूत्राविषयं तत्र न भवति । (लक्ष्मीचेली यवागूचेली) । इत्यादौ च ङ्यन्तनदीत्वेपि [कृन्नद्याः

प्रतिषेधः] इत्युक्तत्वान्नायं विधिर्भवति। (श्रीचेली) इत्यादौ तु नदीग्रहणान्नास्य प्रसङ्गः। नापि पूर्वसूत्रस्य, ङ्यन्तानेकाच्त्वाभावात्। (विदुषीचेली) इत्यादौ *उगितश्च* उगितः परा या नदी तस्या ह्रस्वविकल्पः विद्वच्छ्रेयसोः पुंवद्भावोत्र पक्षे वक्तव्य इति वृत्तावुक्तत्वात् (विद्वच्चेली) इत्यपि भवति। ( केलति। केलिः )। इन्प्रत्यये (केली)। अप्रत्ययः ( केला। केलयति )। "कण्ड्वादिभ्यो यक्" इति स्वार्थे यक् सनाद्यन्तत्वेन धातुत्वे लडादि। ( खेलति। खेला ) अयमपि कण्ड्वादिः ( वेल्लति। वेल्लो विषम् )। संज्ञायां घञ्। ( वेल्लयति ) वेल्लादीनां पञ्चानामृदित्त्वाच्चङीति ह्रस्वाभावात ( अविवेल्लदिति ) भवति। वेल्लस्त्वनुपधात्वान्न ह्रस्वप्रसङ्गः॥ ९३३॥

पेलृ शेलृ फेलृ गतौ॥ ( पेलति। अपिपेलत् पेला) भुक्तमुज्झितम्। (शेलति।-अशिशेलत् ) अत्र क्वचित्खेलृषेलृसेलृ इत्यपि त्रयः पठ्यन्ते। तत्र खेलतिमैत्रेयाद्यनुसारेणाग्रे पठिष्यते। सेलतेस्तु दन्त्यादेः पाठः षोपदेशपर्युदासकाक्येनुपादानादनार्षः। मूर्द्धन्यादिस्तु सेलुः श्लेष्मान्तक इत्यादिदर्शनाद् ग्राह्यः॥ ९३६॥

स्खल संचलने॥ ( स्खलति। चस्खाल। अस्खालीत् )। णौ घटादित्वात ( स्खलयति,॥ ९३७॥

खल संचये॥ खलति। (चखाल। अखालीत्)। खलति पापानि संचिनोतीति, (खलः)। खल्यते संचीयते धान्यादिकमिति (खलम्)। "खनो घच" इत्यत्र वृत्तिः खलं भगः पदं चेति वक्तव्यमिति। अत्र हरदत्तः। घित्करणसामर्थ्यादन्येभ्योप्ययं भवति, नहि खनः कश्चिदवयवः कुत्वभागस्ति। खलानां समूहः, (खल्या)। "खलगोरथात्" इति षष्ठ्यन्तात्समूहे यत्, (खलिनी)। 'इनित्रकट्यचश्च" इति पुर्वत्रैव विषये इन्यादिविधानादिह यथासंख्यादिनिः सर्वे एते यादयः स्वभावात् स्त्रीविषयाः। खलाय हिता ( खल्या ) "खलयव०" इति यत्। यस्मिन्काले खले यवा भवन्ति स कालो (खलेयवः)। एवं (खलेबुसम्)। "तिष्ठद्गुप्रभृतीनि च" इत्यव्ययीभावः। तत्र ह्येवं पठ्यते, खलयवादीनि प्रथमान्तानि विभक्त्यन्तरेण न संबध्यन्ते, अन्यपदार्थे च वर्त्तन्ते इति। नैतौ प्रथमान्तावेव अव्ययीभावात् "अव्ययीभावश्च" इति नपुंसकत्वम्। खलन्ति संचलन्ति केशा अस्मादिति (खलतिः)। अयं च भीमादिषु पाठात् "भीमादयोपादाने" इत्यपादानविषयः।अत्रैव पाठादेवातिप्रत्यये धातूनामनेकार्थत्वात्संसचलने वृत्तिः। यद्वा पूर्वस्यैव धातोर्भीमादिषु पाठात् सलोपः। (खलत) इत्यपि निपातितः। शास्त्रं शाठ्यं शिरोमध्यं च॥ ९३८॥

गल अदने॥ ( गलति। अगालीत्। गलः ) "गोचरसंचर०" इत्यादौ चकारेण "पुंसि संज्ञायां घः प्रायेण" गिरतेर्वा॥ ९३९॥

षल गतौ॥ (सलति। सालयति। असीषलत्। सालः ) अकर्त्तरि च कारके०" इति संज्ञायां घञ्। (सलिलम्)। सलिकलि०" इत्यादिनेलच्॥ ९४०॥

दल विशरणे॥ (दलति)। णौ घटादित्वात (दलयति) दाडिमम्। दालशब्दात् घञन्ताच्चेन निवृत्तमित्यत्र विषये [ भावप्रत्ययान्तादिमज्वक्तव्यः ] इतीमच् डलयोश्चाभेदः कुं दलतीति (कुद्दालः) पृषोदरादिः। अयं घटादावपि॥ ९४१॥

श्वल श्वल्ल आशुगमने ( श्वलति। शश्वाल। अश्वालीत् शिश्वलिषति। शाश्वल्यते। श्वालयति। अशिश्वलत्। श्वल्लति। अश्वल्लीत् ) अत्राङ्गान्त्यस्य लकारस्याकारसमीपत्वाभावात "अतो ल्रान्तस्य" इति वृद्धिर्न भवति॥ ९४३॥

खोलृ खोर्ऋ गतिप्रतिघाते ( खोलति। चुखोल। खोलयति। अचुखोलम् ) ऋदित्त्वाल्लोपधाह्रस्वः ( खोडः खञ्जः ) पचाद्यच्, डलयोरभेदः। एवं (खोरतीत्यादि)॥ ९४५॥

धोर्ऋ गतिचातुर्ये॥ (धोरति। धोरिता। अदुधोरत्। धौरितकः ) अश्वानां गतिवि-

शेषः । निष्ठान्तात्सञ्ज्ञायां कन् ॥ ९४६ ॥

त्सर छद्मगतौ ॥ (त्सरति । तत्सार । तत्सरतुः । त्सरिता । अत्सारीत् ) "अतो ल्रान्तस्य" इति वृद्धिः । )तित्सरिषति । तात्सर्य्यते । तात्सरोति। तात्सर्त्ति ।तात्सर्पि। अतात्सः। त्सरुः।) "भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः" इति उप्रत्ययः । त्सरौ कुशलः (त्सरुकः) "आकर्षादिभ्यः कन्" इति सप्तम्यन्तात् कुशल इत्यर्थे कन् ॥ ९४७ ॥

क्मर हूर्छने । (क्मरति । चक्मार । क्मरिता । अक्मारीदित्यादि) पूर्ववत् ॥ ९४८ ॥

अभ्र वभ्र मभ्र चर गत्यर्थाः ॥ चरतिर्भक्षणार्थोऽपि ( अभ्रति । आनभ्र । अभ्रिता । मा भवानभ्रीत् । अङ्गान्त्यस्य रेफस्याकारसमीपत्वाभावात् "अतो ल्रान्तस्य" इति न वृद्धिः ( अबिभ्रिषति । अभ्रर्यते । आबिभ्रत । अभ्र्याद् ) इत्यत्र रेफस्य हलः परत्वाद्यम्परत्वाच्च "हलो यमाम्०" इति पाक्षिको लोपो न भवति । तत्र यथासंख्याश्रयणात् । तथा चोत्तरसूत्रे सवर्णग्रहणमर्थवत् । उक्तं च वृत्त्यादौ सवर्णग्रहणस्य फलं शिण्ढीत्यादौ यथासंख्यनिरासः (अभ्रम्) । अच् । भ्रमो वा व्युत्पादयिष्यते । (अभ्री) इनन्तः काष्ठकुद्दालः । (अभ्रकम्) । संज्ञायां कन् (वभ्रति । ववभ्र । वभ्रिता । विवभ्रिषति । वावभ्र्यते) उक्तो रेफे लोपाभावः (वावभ्रित) भकाररेफतकाराः संयुज्यन्ते। "अनचि च" इति भकारस्य पक्षे द्विर्वचने "झलां जश् झशि" इति पूर्वस्य जश्त्वेन बकारभकाररेफतकाराः द्रष्टव्याः । लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगांतलोपे च "झलां जशोन्ते" इति जश्त्वे च "वावसाने" इति चर्त्वं ( अवावब् । अवावप् ) एवं (मभ्रतीत्यादि चरति । चचार । चेरतुः चेरुः चरितेत्यादि । अचारीत् ) "अतो ल्रान्तस्य" इति वृद्धिः (चिचरिषति । चञ्चूर्यते ) "लुपसदचर०" इति भावगर्हायामेव यङ् । "चरफलोश्च" इत्यभ्यासस्य नुकि "उत्परस्यात" इत्युत्वे तस्य हल्परत्वे "हलि च" इति दीर्घः ( चञ्चुरीति । चञ्चूर्ति ) अत्र दीर्घस्य पूर्वत्रासिद्धत्वेन प्राप्तो लघूपधगुण उदिति तपरकरणसामर्थ्यान्न भवति, तपरत्वं हि विकारनिवृत्त्यर्थम् । यद्येवं दीर्घोपि निवर्त्तेत इति न मन्तव्यम् । यतस्तपरत्वेन निवृत्तौ प्रसक्तायामपि दीर्घत्वमसिद्धम् । (अचञ्चूः) लङि तिप्सिपोर्हल्ङ्यादिलोपे रेफस्य विसर्जनीयः । यदायमुत्पूर्वः सकर्म्मकस्तदा "उदश्चरः सकर्मकात्" इति तङ्, गुरुवचनं (उच्चरन्त) इति उत्क्रम्य गच्छन्तीत्यर्थः । तथासमुपसृष्टात् "समस्तृतीयायुक्तात्" इति तङ् (अश्वेन सञ्चरतइति) सम इतीयं षष्ठी तेन व्यवहितेपि भवति (अश्वेन समुदाचरते इति । (चर्य्यम्) "गदमदचर०" इति भावकर्मणोर्यत् । अनुपसर्गे इति वचनात्सोपसर्गे उपचार्य्यामतिण्यदेव, (आचार्यादेशः [चेराङि चा गुरौ] इति यत् गुरौत्वाचार्य इति ण्यदेव आचार्य्यस्य स्त्री ( आचार्य्यानी ) "इन्द्रवरुण०" इत्यादिना ङीपानुकौ । [ आचार्य्यादणत्वं च ] इति णत्वाभावः । चरतीतिचरः । चरडिति पचादिपाठादच् टित् । स्त्रियां (चरी) । चरस्य गोत्रापत्यं ( चारायण ) । "नडादिभ्यःफक्" इति षष्ठ्यन्ताद्गोत्रापत्ये फक्, फस्यायनादेशः । (चराचरः) । [चरिचलिपतिवदीनां वा द्वित्वमच्याक्चाभ्यासस्य] इति अचि पक्षे द्विर्वचनम् । अभ्यासस्यागागमः, आगमसामर्थ्यान्न हलादिशेषः । अन्यथादेशमेव कुर्यात् । दीर्घोच्चारणसामर्थ्यान्न ह्रस्वः । (कल्याणाचारः । कल्याणाचारा) । "शीलिकामि०" इत्यादिना कर्म्मण्युपपदे णः । कुरुषु चरतीति (कुरुचरः,) "चरेष्टः" इत्यधिकरणे उपपदे टप्रत्ययः। टित्त्वात् स्त्रियां (कुरुचरी । भिक्षाचरः) "भिक्षासेनादायेषु च" इति भिक्षादिषूपपदेषु टप्रत्ययः । एवं (सेनाचर आदायचर)।इत्यनधिकरणार्थमिदं सूत्रम् । (चरिष्णुः) "अलंकृञ्०" इत्यादिना इष्णुच् । (अतिचारी । अपचारी ) । "संपृच०" आदिना ताच्छीलिको घिनुण् । ब्रह्म वेदस्तदर्थं व्रतं चरतीति (ब्रह्मचारी) । "सुप्यजातौ०" इति णिनिः,।समानो ब्रह्मचारी (सब्रह्मचारी) *चरणे ब्रह्मचारिणि* इति चरणे गम्यमाने समानस्य सभावः । चरणशब्दः शाखाध्यायिषु रूढः, सब्रह्मचारिण इमे (साब्रह्मचाराः) [ नान्तस्य टिलोपे सब्रह्मचारिपीठसर्पिकलापिकौथु-

मितैतिलिजाजलिलाङ्गलिशिलालिशिखण्डिसूकरसद्मसुपर्वणामुपसंख्यानम् ] इति टिलोपः। चर्य्यतेनेनेति (चरित्रम्) "अर्त्तिलूधूसूखनसहचर इत्रः" इतीत्रः, करणे प्रज्ञादिपाठात्स्वार्थेऽणि चारित्रम्, (गोचरो विषयः, सञ्चरो मार्गः।) "गोचरसञ्चर" इत्यधिकरणे घञ्प्रत्ययान्तो निपात्यते। अत्र सञ्चरत्यनेनेति (सञ्चर) इति वृत्तिः। तत्र सुधाकरः। "समस्तृतीयायुक्तात्" इति तङ भाव्यमिति। "परिचर्यापरिसर्या०" इत्यादीना स्त्रियां भावे शे यक्। चरितं तदिति (चर्म।) "मनू" इति मन्। अयं "उणादयो बहुलम्" "भूतेपि दृश्यन्ते" इति भूते चर्माण्यस्याः सन्ति (चर्मण्वती नदी) "आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती" इति मतुपि नलोपाभावो णत्वं च संज्ञायां निपात्यते। (चर्मी)। "व्रीह्यादिभ्यश्च" इति मत्वर्थे इनिः "नस्तद्धिते" इति टिलोपः। चर्मिणोऽपत्यं (चार्मिकायणिः)। "वाकिनादीनां कुक्च" इति फिञ् कुक्चागमः। कुकि नान्तत्वाभावेऽपि [चर्मचर्मिणोर्नलोपश्च]इति वचनान्नलोपः।सर्वचर्मणा कृतः (सर्वचर्मीणः। सार्वचर्मीणः)। *सर्वचर्मणः कृतः खखञौ* इति कृत इत्यर्थे तृतीयान्ताद् अस्मात् खखञौ, सर्वचर्मण इत्यसमर्थः समासः, यतः सर्वशब्दस्य कृत इत्यनेन सम्बन्धो वृत्त्यादावुक्तः। चर्मणः कोशः(चार्मः।) "[चर्मणः कोश उपसंख्यानम्]" इति टिलोपः, अन्यत्र "अन्" इति प्रकृतिभावात (चार्मणं चक्षुः)। (चारु)। दृसनिजनिचरीति ञुण् प्रत्ययः।(चरुः) भृमृशीतृचरीत्युप्रत्ययः। अयं हि भीमादित्वादपादाने चरन्त्यस्मादिति हि व्युत्पत्तिः। (चरकः) वुक्, चरकेण प्रोक्तमपि। (चरकम्)। "तेन प्रोक्तम्" इत्यण्, "कठचरकाल्लुक्" इति लुक्,चरको नाम वैशम्पायनः। उक्तं च "कलापिवैशम्पायनान्तेवासिभ्यश्च" इत्यत्र (अलम्बिश्चरकः) प्राचां पतिलिटिकमलानुभावान्युपादाय चरको नाम वैशम्पायन इति, तत्राभेदविवक्षायां भव्यादीनामिदं विशेषणं, चरकाय हितं (चारकीणम्)। "माणवचरकाभ्यां खञ्" इति "तस्मै हितम्" इति विषये खञ्। चर सञ्चयन इति चुरादौ ॥ ५५२ ॥

ष्ठिवु निरसने ॥ [सुब्धातुष्ठिवुष्वष्कर्तीनां प्रतिषेध] इति प्रतिषेधः सत्वस्य। अस्य द्वितीयस्थकारष्ठकारो वेति वृत्तिः, आचार्येण शिष्येभ्य उभयथा प्रतिपादनात् उभयमपि प्रमाणमिति व्याख्यातारः ( ष्ठीवति ) "ष्ठिवुक्लमुचमां शिति" इति दीर्घः ( तिष्ठेव। तिष्ठिवतुः। अभ्यासे खयः शेषः ( ष्ठेविता। ष्ठेविष्यति। ष्ठीवतु। आशिषि ष्ठीव्यात् ) "हलि च" इति दीर्घः ( अष्ठेवीत्। तिष्ठेविषति। तुष्ठ्यूषति ) "सनीवन्तर्द्ध०" इति सनः पक्षे इडागमः, अन्यदा च "हलन्ताच्च" इति सनः कित्त्वे वलि लोपं बाधित्वा "च्छ्वोः शूठ०" इति ऊठि यणादेशे द्विर्वचनम्। अत्र वर्णमात्राश्रयत्वेन चान्तरङ्गे यणि कर्त्तव्ये बाह्यप्रकृतिप्रत्ययाश्रयत्वेन बहिरङ्गस्योठोऽसिद्धत्वं न भवति 'नाजानन्तर्ये' इति निषेधात् ( तेष्ठीव्यते। ष्ठेवयति। अतिष्ठिवत् ) ऊड्भाविनां वकारान्तानां यङ्लुङ्नास्तीति तेवतावुक्तम्। ठकारपक्षे सर्वत्राभ्यासे टकार उदाहार्यः। ( टिष्ठेवेत्यादि। ष्ठेवित्वा। ष्ठ्यूत्वा ) उदित्त्वादिड्विकल्प इति "न क्त्वासेट्" इति कित्त्वनिषेधाद्गुणः, अन्यदा तु कित्त्वादूठि यणादेशः। ष्ठ्यूतः। ष्ठ्यूतिः। "यस्य विभाषा" "सितुत्र०" इत्यनिट्त्वम् ( ष्ठीवनम्। ष्ठेवनम् ) पृषोदरादित्वात्पक्षे दीर्घः, तथा च चान्द्रसूत्रम्। "ष्ठिवुसिवोर्दीर्घश्च" इति। अयं दिवादावपि ॥ ५५३ ॥

जि जये॥ अत्र मैत्रेय उत्तरधातुसादृश्यानुरोधेनाजन्तोप्यत्र निर्दिश्यतइति। इह जय उत्कर्षप्राप्तिरित्यकर्मकोयम्। यस्त्वग्रेऽभिभवार्थः स सकर्मकः। यदाह देवः—

जयिर्जयाभिभवयोराद्येर्थेऽसावकर्मकः।
उत्कर्षप्राप्तिराद्योर्थोऽद्वितीयेर्थे सकर्मक इति ॥

( जयति। जिगाय। जिग्यतुः। जिगयिथ। जिगेथ। जिग्यिव ) *सन्लिटोर्जेः* इत्यभ्यासादुत्तरस्य कुत्वं गकारः। अजन्तत्वादनिट्त्वे क्रादिनियमादिट् थलि तु भारद्वाजनियमादिड्विकल्पः। अजादौ क्ङिति लिटि "एरनेकाच०" इति यण् ( जेता। जेष्यति।

जयतु। अजयत्। जयेत्। जीयात्) "अकृत्सार्वधातुकयो०" इति दीर्घः (अजैषीत्। जिगीषति) "इको झल्" इति सनः कित्त्वान्न गुणः *अज्झनगमां सनि* अजन्तानां हन्तेर्गमेश्च झलादौ सनि दीर्घ इति दीर्घः। पूर्ववदभ्यासात्परस्य कुत्वम्। (जेजीयते। जेजयीति। जेजेत्ति। जेजितः। जेज्यति)। अजादौ क्ङिति यण्। (जापयति) "क्रीङ्जीनां णौ" इत्येचःस्थाने आत्वे पुगागमः। (अजीजपत्। विजयते। पराजयते) "विपराभ्यां जेः" इति तङ्। अयं प्रकृतिग्रहणन्यायेन यङ्लुगन्तादपि (विजेजिते पराजेजित इति)। यङ्लुगन्तात्सनि "सन्लिटोर्जेः" इति कुत्वं न भवति, तत्र प्रत्यासत्त्या सन्लिङ्निमित्तस्यैवाभ्यासस्य ग्रहणात्। तथा च वृत्तिः। सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यास इति। "विपराभ्याम्" इत्यत्रोपसर्गयोर्ग्रहणात् (परा जयति सेना) त्यादौ तङ् न भवति। अस्याकर्मकत्वात्सत्र्वे कृतो न सन्तीति तन्त्रेणासिभवार्थे प्रदर्शयिष्यन्ते॥ ९९४॥

जीव प्राणधारणे॥ प्राणलक्षणस्य कर्मणो धात्वर्थेनोपसंग्रहणादकर्मकोयम् (जीवति। जिजीव। जीवितेत्यादि। जिजीविषति। जेजीव्यते) वकारान्तानामूठ्भाविनां यङ्लुङ् नास्तीति तेवतावुक्तम् (जीवयति। अजिजीवत्। अजीजिवत्) "भ्राजभास०" इत्यादिना णौ चङ्युपधाह्रस्वविकल्पः। (यावज्जीवम्)। "यावति विन्दजीवोः" इति यावत्युपपदे णमुल्। (जीविका) [धात्वर्थनिर्देशे ण्वुल् वक्तव्यः] इतिण्वुल्। जीवनस्य मूतो (जीमूतः)। पृषोदरादिपाठाज्जीभावः। उणादौ तु जेर्मुट् चोदात्त इति जयतौ व्युत्पादितः। (जीवातुः)। "जीवेरातुः" इत्यातुप्रत्ययः। (जैवातृकः)। "जीवेरातृकन् वृद्धिश्च" इति आतृकनि वृद्धिः। (जीवन्तः)। "रुहिनन्दिजीविप्राणिभ्यो झच् षिद्धाशिषि" इति झच्, षिद्भावात् स्त्रियां ङीषि (जीवन्ती)। जीवन्तस्य गोत्रापत्यं, (जैवन्तायनः)। "द्रोणपर्वतजीवन्तादन्यतरस्याम्" इति गोत्रापत्ये वा फक्। तदभावे इञि (जैवन्तिः)॥ ९९९॥

पीव मीव तीव णीव स्थौल्ये। (पीवति। पिपीव। पीविता। पिपीविषति। पेपीव्यते पीवयति। अपीपिवत्। एवं मीवति। तीवतीत्यादि। प्रणीवति) "उपसर्गादसमासेणो०" इति णत्वम्। (पीवरः स्थूलः, मीवरः मानी, तीवरो निषादः नीवरो वणिक्)। "छित्वर०" इत्यादिना तरचि वलि लोपे निपात्यन्ते। टित्त्वात् स्त्रियां ङीपि (पीवरीत्यादि) उणादिवृत्तौ तु पा पाने, तेवृ देवने, मार्ग मार्गणे, णीञ् प्रापण इत्येतेभ्य एते व्युत्पादिताः॥ ९९९॥

क्षीवु निरसने॥ (क्षीवतीत्यादि)। उदित्त्वात् क्त्वायामिड्विकल्पः। (क्षीवित्वा क्ष्यूत्वा)। इडभावे ऊठि यणादेशो निष्ठायां "यस्य विभाषा" इतीड्निषेधात् (क्ष्यूतः) क्षेवु निरसन इति चन्द्रः। (क्षेवतीत्यादि)॥ ९६०॥

उर्वी तुर्वी थुर्वी धुर्वी दुर्वी हिंसार्थाः (ऊर्वति ऊर्वो चकार। ऊर्विता। ऊर्विष्यति। ऊर्वतु। और्वत्। ऊर्वेत्। और्व्यात्। और्वीत्। ऊर्विविषति। ऊर्णयति। मा भवानूर्विवत्) रेफोपधत्वात् "उपधायां च" इति सर्वत्र दीर्घः (ऊर्णः। ऊर्णवान्) ईदित्त्वान्निष्ठायामनिट्त्वे झलादिप्रत्ययपरत्वात् "राल्लोपः" इतिवलोपे रेफस्य हल्परत्वाद् "हलि च" इति दीर्घः। "रषाभ्याम्०" इति निष्ठानस्य णत्वम्, एवं क्विप्यपि "राल्लोपः" इति वलोपे "र्वोरुपधाया०" इति पदत्वे दीर्घः, (ऊः उरौ उर इत्यादि तूर्वति। तुतूर्व। तूर्विता। तुतूर्विषति। तोतूर्व्यते) "हलो यमाम्०" इति वकारस्य लोपो यथासंख्यान्न भवति (तोतूर्वीति। तोतोर्त्ति। तोतूर्त्तः। तोतूर्वति इत्यादि) पिद्वचनेष्वनिदत्त्वं वकारस्य झल्परत्वेनानुनासिकादिप्रत्ययपरत्वेन च राल्लोपे लघूपधगुणः। "हलि च" इति दीर्घत्वं तु गुणे पूर्वत्रासिद्धम्। ङित्स्वरेणैव दीर्घः। तोतूर्वतीत्यत्र परत्वान्नित्यत्वाद् राल्लोपात्पूर्वमदभावे कृते झल्परत्वाभावान्न राल्लोपः। "उपधायां च" इति रेफोपधत्वाद्दीर्घः। (तोतूर्तः) इत्यत्र वलि लोपे "हलि च" इति दीर्घः। अझलादित्वादननुनासिकत्वाच्च राल्लोपस्य न प्रसङ्गः (तोतोर्तु। तोतूर्तात्। तोतूर्हि। तोतूर्त्तम्) उत्तमे राल्लोपस्यानित्यात्वादाडागमः। लुङितिप्सिपोः पर-

त्वाद्राल्लोपे हल्ङ्यादिलोपे ( अतोतोरिति । अतोतूर्वः ) इत्यत्र परत्वाद् जुसि झल्परत्वाभावान्न राल्लोपः ( तूर्वयति । अतुतूर्वत् । तूर्वित्वा । तूर्णः । तूर्णवान् ) ईदित्वान्निष्ठायामनिट्त्वम् ( एवं थूर्वति, दूर्वति, धूर्वतीत्यादि धूः । धुरौ । ) "भ्राजभासभाष०" इत्यादिना क्विपि राल्लोपः । पदत्वे "र्वो०" इति दीर्घः । धूर्ष्वित्यत्र "खरवसानयो" इति विसर्जनीयो "रोः सुपि" रोरेव सुपीति नियमान्न भवति (धूर्पतिः) । [अहरादीनां पत्यादिषु उपसंख्यानम्] इति विसर्जनीयापवादः पक्षे रेफः । उभयत्राप्यादिशब्दः प्रकार इति हरदत्तः । रेफाभावे विसर्जनीयो धूःपतिः । अत्र विसर्जनीयस्य "कुप्वोः ꣹क ꣹पौ च" इति पवर्गपरत्वेन पक्ष उपध्मानीय उदाहार्यः । "इणः षः" इति षत्वमपदादिकवर्गपवर्गपरविसर्जनीयविषयमिति न भवति । (धुर्यो धौरेयः) । "धुरो यड्ढकौ" इति द्वितीयान्ताद्वहतीत्यर्थं यड्ढकौ । धुर्यमित्यत्र "हलि च" इति दीर्घस्य "न भकुर्छुराम्" इति प्रतिषेधः । "र्वो०" इति दीर्घस्तु "यचि भम्" इति भत्वेन पदत्वस्य बाधान्न भवति । सर्वधुरं वहति (सर्वधुरीणः) । "खः सर्वधुरात्" इति खः । ख इति योगविभागात् (दक्षिणधुरीणः । उत्तरधुरीणः) इति वृत्तिः । योगविभागस्येष्टसिद्ध्यर्थत्वाद् (धुरीण) इत्यपि द्रष्टव्यम् । अत्र "ऋक्पूरब्धूःपथामानक्षे" इति ऋगाद्यन्ते समासे अकारस्य सामासान्तस्य विधानात् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इति परवल्लिङ्गतया सर्वधुराया इति निर्देष्टव्ये सर्वधुरादिति निर्देशः शब्दरूपापेक्ष इति वृत्तावुक्तम् । अनक्षइति वचनादक्षस्य धूरक्षधूः दृढा धूरस्य (दृढधूरक्ष) इत्यादावकारो न भवति। (सुधूरतिधूः किंधूरधूः) इत्यत्र "न पूजनात्" "किमः क्षेपे" "नञस्तत्पुरुषात्" इति समासान्ताभावः । पूजायां स्वती परिगणितौ । "किमः क्षेपे" इत्यत्र न्यासान्तरेणापि क्षेपग्रहणं लक्षणप्रतिपदोक्तपरिभाषया "किं क्षेपे" इति विहितस्य क्षेपविषयस्यैव तत्पुरुषस्य लाभे तत्करणात्सा च नेहास्तीति कुत्सिता धूरस्य किंधूः शकट इत्यत्रापि समासान्तो नेत्युक्तं पदमञ्जर्याम्, तद्भाष्यविरोधादुपेक्ष्यमिति । अयं चाकारः समासार्थादुत्तरपदादकृत एव समासे भवति, तेन द्विधुरीत्यादावकारान्तोत्तरपदत्वाद् "द्विगोः" इति ङीप्सिद्धः । एतच्च जेमतावुपपादितम् । एकधुरं वहति, (एकधुरीणः । एकधुरः) । "एकधुराल्लुक् च" इति लुक् खश्च पक्षे । (धूर्तो हस्ती) । "हसिमृग्रिण्वाम्"इत्यादिना तन् । अक्षेषु धूर्त्तः । "सप्तमी शौण्डैः" इति सप्तम्यन्तं शौण्डादिना समस्यते, ( ब्राह्मणधूर्त्तः ) "पोटायुवती०"इत्यादिना समासः ॥ ५६६ ॥

गुर्वी उद्यमने ॥ मूर्वी बन्धने ॥ ( गूर्वति । मूर्वति । मुमूर्वेत्यादि । गूर्वा ) । "गुरोश्च०" इत्यकारप्रत्ययः । ( मौर्वी ) । "तस्य विकारः"इत्यण्, ङीप् ॥ ५६७ ॥

पूर्व पर्व मर्व पूरणे ॥ (पूर्वति) । "उपधायां च" इति दीर्घः । क्विपि राल्लोपे ( पूः ) । पिपर्त्ती च व्युत्पादयिष्यते । पुरि भवादि (पौरेयम्) । "नद्यादिभ्योढक्" इति शैषिको ढक् । वृत्तौ पूर्वनगरीति पठित्वा केचित्पूर्वनगरीति पठन्ति विच्छिद्य च प्रत्ययं कुर्वन्ति, उभयमपि प्रमाणमित्युक्तम् । (द्विपुरी) "ऋक्पूरब्धू०" इत्यकारः समासान्तः, स चाकृत एव समास इति जम्भतावुक्तं, तेनाकारान्तोत्तरपदद्विगुत्वे ङीप् पूर्ववदत्रापि । स्वतिकिंनञः परत्वे समासान्तो न भवन्ति । पूर्वः । अच् । *'सर्वादीनि सर्वनामानि'* असंज्ञोपसर्जनानि सर्वादीनि सर्वनामसंज्ञानीति सर्वनामत्वे "सर्वनाम्नः स्मै" इति ङेः स्मैभावः ( पूर्वस्मै ) "पूर्वादिभ्यो नवभ्यो वा" इति (पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे ।) इति पूर्वस्य स्मात्स्मिनौ, "आमि सर्वनाम्नः सुट्" इति ( पूर्वेषाम् ) इत्यामः सुडागमः, "बहुवचने झल्येत्" इत्येत्वे षत्वम् । "जसि च" "पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्" इति जसः कार्यं प्रति सर्वनामसंज्ञाविकल्पनात् सर्वनामत्वे "जसः शी" इति शीभावे ( पूर्वे । पूर्वाः ) । जसः कार्यं प्रतीत्युक्तत्वात् "अव्ययसर्वनाम्नामकच् प्राक् टेः" इत्यकचि संज्ञायां विकल्पनाभावात् (पूर्वके । पूर्वका) इति भवति । व्यवस्था नाम स्वाभिधेयापेक्षो ऽवधिनियमः । मासेन पूर्वाय (मासपूर्वाय) इत्यत्र "पूर्वसदृ०"इति तृतीयासमासत्वे "तृतीयासमास" इति सर्वनामत्वाभा-

वः। अत्र समास इति प्रकृते पुनः समासवचनाद्वाक्येपि नेयं संज्ञा। स्त्रियां तु "सर्वनाम्नः स्याड्ढ्रस्वश्च" इति ङिद्वचनेषु स्याडागमे ह्रस्वत्वे (पूर्वस्यै, पूर्वस्याः, पूर्वस्यामिति ।) शीभावाभावदन्तत्वान्न भवति । पूर्वस्मिन्नहनि, (पूर्वेद्युः) ।"सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः" इति द्युप्रत्यये अस्येति लोपो निपात्यते । "तद्धितश्चासर्वविभक्तिः" इति अव्ययश्चायम् । (पुरो वसति । पुरत आगतः, पुरो रमणीयम् )। *पूर्वाधरावराणामसिपुरधवश्चैषाम्* इति सप्तमीपञ्चमीप्रथमान्तेभ्यः पूर्वादिभ्यो ऽसिप्रत्ययः स्वार्थे तत्संनियोगेनैषां यथासंख्यं पुरादय आदेशा इत्यसिप्रत्यये पूर्वस्य पुरादेशः (पुरस्ताद्वसति । पुरस्तादागतः । पुरस्ताद्रमणीयम् ) ।*अस्ताति* च।अस्तातौ परतः पूर्वादिभ्यः पूर्ववत् पुराद्यादेशाः । (पूर्वतः । पूर्वत्र ।) किंसर्वनामबहुभ्यो ऽद्व्यादिभ्यः" इत्यधिकृत्य "पञ्चम्यास्तसिल्" "सप्तम्यास्त्रल्" इति स्वार्थे तसिल्त्रलौ. पुरो भवं (पौरस्त्यम् )। "दक्षिणापश्चात्पुरसस्त्यक्" इति शैषिकस्त्यक्, (पुरस्कृत्य) "पुरोव्ययम्" इति क्रियायोगे गतित्वात् कुगतिसमासे क्त्वो ल्यप् । "नमस्पुरसोर्गत्योः" इति कुप्वोः परतो विसर्जनीयस्य सत्वम्, गतिसंज्ञायामव्ययवचनात् पुरः कृत्वेत्यत्रानव्ययत्वेन गतित्वाभावात् सत्वसमासयोरभावः। पूर्वं कृतमनेन (पूर्वी) *पूर्वादिनिः* इति प्रथमान्तात्पूर्वशब्दादनेनेत्यर्थे इनिः, पूर्वं कृतमनेनेति "सुप्सुपा" इति समासः । (कृतपूर्वी कटम् )"सपूर्वाच्च" इतीनिः । सपूर्वाद्विद्यमानपूर्वादित्यर्थः । (पूर्वपुरुषः। पूर्वपूरुषः) । "पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च" इति समानाधिकरणविशेषणसमासः, (पूर्वः कायस्य पूर्वकायः) *पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे* इति एकदेशिना ऽवयविना षष्ठ्यन्तेन पूर्वादीनि सामर्थ्यादवयववचनानि समस्यन्त इति तत्पुरुषः । एकाधिकरण इत्युक्तत्वादवयविन्येकद्रव्ये सत्ययं समासः । तेन पूर्वः छात्राणामित्यत्र समासो न भवति । ( पूर्वापरम् । पूर्वापरे, पूर्वापरौ ) "विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्" इति द्वन्द्वस्य विभाषयैकवद्भावः । "नपुंसकम्" इति विहितैकवद्भावो नपुंसकलिङ्गः । (पूर्वंपूर्वं पुष्यति)। पूर्वतरं पुष्यतीत्यर्थः । [ पूर्वपरयोरर्थातिशयविवक्षायां द्वे भवतः ] इति द्वित्वम् । ( पर्वति । पपर्व । पर्विता । पिपर्विषति । पापर्व्यते । पापर्ति ) लङ्तिप्सिपोः (अपापः) । क्विपि । "राल्लोपः", (पः, परौ परः, पर्वतः) "भृमृदृशियजिपर्वि०" इत्यादिनातच्, पर्वते भवो मनुष्यः ( पर्वतीयः ) "पर्वताच्च" इति शैषिकः छः । भवादावमनुष्ये "विभाषा ऽमनुष्ये" इत्यणि (पार्वतम्) इत्यपि भवति। तस्य जन्यं रघोर्वीरं पार्वतीयैर्गणैरभूदिति प्रयोगः "तस्येदम्" इत्यणि द्रष्टव्यः । पर्वतोभिजनोस्याः (पार्वती)। *सिन्धुतक्षशिलादिभ्योऽणञौ* इति प्रथमान्तादभिजनोपाधिकादस्येत्यर्थे तक्षशिलादित्वादञि ङीप्, यत्र पूर्वैरुषितः सोभिजनः । एवं (पर्वतितः) इत्यादि । पूर्व निकेतनइति चुरादौ । अत्र देवः । पूर्वयतीति तु यक् । स्वप्न एतत्कण्ड्वादिषु दर्शनादित्याह। गणपाठे पुनः पूर्वशब्दो न दृश्यते, यस्त्वर्थनिर्देशसहिते गणे पठ्यते लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने चेति सोनयोरर्थनिर्देशः । अत एव शाकटायनायां वृत्तावर्थनिर्देशमन्तरेण कण्ड्वादीनां पाठे पूर्वशब्दो न पठ्यते । स्पष्टं चैतत्पुरुषकारे ॥ ६७० ॥

चर्व अदने (चर्वतीत्यादि । चर्वयति देवदत्तं) "निगरणचलने०" इति नित्यं परस्मैपदम् । "गतिबुद्धी०" इति प्रयोज्यस्य कर्मत्वम् ॥ ६७१ ॥

भर्व हिंसायाम् ॥ भर्वतीत्यादि । अयमीदित्स्वपि क्वचित्पठ्यते ॥ ६७२ ॥

कर्व खर्व गर्व दर्पे ॥ (कर्वति । खर्वति । गर्वतीत्यादि । ) कर्वतीतीदित्स्वपि पठ्यते॥६७५॥

अर्व शर्व षर्व हिंसायाम् । ( अर्वति । आनर्व । अर्विता । अर्विविषति । शर्वः ) शृणोतेरौणादिके वप्रत्ययेपि । शर्वस्य स्त्री (शर्वाणी)। "इन्द्रवरुण०"इत्यादिना ङीपानुकौ । (सिसर्विषति)इत्यत्र "स्तौतिण्योरेव०"इत्यषत्त्वम् । ण्यन्तात्सनि (सिषर्वयिषतीति । सर्वः) सर्त्तेर्वप्रत्ययेपि सर्वनामकार्यम् । सर्वस्मिन्काले (सर्वदा) । "सर्वैकान्यकियत्तदः काले दा" इति काले

वर्त्तमानात्स्वार्थे दाप्रत्ययः, "सर्वस्य सोऽन्यतरस्यां दि" इति पक्षे सभावः। सर्वस्मैहितं (सार्वम्। सर्वीयम्)। सर्वपुरुषाभ्यां णढञौ" इत्यत्र [ सर्वाण्णस्य वा वचनम् ] इति उक्त्वा-चतुर्थ्यन्ताद्धितमित्यर्थे छाणौ। (सवदेवः)। "पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन" इति कर्मधारयः। सर्वेषां शुक्लतरः (सर्वशुक्लः),[गुणात्तरेण समासस्तरलोपश्च] इति तरबन्तस्य तरबन्तेन समासस्तरलोपश्च ॥ ६७८ ॥

इवि व्याप्तौ ॥ (इन्वति) इदित्त्वान्नुम्। नुम्विधावुपदेशिवद्वचनादिजादिगुरुमत्त्वात् इन्वाञ्चकार इन्विता। इन्विष्यति। इन्वतु। ऐन्वत्। इन्व्यात्। ऐन्वीत्। इन्विविषति। इन्वयति। ऐन्विवत्, इन्वन्तीति इन्वकाः ) तारकाविशेषाः। संज्ञायां कुन्, क्षिपकादित्वात् "प्रत्ययस्थात्०" इतीत्वाभावः ॥ ६७९ ॥

पिवि मिवि णिवि सेवने ॥ अयं पाठो मैत्रेयस्य च, अन्ये तृतीयं मूर्धन्योष्ठ्यादिं पठन्ति। सेचन इति तरङ्गिण्याम् ( पिन्वति। पिपिन्व। पिन्विता। पिपिन्विषति। पेपिन्व्यते। पिन्वयति। अपिपिन्वत्, एवं मिन्वतीत्यादि ) ॥ ६८२ ॥

हिवि दिवि धिवि जिवि प्रीणनार्थाः ॥ अत्र के चिदाद्यमिकारादिं पठित्वा पुनः पाठोऽर्थभेदादिति, धातूनामनेकार्थत्वे तु न प्रयोजनमस्ति। तस्मात् मैत्रेयोक्त एव हिवीति पाठो ज्यायान्। (हिन्वतीत्यादि। जिहिन्व। हिन्विवितेत्यादि पिन्वतीवत्। एवं दिन्वतीत्यादि) धिनोतेः *धिन्विकृण्व्योर च* इति शब्विषये उप्रत्ययः, अकारश्चान्तादेशः। तस्यातो लोपः, तस्य स्थानिवत्त्वात् उप्रत्ययमपेक्ष्य लघूपधगुणो न भवति, तस्य पित्सु गुणः ( धिनोति। धिनुतः। धिन्वन्ति ) अन्तादेशे यणादेशः ( धिनोषि। धिनुवः। धिन्वः ) *लोपश्चास्यान्यतरस्यां म्वोः* । असंयोगपूर्वो य उकारस्तदन्तस्य वकारमकारादौ प्रत्यये वा लोप इति पक्षे उलोपः। पिति तु परत्वाद्गुणे उकारस्याभावः ( धिनोतु। धिनु ) *उतश्च प्रत्ययादसंयोगपूर्वात्*। योयमुकारो ऽसंयोगपूर्वः तदन्तात्प्रत्ययात् परस्य हेर्लुगिति लुक्। ( धिनवानि ) नित्यत्वादुकारलोपात् पूर्वमाट्। ( अधिनोत्। अधिनुताम्। अधिनोः। अधिनवम्। अधिन्व। अधिनुव। धिनुयात् ) अन्यत्र लकारे पूर्ववत्। (धिन्वयति इत्यादि। जिन्वतीत्यादि देवने गतम् ॥ ६८६ ॥

रिवि रवि धवि गत्यर्थाः ॥ (रिण्वति। धन्वतीत्यादि। धान्वा) "कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः" इति कनिन्। उणादिवृत्तौ धन्विः सौत्रो धातुरुच्यते। नान्तत्वादसंबुद्धौ सर्वनामस्थाने दीर्घः। असंज्ञायां "न संयोगाद्वमन्तात्" इति अल्लोपनिषेधात् (धन्वन) इति। स्त्रियाम् "अनो बहुव्रीहेः" इति ङीपो निषेधात् सुधन्वा सुधन्वानौ इत्यादि। यदा "डाबुभाभ्याम्" इति डाप् तदा सुधन्वा सुधन्वे इत्यादि। अत्रान्यतरस्यां ग्रहणात् यत् डापोभ्यनुज्ञानमुक्तं तदुपधालोपिन एवेति जेमतावुक्तम् ॥ ६८६ ॥

कृवि हिंसाकरणयोश्च ॥ चकाराद्गतौ। (कृणोति) "धिन्विकृण्व्योर, च" इति शब्विषये उकारप्रत्ययोकारश्चान्तादेशः। अल्लोपादिसर्वं धिन्विवत्। अयं स्वादौ च ॥ ६९० ॥

मव बन्धने ॥ ( मवति। ममाव। मेवतुः। मविता। अमवीत्। अमावीत्) "अतो हलादेः" इति वा वृद्धिः ( मिमविषति। मामव्यते। मामवीति। मामोति। मामूतः। मामवति। मामोषि। मामोमि। मामावः। मामूमः ) "ज्वरत्वरस्त्रिव्यविमवामुपधायाश्च" ज्वरादिनामुपधावकारयोः क्वौ झलादावनुनासिकादौ च प्रत्यये परे ऊडित्यूडादेशे पिति गुणः। मामवतीत्यत्र परत्वात् नित्यत्वात् अड्भावे ऽझलादित्वं पर्यवसन्नमिति ऊण्न भवति। मामावेत्यत्र वलि लोपे "अतो दीर्घो यञि" इति दीर्घः। "ज्वरत्वर०" इत्यत्र क्व चित् वृत्तिकारैः क्वौ झलादौ किङतीति न पठ्यते तत्र किङ्ग्रहणं संपातायातम्। अवतेस्तुन्योरिति दर्शनात्, तथा अनुनासिकादिग्रहणं चावश्यमत्रानुवर्त्यम्। अवतेर्मनिन्प्रत्यये तस्य च टिलोपे ओमिति दर्शनात्। तथा च "न धातुलोप०" इत्यत्र कैयटे आस्रेमाणमिति उपादाय छान्द-

सत्वाद्वकारस्य ऊण् न भवतीत्युक्तम् ( मामोतु । मामोतात् । मामोहि । मामवानि ) नित्यत्वादाटि अङ्गलादित्वं पर्यवसन्नमित्यूडभावः । लङि तिप्सिपोरूठि (अमोमोत् । अमामोः) सिपि नित्यत्वादम्भावे ( अमामवम् मावयति । अमीमवत् ) वकारान्तानामूर्द्भाविनां यङ्लुङ् नेति यदुक्तं तत् "च्छ्वोः०"इति ऊद्विषयं द्रष्टव्यम् । क्विपि (मूः, मुवौ) ॥ ५९१ ॥

अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु ( अवति । आव । आवतु । ।अविता । मा भवानवीत् । अविविषति । आवयति । मा भवानविवत् ) क्विपि "ज्वरत्वर०",इत्यादिनोठ् । (ऊतिः) । "ऊतियूति०" इत्यादिना क्तिनि निपात्यते । स्त्रियां क्तिनि सिद्धे निपातनमुदात्तार्थम् । (अविषः) । "अविमह्योष्टिषच्" इति टिषचि टित्त्वात् स्त्रियाम् ( अविषी । ऊनः ) । "इण्सिञ्जिदीङुष्यविभ्यो नक्" इदि नकि कित्त्वादगुणत्वम् । ( ओम् ) । "अवतेष्टिलोपश्च" इति मन् तस्य च टिलोपः उठ् गुणः, (ओतुः) । "सितन०" इत्यादिना तुनि ऊठि गुणः, (कृष्णोतुः) । [ ओत्वोष्ठयोः समासे वा ] इति वा पररूपम् । अन्यदा "वृद्धिरेचि" इति वृद्धिः । ( अवि :) । इत्रितीन् । अविरेव(अविकः) "अवेः कः" इति स्वार्थे कप्रत्ययः । ( अवनिः ) । "अर्तिसृधृधम्यश्यवितृभ्यो ऽनिः" इत्यनिः, (अवनी) । कृदिकारत्वात् ङीप् । (अवीः) । "अवितृस्तृतन्त्रिभ्यईः" इति ईप्रत्ययः ॥ अव्यादय उदात्तेतो जयतिवर्जम् ॥ ५९२ ॥

धावु गतिशुद्ध्योः ॥ उदात्तः स्वरितेत् । "स्वरितञितः कर्त्रभिप्राये क्रियाफले"इति क्रियाफलस्य प्रधानस्य कर्तृगामित्वविवक्षायां तङ् ( धावति । दधाव । देधावतुः । धावितेत्यादि । तङ्पक्षे धावते ) इत्यादि । यदा क्रियाफलस्य कर्तृगामित्वमुपपदेन प्रतीयते तदा "विभाषोपपदेन प्रतीयमाने"इति परस्मैपदं भवति (स्वार्थं धावतीति । दिधाविषति ।।दिधाविषते)"पूर्ववत्सनः" इति क्रियाफलस्य कर्तृगामित्वे तङ्(दाधाव्यते । धावयति। अदीधवत्। धावित्वा । धौत्वा) "उदितो वा" इतीड्विकल्पः । इडभावे "च्छ्वोः शूड्०" इति ऊठि "एत्येधत्यूठ्सु" इति वृद्धिः, निष्ठायां "यस्य विभाषा" इति अनिट्त्वात् (धौतः धौतवान्) । अत्र मैत्रेयः, कथं धावितो धावितवानिति उपक्रम्य कृतिचृतिनृतीनामीदित्त्वं "यस्य विभाषा" इत्यस्यानित्यत्वे ज्ञापकमाह, नित्यत्वे ह्येतेषां "सेसिचि कृतचृतच्छृततृदनृतः" इति सकारादाविटो विकल्पनात् निष्ठायामनिट्त्वस्य सिद्धत्वात्किं तदर्थेनेदित्त्वेन ॥ ५९३ ॥

अथ ऊष्मान्ता आत्मनेपदिनः ॥

धुक्ष धिक्ष संदीपनक्लेशनजीवनेषु ( धुक्षते । दुधुक्षे । धुक्षिष्यते । धुक्षताम् । अधुक्षत । धुक्षेत । धुक्षिषीष्ट । अधुक्षिष्ट । दुधुक्षिषते । दोधुक्षीति । दोधुष्टि ) अनिटि "स्कोः०" इति कलोपः, तस्यासिद्धत्वात् लघूपधगुणः ( दोधुक्षि ) अनिट्त्वे "स्को०" इति कलोपे "षढोः कः सि" इति कत्वे सिपः षत्वम् ( दोधुष्टु । । दोधुड्ढि । अत्र सेर्हिः, तस्य धित्वे "झलां जश् झशि" इति डकारः । (दोधुक्षाणि) । लङि तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगत्वात् कलोपे "झलां जशोऽन्ते" इति जश्त्वस्य "वावसाने" इति चर्त्वे (अदोधोट्, धुक्षयति । अदुधुक्षत् । धुक्षः एवं धिक्षतइत्यादि ) ॥ ५९६ ॥

वृक्ष वरणे ॥ (वृक्षते । ववृक्षे) द्विर्वचने,उरदत्वे च हलादिशेषः । (वृक्षितेत्वादि । विवृक्षिषते । वरीवृक्ष्यते) । "रीगृत्वतः" इति रीगागमः । (वर्वृष्टि । वरिवृष्टि । इत्यादि । वृक्षयति । अववृक्षत् । वृक्षः । वृक्षाः ) ॥ ५९६ ॥

शिक्ष विद्योपादाने ॥ (शिक्षते । शिशिक्षे) इत्यादि धुक्षिवत् । अत्र तरङ्गिणीकारादयः शिक्षेर्जिज्ञासायाम् इति वचनं नियमार्थमिति व्याचक्षाणा जिज्ञासाया अन्यत्र परस्मैपदमाहुः । तदयुक्तम् । शकेः सन्नतस्य विध्यर्थसंभवात्, न च विधिसंभवे नियमो युज्यते, एवमेव समर्थितः न्यासकैयटपदमञ्जर्यादिषु ॥ ५९७ ॥

भिक्ष भिक्षायामलाभे लाभे च ॥ (भिक्षते) इत्यादि पूर्ववत् । अयं द्विकर्मकः, तत्राप्रधाने

दुहादीनामिति वचनात् लकृत्यखलर्था अप्रधाने भवन्ति ( पौरवो गां भिक्ष्यते । भिक्षितव्यः भिक्षितः सुभिक्ष इत्यादि)। षष्ठी तु द्वितीयावदुभयत्र भवति । (भिक्षिता गौः पौरवस्येति) । अप्रधाने तूभयथा गोणिकापुत्र इति भाष्य उक्तत्वात् पौरवमिति द्वितीयापि भवति । ( भिक्षितव्यो राजा देवदत्तेन) इत्यत्रानभिहिते कर्मणि कर्त्तरि च "कर्तृकर्मणोः" इति षष्ठ्या उभयप्राप्तौ कृति प्रतिषेध इत्युक्तत्वात् न भवति सर्वमेतन्नाथतावुपपादितं तत एवावगन्तव्यम् । ( भिक्षुः ) । "सनाशंसभिक्षउः" इति ताच्छीलिक उप्रत्ययः । ( भिक्षाकः ) । "जल्पभिक्ष०" इति षाकन् । षित्वात् स्त्रियां (भिक्षाकी) ॥ ६९८ ॥

क्लेश अव्यक्तायां वाचि ॥ बाधन इति दुर्गः। अत्र स्वामी क्लेश व्यक्तायां वाचि चेति पठन्निमावपि पूर्वधातोरर्थावेवाह । चन्द्रदुर्गमैत्रेयसंमताकारदेवादयस्तु धात्वन्तरमेवाहुः ( क्लेशते । चिक्लेशे । क्लेशितेत्यादि । चिक्लेशिषते । क्लेश्यते ) ॥ ६९९ ॥

दक्ष वृद्धौ शीघ्रार्थे च ॥ ( दक्षते । ददक्षे । दक्षितेत्यादि । दक्षिणः ) "द्रुदक्षिभ्यामिनन्" इतीनन् , पूर्वशब्दवत् सर्वनामत्वं तत्कार्यं च स्त्रियां तु टापि (दक्षिणा) । दक्षिणामर्हतीत्यादि (दक्षिणीयः । दक्षिण्यः) । "कडंकर दक्षिणाच्छ च" इति द्वितीतान्तादर्हतीत्यर्थे छयतौ । (ग्रामस्य दक्षिणतो वसति। दक्षिणत आगतः । दक्षिणतो रमणीयम् ।) *दक्षिणोत्तराभ्यामतसुच्* इति सप्तमीपञ्चमीप्रथमान्तात् स्वार्थे ऽतसुच्, "षष्ठ्यतसर्थप्रत्ययेन" इति तद्युक्तात्षष्ठी अतसर्थप्रत्यय इति सप्तम्याद्यन्तात्स्वार्थे यो विहितः स उच्यते । (दक्षिणा ग्रामस्य) । "उत्तराधरदक्षिणादातिः" इत्ययमातिरतसुज्विषये पूर्ववत् ग्रामतः षष्ठी । (दक्षिणेन ग्रामम् । ग्रामस्येति वा, "एनबन्यतरस्यामदूरे पञ्चम्या इति वचनादयं सप्तमीप्रथमान्तेभ्य उत्तराद्यर्थोऽवधिसापेक्ष इति अवधिमतस्तस्य सामर्थ्यादवध्यपेक्षमदूरत्वम् । अन्यतरस्यांग्रहणं यथाप्राप्तातसुजाद्यभ्यनुज्ञानार्थमितरथा ह्ययं दूरे बाधकः स्यात् , "एनपा द्वितीया" इति तद्युक्तात् द्वितीया षष्ठ्यपीष्यते इति षष्ठी पक्षे ( दक्षिणा ग्रामात् ), "दक्षिणादाच्" इत्याच् एनपो विषये, "अन्यारादितरर्त्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते" इत्याजन्तयुक्तात्पञ्चमी । अन्य इत्यर्थग्रहणम् , आरादितरर्त्ते इतिस्वरूपग्रहणम् । दिक्शब्दा दिशि दृष्टाः पूर्वादयः । अञ्चूत्तरपदाः प्रागादयः । आजाही प्रत्ययौ दिक्शब्दत्वादेव सिद्धे ऽञ्चूत्तरपदग्रहणमस्तात्यन्तार्थम् । तत्र हि ' षष्ठ्यतसर्थप्रत्ययेन" इति षष्ठी विधीयते, एवमाजाह्योरपि । (दक्षिणाहि ग्रामात् ) । "आहि च दूरे" इत्याहिः पूर्ववदवध्यपेक्षदूरत्वे चकारादाजपि द्रष्टव्यः । सर्व एते "तद्धितश्चासर्वविभक्तिः" इति अव्ययसंज्ञकाः । दक्षिणा भवः । (दाक्षिणात्यः) । "दक्षिणापश्चात्पुरसस्त्यक्" इति शैषिकस्त्यक् । दक्षिणाशब्दः पश्चात्पुरोभ्यां साहचर्यादिहाजन्तोऽव्ययं गृह्यते । अत एव सर्वनामत्वाभावात् [ सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ] इति पुंवद्भाव वो न भवति ॥ ६०० ॥

दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु ॥ (दीक्षतेइत्यादि) । "अनुदात्तेतश्च०" इति युच् "सूददीपदीक्षश्च" इति निषेधाद्दीक्षितेति सामान्यस्तु न भवति ॥ ६०१ ॥

ईक्ष दर्शने ( ईक्षते । ईक्षां चक्रे । ईक्षिता । ईक्षिष्यते । ईक्षताम् । ऐक्षत । ईक्षेत । ईक्षिषीष्ट । ऐक्षिष्ट । ईचिक्षिषते । ईक्षयति । ऐचिक्षत् देवदत्तायेक्षते नैमित्तिकः ) पृष्टः सन् शुभाशुभं पर्यालोचयतीत्यर्थः। "राधीक्ष्योर्यस्य विप्रश्नः" । यद्विषयं पृच्छ्यत इत्यर्थः । स्वसंबन्धिनः शुभाशुभस्य विप्रश्नयोगित्वात्कारकमपि तथोच्यते । तदिह धातुरर्थात् शुभाशुभपर्यालोचनवृत्तिः । अन्यत्र देवदत्तमिति द्वितीयैव । (सुखं प्रतीक्षते सुखप्रतीक्षः । सुखप्रतिक्षा ।) [ ईक्षिक्षमिभ्यां चेति वक्तव्यम् ] इति कर्मण्युपपदेऽणप्रत्ययः ॥ ६०२ ॥

ईष गतिहिंसादर्शनेषु ॥ (ईषते । ईषां चक्रे ईषतेत्यादि ) "तीष सहलुभरुषरिषः" इत्यत्र ह्रस्वादेर्ग्रहणात् ईषितेत्यादौ नेड्विकल्पः (ईषा) । मनस (ईषा मनीषा) पृषोदरादिः । (समीष्ट आचार्यः)। ईष्व इति वनन्तस्य निपातनमस्येति मैत्रेयः। उणादिवृत्तौ त्विषु इच्छायामिति-

तौदादिकस्य निपातनमुच्यते, इषु इति ह्रस्वादिः । तन्मतेयमुञ्छार्थः । परस्मैपदिषु इषु गताविति दिवादौ, अयमिच्छार्थः तुदादौ, आभिक्ष्ण्यार्थः क्र्यादौ ॥ ६०३ ॥

भाष व्यक्तायां वाचि । (भाषते । बभाषे । भाषिता । भाषिष्यते । बाभाष्यते । बभाष्टि । भाषयति । अबभाषत् । अबीभषत् ) "भ्राजभास" इत्युपधाह्रस्वविकल्पः (भाषकः) । "निन्दहिंस०" इत्यादिना वुञ् ताच्छीलिकः ॥ ६०४ ॥

वर्ष स्नेहने ॥ दन्त्योष्ठ्यादिः (वर्षते । ववर्षे । वर्षिता । विवर्षिषते । वावर्ष्यते । वावर्ष्टि) लङि तिप्सिपोः (अवावर्ट्) । "रात्सस्य" इति नियमान्न संयोगान्तलोपः । वृषु सेचन इत्यग्रे परस्मैपदी । शक्त्यर्थश्चुरादौ ॥ ६०५ ॥

गेषृ अन्विच्छायाम् ॥ ग्लेषृ इति मैत्रेयः । अन्विच्छान्वेषणम् । ( गेषते । जिगेषे । गेषिता । जिगेषिषते । जेगेष्टि । जेगेष्टः । गेषयति । अजिगेषत् ) ऋदित्त्वान्नोपधाह्रस्वः ।६०६

एषृ प्रयत्ने ॥ ( एषत इत्यादि ) ॥ ६०७ ॥

जेषृ णेषृ एषृ प्रेषृ गतौ ॥ ( जेषते नेषते । प्रणेषते । एषते । एषां चक्रे एषिता । एषिष्यते । एषयति । अवानेषिषत । प्रेषते ) ॥ ६११ ॥

रेषृ हेषृ अव्यक्ते शब्दे ॥ (रेषते) । अयं स्वभावाद्वृकविषयः ( हेषते । अयमश्वविषयः हेषृ इति सरेफश्चात्र द्रष्टव्यः । यदाह केशवस्वामी । कौक्षे कर्दति पर्दते गुदरवे रेषेति वार्केहसे वुक्कति श्वरवे भषेति हयजे हेषेति ,ह्रेषेति चेति । तथा ह्रेषा हेषा च निःस्वने इत्यमरः॥

कासृ शब्दकुत्सायाम् ( कासते । कासां चक्रे) । "कास्प्रत्ययात्०" इत्याम् ( कासिता । कासिष्यते । कासताम् । अकासत । कासेत । कासिषीष्ट । अकासिष्ट । चिकासिषते । चाकास्यते ) लोटि हेर्धिभावे "धि च" इति सलोपे चकाधि । न च "धि च इत्यत्र भाष्ये सिजपेक्ष्यते । लङि तिपि हल्ङ्यादिलोपे प्रत्ययलक्षणेन तिप्स्वरत्वात् *तिप्यनस्तेः* इति अस्तिवर्जितस्य सान्तस्य पदस्य तिपि परे दकार इति दकारे तस्य चर्त्वे(अचकात् )। सिपि तु *सिपि धातोर्वा* इति सान्तस्य अस्तिवर्जितस्य धातोः पदस्य पक्षे रुत्वे (अचकाः) इत्यपि भवति । ( कासयति । अचकासत् ) ऋदित्त्वान्नोपधाह्रस्वः (कासः) "हलश्च" इति संज्ञायां घञ् । (कासारः) औणादिको बहुलाकादारः । (कासूः शक्तिः। कासूतरी) । "कासूगोणीभ्यां ष्टरच्" इति अल्पत्वे द्योत्ये ष्टरच् । षित्त्वात् ङीष् । अस्मादेव निर्देशादूकारप्रत्ययः।कसतीति ज्वरादौ गत्यर्थः । कस इति गतिशासनयोरादिकस्य ।तत्रधान्ये निदित्यादिना ऊः (कसूः) इत्याहुः । अन्ये तु तालव्यान्त पठन्ति (कशूरिति) ॥ ६१४ ॥

भासृ दीप्तौ ( भासते । इत्यादि कासिवत् । भासयति । अबीभसत् । अबभासत् ) "भ्राजभास" इत्युपधाह्रस्वविकल्पः, एवं चास्य ऋदित्त्वं तङ्मात्रफलम् । अनुबन्धान्तराकरणं तु प्रकरणानुरोधात् । (भास्वरः) । "स्थेशभास०"इत्यादिना तच्छीलादौ वरच् । ( भाः भासौ । भासः) । "भ्राजभास०" इति ताच्छीलिकः कर्त्तरि क्विप् ॥ ६१६ ॥

णासृ रासृ शब्दे॥ (नासते । प्रणासते । रासतइत्यादि कासिवत् नासा) । अकारः। (नासिका) संज्ञायां कनि "केणः" इति इति ,ह्रस्वः । "प्रत्ययस्थात्०" इतीत्त्वम् । नासायां भवं तस्मै हितं (नास्यम् )"शरीरवयवाद्यत्" इति यत् । नासिकाशब्दात्तु यति "नस् नासिकायायत्तत्क्षुद्रेषु" इति नस्यभावे (नस्यमिति)।एवं नस्तो नः क्षुद्र,इत्यादि । [अद्यादिभ्य उपसंख्यानम्] इति सार्वविभक्तिकस्तसिः । *अपादाने चाहीयरुहोः* इति वा अपादाने या पञ्चमी तदन्तात्स्वार्थे तसिः । हीयरुहोः प्रयोगे नेति, नः क्षुद्रः इत्यत्र नासिकया क्षुद्र इति "पूर्वसदृश०" इत्यादिना समासस्तृतीयायाः । तत्र ह्यून इत्यर्थग्रहणम् । ( नासिक्यो वर्णः । नासिक्यं नगरम् )इत्यत्र यति [ वर्णनगरयोर्न,] इति नस्भावप्रतिषेधः, वाध्रीव नासा यस्य (वाध्रीणसः) अजविशेषः। *अञ् नासिकायाः संज्ञायां नसं चास्थूलात्*इति नासिकान्तादूबहुव्रीहेः संज्ञायामच् समासान्तः नासिकायाश्च नसादेशः अस्थूलादिति निषेधात् स्थूलनासि

क इत्यत्रान्नस्भावौ न भवतः। खुरणाः,[खुरखराभ्यां नस् वक्तव्यः] इति नस्भावः। आदेशान्तरकरणं प्रत्ययनिवृत्त्यर्थमिति कैयटपदमञ्जर्यादौ। अत्र वृत्तावजपीष्यत इति, तेन (खुरणसः,खरणस) इत्यपि भवति। प्रगता नासिका अस्य (प्रणसः)। *उपसर्गाच्च* उपसर्गपूर्वनासिकान्ताद्बहुव्रीहेरजित्यज् नासिकाश्च नस्भावः *उपसर्गाद्बहुलम्* इति। उपसर्गस्थान्निमित्तात्परस्य नसो नकारस्य णत्वम्। उभयत्रोपसर्गग्रहणं प्राद्युपलक्षणार्थम्। विगता नासिका अस्य (विग्रः)। [विग्रो वक्तव्यः] इति ग्रादेशो नासिकायाः। यदहं नाथ नायास्यं विनसा गतबान्धवा इति भट्टिप्रयोगे विशेषविहितेन ग्रादेशेन भाव्यमिति महान्तो न सहन्ते। केचित्तु वार्त्तिकं वेः षो वक्तव्य इति पठन्तो विष इति उदाहरन्ति। (तुङ्गनासिका)।*नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च*। इति।नासिकाद्यन्ताद्बहुव्रीहेर्वा ङीष्। (रासः) क्रीडा विशेषः। (रासभः)।,"रासिवल्लिभ्यां च" इति अभच्। (रास्ना)। "रास्नासास्नास्थूणावीणा" इति नप्रत्यये निपातितः॥ ६१७॥

णस कौटिल्ये॥ (नसते। प्रणसते। नेसे। नसितेत्यादि नासयति। अनीनसत्) ॥६१८॥

भ्यस भये (भ्यसते। बभ्यसे। भ्यसिता। भ्यसिष्यते। बाभ्यस्यते। बाभ्यस्ति। बाभ्यासुति। अबिभ्यसत् बाभ्यधि) इत्यत्र हेर्धिभावे "धि च" इति सलोपस्तस्यासिद्धत्वात् "अतो हेः" इति लुक् न भवति। एवं नसेरपि (नानधि) इति भवति॥ ६१९॥

आङः शसि इच्छायाम्॥ आङः शसीति प्रयोगादयमाङ्पूर्व एव प्रयोक्तव्यः। तथा च काश्यपः। अयमाङः पर एव प्रयोक्तव्य इति, संमतायां न च केवलो नाप्युपसर्गान्तर पूर्व इति। (आशंसते।-आशशंसे। आशंसिता। आशिशंसिषते। आशाशंस्यते) इदित्त्वान्नुम् नलोपाभावश्च। (आशाशंस्ति, आशाशन्धि इत्यत्र "धि च"इति सलोपेऽनुस्वारपरवर्णौ लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे च(आशाशन्। आशंसयति। आशशंसत्। आशंसुः)। "सनाशंसभिक्ष उः" इत्युप्रत्ययः। (आशंसितः। आशंस्यम्। आशस्यः)। क्त्वो ल्यप्। दौर्गस्तु नोपधमनिदितं पठति। स्वामी च। तेषां नलोपाभावे विशेषः शंस स्तुतावित्यग्रे परस्मैपदिषु। आङः शासु इच्छायाम्। शासु अनुशिष्टाविति द्वयमदादौ॥ ६२०॥

ग्रसु ग्लसु अदने॥ (ग्रसते। जग्रसे। ग्रसितेत्यादि पूर्ववत्। ग्रासयति पिण्डं देवदत्तः।) निगरणार्थत्वान्नित्यं परस्मैपदम्। प्रयोज्यस्य कर्मत्वं च। (ग्रसित्वा ग्रस्त्वा)उदित्त्वादिड्विकल्पः (ग्रस्तः)"यस्य विभाषा"इति अनिट्त्वम्। ग्रास्यत इति(ग्रासः)कवलः। पिण्डं गसते-(पिण्डग्रः),"अत्वसन्त०"इति दीर्घोऽधातोरिति प्रतिषेधान्न भवति। ग्रसिष्णुरिति हेलाराजीयेलिङ्गनिर्देशे प्रयुज्यते "भुवश्च" इत्यत्र चकारास्यानुक्तसमुच्चयार्थत्वात् भ्राजिवन्निर्वाह्यः अत एव "भुवश्च" इत्यत्र वृत्तौ चकाराद् भ्राजेश्च प्रयुज्य भाषायामिति चशब्दः क्रियते। एवं ग्लसतीत्यादि॥ ६२२॥

ईह चेष्टायाम्॥ (ईहते। ईहां चक्रे। ईहिता। ईहिष्यते। ईहताम्। ऐहत। ईहेत। ईहिषीष्ट। ऐहिष्ट। ईजिहिषत। ईहयति। मा भवानीजिहत्। ईहा। ऐही। पर्येहि। आङ् पूर्वाच्चेनन्तात् शार्ङ्रवादिपाठान्ङीन्॥ ६२३॥

बहि महि वृद्धौ॥ (बंहते। बबंहे। बंहिता। बंहिषीष्ट। बिबंहिषते। बाबंह्यते)। इदित्त्वान्नुम्। नलोपाभावः। (बाबण्ढि)। झलि पदान्ते च "हो ढः" इति हकारस्य ढकारः। "झषस्तथोर्धोऽधः" इति तकारस्य धकारे "ष्टुना ष्टुः"इति ष्टुत्वे "ढो ढे लोपः" इति पूर्वस्य लोपः। अत्र ष्टुत्वे आश्रयात् सिद्धे नकारस्यानुस्वारपरसवर्णौ (बाबण्ढः बाबंहति। बाभड्ढि) ढत्वे "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति बकारस्य भष्भावेन भकारः। "षढोः कः सि" इति कत्वम्। (बाबंह्मि। बाबंह्वः)। लङि तिप्सिपोर्हत्वात् पूर्वं हल्ङ्यादिलोप इति झषन्तत्वाभावान्न भष्भावः। (बंहयति। अबबंहत्। एवं मंहतइत्यादि)। अयं भावार्थश्चुरादाविति स्वामी। मह पूजायामिति इहैवाग्रे परस्मैपदिषु। (महीयत) इत्यादि

महोङ्गितिकण्ड्वादिपाठात् ॥ ६२३ ॥

अहि गतौ ॥ (अंहते । आनंहे । अंहिता । अञ्जिहिषते)। "कुहोश्चुः" इति हकारस्य झकारे "अभ्यासे चर्च"इति जश्त्वेन जकारे, नकारस्यानुस्वारपरसवर्णौ । (अंहयति । आञ्जिहत् । अंहः) । असुन् । चुरादौ भाषार्थः ॥ ६२६ ॥

गर्ह गल्ह कुत्सायाम् ॥ (गर्हते । जगर्हे । गर्हिता । जिगर्हिषते । जागर्ह्यते । जागर्हि) इत्यादि बर्हिवत् । लङि तिप्सिपोर्हल्ङ्यादिलोपे "रात्सस्य" इति नियमात् संयोगान्तलोपाभावाड्ढकारस्य ढकारे झषन्तत्वात् पदान्तविषयत्वाच्च भष्भावे (अजघर्ट्) । अयमाद्यपीयोपि । गल्हतइत्यादि पूर्ववत् । यङ्लुकि तिप्सिपोर्लोपे संयोगान्तलोपे (अजागल्) ॥ ६२८ ॥

वर्ह वल्ह प्राधान्ये ॥ ओष्ठयादी । (वर्हते । वल्हते) इत्यादि । वर्हते सर्वेष्ववयवेषु प्रधानं भवति । (वर्हं बर्हिणः) । [ फलबर्हाभ्यामिनज्वक्तव्यः ] इतीनच् । (बर्ही), मत्वर्थीय इनिः । इमौ भाषार्थौ चुरादौ । वर्हर्हिंसायामपि तत्रैव, बृहविवृद्धाविति अत्रैवाग्रे परस्मैपदिषु ॥ ६३० ॥

वर्ह वल्ह परिभाषणहिंसादानेषु ॥ दन्त्यौष्ठ्यादी । (वर्हते । वल्हते । ववल्हे । वल्हिता) इत्यादि । अत्र धनपालमैत्रेयौ परिभाषणादावोष्ठ्यादित्वं वाहतुः । छादयन्यनेनेति बर्हः, घञिति वदन् शाकटातनोप्यत्रैवानुकुलः । यथा वयं तथा स्वामी । यदाह वर्ह वल्ह प्राधान्ये, मुनिबर्हणमिति । एवं मुनिप्रवर्हा इतिप्राधान्ये प्रयोग उपपद्यते । प्रवल्हिकेति च भाषार्थे । तदुक्तं पुरुषकारे प्रवल्हिका प्रहेलिकेति चात्रैवानुकुलं भाषाविशेषत्वात् (प्रवल्हेति) तथा च बह्वृचब्राह्मणं "प्रवल्हिकाश्शंसति प्रवल्हिकाभिर्वै देवा असुरान् प्रवल्ह्याथैनानत्यायन्" । व्याकृतं चैतत् गोविन्दस्वामिना प्र(१)वल्ह्या अनृतभाषया इति । यत्तूक्तं शाकटायनेन आच्छाद्यतेऽनेनेति बर्हः घञिति, नैतदोष्ठ्यादित्वे साधकं सर्वेष्ववयवेषु प्रधानं भवतीत्येवं व्युत्पादितत्वात् । बृह उद्यमने चुरादौ ॥ ६३२ ॥

प्लिह गतौ ॥ (प्लेहते । पिप्लिहे । पिप्लिहिषते । प्लिहित्वा । प्लेहित्वा) । "रलोव्युपधा" इति कित्त्वविकल्पः (प्लीहा) "श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्द्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्" इति कनिनन्तो निपातितः । उणादिवृत्तौ तु प्लिहतशब्दपूर्वाद्धन्तेष्टिलोपे व्युत्पादितम् । यथा वयं तथा मैत्रेयः, प्लीहानावित्यादौ "इन्हन्पूष०" इति नियमो हन्शब्दस्यानर्थकत्वान्नेति भाष्यादौ स्थितम् ॥ ६३३ ॥

वेह्रु जेह्रु बाह्रु प्रयत्ने ॥ आद्यो दन्त्यौष्ठ्यादी । अन्त्यः केवलोष्ठ्यादिः । उभावपि केवलौष्ठ्यादी इत्येके । दन्त्यौष्ठ्यादी इत्यन्ये । (वेहते । जेहते । बाहते) इत्यादि, ऋदित्त्वाण्णौ चङि ह्रस्वाभावः । (अविवेहत् इत्यादि । वेहत्) गर्भोपघातिनी गौः । (संश्रुतृपद्वेहत्) इति अतिप्रत्यये निपात्यते । (गोवेहत्) । "पोटायुवतिस्तोक०" इत्यादिना कर्मधारयः (वाहा) अजन्तत्वाट्टाप्, (बाढं), "क्षुब्ध०" इत्यादिना निष्ठायामिडभावो भृशार्थेऽन्यत्र (बाहितम्) । जेहतिर्गत्यर्थोपि, उक्तं च रेणुभिर्जेहमानं भट्टभास्करीयम् ॥ ६३६ ॥

द्राहृ निद्राक्षये ॥ (द्राहते) । निक्षेपइति के चित् । यङ्लुकि "दादेर्धातोर्घः" इति झलि पदान्ते चेति हस्य घकारे "झषस्तथोः०" इति धत्वे जश्त्वे च (दाद्राग्धि । दाद्राग्धः) इत्यादि सिपि भष्भावेन दकारस्य धकारः । "खरिच" इति घकारस्य चर्त्वे सिपः सकारस्य षत्वे (दाध्राक्षि) । लङि हल्ङ्यादिना तिप्सिपोर्लोपः, भष्भावजश्त्वचर्त्वेषु (अदाध्राक्) ॥ ६३७ ॥

काशृ दीप्तौ ॥ (काशते । चकाशे । काशिता । काशिष्यते । काशताम्) अकाशत । काशेत । काशिषीष्ट । अकाशिष्ट । अकाशिष्यत । चिकाशिषते । चाकाश्यते । चाकाष्टि) । व्रश्च्यादिना षत्वे (चाकाक्षि । चाकाश्मि । चाकाश्वः चाकाश्मः । चाकाड्ढि)इत्यत्र हेर्धिभावे व्रश्चादिना षत्वे ष्टुत्वे जश्त्वम् । लङि (अचाकाट् । काशयति । अचकाशत् काशः) । अचि

(१) प्रवल्ह्य अनृतं भाषयित्वेति युक्तः पाठः ।

घञि वा। (नीकाशः)। *इकः काशे* इति इगन्तस्योपसर्गस्य काश उत्तरपदे दीर्घः (काशिः। काशी)। अक्तिन्नत्वात् वा ङीप्। काशिषु भवा (काशिका)। "काश्यादिभ्यष्ठञ्ञिठौ" इति शेषिकौ ठञ्ञिठौ। ठञि "टिड्ढ" इति ङीप्। (काशिकी। काष्ठम्)। "हनिकुषिनीरमिकाशिभ्यः क्थन्" इति क्थन्। आकारोपधप्रकरणादयमिह पठितः अयं दिवादौ च। काश्रृ गतिशासनयोरित्यदादौ। अन्ये दन्त्यान्त्यमिदिदं पठन्ति।अनिदितमपरे ॥ ६३८ ॥

ऊह वितर्के ॥ वितर्कः संभावनम् ( ऊहते। ऊहां चक्रे। ऊहिता। ऊहिष्यते। ऊहताम्। औहत। ऊहिषीष्ट। औहिष्ट। ऊजिहिषति। ऊहयति। औजिहत्। समूहति। समूहते) [ उपसर्गादस्यत्यूहोर्वावचनम् ] इति उपसृष्टादस्मात्परस्मैपदम्। (समुह्यात्) इत्यत्र "किदाशिषि" इति कित्त्वे *उपसर्गाद्ध्रस्व ऊहतेः* इति यकारादौ क्ङिति ह्रस्वः। एवं यक्यपि (समुह्यते) इति। यद्यप्युपसर्गादस्यत्यूहोरिति वार्त्तिकमकर्मकाधिकारे पठितं तथापि वृत्तिकैयटादौ सकर्मकसाधारणमुक्तम्। अनुक्तमप्यूहति पण्डितो जन इति प्रयोग आङ्पूर्वस्येति सुधाकरः। एवं च सति ओहतीति गुणः पठितव्यः। ओह्यत इत्यत्रान्तादिवद्भावेनोपसर्गात्परत्वेन "उपसर्गाद्ध्रस्व ऊहतेः" इति ह्रस्वो न भवति। [ उभयतआश्रये नान्तादिवद्भाव] इति वचनात्। यद्वाऽण इति वर्त्तते, स च सामर्थ्यात्पूर्वेण णकारेणेति ह्रस्वाप्रसङ्गः। एवं च (समौह्यत) इत्यादावप्यादिवृद्धौ ह्रस्वो न भवति ॥ ६३९ ॥

गाहू विलोडने ( गाहते। जगाहे। जघाक्षे ) "धासः से" झलि "हो ढः" इति ढत्वे भष्भावे कत्वम्। ध्वमि ढत्वभष्भावयोः ष्टुत्वे ढलोपः। क्रादिनियमस्य प्रतिषिद्धविषयत्वादिट्पक्षे ( जगाहिध्वेत्यादि। गाढा। गाहिता। घाक्ष्यते। गाहिष्यते। गाहताम्। अगाहत। गाहेत। गाहिषीष्ट। अगाढ। अघाक्षाताम्। अघाक्षत। अगाढाः। अघाढ्वम्। अघाक्षि ) झलादौ सिज्लोपे ढत्वषत्वष्टुत्वढलोपाः। प्रत्ययलक्षणेन सादिप्रत्ययपरत्वाद्भष्भावो नाशङ्क्यः सिज्लोपस्य प्रत्ययलक्षणे पूर्वत्रासिद्धत्वात्। अत एवासिद्धत्वात्सिज्लोपात्पूर्वं न भष्भावः, ध्वमि तु परत्वाद्भष्भावः। इट्पक्षे ( अगाहिष्टेत्यादि। जिघाक्षते। जिगाहिषते। जागाह्यते। जागाढि। गाहयति। अजीगहत। गाढ्वा। गाहित्वा। गाढा। गाहः ) गाहडिति पचादौ पाठात्। टित्त्वात् स्त्रियां (गाही। गह्वरम्) । धित्वरेत्यादिकरचि ह्रस्वो निपात्यते। उणादिवृत्तौ तु गाधतेर्निपातनमुक्तम्। गहनं करोति गहनायते। "सत्रकक्ष०" इत्यनेन कण्वचिकीर्षायां क्यङ्। कण्वं पापं, सत्रादयश्च वृत्तौ पापवचना इति हरदत्तादिभिरुक्तमत्रैव वार्त्तिके निर्देशात् ल्युटि ह्रस्वः, गहे भवं ( गहीयम् ) "गहादिभ्यश्च" इति शैषिकोऽत्र छः। गह इति निर्देशादचि ह्रस्वः ॥ ६४० ॥

गृहू ग्रहणे ॥ ( गर्हते। जगृहे। जगृहिषे। जघृक्षे। जगृहिध्वे। जघृढ्वे। गर्हिता। गर्ढा। गर्हिष्यते। घर्क्ष्यते। गर्हताम्। अगर्हत। गर्हिषीष्ट। घृक्षीष्ट ) "लिङ्सिचावात्मनेपदेषु" इत्यनिट्पक्षे कित्त्वान् न गुणः। ( अगर्हिष्ट। अघृक्षत। अगर्हिषाताम्। अगर्हिषत। अघृक्षाताम् अगर्हिष्ठाः। अघृक्षथाः। अगर्हिढ्वम्। अगर्हिध्वम्। अघृक्षध्वम्। अगर्हिषि। अघृक्षि। अगर्हिष्वहि। अघृक्षावहि ) अनिट्पक्षे "शल इगुपधादनिटः क्सः" "क्सस्याचि" इत्यल्लोपः। यजादौ "अतो दीर्घो यञि" इति दीर्घः, ढत्वादि तु पूर्ववत् ( जिगर्हिषते। जिघृक्षते ) इडभावे "हलन्ताच्च" इति सनः कित्त्वम् ( जरीगृह्यते ) "रीगृत्वतः" इति रीक् ( जर्गृहीति जर्गर्ढि। जर्गृढः ) रुग्रिकोरप्युदाहार्यम् ( गर्हित्वा। गृढ्वा। गृहम् ) इगुपधलक्षणः कः। अत्र मैत्रेयः। "गेहे कः" इति गृह्णातेः कविधानं तस्यापि गृहमिति यथा स्यादिति। अयं क्वचित्कोषे ग्रिह इदुपधः पठ्यते तदनार्षं, यदाह देवः। ण्यन्तस्य ग्रहणे ग्रहेर्ग्रहयते तत्राऽनदन्ताद्गृहेर्भूवादेः शपि गर्हते श्नि प्रत्यये गृह्णाति अगृहीत् चेति। अत्र पुरुषकारे गृह इत्यनेनैव पूर्वस्माददन्तत्वमात्रविशेषः। गृहीत्वा विशिष्टमिति दर्शयिनां गृहपाठाशङ्का निरवकाशतां नीता। ग्लह इति स्वामिकाश्यपसम्मताकारादयः पठन्ति तदपि ग्राह्यम्।

तथा च "अक्षेपु ग्लहः" इत्यत्र वृत्तिः । ग्लहिः प्रकृत्यन्तरमिति । ग्लहत इत्यादि पूर्ववत् । (ग्लहोऽक्षस्य) । "अक्षेपु ग्लहः" इत्यप् । अक्षादन्यत्र (ग्लाह) इति घञ् । एषां तु निपातनं ग्रहेरेतदिति तेषामनक्षे ग्रह इति प्रत्युदाहार्यम् । लत्वाभावो विशेषः ॥ ६४१ ॥

घुपि कान्तिकरणे ॥ (घुंपते । जुघुंपे । घुंपिता । जुघुंपिपते । जोघुंप्यते । जोघुष्टि) । लोटि हेर्धिभावे ष्टुत्वजश्त्वानुस्वारपरसवर्णेषु (जोघुण्ढि) । लङि तिप्सिपोर्लोपे (अजोघुन्) । घिपी-तीदुपधं पेठतुश्चन्द्रकाश्यपौ । स्वामी वसेति दन्त्यान्तमदुपधं पपाठ । यथा वयं तथा देवमैत्रेयदुर्गाः । पकारान्तोप्ययम् ॥ ६४२ ॥

घुषिरविशब्दने ॥ उदात्तधातुसाम्यादिह पठितः, घुषाद्यन्ता उदात्ता अनुदात्तेतः । घुषिरविशब्दनार्थः । इतो ऽर्हत्यन्ता उदात्ता उदात्तेतः । विशब्दनं प्रतिज्ञानं, तच्च शब्देन स्वाभिप्रायप्रकाशनमिति न्यासे । अस्मादन्यस्मिन्नर्थे यथाप्रयोगमयं धातुर्वर्तेत इति पुरुषकारे । सर्वत्र क्षीरस्वामिधनपालभागवृत्तिकारा घुषिं शब्दार्थे पेठुः । चन्द्रदुर्गौ त्वर्थशब्दमपहाय शब्द इत्येवं पेठतुः । घुष शब्द इति पठन् शाकटायनोप्यत्रैवानुकूलः । तेन हि य इति स्थाने अनेति न क्रियते । यदि शब्द इत्यर्थः स्यात् तर्हि "घुषिरविशब्दने" इति इट् प्रतिषेधेति-लघु घुषिरविशब्द इत्येव वाच्यं स्यात् इति घुषिरविशब्दार्थे इति मैत्रेयादिपाठो ज्यायान् । (घोषति । जुघोष, घोषिता), लुङि "इरितो वा" इति परस्मैपदेषु च्लेरङादेशविकल्पनात् । (अघुषत् । अघुषताम् । अघोषीत् अघोषिष्टाम्) इत्याद्युभयं भवति । । "लुभ्वा दुह०" इत्यत्र न्यासे व्यत्ययघुक्षतेति वृत्तौ प्रत्युदाहरणमुपादायानित्यमागमशासनमित्यनिट्त्वमुक्त्वा "शल इगुपधात्" इति क्स उक्तः । हरदत्तादयस्तु प्रत्युदाहरणं घुष्यतेरिति मन्वाना इड्भावाय यत्नं कृतवन्तः । घुष्यतिर्हि नित्यानिट् ( जुघुषिषति । जुघोषिषति । घुषित्वा । घोषित्वा ) "रलो व्युपधात्०" इति कित्त्वविकल्पः ( जोघुष्यते । जोघोष्टि ) लोटि हेर्धित्वे ष्टुत्वे च जश्त्वे च षकारस्य ( जोघुड्ढि ) लङि तिप्सिपोः ( अजोघोट् ) घोषयति । अजूघुषत् । घुष्टा रज्जुः ) "घुषिरविशब्दने" इति । निष्ठायामनिट्त्वं संपूर्वत्वे तु "रुष्यमत्वरसंघुषास्वनाम्" इति इटो विकल्पनात् (संघुष्टा रज्जुः, संघुषिता रज्जुः) इत्युभयं भवति । घुषिरविशब्दन इति चुरादौ ॥ ६४३ ॥

अक्षू व्याप्तौ ( अक्षति । आनक्ष । आनष्ठ । आनक्षिथ । आनक्ष्व । आनक्षिव ) उदित्वादिड्विकल्पः । थल्यनिट्पक्षे "स्कोः०" इति कलोपे ष्टुत्वे । ( अक्षिता । अष्टा । अक्षिष्यति । अक्ष्यति ) "षढोः कः सि" इति कत्वे आद्यस्य "स्कोः०" इति लोपः ( अक्षतु । आक्षत् । अक्षेत् । अक्ष्यात् । मा भवानक्षीत् । मा भवानक्षिष्टाम् ) "नेटि" इति न वृद्धिः । अनिट्पक्षे "वदव्रजहलन्तस्य०" इति वृद्धौ (मा भवानाक्षीत् । मा भवानाक्षिष्टामित्यादि) । ननु येन नाव्यवधानमिति न्यायेनैकेन वर्णेन व्यवधानमाश्रयितुं युक्तं व त्वनेकेनेति वलोपस्यासिद्धत्वादनेकेन व्यवधानात् कथं वृद्धिः । नैतत् । तत्र हल्यग्रहणं हल्समुदायप्रतिपत्त्यर्थमित्युक्तत्वात् । तथाहि । "वदव्रजोः" इति योगो विभज्यते । तत्रात इति अनुवर्त्यिष्यते । ततो ऽचइति द्वितीयो योगस्तत्राङ्गेनाचो विशेषणात् अपाक्षीदित्यादावेकेन वर्णेन व्यवधाने वृद्धिसिद्धौ पुनः क्रियमाणं हल्यहणं हल्समुदायप्रतिपत्त्यर्थं भवति । अस्य कर्तृवाचिसार्वधातुकपरत्वे "अक्षोन्यतरस्याम्" इति पक्षे श्नुर्भवति ( अक्ष्णोति । अक्ष्णुतः । अक्ष्णुवन्ति ) अजादौ "अचि श्नुधातु०" इत्यादिनोवङ् । (अक्ष्णोतु । अक्ष्णुहि) इत्यत्र "उतश्च प्रत्ययात्०" इति हिलुङ् न भवति, तत्रैवासंयोगपूर्वादित्युक्तत्वात् । (अक्ष्णवानि) इत्यत्र आटि परत्वादुवङ बाधित्वा गुणः ( आक्ष्णोत् । अक्ष्णुयात् । अचिक्षिषति ) अनिट्पक्षे [ पूर्वत्रासिद्धीयमद्विर्वचने ] इत्युक्तत्वात् अस्मात्परत्वात् "स्कोः" इति कलोपे "षढोः०" इति कत्वे च सनः ककारसहितस्य द्वितीयस्यैकाचो द्विर्वचने हलादिशेषे "सन्यतः" इतीत्वे (अचिक्षतीति) भवति । ( अक्षयति ) चङि णिलोपस्य स्थानिवत्त्वात् क्षिशब्दस्य द्विर्वचने ( आचिक्षत् ।

अक्षित्वा । अष्टा निष्ठायामष्टः । अक्ष्णो)"इन्" इतीन्प्रत्ययः (अक्षणा) । *अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः* इति तृतीयाद्यजादावन्तस्यानङादेशे "अल्लोपोनः" इत्यल्लोपः । ङौ "विभाषाङिश्योः" इति विकल्पनात् (अक्षणि अक्ष्णि) इत्युभयं भवति) विशालमक्षि यस्य स (विशालाक्षः ) "*बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्*" इति षच् । स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद् बहुव्रीहेः षच् । षित्वात् स्त्रियां (विशालाक्षी) । स्वाङ्गाचिति वचनात् (स्थूलाक्षा वेणुयष्टिः) इत्यत्र *अक्ष्णोदर्शनात्* इत्यचि टाब् भवति । अदर्शनवाच्यक्ष्यन्तात् समासमात्रादजिति सूत्रार्थः । इह च दर्शनं चक्षुरिति ( गवाक्षं कबराक्षम् ) इत्यत्राचक्षुर्वचनस्याक्षिशब्दस्याज् भवति । यद्वात्र समुदायो दर्शनसाधनं न तु तदवयवोक्षिशब्द इति तस्य दर्शनयोगाभावाददर्शनादिति निषेधस्य नैव प्रसङ्गः । कबराक्षमिति सच्छिद्रं यदश्वानां मुखपिधानं तदुच्यते । कथं स्थूलाक्षिरिक्षुरिति, यदि दृश्यते, अनित्यः समासान्तइति निर्वाहः । अयं समासान्तः स्वतिपूर्वस्यापि भवति । "न पूजनात्" इत्यत्र [ बहुव्रीहौ सक्थ्यक्ष्णोरनिषेधः ] इत्युक्तत्वात् ॥ ६४४ ॥

तक्षू त्वक्षू तनूकरणे ॥ (तक्षति । ततक्षेत्यादि) । अक्षिवत् । "तनूकरणे तक्षः" इति पक्ष श्नुविषये श्नु, (तक्ष्णोति), इत्यादि । अक्ष्णोतिवत् । (तक्षा) । "कनिन्युवृषितक्षि०" इति कनिन् । तक्ष्णोऽपत्यं, (ताक्ष्णः) । "शिवादिभ्योण्" इत्यण् । अत्र "अन्नति" अन्नन्तस्याण्परत्वात्प्रकृतिभावे प्राप्ते *षपूर्वहन्धृतराज्ञामणि* इति षपूर्वो योऽन्शब्दो हनश्च तयोर्धृतराजन्शब्दस्य चाणि प्रत्यये ऽल्लोप इत्यल्लोपः । शिवाद्यणा *सेनान्तलक्षणकारिभ्यश्च* इति ण्यस्य बाधो नेष्यत इति वृत्तावुक्तत्वात् (ताक्ष्ण्यः) इत्यपि भवति । "नस्तद्धिते" इति लोपो "ये चाभावकर्मणोः" इति प्रकृतिभावान्न भवति । सेनान्तइति सेनाशब्दान्तो गृह्यन्ते लक्षण इति स्वरूपग्रहणं, कारिणः शिल्पिन इति । ग्रामस्य तक्षा (ग्रामतक्षः) । कुट्यां भवः कौटः, स चासौ तक्षा च (कौटतक्षः) स्वतन्त्रतक्षोच्यते, "ग्रामकौटाभ्यां च तक्ष्णः"ति टच् समासान्तः । पञ्चानां तक्ष्णां समाहारः (पञ्चतक्षः, पञ्चतक्षी) । "तक्षन्नलोपश्च" इति नलोपः । पक्षे स्त्रीत्वं च (द्वितक्षी) "द्विगोः" इति ङीप् । अन्यदा "स नपुंसकम्" इति नपुंसकत्वम् । त्वक्षु त्वचन इत्यग्रे तुदित् ॥ ६४६ ॥

उक्ष सेचने ॥ (उक्षति । उक्षां चकार । उक्षिता) इत्यादि पूर्ववत् । उक्षां प्रचक्रुर्नगरस्य मार्गा इति भक्तिप्रयोगमुपादाय, सुधाकरादयः, उक्ष्यत इत्युक्षाः, कर्मणि घञ्, उक्षान् प्रचक्रुरिति पाठान्तरं चास्थन् । ( उक्षा ) । श्वन्नुक्षन्निति कनिनन्तो निपातितः । उक्ष्णां समूहः (औक्षणम्) "गोत्रोक्ष०" इत्यादिना वुञ् । उक्ष्ण इदम् (औक्षम् ) । औक्षमनपत्ये" इति निपातनाट्टिलोपः । अपत्ये तु (औक्ष्णः) "षपूर्वहन्०" इत्यल्लोपः । (जातोक्षः । महोक्षः वृद्धोक्षः) । "अचतुर०" इतिकर्मधारयादचि टिलोपो निपात्यते ॥ ६४७ ॥

रक्ष पालने ॥ (रक्षति । ररक्ष । रक्षितेत्यादि । निरक्षतीति, निरक्षी), । रक्षसूचिपशानामितिग्रह्यादिपाठाण्णिनिः । (रक्षणं रक्षणः) । "यजयाच०" इत्यादिना नङ् । (रक्षः) । असुन् । (राक्षसः) । "प्रज्ञादिभ्यश्च" इति स्वार्थेण् ॥ ६४८ ॥

णिक्ष चुम्बने ॥ निक्षति । निनिक्ष । निक्षितेत्यादि । प्रणिक्षणम् । ( प्रनिक्षणम् ) । "वा निसनिक्षनिन्दाम्" इति णत्वविकल्पः । अयं विकल्पः कृत्येवेति निन्दतौ प्रतिपादितम् । तेन (प्रणिक्षति) इत्यादौ "उपसर्गात्०" इतिणत्वं भवति ॥ ६३९ ॥

तृक्ष स्तृक्ष णक्ष गतौ ॥ (तृक्षति । ततृक्ष । तृक्षितेत्यादि । तितृक्षिषति । तरीतृक्ष्यते) । "रीगृत्वतः" इति रीक् । (तरीतृष्टि) । "स्कोः०" इतिकलोपस्यासिद्धत्वाल्लघूपधत्वाभावान्न गुणः । एवं स्तृक्षौ (तृक्षयति । अतितृक्षत् । तृक्षतीति, तृक्षः तस्यापत्यं तार्क्ष्यः) "गर्गादिभ्यो यञ्" इति यञ् । स्तृक्षति । तस्तृक्षेत्यादि पूर्ववत् । षोपदेशफलं (तरीष्टृक्ष्यत) इत्यादौ । (नक्षति । प्रणक्षतीत्यादि । नक्षत्रम् ।) अमितक्षीत्यत्रप्रत्ययः । "नक्षाण्" इत्यत्र नज् रूर्वात् क्षत्तेः

क्षीयतेर्वा नक्षत्रमिति निपातितम् ॥ ६५१ ॥

वक्ष रोषे ॥ सङ्घातइत्येके । ( वक्षतीत्यादि ) । वक्षः असुन् ॥ ६५२ ॥

मृक्ष सङ्घाते ॥ (मृक्षतीत्यादि) । मक्ष इत्यप्येक इति मैत्रेयः । (मक्षति ममक्ष । मक्षितेत्यादि । मक्षिका) । "कुन् शिल्पिसंज्ञयोः" इति कुनि टापि "प्रत्ययस्थात्०" इतीत्वम्॥६५३॥

तक्ष त्वचने ॥ त्वचनं संवरणमिति दुर्गकाश्यपमैत्रेयाः । त्वचो ग्रहणमिति स्वामी । (तक्षतीत्यादि) । अयमूदित्तनूकरणे गतः । अत्रैव पक्षपरिग्रह इत्यप्येक इति । (पक्षति । पक्षः) । पक्ष्म् । पक्षस्य मूलं, (पक्षतिः) । "पक्षात्तिः" इति तिप्रत्ययः, पक्षे भवं (पक्ष्यं) "दिगादिभ्यो यत्" इति यत्प्रत्ययः । (पक्षः) पक्षतीच्छतिपर्यायः । वत्सरार्द्धवचनश्च । असुन् प्रत्ययः॥६५४॥

सूर्क्ष आदरे ॥ अनादर इति क्वचित्पठ्यते । तदसत् । सोमेन यक्ष्यमाणो नभून्सूर्क्षन्नक्षत्रमिति दर्शनात् सोमेन यक्ष्यमाणो वसन्ते ब्राह्मणोऽग्नीनादधीत । उत्तरयोः फल्गुन्योरग्निमादधीतेत्यादिना चोदितनक्षत्राणि नाद्रियेत इति तत्रार्थः । तथा अवहेडनमसूर्क्षणमिति दृश्यते । सूर्क्षणमादरः । ततोन्यदसूर्क्षणमनादरः । (सूर्क्षति । सूर्क्षितेत्यादि) ॥ ६५५ ॥

काक्षि वाक्षि माक्षि काङ्क्षायाम् ॥ (काङ्क्षति । चकाङ्क्ष । काङ्क्षितेत्यादि । चिकाङ्क्षिषति । चाकाङ्क्ष्यते । चाकांष्टि, इत्यादि । काङ्क्षयति । अचकाङ्क्षत् एवं वाङ्क्षति माङ्क्षतीत्यादि)॥६५८॥

द्राक्षि ध्राक्षि ध्वाक्षि घोरवासिते च ॥ (द्राङ्क्षति । ध्राङ्क्षति । द्राक्षा । ध्राक्षा । द्राक्षामत् । ध्वाक्षामत्) *मादुपधायाश्च मतोर्वोयवादिभ्यः* । मकारान्तात् मवर्णोपधात् अवर्णान्तात् अवर्णोपधाच्च परस्य मतुपो मकारस्य वकार इति प्राप्तं वत्वं यवादिभ्यः परस्य नेति निषेधात् न भवति । द्राक्षाध्राक्षाशब्दयोरनुनासिकलोपोपि यवादिपाठादेव । (ध्वाङ्क्षति । ध्वाङ्क्षः) । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । *ध्वाङ्क्षेण क्षेपे* इति सप्तम्यन्तं ध्वाङ्क्षवाचिना क्षेपे गम्यमाने नित्यं समस्यत इति तत्पुरुषः । क्षेपोत्रानवस्थादिनाऽवगम्यते ॥ ६६१ ॥

चूष पाने ॥ (चूषति । चुचूष । चूषितेत्यादि । चुचूषिषति । चोचूष्यते । चोचूष्टि । चूषयति । अचूचुषत्) ॥ ६६२ ॥

तूष तुष्टौ ॥ (तूषतीत्यादि) पूर्ववत् ॥ ६६३ ॥

पूष वृद्धौ(१) ॥(पूषतीत्यादि । पूषी) । दीपस्थापनार्थं कुड्यकल्पितो बिलविशेषः । पचाद्यच्, गौरादित्वात् ङीष् ।(पूषा)। "श्वन्नुक्षन्०" इत्यादिना कनिनन्तो निपात्यते ।(पूषणौ)। *इन्हन्पूषार्यम्णां शौ* इति उपधालक्षणस्य दीर्घस्य शावेव प्रत्यये नियमात्सवनामस्थान इति दीर्घो न भवति । सौ च "सौ च"इति विधानाद् भवति । अयमसम्बुद्धिविषयः । अतिपूषाणि ज्योतींषि इत्यत्र शिपरत्वात् दीर्घः। अपत्यादावणि (पौष्णः)। "षपूर्वहन्०" इत्यल्लोपः। पुष पुष्टाविति इहैवाग्रे दिवादौ क्र्यादौ च । पुष धारण इति चुरादौ ॥ ६६४ ॥

मूष स्तेये ॥ (मूषति । मूषकः) । संज्ञायां कुन् । (मूषिका) । अजादिपाठात् जातिलक्षणङीषं बाधित्वा टाप् । मुष स्तेय इति ह्रस्वोपधः क्र्यादौ, लूष रूष भूषायामिति सुधाकरः । (भूषति । रूषति । रूषिता) ॥ ६६५ ॥

शूष प्रसवे । तालव्योष्मादिरिति पारायणिका इति स्वामी । दृश्यते च तैत्तिरीयके । 'अक्षशूषा' इति । के चित् दन्त्यादिं पठन्ति । तदनार्षं, षोपदेशलक्षणविरोधात् । ( शूषतीत्यादि ) ॥ ६६६ ॥

यूष हिंसायाम् ॥ (यूषति) । यूषः मांसरसविशेषः ॥ ६६७ ॥

जूष च ॥ (जूषति) । जुषी प्रीतिसेवनयोरिति चुरादौ, जुष परिभाषण इति युजादौ ह्रस्वोपधौ ॥ ६६८ ॥

भूष अलङ्कारे ॥ भूषति । (भूषते कन्या स्वयमेव । अभूषिष्ट कन्या स्वयमेव ।) "भूषाकर्म०" इति यक्चिणोर्निषेधः । भूषाफलं शोभनाख्यं कर्मणि दृश्यत इति कर्मस्थक्रियात्वं कैयट

( १ ) पुष्टाविति पाठ एकस्मिन् पुस्तके ।

इत्युक्तम्। अङ्क्ता सूनाः परिभूषन्त्वश्वमित्यत्र भट्टभास्करः सूना मांसविकर्षणसाधनान्यश्वादीनि, अश्वं परिभूषन्तु परितो भवन्त्विति। भवतेर्लोटि सिपि रूपमुक्त्वा भूषयतेर्वा शप्। "छन्दस्युभयथा" इत्यसार्वधातुकत्वाण्णिलोप इत्याह। तदस्य धातोरस्मरणात्। न चायं नास्तीति शक्यते वक्तुं, सर्वेषु व्याख्यानेष्वविवादेनोपादानात्। अयं चुरादौ च॥ ६६९॥

ऊष रुजायाम्॥ (ऊषति। ऊषां चकार। ऊषिषति। मा भावानूषिषत्।) णिलोपस्य स्थानिवत्त्वात् षिशब्दस्य द्विर्वचनम्। (ऊषः)। घञ् (ऊषरः) "ऊषशुषिमुष्कमधो रः" मत्वर्थे रः। (ऊषयति)। उष दाह इति अग्रे ह्रस्वोपधः॥ ६७०॥

ईष उञ्छे॥ (ईषतीत्यादि) ऊषिवत्। ईषत इति गतौ गतः॥ ६७१॥

कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः॥ तृतीयषष्ठौ तालव्योष्मादी। सप्तमो दन्त्योष्ठ्यादिः। (कषति। चकाष। कषितेत्यादि। अकषीत्। अकाषीत्।) "अतो हलादेः०" इति वा वृद्धिः। (सर्वंकषम्)। "सर्वकूलाभ्रकरीषेषु कषः" इति खच्। *अरुर्द्विषदजन्तस्य०* इति खिदन्त उत्तरपदे पूर्वपदस्य मुम्। एवं कूलादिषूदाहार्यम्। (विकाषी)। "वौ कषलसकत्थस्रम्भः" इति तच्छीलादिषु घिनुण्। (आकषः। निकषः)। "गोचर" आदिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् अधिकरणे घः। आकषेण चरति, (आकषिकः)। *आकषात् ष्ठल्* इति तृतीयान्तात् अस्मात् चरतीत्यर्थे ष्ठल्। षित्त्वात् (आकषिकी)। आकषे कुशलः, (आकषकः)। *आकषादिभ्यः कन्* इति सप्तम्यन्तात् कुशल इत्यर्थे कन्। (निमूलकाषं कषति। समूलकाषं कषति) निमूलं समूलं च कषतीत्यर्थः। "निमूलसमूलयोः कषः" इति णमुल्। उपपदसमासः। *कषादिषु यथाविध्यनुप्रयोगः* इति यस्मात् णमुलो विधानं तस्यैवानुप्रयोगः, कषादयश्च "निमूलसमूलयोः कषः" इत्यारभ्य "उपमाने कर्मणि च" इत्येतदन्तेषूपात्ता धातवः। अत्रानुशब्दो नानन्तर्येऽपि तु धात्वर्थानुवादेन पश्चाद्भावे, तेन व्यवहितपूर्वप्रयोगोऽपि द्रष्टव्यः। तथा च वृत्तिः। धातुसम्बन्धे प्रत्ययविधानादनुप्रयोगार्थं वचनमिति। तथा "यथाविध्यनुप्रयोगः पूर्वस्मिन्" इत्यत्र हरदत्तः। अनुशब्दो धात्वर्थानुवादेन पश्चाद्भावे न त्वानन्तर्ये, पूर्वप्रयोगो व्यवहितप्रयोगोपि भवतीति न्यासे च। अथ पूर्वप्रयोगस्य व्यवहिप्रयोगस्य च निवृत्त्यर्थं कस्मान्न भवति यथा "कृञ् चानुप्रयुज्यते लिटि" इत्येतत्। तन्न। एतयोरिष्टत्वात्। पादौ कषितुं शीलमस्य (पत्काषी)। "सुप्यजातौ णिनिस्ताच्छिल्ये" इति णिनिः, "हिमकाषिहतिषु च" इति हिमादावुत्तरपदे पादः पद्भावः। (कष्टं व्याकरणम्)। कृच्छ्रसाध्यमित्यर्थः। (कष्टानि वनानि)। दुष्प्रवेशानीत्यर्थः। "कृच्छ्रगहनयोः कषः" इति निष्ठायामनिट्त्वम्। अन्यत्र (कषितो देवदत्तः)। कष्टाय कर्मणे क्रामति,(कष्टायते)। *कष्टाय क्रमणे* इति चतुर्थ्यन्तादनार्जवे क्यङ्, क्रमणमिहानार्जवम्। कष्टं चिकीर्षति, (कष्टायते)। अत्र "सत्रकक्ष०" इत्यादिना द्वितीयान्तात्कण्वचिकीर्षायां क्यङ्। (कक्षः)। "वृतिवदि०" इत्यादिना सप्रत्ययः। "षढोः कः सि" इति कत्वं, "तितुत्रेत०" इणिनषेधः। (कक्षायते)। "सत्रकक्षि०" इत्यादिना क्यङ्। (खषतीत्यादि पूर्ववत्। खष्पः) बलात्कारः। "खष्पशष्पबाष्परूपकूर्पशिल्पाः" इति पप्रत्ययान्ता निपात्यन्ते। (शिषति। शिशेष। शिशयिथ। शेष्टा। शेक्ष्यति। शेषतु। अशेषत्। शेषेत्। आशिषि। शिष्यात्। अशिक्षत्) "शल इगुपधा०" इति क्सः अनिट्त्वं च, शिषि पिषि श्लिष्यतिपुष्यती त्विषिमिति व्याघ्रभूतिवचनात्। तदुक्तं पुरुषकारे। शिषेरसर्वोपयोगे शपि। शेषयति। शेषतीत्युभौ, लुङ्यङ्भावादव्यशेषत् इति देवमुपादायाशेषीदित्युक्तं, शिषि पुषिमित्यनिट्कारिकाप्रामाण्याच्छिषिमात्रस्यानिट्त्वेन क्से सति अशिक्षदिति युक्तम्। तथा मैत्रेयोपि शेष्टेत्यनिट्मुदाजहार। एवं च लिटि सेट्त्वं क्रादिनियमात्सिद्धम्। एवं चास्य सेटो मध्ये पाठो यथा शिषिमात्रस्यानिट्त्वेन "शलइगुपधा" इति षान्तसाम्यात् षान्तपरस्मैपदिसाम्याच्च द्रष्टव्यः। (शिशिक्षति।) "हलन्ताच्च" इति सनः कित्वम् (शेशिष्यते। शेशेष्टि। शेषयति। अशीशिषत् शिष्ट्वा। शिष्टः। शिष्टवान्। शिष्टं) काल-

योगः । "खष्पशिष्प०"इति पप्रत्यये निपातितम् (जपति । जजाप । जेपतुः जपिता) इत्यादि कपिवत् । किति लिटि सेटि थलि चैत्वाभ्यासलोपौ । एवं ( झषति, शपतीत्यादि शष्पं ) पूर्ववत्पः । वप आदानसंवरणयोरित्यर्थे स्वरितेत् । (वपति । ववाप । ववपतुः । वपितेत्यादि) वादित्वान्नैत्वाभ्यासलोपौ । (मपतीत्यादि । रोषति । रुरोष । रुरोषिथ । रोषिता । रोष्टा रोषिष्यति इत्यादि । तकारादौ "तीषसहलुभरुषरिषः इतीड्विकल्पः (रुषित्वा । रुष्ट्वा ) इट्पक्षे "रलो व्युपधा०" इति कित्त्वविकल्पः । निष्ठायां "रुष्यमत्वरसंघुषास्वनाम्" इतीटो विकल्पनात् "यस्य विभाषा" इति निषेधो भवति । (रुष्टो, रुषितः ।) "मतिबुद्धिपूजार्थेभ्यश्च" इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वाद्वर्तमाने क्तः । इट्पक्षे "उदुपधाद्भावादिकर्मणोरन्यतरस्याम्" इति कित्त्वविकल्पनात्पक्षे गुणः (रोषितमनेनेत्यादि भवति) । रुष रोषइति दिवादौ चुरादौ च । रेषतीत्यादि रोषतिवत् । निष्ठायां"यस्य विभाषा"इतीटो निषेधात् (रिष्टः) । रेषत इति शब्दे गतः । अत्र दण्डके मुषिरपि धातुः कोशे पठ्यते । स्तेयार्थोयं पूर्ववच्चैष पठति इतीह पाठे नाभिनिवेष्टव्यम् । हिंसार्थत्वे यदि दृश्यते तदा धातूनामनेकार्थत्वाद्भविष्यति॥६८१॥

भष भर्त्सने ॥ इह भर्त्सनं श्वरवो यतस्तत्रैवायं प्रसिद्धः । (भषति । भषकः।) श्वुन् ॥६८२॥

उष दाहे ॥ (ओषति । ओषां चकार ।) "उषविद०" इत्याम्विकल्पः । (उवोष । ऊषतुः । उवोषिथ) । पिद्वचनेषु गुणस्य स्थानिवत्त्वादुषशब्दस्य द्वित्वम् । पुनर्गुणे "अभ्यासस्या०" इत्युवङवङ् । न चाभ्यासस्यानादिष्टादचः पूर्वत्वे गुणस्य स्थानिवत्त्वम्, असवर्णग्रहणसामर्थ्यादिति प्रागेवोपपादितम् । (ओषिता । ओषिष्यति । ओषतु । औषत् । ओषेत् । उष्यात् । औषीत् । ओषिषिषति । ओषयति । मा भवानुषिषत् ) प्रत्युष्टमित्यत्र भट्टभास्करः । "ओदितश्च" इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वादाश्वस्तादिवदिट्प्रतिषेधः। (ऊष्मा) । मनिनि बाहुलकाद् दीर्घः। ऊष रुजायामित्यस्माद्वा । (उष्णः)। उष्णिसिध्युषीति नक् ।(ऊष्णिका)। यवागूः । "ब्राह्मणकोष्णिके संज्ञायाम्" इति कनि निपात्यते। उष्णं करोति (उष्णकोलसः)। "शीतोष्णाभ्यां कारिणि" इति । कन् । उष्णं न सहते (उष्णालुः) । "शीतोष्णतृप्रेभ्यस्तदसहने" इत्यालुच् । ( ओष्ठः ) "उपिकुषिकाशिभ्यष्ठन्" इति ठन् ( बिम्बोष्ठी । बिम्बोष्ठा ) "नासिकोदरौष्ठ०" इति वा ङीष् [ ओत्वोष्ठयोः समासे वा ] इति पररूपं वृद्धेरपवादः । अन्यदा वृद्धौ ( बिम्बौष्ठी बिम्बोष्ठा । पार्योष्ठम् । ) सप्तम्यर्थेऽव्ययीभावः । तस्माद्भवार्थे [ परिमुखादिभ्य उपसंख्यानम् ] इति ष्यञ् । ( उष्टः ) । ष्टति ष्टन् बाहुलकादगुणत्वम् । उष्ट्राणां समूहः (औष्टकम् ) । "गोत्रोक्षोष्ट्र०" इति वुञ् । उष्टस्य विकारावयवयोरपि (औष्टकम्), "उष्ट्राद्वुञ्" इति वुञ् ॥ ६८३ ॥

जिषु विषु मिषु सेचने ॥ जेषति । जिजेष । (जेषिता । जिजिषिषति । जिजेषिषति । जिषित्वा । जेषित्वा ) "रलोव्युपधात्०" इति कित्त्वविकल्पः । "उदितोवा" इति क्त्वायामिड्भावे ( जिष्ट्वा जिजिष्यते । जेजेष्टि । जेषयति । अजीजिषत । जिष्टम् । वेषति । विवेष । विविषतुः । विवेषिथ । विविषिव । ) शिषि पिषि शुष्यतिपुष्यती त्विषि श्लिषि विषि तुष्यतिद्विष्यति द्विषिमित्यनिट्कारिकापाठादस्यानिट्त्वेपि क्रादिनियमादत्रेट् ( वेष्टा । वेक्ष्यति । अविक्षत् ) "शल इगुपधा०" इति क्सः ( विविक्षति ) "हलन्ताच्च" इति सनः कित्त्वम् । उदित्वात् क्त्वायामिड्विकल्पः ( विषित्वा । वेषित्वा । विष्ट्वा । विष्टम् । वेषेण संपादी वेष्यो नटः ) "कर्मवेषाद्यत्" इति तृतीयान्तात्संपादिन्यर्थे यत् । संपत्तिः शोभातिशयः । वेषेणात्यन्तं शोभत इत्यर्थः । विषॢ व्याप्तौ जुहोत्यादौ । विष विप्रयोग इति च क्र्यादौ । (मेषतीत्यादि) जेषतिवत् । मेष इति पचादिषु दर्शनादचि चित्त्वात्स्त्रियां (मेषी) । अयं स्पर्द्धायां तुदादौ ॥ ६८४ ॥

पुष पुष्टौ ( पोषति । पुपोष । पुपोषिथ । पोषिता । पोषिष्यति । अपोषीत् ) शिषि पिषि शुष्यतिपुष्यती इति श्यना निर्देशादयं सेट् । तथा पुषादीत्यङ्विधावपि दैवादिकस्य ग्रहणं,

सेट्कत्वात् क्सोपि न भवति (स्वपोषं पोषति) "स्वे पुषः" इति णमुल् । अत्र स्वशब्दः पिन्निर्दिश्यते तेन पितृपर्यायवचनस्य तद्विशेषार्थस्य च ह्यर्थमित्युक्तत्वात् स्वशब्दे तत्पर्यायवाचिनि विशेषवाचिनि चोपपदे प्रत्यय इति, गोपोषं धनपोषमिति दैवादिकस्य भवति ( पोषितः । पुषितः । पुष्टमिति । पोषितमिति ण्यन्तस्य । पोषयतीति पोषयित्नुः ) "स्तनिहृषिपुषिगदिमदिभ्यो णेरित्नुच्" इति ण्यन्तादित्नुच् । "अयामन्ता०" इति णेरयादेशः । अयं दिवादिः क्र्यादिश्च । धारणार्थश्चुरादिः । नन्वेक एव पुषिः विकरणभेदाय पुनः पठ्यते क चिच्चार्थं सेट् अन्यत्र पाठादनिट् इत्यर्थादार्धधातुके विकल्पितेट्कत्वात् "यस्य विभाषा" इतीटा न भवितव्यं निष्ठायाम् । नैतत् । यस्य वाचनिक इड्विकल्पस्तस्यैव तत्राश्रयणात् ॥ ६८७ ॥

श्रिषु श्लिषु प्रुषु प्लुषु दाहे ॥ ( श्रेषति । शिश्रेष । श्रेषिता । श्लेषति । शिश्लेष । शिश्लेषिथ । श्लेषिता ) शिषिं पिषिं शुष्यतिशिष्यती त्विषिं श्लिषिमित्यनिट्कारिकायां दैवादिकस्य श्लिषेर्ग्रहणं तेनास्येतीड् उदात्तः । उक्तं च कैयटे । श्लिष आलिङ्गन इति क्सविधावनिट इत्यनुवर्त्तनाद् दाहार्थस्य सेटो ग्रहणाभाव इति । एवं तत्र न्यासपदमञ्जर्योरपि । यस्त्वनिट्कारिकाव्याख्यानन्यासे द्वयोर्ग्रहणमिति पाठः स स्वोक्तिविरोधाद् ग्रन्थान्तरविरोधाच्च प्रमादलिखितः । तथा च वर्द्धमानस्वामिसंमताकारादयश्चामुं सेटमाहुः। श्लेषयतीति (श्लेषः) "श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च" इति कर्त्तरि, णः ( श्लेष्मा । श्लेष्मलः । मत्वर्थे । श्लेष्मणः) पामादित्वान्नः, अयमपि मत्वर्थे । श्लेष्मणः शमनं कोपनं वा (श्लैष्मिकम् )। तस्य निमित्तप्रकरणे "वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम्" इति ठक् । (श्लक्ष्णः)। "श्लिषेरच्चोपधायाः" इति क्नप्रत्ययः । उपधायाश्चाकारः। श्लिष्यतेर्वा (श्लक्ष्णः । आचारश्लक्ष्णः) । "पूर्वसदृश०" इत्यादिना समासः । आलिङ्गने दिवादिः । श्लेषणे चुरादिः । ( प्रोषति । प्लोषतीत्यादि ।) प्लुष्यतीति दिवादिपाठात् सेट् प्रुषिप्लुषी द्वौ स्नेहने क्र्यादौ ॥ ६९१ ॥

पृषु वृषु मृषु सेचने ॥ मृषु सहने च । इतरौ हिंसासंक्लेशनयोश्च । अत्र काश्यपः । पृषु हृषु वृषु हिंसासंक्लेशनदानेष्वित्यादि पपाठ ( पर्षति । पर्षिता । पर्षिष्यति । पर्षतु । अपर्षत् । आशिषि पृष्यात् । अपर्षीत् । पिपर्षिषति । परीपृष्यते । पर्पृषीति । पर्पर्ष्टि । पर्पर्क्षि ) लोटि पर्पृड्ढि इत्यत्र हेर्ङित्त्वान्न गुणः (पर्पृषाणि)"नाभ्यस्तस्याचि पिति" इति गुणनिषेधः । लङि तिप्सिपोर्हल्ङ्यादिलोपः । (अपर्पट् )। "रात्सस्य" इति नियमात् न संयोगान्तलोपः। (अपर्पृषीत् )। पूर्ववद्गुणत्वं रिक्रीकोरुदाहार्यम् ( पर्षयति । अपपर्षत् । अपीपृषत् । पर्षित्वा । पृष्ट्वा ) उदित्त्वाद्विकल्पः। (पृष्टं, पृषितम्)बाहुलकात् पृषेः किच्चेति तच् अस्मादपीति ।(पृषतम्) । "पृषिरञ्जिभ्यां कित्" इत्यतच् । पृषन् बिन्दुर्मृगश्च । [वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च] इत्यतिप्रत्यये गुणाभावः । शतृवद्भावाद् "उगितश्च" इति स्त्रियां ङीपि (पृषती । पार्ष्णिः)। "घृणिपृश्निपार्ष्णिभूर्णिचूर्णितूर्णिः" इत्यादिणिज् प्रत्यये निपात्यते ।(पार्ष्णीलः)। "सिध्मादिभ्यश्च" इत्यत्र पार्ष्णिधमन्योर्दीर्घश्चेतिपाठात् लचि दीर्घः । तच्चान्यतरस्यांग्रहणस्यानुवर्त्तनात् मतुपि ( पार्ष्णिमान् वर्षति । ववर्ष । ,वर्षतीति वर्षः ) [ अज्विधौ भयादिभ्य उपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम् ] इत्यच् । वृषेर्वा वर्षणादिति भाष्यकारप्रयोगात् ल्युट् । (वृष्टिः)। "तितुत्र०" इति नेट् । (वृषभः) 'ऋषिवृषिभ्यां कित्' इत्यभच् । (वृषः) । इगुपलक्षणः कः । वृषाय हितं (वृष्यम्) । "खलयवमाषतिलवृषब्रह्मणश्च" इति यत् । अत्राकारान्तस्य वृषशब्दस्य ग्रहणात् कनिन्युवृषीतिकनिन्नन्ताद्वृषन्शब्दाद्यन्न भवति । प्राक्क्रीतीयस्त्वनभिधानान्न भवति । वृषमात्मन इच्छति (वृषस्यति)। मैथुनं इच्छति इत्यर्थः । "अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि" इत्यसुक् । अश्ववृषयोर्मैथुनेच्छायामिति । अन्यत्र "क्यचि च" इतीकारे (वृषीयति । वृष्णिः) । 'प्रवृषिभ्यां कित" इति निः । (वृषणः) बाहुलकात् क्युन् । वर्षत इति स्नेहने गतः ( मर्षति । ममर्ष । मृषित्वा । मर्षित्वा ) "तृषिमृषिकृशेः काश्यपस्य" इति सेट्त्वक्तः कित्त्वविकल्पः । अनिट्पक्षे (मृष्ट्वा, निष्ठायां मृष्टम्) । "मृषस्तितिक्षायाम्"

इति क्त्विसनिटो निष्ठायामेवेति दैवादिकस्य तत्र ग्रहणं, स हि सेट्, मृषस्तितिक्षायामिति दिवादिर्युजादिश्च स्वरितेतौ ॥ ६९४ ॥

घृषु संघर्षे ॥ ( घर्षति । संघर्षणम् । घृष्टम् ) ॥ ६९५ ॥

हृषु अलीके ॥ (हर्षति । हृष्टानि लोमानि । हर्षितानि लोमानि। हृष्टं लोम, हर्षितं लोमभिः) । अत्रोदित्वान्नित्यसनिट्त्वे प्राप्ते "हृषेर्लोमसु" इति लोमविषयालीकवाचित्वात्पक्षे इडागमः । यस्तु दिवादौ हृष तुष्टाविति पठ्यते तस्य तु सेट्कत्वान्निष्ठायामनेन पक्षे इणिनिषिध्यते इतीयमुभयत्र विभाषा, अत्र लोमान्यङ्गजानि केशाश्चेति वृत्तावुक्तम् । लोमभ्योन्यत्र हृष्टमित्येव भवति, दैवादिकस्य तु हृषितमिति । ( हृष्टो देवदत्तः, हृषितो देवदत्तः, ) विस्मत इत्यर्थः । ( हृष्टा दन्ता हृषिता दन्ताः) । प्रतिहता इत्यर्थः । [ विस्मितप्रतिघातयोश्चेति वक्तव्यम् ] इति इड्विकल्पः । (हर्षुलः) । "हृषेरुलच्" इत्युलच् । (हर्षयित्नुः) । स्तनिहृषी-त्यादिना ण्यन्तादित्नुच्॥ ६९६ ॥

तुस हस ह्लस रस शब्दे ( तोसति । तुतोस । तोसिता । तोसिष्यति । तोसतु । अतोसत्। तोसेत् । आशिषि । तुस्यात् । अतोसीत् । तुतुसिषति । तुतोसिषति । तुसित्वा । तोसित्वा) "रलो व्युपधा" इति क्त्वविकल्पः। (तोतुस्यते। तोतोस्ति । तोतुधि)इत्यत्र सेर्हेर्धि-भावे चकाधीतिवत्"धि च"इति सलोपः। लङि तिप्सपोर्हल्ङ्यादिलोपे"तिप्य नस्तेः"इति सकारस्य दत्वं (अतोतोः) इति भवति ( तोसयति । अतूतुसत् । हसति । जहास हसितेत्यादि । जिहसिषति । जाहस्यते । जाहस्तीत्यादि तुसिवत् । हासयति । अजिहसत् । हस्त्रः । ) बाहुलकाद् "हस्त्रं लघुः" इति निर्देशाद्वा वप्रत्ययः । ( हसिष्टः । हसीयान् ) "पृथ्वादिभ्य इमनिज्वा" इति इमनिच् । "स्थूलदूर०" इति इष्ठेमेयःसु यणादिपरं लुप्यते पूर्वस्य च गुणः । एतत्स्थूलादिविषयं यथासम्भवम् । अत्र यणादिलोपस्य "असिद्धवदत्रा०"इत्यसिद्धत्वाट्टेरिति लोपो न भवति । हस्त्रं करोति (हसयति) णाविष्ठवदिति यणादिलोपः अङ्गवृत्ते पुनर्वृत्ताविति वृद्ध्यभावः । भाष्ये अग्लोपित्वाचङि इत्वाभावात् (अजहसत् । ल्हसतीत्यादि हसिवत् । रसतीत्यादि) । रस इति रस आस्वादनस्नेहनयोरिति चौरादिकस्य । ण्यन्तस्य, रसयतीति हि तस्य व्युत्पत्तिः ॥ ७०० ॥

लस श्लेषणक्रीडनयोः(लसतीत्यादि । विलासी) । "वौ कषलस०"इति तच्छीलादौ विनुण् न लसः, (अलसः, आलस्यम् ) । *न नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणवटयुधकतरसलसेभ्यः* इति नञ्पूर्वात्तत्पुरुषादचतुरसङ्गतलवणाद्युत्तरे भावप्रत्यया न भवन्तीति निषेधश्चतुरादिपर्युदासादिह नेति ष्यञ् भवति । एवं नरसेः, (अरस्यमिति । अलसोप्यालस्यः) । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् भवति । लस शिल्पयोग इति चुरादौ ॥ ७०१ ॥

घस्लृ अदने ॥ अयं न सार्वत्रिकः,"लिट्यन्यतरस्याम्"इति अदेर्घस्लादेशविकल्पविधानवैयर्थ्यप्रसङ्गात् । द्वैरूप्यं हि साध्यम् । ततश्च यत्र लिङ्गं वचनं वास्ति तत्रैवास्य प्रयोगः । अत्रैव पाठः शपि परस्मैपदे लिङ्गम् । लृदित्करणमङि । घसिश्च सान्तेष्विति इणिनिषेधो वलाद्यार्धधातुके । यत्र प्रत्यये प्रतिपदोपात्तं "सृघस्यदः क्मरच्" इत्यादौ तद्वचनम् । (घसति । घस्ता । घत्स्यति) । "सः स्यार्धधातुके" इति तत्वम् ( घसतु । अघसत् । घसेत् । ) शबभावादाशिष्यस्याप्रयोगः । (अघसत्),लृदित्त्वादङ्। (घत्स्यते देवदत्तेनान्नम्)इत्यादौ शप्परस्मैपदाभावेपि वलादिनिमित्तः प्रयोगः (घस्मरः) "सृघस्यदः क्मरच्" इति क्मरच् तच्छीलादौ । (घासः) भक्ष्यतृणादिः । जनिघसिभ्यामिण् । (घासिः),जघासेति घासः प्रघास इति भटभास्करो"बहुलं छन्दसि" इति घस्लादेश औणादिक इत्याह । तदस्य घसेरस्मरणात् ॥ ७०२ ॥

जर्ज चर्च झर्झ परिभाषणहिंसातर्जनेषु ॥ ( जर्जति । चर्चति झर्झति । झर्झरः ) बाहुलकादरः । चर्चझर्झयोस्तुदादौ पठिष्यमाणयोरिह पाठः स्वरार्थ इति देवमैत्रेयपुरुषकारेषु । उष्मान्तेषु पाठोर्थानुरोधादिति च मैत्रेयः । चर्च अध्ययनइति चुरादौ ॥ ७०९ ॥

पिसृ पेसृ गतौ (पेसति । पेसयति । अपिपेसत् । एकारोपधपाठः किमर्थं इति (पिपेसतुः । पेपेस्यत इत्यादि । पेस्वरः ) "स्थेशभासपिसकसो वरच्" इति वरच् । इह क चित् विसृ वेसृ पिशृ पेशृ इत्यपि पठ्यन्ते । आद्यौ दन्त्योष्ठ्यादी तालव्योष्मान्तौ चत्वार एते मैत्रेयादिषु न दृश्यन्ते । पिस अवयव इति तु चुरादौ ॥ ७०७ ॥

हसे हसने ( हसति । जहास । अहसीत् । "ह्म्यन्तक्षण०" इत्यादिना वृद्धिनिषेधः । ( व्यतिहसन्ति) । [प्रतिषेधे हसादीनामुपसंख्यानम्] इति तङ्निषेधः। (हसः) । "स्वनहसोर्वा" इत्यनुपसृष्टात् पक्षे अप् । तदभावे घञ्, (हासः) । उपसृष्टात् तु नित्यं घञेव (प्रहास इति) । (हस्तः) हसिमृग्रिण्०" इत्यादिना तन् । "तितुत्रेति०" इण्निषेधः । हस्तोऽस्यास्तीति (हस्ती)"हस्ताज्जातौ"इति इन् प्रत्ययः । हस्तिनां समूहो (हास्तिकम्) । "अचित्तहस्तिधेनोष्ठक्" इति ठक् "नस्तद्धिते" इति टिलोपः । लिङ्गविशिष्टपरिभाषया हस्तिनीशब्दादपि ठकि "भस्याढे तद्धिते" इति पुंवद्भावः । (हास्तिकमित्येव) । हस्तिधेनुभ्यां तदन्तविधेरिष्टत्वात् (वानहस्तिकम्)इत्याद्यपि भवति। हस्ति प्रमाणमस्य (हास्तिनः पुरुषः) । पुरुषहस्तिभ्यामण् च" इति प्रथमान्तात् प्रमाणोपाधिकात् अस्येत्यर्थेऽण्प्रत्ययः । चकाराद्द्वयसज्दघ्नञ्मात्रचो भवन्ति (हस्तिद्वयसम् । हस्तिदघ्नम् । हस्तिमात्रमिति) । अणि "नस्तद्धिते" इति टिलोपः "इनण्यनपत्ये" इति प्रकृतिभावान्न भवति । हस्तेन दीयते कार्यं वा (हस्त्यम्) । "तेन यथाकथाचहस्ताभ्यां णयतौ" इति तृतीयान्तात् दीयते कार्यमिति एतयोरर्थयोर्यत् । हस्ते नक्षत्रे जातो (हस्तः) । नक्षत्राणः "श्रविष्ठाफल्गुनी०" इत्यादिना लुक् । (हस्रं मुखम् ।) "स्फायितञ्चि०" इत्यादिना रक् ॥ ७०८ ॥

णिश समाधौ ॥ तालव्योष्मान्तः ( नेशति । प्रणेशति । निनेश । नेनिशानि । निनिशिषति । निनेशिषति । निशित्वा । नेशित्वा । नेनिश्यते । नेनेष्टि) व्रश्चादिना षत्वं ष्टुत्वम् । ( नेशयति । अनीनिशत् ) अत्र मैत्रेयो निशाशब्दमस्मादाह । तस्याभिप्रायः, क्विपि आर्षं चैव हलन्तानां यथा वाचा निशा दिशेति टाप् । अन्ये तु नितरां शेरतेऽस्यामिति शेतेधिकरणे डप्रत्यये व्युत्पादयन्ति । निशायां भवं ( नैशिकम् ) । "निशाप्रदोषाभ्यां च" इति शैषिकः पक्षे ठञ् । तदभावे प्राग्दीव्यतीयेऽणि (नैशम् ) ॥ ७०९ ॥

मिश मश शब्दे रोषकृते च ॥ इमौ तालव्योष्मान्तौ । (मेशति । मशतीत्यादि । मशकः ।) सञ्ज्ञायां कुन् ॥ ७१० ॥

शव गतौ ॥ दन्त्योष्ठ्यान्तः । (शवति । शवम् ) क्विप्यूठि वृद्धौ (शौः) ॥ ७११ ॥

शश प्लुतगतौ । तालव्योष्माद्यन्तः ( शशति । शशः । शशनः ) "चलनशब्दार्थ०" इति युच् । अत्र कश गताविति क्वचित् पठ्यते, तत् "प्रतिष्कशश्च कशेः" इत्यत्र वृत्तौ कश गतिशासनयोरित्यादादिकस्योपादानादनार्षमिव प्रतीयते । तथा "नाभ्यस्तस्य०" इत्यत्र प्रकृत्यन्तराणां चेति भाष्यवृत्ती प्रकृत्य तद्व्याख्यातृभिरादादिक एवोपादीयते ॥ ७१२ ॥

शसु हिंसायाम् ॥ दन्त्योष्मान्तः ( शसति । शशास । शशसतुः ) "न शस०" इत्येत्वाभ्यासलोपनिषेधः । शस्यतेऽनेनेति (शस्त्रम्) । "दाम्नीशस०" इति करणे ष्ट्रन् । षित्त्वात् स्त्रियां (शस्त्री । शस्यम्) । "तकिशसि" इत्यादिना यत् । शंस्यमिति "ह(१)न्त्यर्थाश्च" इति चुरादिपाठात् स्वार्थं णौ यति । ( शसित्वा शस्त्वा । ) उदित्त्वादिड्विकल्पः । ( शस्तो वृषलः विनीत इत्यर्थः । "धृषिशसी वैयात्ये" । धृषिशसी यदा वैयात्यविषयौ तदैताभ्यां परस्या निष्ठाया इडभाव इति नियमादन्यत्र (विशसित) इति भवति । विशसितुर्धर्म्यं (वैशस्त्रम् ) । (१)ऋतोः इति षष्ठ्यन्ताद्धर्म्यमित्यर्थेऽञ्प्रत्ययः । तत्र [विशसितुरिड्लोपश्च] इति वचनादिड्लोपः । आशंसत इतीच्छायां गतः ॥ ७१३ ॥

शंसु स्तुतौ ॥ अयं दुर्गः द्वावपि तालव्योष्मादी । ( शंसति । शशंस । शंसितेत्यादि ) ।

(१) एतच्चुरादावुपलब्धपुस्तकद्वये ऽपि नोपलब्धमिति तत्रत्यटिप्पण्यां लिखितम् ।

आशिषि किञ्चात् "अनिदिताम्०" इत्युपधालोपे (शस्यात् । शिशंसिषति । शाशस्यते) । ङित्त्वान्नलोपः (शाशंस्ति) । यङो लुका लुप्तत्वात् प्रत्ययलक्षणाभावान्नलोपाभावः । (शासस्तः) इत्यादौ तसादीनां ङित्त्वान्नलोपः । (शासंधि) इत्यत्र हेरपित्त्वात् ङित्त्वान्नलोपे "धि च" इति सलोपः (शंसयति । अशशंसत् । शस्यम् ।) [शंसिदुहिगुहिभ्यो वेति वक्तव्यम् ] इति नलोपः । क्यवभावे ण्यति (शंस्यम् । शंसित्वा । शस्त्वा) उदित्त्वादिड्विकल्प इति "न क्त्वा सेट्" इत्यकित्त्वान्नलोपाभावः । (शस्तम् ) । "यस्य विभाषा" इति नेट् । नॄन् शंसतीति (नृशंसः ।) कर्मण्यण् । नरा एनं शंसन्ति नरा अस्मिन्नासीनाः शंसन्तीति वा (नराशंसः,) घञ् । अग्निर्देशविशेषो वा । वनस्पत्यादिषु पाठात्पूर्वपदस्य दीर्घः । ब्रह्माणानि शंसतीति (ब्राह्मणाच्छंसी.) रूढिरियम्प्रवृत्तिनिमित्तविशेषस्य । "सुप्यजातौ०" इति णिनिः । [ ब्राह्मणाच्छंसिन उपसंख्यानम् ] इत्यलुक् । अस्मादेव निर्देशात् द्वितीयार्थे पञ्चमी ( श्रेष्ठः । ज्येष्ठः । श्रेयान् । ज्यायान् ) *प्रशस्यस्य श्रः* । *ज्य च* इत्यतिशायनिकयोरजाद्योः श्रज्यावादेशौ भवतः । आदेशयोरकारोच्चारणसामर्थ्याट्टिलोपो न भवति । ज्यायानित्यत्र "ज्यादादीयसः" इति ज्यशब्दात्परस्य ईयसुन आदेराकारः । श्रेयसोपत्यं (श्रायसः) । "देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्" इति वृद्धिनिमित्तात्परत्वादेकारस्य स्थाने आकारादेशः । प्रशस्यमाचष्टे (श्रापयति । ज्यापयति) । [ तत्करोति० ] इति णिचि णाविष्ठवदिति श्रज्यादेशयोर्वृद्धौ पुक् ७१४ ॥

चह परिकल्कने ॥ परिकल्कनं शाठ्यम् ( चहति । चचाह । चेहतुः । चहितेत्यादि । अचहीत् ) हान्तत्वान्न वृद्धिः ( चिचहिषति । चाचह्यते । चाचाढि ) "हो ढः" "झषस्तथोर्धोऽधः" "ष्टुना ष्टुः," "ढो ढे लोपः" "ढ्रलोपे०" इति दीर्घः । अयं चुरादौ मित्प्रकरणे, कथादौ च मित्सु पान्तं मैत्रेयः पठिष्यति ॥ ७१९ ॥

मह पूजायाम् । (महतीत्यादि) । चहिवत् । (महीति) गौरादिपाठात् ङीष् । (महिषः) । "अविमह्योष्टिषच्" । टित्त्वात् स्त्रियां (महिषी) । महिषा अस्मिन् सन्ति (महिष्मान् देशः । [महिषाच्चेति वक्तव्यम् ] इति "तदस्मिन्नस्तीति देशे तन्नाम्नि"ति विषये ड्मतुप् । डित्त्वाट्टिलोपः । महिष्या धर्म्यं (माहिषम् )। "अण्महिष्यादिभ्यः" इत्यण् तस्य धर्म्यमिति विषये । (महान् महान्तौ । महान्तः) । [ वर्त्तमाने पृषन्महद्बृहज्जगच्छतृवच्च ] इत्यतिप्रत्यये निपातितः । शतृवद्भावात्नुम्, *सान्तमहतः०* इत्यसंबुद्धौ सर्वनामस्थाने दीर्घ उपधायां, संयोगापेक्षमुपधात्वम् । संबुद्धौ तु संयोगान्तलोपे (हे महन्) । शतृवद्भावादतिप्रत्ययस्य स्त्रियां "उगितश्च" इति ङीपि (महती) । महांश्चासौ पुरुषश्च (महापुरुषः) । *सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः* इति पूजावचनाः सदादयः पूज्यवचनैः सामानाधिकरण्यैः समस्यन्त इति तत्पुरुषे *आन्महतः समानाधिकरणजातीययोः* इति समानाधिकरण उत्तरपदे जातीयरि च प्रत्यये महत आत्त्वमित्याकारः । जातीयरि (महाजातीयः) । *प्रकारवचने जातीयर्* इति प्रकारो भेदः सादृश्यं च, तत्र वर्त्तमानात् स्वार्थे जातीयरिति जातीयर् । कथं महाबाहुर्देवदत्त इति, यावता "सन्महत्०" इति प्रतिपदोक्ते समासे समानाधिकरणस्योत्तरपदस्य संभवस्तत्रैवात्त्वेन भाव्यम् । सत्यम् । यद्येतावत् प्रयोजनं स्यात् आन्महतो जातीयरि चेत्येव ब्रूयात् । चशब्देनोत्तरपदमाक्षेप्स्यते, तच्च प्रतिपदोक्तमेव भविष्यति, एवं सिद्धे सति यदेतत् समानाधिकरणग्रहणं तत्समानाधिकरणमात्रप्रत्ययार्थं विज्ञायते । महत्या घासो (महाघासः) । [ महत आत्त्वे घासकरविशिष्टेषूपसङ्ख्यानं पुंवद्वचनं च ] इति पुंवद्भाव आत्त्वं च । कथं महाकरो महाविशिष्ट इति । अमहान् महान् संपद्यते महद्भूतश्चन्द्रमाः । अत्र अमहत्यां प्रकृतौ वर्त्तमानात् महच्छब्दात् कारणभूतस्य कार्यात्मना भावे द्योत्ये विधीयत इति महच्छब्दस्य गौणार्थत्वात् मुख्ये च कार्यसम्प्रत्ययात् आत्वाभावः । महतो भावः (महिमा) । पृथ्वादिमनिचि "टेः" इतिटिलोपः । महत इति वृद्धौ गतः ॥ ७१६ ॥

रह त्यागे ॥ (रहतीत्यादि । महतिवत । रहः । रहसी ।) असुन्प्रत्ययः । (विरहीकरोति) ।

"अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरि०" "अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च" इति च्वि-प्रत्ययः सलोपश्च । "अस्य च्वौ" इति ईत्वम् । रहसि भवं (रहस्यम्) । दिगादित्वाद्यत् । (अरहसम् । अवरहसम् । तप्तरहसम् )। "अन्ववतप्ताद्रहसः" इति अन्वादिपूर्वाद् रहःशब्दान्तात् समासमात्राद् अच् समासान्तः । (राहुः) । "हसनिरहिजीनी०" इत्यादिना उण् । रह त्याग इति कथादौ मित्प्रकरणे च चुरादौ ॥ ७१७ ॥

रहि गतौ ( रंहति । ररंह । रंहिता) इत्यादि । इदित्त्वेन (रारंह्यते) इत्यादौ नलोपो न भवति । (रंहः) । असुन् ॥ ७१८ ॥

दृह दृहि बृह बृहि वृद्धौ ( दर्हति । ददर्ह । दर्हितेत्यादि । दरीदृह्यते ) "रीगृत्वतः" इति रीक् ( दर्दहीति । दर्दर्घि ) *दादेर्धातोर्घः* इति झलि पदान्ते च हकारस्य घकारः । "झ-षस्तथो०" इति धत्वम् । "झलां जश् झशि" इति जश्त्वेन गकारः । (दाधर्त्सीत्यत्र) "एका-चो बशो०" इति दकारस्य धकारः । "खरि च" इति धकारस्य चर्त्वे तकारः । लङि तिप्सि-पोरपृक्तलोपे घत्वभष्भावजश्त्वचर्त्वेषु (अदर्धक्) । "रात्सस्य" इति नियमान्न संयोगान्तलो-पः । चर्त्वस्य पूर्वत्रासिद्धत्वाद् झषन्तत्वम् ( दर्हयति । अददर्हत् । अदीदृहत् । दर्हित्वा । दर्हितम् । दृंहति । ददृंह । दृंहिता । दिदृंहिषति । दरीदृंह्यते ) "रीगृत्वतः" इति रीक् ( द-र्दृंहीति । दर्दृङ्धि । दर्दृङ्धः ) लङि तिप्सिपोर्हल्ङ्यादिलोपे पदान्तसंयोगान्तलोपे पदा-न्तत्वे झषन्तत्वाभावान्न भष्भाव इति (अदर्दृन् । दृंहित्वा । दृहित्वा । दृंहितम् । दृढः ।) "दृढः स्थूलबलयोः" इति क्तस्यानिट्त्वात्तकारस्य ढत्वं नकारहकारयोर्लोपश्च निपात्यते । दृंहेरपीदं निपातनम् । तथा च वृत्तिः । अथ दृहिः प्रकृत्यन्तरमस्ति तस्याप्येतदेव सर्वं नलोप-वर्जमिति । स्थूलबलाभ्यामन्यत्र दृंहितः । नन्वत्र तकारस्य ढत्वे हकारलोपश्च किमर्थं निपा-त्यते । यावता हो ढे "झषस्तथोः" इति धत्वे ष्टुत्वढलोपयोः सिद्धं दृढ इति । सत्यं सि-द्ध्यति । इह हि दृढिमा । द्रढीयान् । द्रढिष्ठः । दृढमाचष्टे द्रढयति । "र ऋतो हलादेर्लघोः" इति ऋकारस्य विधीयमानो रभावो ढलोपस्य पूर्वत्रासिद्धत्वात् संयोगपरत्वेन गुरुत्वाल्लघुत्वा-भावान्न स्यात् । तथा च परिद्रढय्येत्यत्र परिदृढमाचष्ट इति विगृह्य सोपसर्गाच्चेत्संग्रामय-तेरेवेति नियमाद् दृढशब्दाण्णौ टिलोपे क्त्वान्ते समासे क्त्वो ल्यपि च कृते "ल्यपि लघुपूर्वा-त्" इति लघुपूर्वाद्वर्णात्परस्य णेर्ल्यपि परे विधीयमानोऽयादेशो न स्यात् । नन्वेवमपि टिलो-पस्य "असिद्धवद्" इत्यसिद्धत्वान्न लघुपूर्वाद्वर्णात्परो णिर्भवति । नैतत् । णौ टिलोपो णे-र्ल्यप्ययादेश इति व्याश्रयत्वेनासिद्धत्वाप्रसङ्गात् । न च पूर्वस्मादपि विधौ स्थानिवद्भाव इति टिलोपस्थानिवत्त्वेन व्यवधानम् । प्रवेभिदय्य गतः प्रस्तनय्य गत इत्यादीनां भाष्ये उदाहर-णात् । यद्वा लघुपूर्वादित्यनेन सामर्थ्यादन्यपदार्थस्य वर्णस्यापेक्षयात्र वर्णग्रहणे जातिग्रहण-मिति "निपात एकाच्०" इत्येकग्रहणेन ज्ञापकात्स्थानिवद्भावेन व्यवधानेपि न दोषः । यथा परिवृढस्यापत्यं पारिवृढी कन्येत्यत्र *अणिञोः०* इति अनार्षे गोत्रे यावणिञौ तदन्तयोर्गु-रूपोत्तमयोः स्त्रियां ष्यङिति ष्यङ् प्रसज्येत । (वर्हति । बृंहतीत्यादि पूर्ववत् ।) दादित्वाभावान्न घत्वमिति झलि पदान्ते "हो ढः" । (एवं परिवृढः) । "प्रभौ परिवृढः" इति इडभावादि पूर्ववन्नि-पात्यते । अत्रापि हलोपादेः पूर्ववत् प्रयोजनम् । प्रभोरन्यत्र (परिवृंहित) इति । सानुषङ्गावेव पाणिनीयौ । यदाह वृत्तिकारः दृढपरिवृढनिपातनं, यदि दृहिः प्रकृत्यन्तरमस्तीति, निरनुष-ङ्गौ भाष्यकारीयौ, दृश्येते हि वृढनिपातनं किमर्थं, न दृंहेरिड् भवतीत्येवोच्येत परिवृढनिपात-नं किमर्थं परिपूर्वाद्बृहतेनड्भवतीत्येवोच्येतेति, तथा "न धातुलोप आर्धधातुके" इत्यत्र दृहिः प्रकृत्यन्तरमस्तीति ॥ ७१९ ॥

बृहि शब्दे ॥ बृंहितं करिगर्जितम् । बृहिर् इति चन्द्रगुप्तौ । तत्फलं च (अबृहत् )॥ अबर्हीदिति पक्षे इट्सिद्धिरित्याह । क्षीरस्वामी वृह वृहि भाषार्थौ । वर्हत इति प्राधान्ये गतम् । तुहिर् दुहिर् उहिर् अर्दने ॥ (तोहति । तुतोह । तोहिता) । लुङि "इरितो वा" इति पक्षे अ-

ङ ( अतुहत् । अतोहीत् । तुतुहिषति । तुतोहिषति । तुहित्वा । ) "रलो व्युपधाद्०" इति कित्त्वम् । ( तुह्यति । तोतोढि । तोतूढ इत्यादि । तोहयति । अतूतहत् । तुहितम् ) "वेपितुह्योर्हस्वश्च" इतीन् प्रत्ययः, ह्रस्ववचनं वेपत्यर्थम् । (ग्रेहतीत्यादि । तोहतिस्म । ) दिहिदुंहिमेंहतिरोहती इत्यनिट्कारिकायां मैत्रेयादयो नास्य ग्रहणमिच्छन्ति । (ग्रेहति । उवोह । ऊहतुः ऊहुः ओहितेत्यादि) उपिवत्प्रक्रिया, लुङि (मा भवानुहत् ) ॥ ७२६ ॥

अर्ह पूजायाम् ॥ हकारप्रसङ्गादनिडपीह पठितः । (अर्हति । आनर्ह । अर्हिता । अर्जिहिषति माभवानर्जिहत् । सुखार्हः दुःखार्हः) ।"अर्हः"इति कर्मण्युपपदेऽच् । (अर्हन् )।"अर्हः प्रशंसायाम्" इति शता । प्रशंसाया अन्यत्र (वधमर्हति चोरः)। अर्हतो भाव (आर्हन्त्यम् ।) "अर्हतो नुम् च" इति ब्राह्मणादिपाठात् ष्यञ्नुमौ । (अर्घः) संज्ञायाम अर्घमेघनिदाघा इति न्यङ्क्वादिपाठात् कुत्त्वम् । अर्घो विक्रीयमाणस्य धान्यादेरियत्ता । अन्ये तु मूल्यमिति, तथा चानर्घ्य इति पठ्यते । अमूल्यमित्यर्थः । पूजाविधिरप्यर्घार्थमुदकम् (अर्घ्यम्) । "पादार्घाभ्यां च" इति तादर्थ्ये यत् । अर्हतिराधृषीयोपि । घुषिरादय उदात्ता उदात्तेतः ॥ ६६२ ॥

एवं तुहिरादितुह्यन्तात् विकल्पितेटः परिसमाप्य आत्मनेपदपरस्मैपदभेदेन विकल्पितेटो ऽन्यानप्याह ।—

द्युत दीप्तौ ॥ एतदादयः कृपूपर्यन्ता उदात्ता अनुदात्तेतः । (द्योतते । दिद्युते ।) "द्युतिस्वाप्योः सम्प्रसारणम्" इति हलादिशेषं बाधित्वा सम्प्रसारणमभ्यासस्येति शेषः ( द्योतिता । द्योतिष्यते । द्योतताम् । द्योतेत । आशिषि द्योतिषीष्ट । अद्योतिष्ट । अद्युतत् ) "द्युद्भ्यो लुङि" इति वा परस्मैपदम् । दयुद्भ्य इतिबहुवचनादाद्यर्थावगतिः । यदा परस्मैपदं तदा पुषादित्वादङ् ( दिद्युतिषते । दिद्योतिषते । द्युतित्वा । द्योतित्वा ) "रलोव्युपधा०" इति वा कित्त्वम् । देद्युत्यते । "द्युतिस्वाप्योः०" इत्यभ्यासस्य संप्रसारेण "गुणो यङ्लुकोः" इत्यभ्यासनिमित्तत्वेन प्रत्यये नानन्तर्यमाश्रीयते इति णिचा व्यवधानेऽप्यत्र संप्रसारणं भवति । अत एव तत्र वृत्तौ अदिद्युतदित्युदाहारि । तथा "दाधर्ति०" इतिसूत्रे दविद्युतदित्यत्र द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य संप्रसारणाभावो विगागमश्चात्वं चास्य निपात्यत इत्युक्तम् । आनन्तर्ये ह्याश्रीयमाणे यङो लुका लुप्तत्वादानन्तर्याभावान्न संप्रसारणस्य प्रसङ्ग इति किं तदभाववचनेन । अत्र शिवदेवः । "हेरचङि०" इति अभ्यासादुत्तरस्य हिनोतेः कुत्वमुक्त्वा तस्याचङीति निषेधाङ्गित्वात्प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमिति सामान्येन परिभाषामाश्रित्य पर्यहार्षीत् । अभ्यासस्य निमित्ते प्रत्ययानन्तर्ये आश्रीयमाणे ऽजीहयदित्यत्र णिचा ऽङो व्यवधानात्कुत्वाप्रसङ्गेपि क्रियमाणोयं निषेधो ण्यधिकस्य ज्ञापयति । अस्याः परिभाषायाः सामान्यापेक्षत्वं वार्तिककारस्याभिमतम् । यदाह देवः चङोन्यत्र ण्यधिकस्यापि कुत्वं भवति, तेन प्रजिघाययिषतीति सिद्धं भवतीति । तथा च वार्त्तिकमपि । [ हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात ] ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वज्ञापनार्थमिति । एवं "स्तम्बकर्णयोरमिजपोः" "अर्हः" इत्यादौ ण्यधिकस्य ग्रहणाभावाद् ण्यन्तादचो ऽभावादणि सुखार्हीत्यादि सिद्धति । यदुक्तं सीरदेवेन ण्यधिकपरिभाषाया अव्यापिनीत्वात् अर्हादावप्रवृत्तिरिति । सामान्यत्वमङ्गीकृत्य तदपि वृत्तिवार्त्तिकविरोधादेव प्रत्युक्तम् । अस्योदुपधत्वाद् "उदुपधाद्भावादिकर्मणो०" इति निष्ठायाः कित्त्वविकल्प उदाहार्यः । ( द्युतितमनेन द्योतितमनेनेत्यादि विद्युत् ) । "भ्राजभास०" इत्यादिना क्विप् । (दिद्युत्) । [द्युतिगमिजुहोतीनां द्वे च] इति क्वौ द्वित्वे ऽभ्यासस्य सम्प्रसारणम् । (ज्योतिः) । द्युतेरिसन्, आदेश्च ज इतीसन् आदेश्च जः ॥ ७२८ ॥

श्विता वर्णे ॥ ( श्वेतते । शिश्विते । श्वेतिता । अश्वितत् । आश्वेतिष्टेत्यादि पूर्ववत् । श्वितम् ) "ओदितश्च" इति निष्ठायामनिट्त्वम् । भावादिकर्मणोस्तु "विभाषा भावादिकर्मणोः" इतीडप्युदाहार्यः। (श्वितितमनेनेत्यादि । श्वित्रम्)। "स्फायितञ्चि०" इत्यादिनारक् ७२

ञिमिदा स्नेहने ॥ (मेदते । मिमिदे । मेदिता । अमिदत् । अमेदिष्टेत्यादि) *मिदेर्गुणः* इत्यत्र शिदग्रहणमनुवर्त्तते तच्च कर्मधारय इति यस्मिन्विधिरितीत्संज्ञकशकारादौ गुण इति शप्यगुणाभावः । (मिन्नः)। "श्वीतः क्तः"। "रदाभ्याम्" इति नत्वम् । आदित्त्वादनिट्त्वम् । भावादिकर्मणोस्तु "विभाषा भावादिकर्मणोः" इति चेट्, "निष्ठाशीङ्" इति सेटो निष्ठायामकित्त्वाद्गुणे (मेदितमनेनेत्यादि । (मेदुरः) । "भञ्जभासमिदो घुरच्" । (मित्रम् ) । "अमिमिदिशसिभ्यः त्रन्" इति त्रन् । अयं दिवादिश्चुरादिश्च । मिद मेधाहिंसनयोरिति क्र्यादौ । ञिमिदा स्नेहने मोचने च । स्नेहनमोचनयोरिति क्वचित्पठ्यते ॥ ७३० ॥

ञिष्विदा गात्रप्रस्रवणे ॥ ( स्वेदते । सिष्विदे । स्वेदिता । अस्विदत् । अस्वेदिष्ट । सिस्विदिषते ) । "स्तौतिण्योरेव०" इत्यषत्वम् । ( सेष्विद्यते । सेष्वेत्ति । स्वेदयति । असिस्विदत् ) ण्यन्तात्सनि "सः स्विदिस्वदिसहीनां च" इति अभ्यासात्परस्य षत्वम् । सिस्वेदयिषतीति । निष्ठायां मिदिवत् ( स्विन्नः ) इत्यादि । अत्र स्वामी ञिक्ष्विदेति क्ष्वकारं पठित्वा ञिष्विदेति नान्दीत्याह । तत्र ( क्ष्वेदते । चिक्ष्विदे । अक्ष्विदत् । अक्ष्वेदिष्टेत्यादि ) क्ष्वेदतीत्यव्यक्ते शब्दे भविष्यति । स्विद्यतीति स्नेहनसेकयोर्दिवादौ । स्विद्यतीति गात्रप्रक्षरणे ॥ ७३१ ॥

रुच दीप्तावभिप्रीतौ च ॥ (रोचते देवदत्ताय मोदकः) । "रुच्यर्थानां प्रीयमाणः" इति प्रीयमाणस्य संप्रदानत्वाच्चतुर्थी । (रुरुचे । रोचिता । अरुचत् । अरोचिष्ट । रुरुचिषते । रुरोचिषते । रुचित्वा । रोचित्वा) भृशं रोचतइत्यर्थे यङ्लुगिष्यत इतिवृत्तिन्यासादौ । (रोचयति । रोचयते) । "अणावकर्मकात्" इति कर्त्रभिप्राये प्राप्ते परस्मैपदे "न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः" इति निषिध्यते ( रोचयति । रोचनः । रोचनम् ) नन्दिवासिदमिरुच्यसीधिवर्द्धिरोचिभ्यो ण्यन्तेभ्यः संज्ञायामिति नद्यादिपाठे ल्युः । ( रोचिष्णुः ) "अलंकृत्०" इत्यादिनेष्णुच् (रुच्यः) "राजसूय०" इत्यादीना कर्त्तरि क्यप् निपात्यते । ।(रोकः) । घञ् । "चजोः कुघिण्ण्यतोः०" इति निष्ठायामनिटः कुत्वं वदतो वार्त्तिककारस्य "विभाषा श्यावारोकाभ्याम्" इति निपातनात् कुत्वम् । (रोचिः) । "शुचिरुच्योः संज्ञाम्" इति सिः । (रुक्मम् ।) "युजिरुचिनिजां कश्च" इति मन्प्रत्ययः ; तकारस्य ककारः ( रोचकः ) । "क्वुन् शिल्पिसंज्ञयोः" इति क्वुन् ॥ ७३२ ॥

घुट परिवर्त्तने ॥ ( घोटते । जुघुटे । घोटिता । अघुटत् । अघोटिष्ट । घुटित्वा । घोटित्वा ) "रलो व्युपधाद्०" इति वा कित्त्वम्, ( जोघुट्यते । जोघोट्टि । घोटयति । अजूघुटत् । घुटितः) भावादिकर्मणो कित्त्वविकल्पे (घुटितमनेन घोटितमनेनेत्यादि) । अच् । (घोटः । घोटकः) । संज्ञायां कन् । (घुटिका) । संज्ञायां क्वुन् । अयं तुदादौ च ॥ ७३३ ॥

रुट लुट लुठ प्रतीघाते ॥ आद्यौ प्रथमान्तौ । अन्त्यो द्वितीयान्तः । अयं पाठो देवमैत्रेयादीनाम् । हरियोगिनस्तु द्वावेव । "धातोः कर्मणः०" इत्यत्र कैयटे द्वितीयान्तौ पठितौ । क्षीरस्वामी त्वेवं पठित्वा आह रुट लुटेत्येके । बाध्र लोडने इति लिङ्गाद् इति तथा लुठ दीप्तावित्यप्यसावाह, लुट इति तु शाकटायनः । सुधाकरस्तु भूवादिसूत्रे लुठतिर्द्वितीयान्तोपि लुठितो लोठमान इति प्रयोगदर्शनादित्याह ( रोठते । लोठते ) इत्यादि पूर्ववत् । लोठतीति लोडने गतम् । ( रुण्ठति लुण्ठतीति स्तेये । रोठति लोठतीत्युपघाते । लुण्ठतीत्यालस्यप्रतिघातयोः । रुण्ठति लुण्ठतीति) द्वयं गत्यर्थे ॥ ७३६ ॥

शुभ दीप्तौ ॥ (शोभते । शुशुभे । अशुभत् । शुशुभिषते । शुशोभिषते । शुभित्वा । शोशोभित्वा । शोशुभ्यते । शोशोब्धि । शोभयति । अशूशुभत् ) हिंसाभवनयोः (शोभति । शुभति) ॥ ७३७ ॥

क्षुभ सञ्चलने ॥ संचलनं प्रकृतिविपर्यासो गमनं च (क्षोभते । अक्षुभत् । अक्षोभिष्टेत्यादि ) पूर्ववत् । (क्षुब्धो मन्थः) । "क्षुब्धस्वान्त०" इति मन्थे निष्ठायामनिट्त्वं निपात्यते ।

अन्यत्र (क्षुभितः) । अयं दिवादिः क्र्यादिश्च ॥ ७३८ ॥

णभ तुभ हिंसायाम् ॥ (प्रणभते । नेभे । नभिता । अनभिष्ट । तोभते । तुतुभे । तोभिता । अतुभत् । अतोभिष्ट) । णभिरयमभावेपि वर्त्तते । नभन्तामन्यके सम इत्यत्र मा भूवन्नन्यके सर्वे इति निरुक्तम् । तथा नभन्तामन्यके मा ज्याका अधिधन्वसु' इत्यत्र भाष्येषु अन्यकेषां शत्रूणां धन्वसु स्थिता ज्याकाः छिन्ना मा भवन्त्विति । नभः समुद्रमाकाशश्च । असुन्नित्यादिना असुन्प्रत्ययः । इमौ दिवादी क्र्यादी च ॥ ७४० ॥

स्रंसु ध्वंसु भ्रंसु अवस्रंसने ॥

ध्वंसु गतौ च ॥ ( स्रंसते । सस्रंसे । स्रंसिता । अस्रसत् । अस्रंसिष्ट ) ।अङि नलोपः ( सिस्रंसिषते । सनीस्रंसीति । सनीस्रस्तः ) "नीग्वञ्चुस्रंसु०" इत्यादिना नीक् (स्रंसित्वा । स्रस्त्वा ) उदित्त्वादिड्विकल्पः । इटपक्षे क्त्वाभावान्नलोपाभावः ( स्रस्तम् ) उखायाः स्रंसते इति ( उखास्रत् ) "क्विप् च" इति क्विप् । "वसुस्रंसुध्वंसु०" इति पदान्तसकारस्य दकारः । (सनीस्रस्तः) । यङ्लुगन्तात् क्वौ नलोपः । दत्वं सानुबन्धकनिर्देशान्न भवति । रुत्वविसर्जनीयौ । "अत्वसन्तस्य०" इति दीर्घो ऽधातोरिति निषेधान्न भवति । (सनीस्रंसः) । अच्परे यङ्लुकि यङो लुप्तत्वात् प्रत्ययलक्षणाभावान्नलोपाभावः । (एवं ध्वंसते) इत्यादि । अत्र तृतीयं मैत्रेयस्वामिबोधन्यासमम्मताकारादयः तालव्योष्मान्तं पठन्तो नीग्विधावपि तथा वदन्ति । (भ्रंशतइत्यादि) । अत्र क्वचित् भ्रंशिरपि पठ्यते । भ्रशु भ्रंशु अधःपतनइति दिवादौ देवमैत्रेयादिमते । स्रसते इति प्रमादे गतः ॥ ७४४ ॥

स्रम्भु विश्वासे (विस्रम्भते । सस्रम्भे । स्रम्भिता । अस्रभत् । अस्रम्भिष्ट । सिस्रम्भिषते । सास्रभ्यते । सास्रम्भि । स्रम्भयति । असस्रम्भत । स्रम्भित्वा । स्रब्ध्वा । विस्रम्भी ) "वौ कषलस०" इति घिनुण् । स्रम्भतइत्यादि तालव्यादिः काश्यपादिमते प्रमादे गतः ॥ ७४५ ॥

वृतु वर्त्तने ( वर्त्तते । ववृते । वर्तिता । वर्त्तिष्यते । वर्त्स्यति । वर्त्तताम् । अवर्त्तत । वर्त्तेत । वर्त्तिषीष्ट । अवृतत । अवर्त्तिष्ट । अवर्त्तिष्यत । अवर्त्स्यत । विवर्त्तिषते । विवृत्सति ) *वृद्भ्यः स्यसनोः*वा परस्मैपदम् । वृद्भ्य इति बहुवचननिर्देश आद्यर्थावगमार्थ इति वृतुवृधुशृधुस्यन्दिकृपीनामपि स्यसनोर्वा परस्मैपदं द्रष्टव्यम् । *न वृद्भ्यश्चतुर्भ्यः* इति सकादेरार्धधातुकस्य परस्मैपदपरस्य इडभावः, झलादेः सनः "हलन्ताच्च" इति कित्वाद्गुणत्वम् । "न वृद्भ्यश्चतुर्भ्यः" इति अत्र भाष्यवार्तिकयोः[सिद्धं तु वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनात् ] इत्युक्तत्वात् क्तपरेपि सादौ परस्मैपदे लुकि चेटः प्रतिषेधो भवति । (विवृत्सिता । विवृत्सितुम् । विवृत्सितव्यम् । ) विवृत्सेति सामान्येन वलादाविति सिद्धे आरभ्यमाणमिदमात्मनेपदेन समानपदस्येड्विधाने ऽर्थादन्यनिवृत्त्यर्थं, विवृत्सिषीयत इति आत्मनेपदेन समानपदस्थत्वेप्यन्तरङ्गः प्रकृत्याश्रयः प्रतिषेधो भवति । न तु बहिरङ्ग आत्मनेपदाश्रयो विधिः । (वरीवृत्यते) । "रीगृत्वतः इति रीक । (अववर्तः) इत्यादि नेयम् (वर्त्तयति । अववर्त्तत् । अवीवृतत् ।) वर्त्स्यन् वर्त्तिष्यमाणो वा (वर्त्तिष्णुः) "अलंकृञ्०" इत्यादिना इष्णुच् । (हस्तवर्त्तं वर्त्तयति) । *हस्ते वर्त्तिग्रहोः* इति हस्तवाचिनि करणे उपपदे ण्यन्तादस्मात् ग्रहेश्च णमुल् । हस्तइत्यर्थग्रहणमिति (पाणिवर्त्तम्) इत्याद्यपि भवति । कषादित्वाद्यथाविध्यनुप्रयोगः वृत्तः। अयं,यदान्तर्भावितण्यर्थस्तदा सकर्मकः, यथा "तेन निर्वृत्तम्" इति । निर्वर्त्तितमिति ह्यत्रार्थः, यद्येवं "णेरध्ययने वृत्तम्" इति निष्ठायामिडभावनिपातनं किमर्थं यस्मादन्तर्भावितण्यर्थादस्मात्वृत्तमध्ययनमिति भविष्यति । एवं तर्हि ण्यन्तादप्यध्ययने वृत्तमित्येव यथा स्यान्न तु वर्त्तितमित्येवमर्थं निपातनम् । अत्र वृत्तिकारो ऽमुं पक्षमुक्त्वा वर्त्तितो गुणो देवदत्तेनेति चेष्टमित्याह । अत्र हरदत्तः । तेषां नार्थः सूत्रेणेति । वृत्तं तद्विति (वर्त्म) । "उणादयो बहुलम्" । "भूतेपि दृश्यन्ते" इति मनिन् । (वर्त्मनिः) । रथमार्गः । "अदेर्मुट्" "वृत्तेश्च" इति मुडागमो निप्रत्ययश्च । अदि-

वृतिभ्यां मुद् चेति वक्तव्ये पृथग्योगकरणात्पक्षे मुग्न भवति। ( वर्त्तः ) इत्यपि भवति। (वर्त्तनो)। कृद्विकारत्वाङीन्। अयं भावार्थश्चुरादौ ॥ ७४६ ॥

वृधु वृद्धौ ॥ ( वर्धतइत्यादि पूर्ववत्। वर्धिष्णुः ) "अलंकृञ्०" इत्यादिनेष्णुच् ( वर्द्धनः ) नन्द्यादिपाठात् ल्युः। (वृद्धः)। अतिशयेन वृद्धौ (वर्षिष्ठः। वर्षीयान्) *प्रियस्थिर०* इति इष्ठन्नीयसुनोर्यथासंख्याद् वृद्धस्य वर्षादेशः ( ज्येष्ठः। ज्यायान् ) "ज्य च" इति ज्यादेशः। अकारोच्चारणसामर्थ्याट्टिलोपो न भवतीति प्रागेवोक्तम्। (वृद्धमाचष्टे वर्षयति। ज्यापयति।) णाविष्ठवदिति वर्षज्यादेशौ। वृद्धिः। "तितुत्र०" इति नेट्। वृद्ध्यर्थं द्रव्यमपि, तत् प्रयच्छतीति (वार्द्धुषिकः)। *तत्प्रयच्छति गर्ह्यम्* इति द्वितीयान्ताद् गर्ह्योपाधिकात्प्रयच्छतीत्यर्थे ठगिति ठक्। वृद्धेर्वृधुषभावः। वृधुषिः प्रकृत्यन्तरं वेति वृत्तिः। वृद्धेर्गर्ह्यत्वमशास्त्रीयत्वेन। अयं भावार्थश्चुरादौ ॥ ७४७ ॥

शृधु शब्दकुत्सायाम् ॥ शर्द्धत इत्यादि पूर्ववत्। अयं प्रहसने चुरादिः। वृतादयस्त्रय उदितः ॥ ७४८ ॥

स्यन्दू प्रस्रवणे ॥ ( स्यन्दते। सस्यन्दे। सस्यन्दिवहे। सस्यन्द्वहे ) ऊदित्त्वात् "स्वरतिसूति०" इत्यादिना वलादावार्द्धधातुक इड्विकल्पः ( स्यन्दिता। स्यन्ता। स्यन्दिष्यते। स्यन्त्स्यते) "वृद्भ्यः स्यसनोः" इति यदा परस्मैपदं तदा स्यन्देरूदिल्लक्षणमन्तरङ्गमपीड्विकल्पं "न वृद्भ्यः०" इति निषेधश्चतुर्ग्रहणसामर्थ्याद्बाधते इति ( स्यन्त्स्यति। अस्यन्त्स्यत्। सिस्यन्त्सतीत्येव भवति। स्यन्दताम्। अस्यन्दत। स्यन्दिषीष्ट। स्यन्त्सीष्ट। अस्यन्दिष्ट। अस्यन्दिष्यत ) इडभावे झलि सिलोपे चर्त्वे ( अस्यन्त। अस्यन्त्सातामित्यादि ) "द्युद्भ्यो लुङि" इति यदा परस्मैपदं तदा "पुषादिद्युताद्ि०" इति अङ्। अनुनासिकलोपः। ( अस्यदत्। अस्यदतामित्यादि। अस्यन्दिष्यत। अस्यन्त्स्यत। सिष्यन्दिषते। सिस्यन्त्सते। सिस्यन्त्सति। अनुस्यन्दते जलम्। अनुष्यन्दत इति वा) "अनुविपर्यभिनिभ्यः०" इति वा षत्वम्। एवं पर्यादिभ्य उदाहार्यम्। अप्राणिष्वित्यस्य पर्युदासत्त्वात्प्राण्यप्राणिसमुदायोपि प्राणिव्यतिरिक्त इति मत्स्योदके अनुष्यन्देते इत्यत्रापि वा मूर्द्धन्यो भवति ( स्यन्दित्वा। स्यन्त्वा) "क्त्वि स्कन्दस्यन्दोः" इत्यादिष्वपि नलोपो निषिध्यते। (स्यन्नः)। निष्ठायां "यस्य विभाषा"इत्यनिट्त्वम्। (स्यदः)। घञि"स्यदो जवे"इति निपातनन्नलोपः,वृद्ध्यभावश्च। जवादन्यत्र (स्यन्दः, स्यन्दनः) ।"अनुदात्तेतश्च० इति युज्वा। (सिन्धुः)। "स्यन्देः सम्प्रसारणं धश्च" इत्युप्रत्ययः सम्प्रसारणं धश्चान्तादेशः सिन्धौ जातः (सिन्धुकः। सैन्धवः)। "सिन्ध्वपकराभ्यां कन्"। "अणञौ च" इति कनणौ। सिन्धुरभिजनो यस्य (सैन्धवः)। "सिन्धुतक्षशिलादिभ्यामणञौ"इत्यण्। सिन्धौ भवादिरपि(सैन्धवः)। "कच्छादिभ्यश्च"इति शैषिकोण्। यश्च त्वयं भवानिर्मनुष्यः तत्स्थो वा तदा "मनुष्यतत्स्थयोर्वुञ्" इति वुञ्। (सैन्धवको मनुष्यः। सैन्धवकं हसितमिति)। लवणसिन्धौ भवं (लावणसैन्धवम्)। "प्राग् दीव्यतोण्" "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च"इत्युभयपदवृद्धिः ॥ ७४९ ॥

कृपू सामर्थ्ये ॥ (कल्पते। चक्लृपे। चक्लृपिषे। चक्लृप्से) इत्यादि स्यन्दिवत्। विशेषस्तु "लुटि च क्लृपः" इति लुटि स्यसनोरित्यत्र परस्मैपदं तदा "तासि च क्लृपः" इति लुटि सकारादावनिट्त्वं च ( कल्प्ता कल्प्तासीति ) पूर्ववदिदमूदिल्लक्षणं विकल्पं बाधते। अत्र चात्मनेपदेन सन्पदस्थस्येति स्थितमिति सन्नन्तात्कृति परस्मैपदे लुकि च निषेधो भवति। ( चिक्लृप्सिता। चिक्लृप्सेत्यादि ) "हलन्ताच्च" इति सनः कित्त्वान्न गुणः। तथा यदा लिङ्सिचोरात्मनेपदे इडभावस्तदा "लिङ्सिचावात्मनेपदेषु" इति कित्त्वान्न गुणः ( क्लृप्सीष्ट। अक्लृप्त। अक्लृप्सातामित्यादि ) इट्पक्षे (कल्पिषीष्ट)। अकल्पिष्टेत्यादि ) "कृपो रो लः" इति रेफस्य लत्वम्। तत्र वर्णात्मकस्य रेफस्य वर्णात्मको लकारः, यस्त्ववर्णात्मक ऋकारस्तस्यावर्णात्मक लृकारस्तत्र स्थान्यादेशयोः वर्णैकदेशयोः निर्देष्टुमशक्यत्वात् ऋकार-

स्य लकारः सम्बध्यते (चलीक्लृप्यते । चल्कल्सि । चलिकल्सि चलीक्लृ) इत्यादौ रिग्रीगुक्कामपि कृपो सक्तत्वेन तद्वदं फत्वाल्लत्वं भवति । तथा ह्युक्तम् । 'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्' इति । द्युतादीनां यङ्लुगन्तानां लुङ्यङ् नास्ति । "पुषादिद्युताद्ि०" इति गणनिर्देशात् तेन (अदेद्योतीत्) इत्येव भवति । सिजपेक्षोऽत्र गुणो नाजादिपिद्पेक्षः । तथा वृतादीनां यङ्लुगन्तानां "न वृद्भ्यः" इति इण्निषेधोपि गणनिर्देशान्न भवति । ( वरीवर्त्तिष्यतीत्यादेव) । कृपेस्तु गणनिर्देशाभावात् "तासि च क्लृपः" इति इण्निषेधो भवत्येव । (चल्क्लृप्तासीत्यादि) । द्युताद्य उदात्ता अनुदात्तेतः ॥ ७६० ॥

वृत् ॥ वृत् सम्पूर्णो द्युतादिर्वृतादिश्चेत्यर्थः। वृतु वर्त्तन इत्यस्माद्धातोर्भूतेपि क्विप् ॥ गणप्रयुक्तकार्यभाजो द्युतादीन् वृतादींश्च परिसमाप्यान्यानपि गणप्रयुक्तकार्यभाज आह—

घट चेष्टायाम् ॥ एतदादयस्त्वकारान्ता उदात्ता अनुदात्तेतः पितश्च, तत्फलं घटेत्यादौ "षिद्भिदादिभ्योऽङ्" इत्यङ् । घटादयः फणान्ता मितः, तत्फलं तत्रतत्र दर्शयिष्यते । ( घटते । जघटे । घटितेत्यादि । जिघटिषते । जाघट्यते । जाघट्टि । घटयति । अजीघटत् ) । मित्त्वात् "मितां ह्रस्व" इति णावुपधाह्रस्वः, यदा तु ण्यन्ताच्चिण्णमुलौ तदा *चिण्णमुलोर्दीर्घोऽन्यतरस्याम्* इति चिण्णमुल्परे णौ मितामुपधाया वा दीर्घशासनात् ( अघाटि अघटि घाटम् २ घटम् २ ) इति भवति । अमितस्तु वृद्धिरेव । ण्यन्तात्स्यादिषु चिण्वदिट्यपि वा दीर्घः । ( घटिष्यते । घाटिष्यते । अघाटिष्यत । अघटिष्यत । अघाटिषाताम् । अघटिषाताम् । घाटिषीष्ट । घटिषीष्ट । घाटिता । घटिता ) । चिण्वदिटोसिद्धत्वात् "णेरनिटि" इति णिलोपः । चिण्वदिडभावे गुणायादेशयोः कृतयोः (घटयिष्यत इत्यादि) कर्मकर्त्तर्येप्येवम् । लुङ्येकवचने तु "णिश्रि" इति यक्चिणोर्निषेधादङि (अजीघटत स्वयमेवेति) भवति । "अचः कर्मकर्त्तरि" इति चिण्विकल्पस्य ण्यन्ते न विषय इति प्रागेवोक्तम् । "घटादयो मितः" इति गणनिर्देशेन विधीयमानत्वान्मित्त्वस्य यङ्लुक्यभावात् न ह्रस्वो नापि दीर्घविकल्प इति (जाघाटयति। अजाघाटीत्यादि) भवति ।.(घटी) । अजन्तत्त्वात् "जातेरस्त्रीविषयात्" इति ङीष् । ( घटना ) । "घट्टिवन्दिविदिभ्यश्च" इति युच् । ( घटिका ) । "क्वुन् शिल्पिसंज्ञयोः" इति क्वुन् । अपरे गणान्तराधीता इह पठ्यन्ते तेषामिहोपात्त एवार्थे मित्त्वं, ये त्वपूर्वाः पठ्यन्ते तेषामुपात्ते वानुपात्ते वार्थे मित्त्वं, तदुक्तं बोधन्यासे, केचिदिहैव पठ्यन्ते तेषामुपसर्गादिना अर्थान्तरेऽपि सानुबन्धत्त्वं यथा (विघटयतीति,) अपरे गणान्तराधीता इह पठ्यन्ते तेषामर्थेन नियमः । यथा स्मृ चिन्तायामन्यत्र पठितो ऽत्र स्मृ आध्याने, आध्यानमुत्कण्ठापूर्वकस्मरणम् । ( स्मरयति । अन्यत्र स्मारयति ) । अत्र तरङ्गिण्यामपीदमेवार्थतत्त्वं स्थितम् । घाटयतीति घट सङ्घात इति चौरादिकस्य, तस्य हि मित्त्वं निषिध्यते । "नान्ये मितो हेतौ" इति ज्ञपादिपञ्चकव्यतिरिक्ता अहेतौ स्वार्थे णिचि मितो न भवन्तीत्यर्थः । अत एव स्वार्थे णिचि मित्त्वनिषेधाच्चेष्टायां मित्त्वार्थे तस्यायमनुवादो न भवति ॥ ७६१ ॥

व्यथ भयसञ्चलनयोः ॥ (व्याघ्रात् व्यथते ) । *भीत्रार्थानां भयहेतुः* इति बिभेत्यर्थानां त्रायत्यर्थानां च प्रयोगे भयहेतुः कारकमपादानमिति व्याघ्रस्यापादानत्वात्पञ्चमी । ( व्यथते । विव्यथे ) । "व्यथो लिटि" इत्यभ्यासस्य सम्प्रसारणं, *न सम्प्रसारणे सम्प्रसारणम्* इति पूर्वस्य यणो यकारस्य सम्प्रसारणपरत्वात्सम्प्रसारणं न भवति, सम्प्रसारणइति च सम्प्रसारणभाविनीत्यर्थः । अस्मादेव वचनसामर्थ्यात्पूर्वं परस्य सम्प्रसारणं क्रियते पश्चादन्यस्य, अत्र च वेलायामस्ति सम्प्रसारणपरत्वम् । अथ वा "व्यथो लिटि" इति सम्प्रसारणं हलादिशेषापवाद इति परस्यैव प्रसज्यते न पूर्वस्येति न चोद्यावकाशः । ( व्यथितेत्यादि । विव्यथिष्यते । वाव्यथ्यते । वाव्यथीति । वाव्यत्ति । व्यथयति । अविव्यथत् ) घटिवच्चिणमुलोरुदाहार्यम् । न व्यथत इति (अव्यथ्यः)। "राजसूय" इत्यादिना निपातितः। (अव्यथी ) "जिदृक्षि" इत्यादिना नञ्पूर्वात्ताच्छीलिक इनिः । ( व्यथा ) । षित्वादङ् ।

( विथुरः )। "विदिभिदि०" इत्यत्र व्यथेः सम्प्रसारणं चेति वचनात्कुरचि सम्प्रसारणम्। ( विथुरः )। "व्यथेः सम्प्रसारणं धः किच्च" इति वचनादुरचि सम्प्रसारणं थकारस्य धकारः। व्यथ दुःखचलनयोरिति दुर्गः। भयचलनयोरिति प्रकाशः। तवर्गचतुर्थान्तोयं दिवादौ ॥ ७६२ ॥

प्रथ प्रख्याने ॥ ( प्रथते। पप्रथे। प्रथितेत्यादि। प्रथयति। अपप्रथत् )। *अत् स्मृदृत्वरप्रथम्रदस्तृस्पशाम्* इति चङ्परे णावभ्यासस्यात्वं मित्त्वापवादः। ( अप्रथि। अप्राथीत्यादि) घटिवत्। ( पृथिवी )। "प्रथेः षिवन्सम्प्रसारणं च" इति षिवन् षित्त्वान् ङीप्। पृथिव्या निमित्तं संयोग उत्पातो वा पार्थिवः। 'सर्वभूमिपृथिवीभ्यामणञौ" इति अण्। पृथिव्या ईश्वरः पृथिव्यां विदित इति वा पार्थिवः। "तस्येश्वरः", "तत्र विदितइति च" इत्यण्, "पृथिव्या ञाञौ" इति प्राग्दीव्यतीयेष्वर्थेषु ञाञौ (पार्थिवम्।) अनयोः स्त्रियां विशेषः। ( पार्थिवा पार्थिवी। पृथुः )। "प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च" इति कुप्रत्ययः सम्प्रसारणं च। सलोपवचनं भृज्जत्यर्थम्। पृथोर्भावः ( प्रथिमा )। "पृथ्वादिभ्य इमनिज्वा" इति इमनिच्। "र ऋतो हलादेः" इति ऋकारस्य रशब्दः। इमनिजभावे "इगन्ताच्च लघुपूर्वात्" इत्यणि ( पार्थिवम् )। अत्र लघोः पूर्वत्वमिगपेक्षम्। तच्चेह द्वयोरचोरानन्तर्येणावस्थानासम्भवादेकहला व्यवधानमाश्रीयते। "वोतो गुणवचनात्" इति ङीषि (पृथ्वी)। गुणमुक्त्वा गुणिनि वर्त्तमानो गुणवचनः। अयं कथादावपि। अत्र केचित्पृथेति ऋकारोपधमपि पठन्ति। यदाह वर्द्धमानः। पृथिकन्दिक्षन्दिदक्षादीनां घटादौ पाठः चिण्णमुलोर्वृद्ध्यर्थं इति। अत्र स्वामी प्रथेः सम्प्रसारणविधानमार्षं मन्यते। पुरुषकारोपि यदप्रथयत् तत्पृथिव्याः पृथिवीत्वमिति श्रौतस्य निर्वचनस्यार्षपक्षेणवाञ्जस्यमिति। अन्यथा यदपर्थयदित्येव ब्रूयात्। पुनश्चोक्तम्। अथापि पृथेर्घटादिपाठे तत्फलं घटादयः षित इति षित्त्वादङि सति पृथेति रूपं द्रष्टव्यमिति। व्यथादिस्थान्तः, पृथ प्रक्षेपइति चुरादौ ॥ ७६३ ॥

प्रस विस्तारे ॥ ( प्रसते। पप्रसे। पिप्रसिषति। पाप्रस्यते। पाप्रस्ति )। लङि तिपि "तिप्यनस्तेः" इति दत्वे (अपाप्रत्) इति भवति सिपि "सिपि धातो रुर्वा" इति दत्वरुत्वयोः (अपाप्रत्। अपाप्रः। प्रसयति। अपिप्रसत्। अप्रसि। अप्रासीत्यादि। प्रसा ) ॥ ७६४ ॥

म्रद मर्दने ॥ ( म्रदते। मम्रदे। म्रदिता। मिम्रदिषते। माम्रद्यते। माम्रदीति। माम्रत्ति। म्रदयति। अमम्रदत् )। "अत् स्मृदृत्वरप्रथम्रद" इत्यादिनाभ्यासस्यात्वं मित्त्वापवादः। मृदुः। "प्रथिम्रदि" इत्यादिना कुप्रत्ययः सम्प्रसारणं च। नैतेन मृद्नातेोरभावोनुमातव्यः। तत्र संप्रसारणस्यान्यार्थं वक्तव्यत्वात्, सत्त्व एव हि मृद्नातोर्मृदेत्यादिनिर्देशोपपत्तिः। मृदोरपत्यं, (मार्दवम्) "शुभ्रादिभ्यश्च" इति ढक्। "ढे लोपोकद्र्वाः" इति उकारलोपः ( मृद्वी ) गुणवचनत्वात् ङीष्। ( मृद्विका )। कनि "केणः" इति ह्रस्वः। ( म्रदिमा )। पृथ्वादिभ्य इमनिचि "र ऋतः" इति रः। तदभावे (मार्दवम्,) स्वादुमृदुन इदं (सौवादुमृदवम्) "द्वारादीनां च" इति वृद्धिप्रतिषेध ऐजागमश्च। मृद क्षोद इति ऋकारोपधः क्र्यादौ॥७६५॥

स्खद स्खदने ॥ स्खदनं विद्रावणमिति स्वामी। ( स्खदते। स्खदिता। स्खदयति। अचिस्खदत्। अस्खदि। अस्खादि )। "स्खदिरवपरिभ्यां च" इति मित्संज्ञानिषेधस्य वक्ष्यमाणत्वात् (अवस्खादयति। परिस्खायदति) इत्यत्र मित्त्वं न भवति। अपावपरिभ्य इति बोधिन्यासे पठ्यते। तन्मते अपस्खादयतीत्यत्रापि मित्त्वं न भवति ॥ ७६६ ॥

क्षजि गतिदानयोः ॥ क्षज इति कौशिकः। ( क्षञ्जते। चक्षञ्जे। क्षञ्जिता। चिक्षञ्जिषते। चाक्षज्यते। चाक्षङ्क्ति )। झलि "चोः कुः" इति कुत्वे "खरि च" इति चर्त्वम्। अनुस्वारपरसवर्णौ। ( क्षञ्जयति। अचक्षञ्जत्। अक्षञ्जि। अक्षाञ्जि। क्षञ्जंक्षञ्जम्। क्षाञ्जंक्षाञ्जम् )। मित्त्वसामर्थ्यादनुपधात्वेपि "चिण्णमुलोः" इति दीर्घविकल्पो भवतीति मैत्रेयसुधाकरादयः। क्षञ्जेति गुरुमत्त्वादङि सिद्ध्यति। एवमन्येषामपि संयोगान्तानां दक्षादीनां

मित्त्वसामर्थ्यात् दीर्घविकल्पः ॥ ७६७ ॥

दक्ष गतिशासनयोः ॥ वृद्धिशैघ्ययोरनुदात्तेदयं पठितस्तस्येहार्थविशेषे मित्त्वार्थोऽनुवादः । ( दक्षयति । अददक्षत् । अदाक्षि । अदक्षीत्यादि ) ॥ ७६८ ॥

क्रप कृपायां गतौ ॥ ( क्रपते । चक्रपे । क्रपिता । चिक्रपिषते । चाक्रप्यते । चाक्रप्ति । क्रपयति । अचिक्रपत् । अक्रपि । अक्रापीत्यादि ) । अस्येह पाठो मित्त्वार्थः । न तु पित्त्वार्थः । यतः क्रपेः सम्प्रसारणं चेति भिदादिपाठात् तत्फलमङ् सिद्धयति (क्रपेति । कृपाणः ) "त्यजियुधिकृपेः किच्च" इत्यानर् बहुलकादस्मादपि । (कृपणः) बाहुलकादेव क्युन् अस्मादपि । (कृपीटः) । "कृकृपिभ्यां कीटन्" इति कीटन् । अत्र "कृपो रो लः" इति लत्वाभावार्थं कृपिस्थाने क्रपिः पठितव्य इति "कृपो रो लः" इत्यत्र भाष्यादौ स्थितम् ( कर्पूरः ) । खर्जपिञ्जादिभ्य ऊरोलचावित्यत्रापि क्रपिग्रहणादूरः । कृपाणादौ बाहुलकात् सम्प्रसारणम् । यद्वा सर्व एवैते कृपेरेव लत्वाभावो बहुवचनादिति लत्वसूत्रे उक्तम् ॥ ७६९ ॥

कदि क्रदि क्लदि वैक्लव्ये ॥ अत्र क्षीरस्वाम्येवं पठित्वाह । वक्रव्य इति चन्द्रः । कद क्रद क्लदेति नन्दी अनिदितमाह । मैत्रेयस्तु कदिक्रदी द्वाविदितौ पठित्वा क्रदक्लदेति द्वावनिदितावाह । तत्रेदितोरन्त्यः सरेफ आद्यो नीरेफः, अनिदितोस्त्वाद्यः सरेफः, अपरो लकारवान् । वर्द्धमानोपि मैत्रैयवल्लकारवन्तमिदितं चापठत् । यदाह । प्रथिक्रन्दिक्लन्दिस्यन्दीनां घटादौ पाठः चिण्णमुलोर्वृद्ध्यर्थं इति । अत्र कदिक्रदिक्लदीनामाह्वानरोदनयोः परस्मैपदिषु गतानां पुनरिहापि पाठो न केवलमित्त्वार्थः किं त्वात्मनेपदिषु पाठसामर्थ्यात्तदर्थमपि । ( कन्दते । चकन्दे । कन्दिता । चिकन्दिषते । चाकन्द्यते । चाकन्ति । कन्दयति । अचकन्दत् । अकान्दि, अकन्दि । कन्दंकन्दम् । कान्दंकान्दमित्यादि ।) । क्षजिवत् । मित्त्वसामर्थ्यादनुपधायामपि दीर्घविकल्पः । एवं ( क्रन्दते । क्लन्दत इत्यादि ) । अनिदित्पाठे ( कदयति । अकादीत्यादि । एवं क्रदते । क्लदत इत्यादि । कन्दः कन्दलः ) । बाहुलकादलः । (कदली) । गौरादित्वान्ङीष् ॥ ७६२ ॥

ञित्वरा सम्भ्रमे ॥ ( त्वरते । तत्वरे । त्वरिता । तित्वरिषते । तात्वर्यते । तातूर्ति । तातूर्त्तः । तातूर्षि । तातूर्पि । तातूर्थः । तात्वरीमि । तातूर्मि ) । *ज्वरत्वर* इत्युपधावकारयोः क्वौ झलादावनुनासिकादौ च झलिक्ङिति ऊठ् । लोटि हेरपित्त्वान्ङित्त्वादूठि ( तातूर्हि । त्वरयति । अतत्वरत ) "अत् स्मृदृत्वर" इत्यभ्यासस्यात्वम् । इत्वापवादः । ( अत्वरि । अत्वारि । त्वरंत्वरम् । त्वारंत्वारम् । तूर्णः । त्वरितः ) । "रुष्यमत्वरा" इति निष्ठायामिड्विकल्पः । अस्यादित्त्वमात्मनेपदमात्रफलमिति मैत्रेयहरदत्तादयः । अन्ये त्वादित्त्वं यङ्लुकीडभावार्थमाहुः । नहि तत्र "रुष्यमत्वर" इतीड्विकल्पः । एकाच इति तत्रानुवर्त्तनादिति । तेषामयमभिप्रायः । "आदितश्च" इत्यत्राव्यभिचारादेकाज्ग्रहणं न सम्बध्यते । न चावयवे चरितार्थमादित्त्व यङ्लुगन्तार्थमपि स्यात्, तस्य धात्वन्तरत्वात् । त्वरतेरादित्त्वं नावयवे चरितार्थमिति सामर्थ्याद्यङ्लुगन्तार्थमिति । मैवम् । प्रयोजनकल्पनायामयमेव प्रकार इति नियमाभावात् । यदादित्त्वसामर्थ्यादिड्विकल्पेनैकाजिति सम्बध्यते तेन तत्र त्वरिग्रहणं यङ्लुगर्थं प्रकृतौ त्वादित्त्वात्प्रतिषेध एवेति वक्तुं शक्यते । एवं हि आदित्त्वं प्रकृत्यर्थमेव भवति । तस्मान्मैत्रेयाद्युक्तमेव ज्यायः । ( तूः । तूरौ ) । "ज्वरत्वर" इत्यूठ् । घटादयः षित उदात्ता अनुदात्तेतः । षित्फलमङुदाहृतः ॥ ७६३ ॥

एवमात्मनेपदिनः समाप्य परस्मैपदिन आह ॥

ज्वर रोगे ॥ एतदादयः फणान्ता उदात्ता उदात्तेतः । ( ज्वरति । जज्वार । ज्वरिष्यति । ज्वरतु । अज्वरत् । ज्वरेत् । ज्वर्यात् । अज्वारीत् ) । "अतो ल्रान्तस्य" इति वृद्धिः । ( जिज्वरिषति । जाज्वर्यते । जाजूर्त्ति । जाजूर्त्तः । ज्वरयति । अजिज्वरत् । अज्वरि । अज्वारि । इत्यादि । ज्वरितः । जूः । जूरौ । जूरः ) । "जरत्वर" इत्यूठ् । ( संज्वारी ) ।

"सम्पृच" इति घिनुण् । "रुजार्थानाम्" इत्यत्र अज्वरेरिति वचनात् कर्मणि षष्ठी न भवति । चोरं ज्वरयति रोगः ॥ ७६४ ॥

गड सेचने ॥ ( गडति । जगाड । गडिता । जिगडिषति । जागड्यते । जागड्डि । गडयति । अजीगडत् । अगाडीत्यादि । गडयस्यास्तीति गडुलः ) । "सिध्मादिभ्यश्च" इति लच् । अत्रैव पाठात् बाहुलकात् वा उप्रत्ययः । ( गडुली ) । गौरादित्वात् ङीष् । कण्ठे गडुरस्य गडुकण्ठः । सप्तम्याः पूर्वनिपाते [ गड्वादेः परवचनम् ] इत्युक्तत्वात् सप्तम्यन्तस्य पूर्वप्रयोगो न भवति । अत्र वृत्तिः । कथं वहेगडुरिति, [ प्राप्तस्य चाबाधो ऽन्वाख्येय ] इति । "अमूर्द्धमस्तकात्" इति अलुक । (गण्डतीति) वदनकदेशे गतम् ॥ ७६५ ॥

हेड वेष्टने ॥ हेडृ अनादरइति आत्मनेपदिषु गतः, तस्य परस्मैपदिषु अनुवादसामर्थ्यात् परस्मैपदमपि भवति । अन्यथा घटादयः पित इत्यस्यानन्तरं परस्मैपदिभ्यो ज्वरादिभ्यः पूर्ववदिति धात्वन्तरं नाशङ्क्यम् । यत इदितोनुवादेपि मित्त्वात् ह्रस्वत्वेन भाव्यमिति ऋत्सृष्टानुबन्धोयमनुवादः । ( हेडति । जिहेड । हेडिता । जिहेडिषति । हिडयति । अजीहिडत् )। अत्र मितां ह्रस्वो भवन् "एच इग्घ्रस्वादेशे" इति नियमात् आन्तरतम्यादिकार एव ह्रस्वो भवति । अत एव ह्रस्वविधानसामर्थ्यात्पुनर्गुणो न भवति । (अहिडि । अहीडीत्यादि) । चिण्णमुलोर्दीर्घविकल्पे "असिद्धवदत्र०" इति ह्रस्वत्वे नासिद्धत्वं व्याश्रयत्वाण्णिमात्राश्रयो दीर्घविकल्पः । एवमाद्यर्थं हि तत्रादिग्रहणमन्यथा ह्रस्व एव विकल्प्येत । अनादरार्थस्य ( हेडयति ) ॥ ७६६ ॥

वट भट परिभाषणे ॥ वट वेष्टने । भट भृताविति पठितयोः परिभाषणे मित्त्वार्थोयमनुवादः । ( वटयति । भटयति । अवटि । अवाटि । अभटि । अभाटि ) । अत्र पुरुषकारे वटेत्यादिबहुषु दृश्यते इति ॥ ७६८ ॥

नट नृत्तौ ॥ पूर्वत्र नृतिर्नाट्यमित्युक्तत्वात् इह नृतिशब्देन ततोन्योर्थो नृत्तनृत्यलक्षणः । चलनादिलक्षणश्चोच्यते । अत्र मैत्रेयः । गतावित्येके । नतावित्येके । स्वामी च नताविति पठित्वा नटयति शाखामित्युदाहृत्य नृत्तौ नाटयतीति । (नटयति । अनटि । अनाटीत्यादि )। अयं णोपदेश इति प्रागुक्तम् ॥ ७६९ ॥

ष्टक प्रतिघाते ॥ ( स्तकति । तस्ताक । स्तकिता । तिस्तकिषति । तास्तक्यते । तास्तक्ति । स्तकयति । अतिष्टकत् । अस्तकि । अस्ताकि ) अत्र दन्त्यादिरपि क्व चित्पठ्यते । तत् षोपदेशलक्षणविरुद्धम् ॥ ७७० ॥

चक तृप्तौ ॥ ( चकति । चचाक । चकिता । अचकीत् । अचाकीत् । चकयति । अचीचकत् । अचकि । अचाकि ) अस्यात्मनेपदिषु पठितस्य परस्मैपदिष्वनुवादात्परस्मैपदं हेडतिवत् । अत्र स्वामी । अयं तृप्तिप्रतिघातयोः पूर्वं पठितः तृप्तिमात्र इत्यर्थपाठं व्याख्यास्यत् । शाकटायनस्तूभयत्रोभयार्थत्वमाह । धनपालस्तु पुनर्यथास्वामि पठित्वा पूर्वं पठितस्यायमनुवाद इति आत्मनेपदमुदाजहार । तन्मते परस्मैपदिष्वनुवादो व्यर्थः स्यात् ॥ ७७१ ॥

कखे हसने ॥ ( कखति । चकाख । चकखतुः । कखिता । अकखीत् ) । एदित्त्वादवृद्ध्यभावः । ( चिकखिषति । चाकख्यते । चाकक्ति ) कखयति । अचीकखत् । अकखि । अकाखीत्यादि ॥ ७७२ ॥

रगे शङ्कायाम् ॥ लगे सङ्गे ॥ ( रगति । लगतीत्यादि ) कखिवत् । ( लग्नः ) । "क्षुब्धस्वान्त०" इति अनिट्त्वं निष्ठायां निपात्यते । अन्यत्र (लगितम्) । रङ्गतिलङ्गती गत्यर्थेषु गतौ ॥ ७७४ ॥

ह्रगे ह्लगे षगे ष्ठगे संवरणे ॥ क्व चित्कोशे स्थगे इति दन्त्यादिरपि पठ्यते । तत् षोपदेशलक्षणविरुद्धम् । ( ह्रगति । जह्राग । अह्रगीत् । जिह्रगिषति । जाह्राग्यते । जाह्रक्ति । ह्रगयति । अजिह्रगत् । अह्रागि । अह्रगि । एवं ह्लगतीत्यादि । सगति । ससाग । सेगतुः ।

त्रेगुः )। आदेशादित्वमनैमित्तिकं न तु लिण्निमित्तिमिति एत्वाभ्यासलोपौ। (अस्रगीत्। सिस्रगिषति। सास्रग्यते। सास्रक्ति। स्थगयति। अतिस्थगत्। अस्थगि अस्थागीत्यादि) ७७८

कगे नोच्यते॥ अत्र मैत्रेयः। अस्यायमर्थ इति नोच्यते। क्रियासामान्यमर्थ इत्यर्थः। इह शास्त्र कगे नोच्यते इत्येके। स्वामी तु अस्यायमर्थ इति नोच्यते। अनेकार्थत्वात् इति, नोच्यत इति, योर्थस्तत्रार्थे कगे इत्येके। कगेत्युक्तत्वात्क्रियासामान्यमस्यार्थ इत्याहान्ते। (कगतीत्यादि)। ऋखादयो ऽष्टावेदितः ७७९॥

अक अग कुटिलायां गतौ॥ (अकति। आक। अकिता। मा भवानकीत्। अचिकिषति। अकयति। मा भवानचिकत्। माभवानकि। माभवानकीत्यादि)। अङ्क्तइति लक्षणार्थे गतः। (अगतीत्यादि)। अकिवत्। अङ्क्तोति गतौ गतम्॥ ७८१॥

कण रण गतौ॥ (कणतीत्यादि। अकणि। अकाणीत्यादि। एवं रणतीत्यादि)। [काण्यादीनां वा] इत्युपधाह्रस्वविकल्पो न शङ्क्यः, ह्रस्वभाविन्या उपधाया एवाभवात्। कणतिरणती शब्दार्थौ। गतौ एतयोः (काणयति। राणयति)॥ ७८३॥

क्षण शण श्रण दाने च॥ चणिश्रणोश्चौरादिकयोर्हेतुमण्णिचोभावात् स्वार्थे तु णौ "नान्ये मितो हेतौ" इति मित्त्वनिषेधान्न तयोरिमावनुवादाविति धात्वन्तरावेतौ। (चणति। चचाण। चेणतुः। चणिता। अचणीत्। अचाणीत्। चिचणिषति। चञ्चण्यते। चञ्चण्ढि। चञ्चण्ढः। चणयति। अचीचणत्। अचणि। अचाणि) इत्यादि। एवं (शणति। श्रणतीत्यादि)। शणगताविन्यन्ये। अन्त्यौ तालव्यादी॥ ७८६॥

श्रथ कथ क्लथ हिंसार्थाः॥ (श्रथति। शश्राथ। श्रथिता। शिश्रथिषति। शाश्रथ्यते। शाश्रत्ति। श्रथति। अशिश्रथत्। अश्रथि। अश्राथि। एवं कथति। क्लथति) कथेस्तु "जासिनिप्रहणनाटक्राथ"इतिनिर्देशान्मित्त्वेपि वृद्धिरिति वृत्तितद्व्याख्यानेषु। (क्राथयति चोरस्येति) भवति। मित्त्वफलं तु (अक्रति अक्राथीत्यादौ) "चिण्णमुलोः" इति दीर्घविकल्पः। तथा "जासिनि" इत्यत्र हरदत्तः। घटादिपाठस्तु घटादयः षित इत्यातिदेशिकोऽन्यथा स्यात् "चिण्णमुलोः" इति दीर्घविकल्पश्च यथा स्यादिति। ननु घटादयः षित इति मध्ये सूत्रणात्पूर्वेषामेव षित्त्वं न परेषामिति कथं षित्त्वमुक्तम्। सत्यम्। अत एव किलापरितुष्यन् स्वयमेव दीर्घविकल्पप्रयोजनमाह। एवं च दीर्घविकल्पश्चेति च शब्दो वार्थो व्याख्येयः। अत्र न्यासे क्राथीति विकृतनिर्देशस्य प्रयोजनं मित्त्वेपि वृद्धिः। तत्रैव षष्ठीत्युक्त्वा, चङन्ते वृद्ध्यभावाच्चोरमचिक्रथदित्युक्तम्। तत्र शेषाधिकारात्पुनः समासनिवृत्तये पुनः शेषे षष्ठीविधानमिति शेपविवक्षायां षष्ठी दुर्वारा, कर्मविवक्षायां द्वितीया स्वतः सिद्धेति नेदं प्रयोजनम्। क्रथ हिंसायामिति युजादौ स्वरितेदिति देवः। अयमात्मनेपदीति शाकटायनः। "जासिनि" इत्यत्र क्राथीति निपातनाद्वृद्धिरिति वदतां वृत्तिकारादीनां नायं धातुरेवास्ति॥ ७८९॥

चन च॥ हिंसायामिति शेषः। (चनति। चनयति। अचनि। अचानि)॥ ७९०॥

वनु च नोपलभ्यते॥ न केवलं कगे, यावता वनु च नोच्यत इति स्वामिनोच्यत इति गतौ वाख्यातम्। उदित्करणसामर्थ्यादयमन्यो धातुः, न तानादिकस्यायमनुवादः, क्रियासामान्ये मित्त्वमात्रार्थे ह्यनुवादादिति तानादिकण्वानुवाद्यः, न पुनः शब्दार्थः संभक्त्यार्थौ वावगतो वनतिरिति, कोयं नियमः। तेन क्रियासामान्येपि वनतीत्याति भवति। अस्योदित्त्वाद्वात्ववगतिः वान्तमिति। इदं च मित्त्वं "ग्लास्नावनुवमां च" इत्यनुपसृष्टानां विकल्पस्य वक्ष्यमाणत्वात्सोपसर्गार्थं, (प्रवनयति। प्रावीवनत्। प्रावनि। प्रावानीत्यादि)॥ ७९१॥

ज्वल दीप्तौ॥ ज्वल दीप्ताविति पठिष्यते, तस्य मित्वार्थोयनुवादः। इदमपि मित्त्वं सोपसर्गविषयं, "ज्वलह्वलह्मलनमामनुपसर्गाद्वा" इति अनुपसृष्टानां विकल्पस्य वक्ष्यमाणत्वात्। (प्रज्वलयति। प्राज्वालि। प्राज्वलीत्यादि)॥ ७९२॥

ह्वल ह्मल चलने॥ इमौ च सोपसर्गावेव नित्यं मित्वं प्रयोजयतः। ज्वलतिवदनुपसृष्टयो-

विकल्पस्य वक्ष्यमाणत्वात्। (ह्वलति। जह्वाल। ह्वलिता। अह्वालीत्।) "अतो ल्रान्तस्य" इति नित्यं वृद्धिः। (जिह्वलिषति। जाह्वल्यते। जाह्वल्ति। विह्वलयति। व्यह्वलि। व्याह्वालीत्यादि एवं ह्वलतीत्यादि)। किम्ह्वलयतीत्यत्र [यवलपरे यवला वा] इति यवलपरे हकारे परे मकारस्य पक्षे यवलविधानात्सानुनासिको वकार उदाहार्यः। (किम् ह्वलयति। किं ह्वलयति। किं ह्मलयतीत्यत्र) *मपरे वा* इति मकारपरे हकारे परे मकारस्य पक्षे मकारविधानान्मकारोऽप्युदाहार्यः) ७९४॥

स्मृ आध्याने। स्मृ चिन्तायामित्यस्याध्याने मित्त्वार्थोऽनुवादः। आध्यानमुत्कण्ठापूर्वकं स्मरणम्। (मातुः स्मरति। मातुः स्मरयति। अस्मरि। अस्मारि। अनाध्याने स्मारयति) "अधीगर्थ०" इति कर्मणि षष्ठी। अधीगर्थाः स्मरणार्था इत्युक्तम्॥ ७९५॥

दृ भये॥ अत्र देवधनपालपूर्णचन्द्रा अमुं धात्वन्तरमाहुः। मैत्रेयस्तु दृ विदारणइति क्र्यादिः, तस्य मित्वार्थं पाठः। (दृणन्तं प्रयुङ्क्ते दरयति। भयादन्यत्र दारयति)। धात्वन्तराभ्युपगमे दरतीत्येके इति क्षीरस्वामी। पुनर्दरतीत्युदाहृत्य कैयटिकस्यैव मित्त्वार्थमिहानुवाद इत्येक इत्याह। तत्राभरणकारो ऽमुं ह्रस्वान्तं धात्वन्तरं पठित्वा "अतस्मृदृत्वर" इत्यत्रापि ह्रस्वान्तं पठन् णौ चङि अददरदित्युदाजहार। तदसत्। तत्र दीर्घान्तपाठस्याविगीतत्वात्, दॄ विदारणइति व्याख्यातृभिरुपादानाच्च। किं च ह्रस्वान्ताभ्युपगमे "शॄदॄप्रां ह्रस्वो वा"इति दृणातेर्विकल्पेन ह्रस्वविधानमनर्थकं स्यात्, यतः ह्रस्वान्तादस्मात् लिटि विदद्रतुरिति यणादेशे सिध्यति विददरतुरिति च दृणातेः "ऋच्छत्यॄताम्" इति गुणे। न च विदारणे रूपद्वयार्थं ह्रस्वविकल्पनं स्यादिति वाच्यम्। धातूनामनेकार्थत्वेन अस्यापि विदारणे वृत्तिसंभवात्। तथा च श्रृणातेः तत्र विशशरतुरिति भविष्यति विशश्रतुरिति श्रा पाक इत्यस्य, न चार्थभेदो, धातूनामनेकार्थत्वादिति श्रग्रहणं प्रत्याख्याय ह्रस्वार्थमुक्तम्॥ ७९६॥

नॄ नये॥ ( नरयति। अनरि। अनारीत्यादि। अन्यत्र नारयति )। मैत्रेयस्तु नामुमिच्छति यदाह नॄ नय इत्यप्येके इति॥ ७९७॥

श्रा पाके॥ श्रै पाकइत्यग्रे कृत्वात्वस्य तस्य श्रा इत्यादादिकस्य च सामान्येनेदमनुकरणम्, लुग्विकरणालुग्विकरणयोरिति श्रायतेः, लक्षणप्रतिपदोक्तयोरिति श्रातेः। अत्र सर्वत्र पाको विक्लित्तिरिति कैयटकारादयः। (श्रपयति। अश्रपि। अश्रापीत्यादि)। विक्लेदयतीत्यर्थः। पाकादन्यत्र (श्रापयति), स्वेदयतीत्यर्थः। धातूनामनेकार्थत्वात् स्वेदे वृत्तिः॥७९८॥

मारणतोषणनिशामनेषु ज्ञा॥ एषु जानातिर्मिद्भवति। (परं संज्ञपयति)। मारयतीत्यर्थः। (विष्णुं विज्ञपयति), संतोषयतीत्यर्थः। (प्रज्ञपयति रूपं) दर्शयतीत्यर्थः। कौमाराणां मतेनात्र सोपसर्गाः प्रदर्शिताः। अन्यत्र ज्ञापयति बोधयतीत्यर्थः। नेह निशामनं ज्ञापनमात्रं किं तु चक्षुःसाधनं ज्ञानं, शम लक्ष आलोचन इत्यस्य हीदं रूपम्, आलोचनं चक्षुर्विज्ञाने प्रसिद्धम्। उक्तं चैवं वृत्तिकारादिभिः। "त्यदादिषु दृशोनालोचने कञ्च" "पश्यार्थैश्चानालोचने" इत्यादौ मैत्रेयपुरुषकारादिष्वपि निशामनं चक्षुर्विज्ञानमिति स्थितम्। अत एव न्यासे "श्लाघह्नुङ्स्था०" इत्यत्र ज्ञीप्स्यमान इति मारणादिषु पठितस्य घटादेः हेतुमण्णिच इत्युक्त्वा अथ वेत्यपरितोषात् "ज्ञपमिच्च" इति चौरादिकस्य स्वार्थं णाविति प्रक्रियान्तरमुक्तं, चौरादिकस्य ज्ञानज्ञापनयोर्वृत्तत इति तत्रैव वक्ष्यते, तेन ज्ञापने ज्ञपयति, यदवज्ञापयेदित्यपि स्यादिति। मैत्रेयोपि इहान्यत्र ज्ञपयति ज्ञापयतीति रूपद्वयं भवति। तथा च देवः। जानातीति ञिन सिद्धे ज्ञपयति तु पुनर्मारणादौ घटादौ णौ मित्त्वेपीदमेव ज्ञानमिति पदं ज्ञापने मारणादौ। तेनार्थात् ज्ञापनेर्थे ज्ञपयतिपदवत् ज्ञापयेदित्यपि स्यादिति, तथा मैत्रेयोपि इहान्यत्र ज्ञापयति स्वामिनमित्युदाहृत्य चुरादौ "ज्ञपमिच्च" इत्यत्र ज्ञपयतीति मितमुदाहृत्य ज्ञापने मारणादिषु चाभिधानमस्येत्याह। अत्र चन्द्रः। "मारणतोषणनिशानेषु" इति वर्द्धमानश्चैवं पठित्वा निशानं तीक्ष्णीकरणमिति चाभिधाय निशामन इति केचित् निशामनं दर्शनमिति। स्वामि-

शाकटायनौ वर्द्धमानवदेव, तत्र प्रज्ञपयति शरमित्युदाहरणं, तीक्ष्णीकरोतीत्यर्थः । अत्र मित्त्वं बोधिन्यासकारो न सहते । यदाह प्रचीनास्तु निशानं नेच्छन्तीति । एवं काश्यपसम्मताकारादयोपि, इति मैत्रेयाद्यङ्गीकृतो निशामनपाठ एव ज्यायान् । यच्चूक्तं "श्लाघन्हुङ्" इत्यत्र ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाणो बोधयितुमभिप्रेत इति वृत्तिग्रन्थमुपादाय हरदत्तेन निशामनं ज्ञानमात्रं न चक्षुर्विज्ञानमेव, यदाहबोधयितुमभिप्रेत इति, कथं तर्हि प्रयुज्यते तज्ज्ञापयत्याचार्यः । विज्ञापना भर्तृषु सिद्धमेतीति । तस्मान्निशानेष्वित्ति पाठः, शो तनूकरणे, ल्युट् ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाण इति प्रयोगः "ज्ञप मिच्च" इति चुरादिणिजन्तस्येति नात्र ज्ञापयतिप्रयोग उपोव्दलं निशानमिति पाठाङ्गीकारस्येति, यदस्माभिस्तत्सिद्धिरन्यथैवादौ साधिता । अपरे तु प्रतिपन्ना निशामनं ज्ञापनमात्रं ज्ञापयति प्रयोगो ज्ञा नियोग इति चौरादिकस्य धातूनामनेकार्थत्वात् इति, अनेकार्थताङ्गीकारे ज्ञान इव मारणतोषणयोरपि ज्ञापयतीति स्यात् ॥ ७९९ ॥

कम्पने चलिः ॥ चल कम्पन इति ज्वलादौ तस्य मित्वार्थ एवानुवादः । (चलयति शाखाम् )। कम्पयतीत्यर्थः । अन्यत्र शीलं चालयति, अन्यथा करोतीत्यर्थ इति स्वामी । सूत्रं चालयति, क्षिपतीत्यर्थ इति सुधाकरः ॥ ८०० ॥

छदिरूर्जने ॥ ऊर्जनं प्राणनं बलनं वा, ऊर्ज बलप्राणनयोरिति हि धातुः । छदि अपवारणे इति यौजादिकस्य स्वार्थे णिजभावे मित्वार्थोयमनुवादः । धातूनामनेकार्थत्वात् ऊर्जने वृत्तिः। (छदन्तं प्रयुङ्क्ते छदयति । बलवन्तं करोतीत्यर्थः )। अन्यत्र छादयति, अपवारयन्तं प्रयुङ्क्त इत्यर्थः । यदा च छादयतीति स्वार्थे ण्यन्तस्तदा बलीभवति प्राणीभवति, अपवारयतीत्यर्थः। अत्र बलप्राणनयोरपि "नान्ये मितोऽहेतौ" इत्यमित्वम् । अत्र स्वाम्यादयः छदि संवरणइति चौरादिकं छदेत्यनिदितं पठन्तः, तस्यायमूर्जने मित्वार्थो ऽनुवाद इत्याहुः । तदयुक्तम् । तस्यानिदित्पाठेपि नित्यण्यन्तत्वात् कर्तरि णिचोभावात् स्वार्थोपि णौ "नान्ये मितः" इति मित्त्वं निषिद्धमेव । अत्र देवः । छदिं धात्वन्तरं मन्यते । यदाह यो वा णावपवारणे छदत इत्येकं द्वितीयं वदन्नन्यं छादयति छदयति पुनः स्यादूर्जनेर्थे मित इत्यादि, चौरादिकस्यैव स्मरत्यादिवत् अनेकार्थत्वाऽङ्गीकरणात् ऊर्जनेपि छदतीति सिद्धे धात्वन्तराऽङ्गीकरणं परस्मैपदमेव यथा स्यादिति तन्मतम् । अनुवादे हि तस्य स्वरितेत्त्वात् छदत इत्यपि स्यात् । यद्यप्येतत्फलं भवति अथाप्यन्यत्र पठितानामिह पाठो मित्त्वमात्रफल इति घटतौ व्यवस्थापितत्वात् पृथक् धातुत्वं न सुलभम् । किं चेह धातुनिर्देशार्थमिकारनिर्देशादवश्यमनुवादत्वमेष्टव्यम् , यत्फलमुक्तं नित्यं परस्मैपदमेव यथा स्यादिति तच्छाकटायनमतेनैव प्रयोजनं, यतः चौरादिकः परस्मैपद्येव ॥ ८०१ ॥

जिह्वोन्मथने लडिः ॥ लड विलास इति पठितस्य मित्त्वार्थोयमनुवादः । उन्मथनं क्षापनम् । अत्र मैत्रेयस्य जिह्वाया उन्मथने इति मतम् । यदाह लडयति जिह्वामिति । अयमेव पक्षो गुप्तस्यापि । पुरुषकारे तु जिह्वया उन्मथने लडयति जिह्वयेत्युक्तं भवति । अपरे तु जिह्वा चोन्मथनमिति समाहारद्वन्द्वं व्याचक्षते, जिह्वाशब्देन तद्विषयो व्यापार उच्यते । अत्र चोन्मथने चेति लडयति शत्रुं, लडयति दधि चेति भवति । धनपालस्त्वेवं पठित्वा आर्याणां जिह्वोन्मथनयोरिति पाठ इति । स्वामी तु जिह्वोन्मथनयोर्लडीति, मन्थनमेव मथनम् ,अन्यत्र लाडयति पुत्रम् । चल्यादीनां त्रयाणामिकारो धातुनिर्देशार्थः ॥ ८०२ ॥

मदी हर्षग्लेपनयोः ॥ दैवादिकस्य मित्त्वार्थोयमनुवादः । (मदयति )। हर्षयति ग्लेपयति चेत्यर्थः । ग्लेपनं दैन्यमन्यत्र (मादयति) चित्तविकारमुत्पादयतीत्यर्थः। विनमादयत्यक्षरव्यञ्जनानि स्पष्टमुच्चारयतीत्यर्थः । तथा च प्रातिशाख्यम् । उपलब्धिर्विमाद इति, अक्षरव्यञ्जनानामिति शेषः ॥ ८०४ ॥

ध्वन शब्दे ॥ भाव्ययं मित्त्वार्थमनूद्यते । (ध्वनयति घण्टाम् । अनत्र ध्वानयति)अस्पष्टाक्षरमुच्चारयतीत्यर्थः । तथा च प्रातिशाख्यमक्षरव्यञ्जनानामुपलब्धिर्ध्वनिरिति । अत्र

भोजः । दलिवलिस्खलिरणिध्वनिस्वनित्रपिक्षपयश्चेति पपाठ । तत्र ध्वनिर्वर्द्धमानानुसारेण पठितः, उदाहृतश्च । तथा रणिरपि । दल विदारणे । संवरणे, स्खल सञ्चलने, त्रपूष् लज्जायामिति गताः । तेषां णौ दलयति, वलयति, स्खलयति, त्रपयतीति । क्षपयति क्षै क्षयइति वक्ष्यमाणस्य कृतात्वस्य पुकि निर्देशः । तथा च सुधाकरः । क्षै क्षये णिचि पुकि मित्त्वे क्षपयतीति । स्वन अवतंसने । स्वनयति, अन्यत्र स्वानयति । अयं शब्दार्थः पठिष्यते । अत्र मैत्रेयः । ध्वन शब्दे । स्वन अवतंसनइत्येकइति ॥ ८०९ ॥

*घटादयो मितः* ॥ मित्संज्ञका इत्यर्थः ॥

"जनीजॄष्क्नसुरञ्जोऽमन्ताश्च" ॥ चशब्दान्मित इत्यपकृष्यते । जनी प्रादुर्भावे, जॄष् वयोहानौ । क्नसु ह्वरणदीप्त्योः । दिवादयः. रञ्ज रागे । भ्वादिश्च । अम् शब्दो ऽन्ते येषां ते अमन्ताः, यथासम्भवं सर्वेषु विकरणेषु ते च मितः । ( जनयति । जरयति ) । जॄषिति षिन्निर्देशात् जृणातेरमित्त्वात् (जारयतीति)। बोधिन्यासादौ मैत्रेयो जृणातेः स्थाने झॄ इत्येक इति चतुर्थादि च वक्ष्यति । ( क्नसयति । रजयति मृगान्, रमयतीत्यर्थः ) । [ रञ्जेर्णौ मृगरमण उपसंख्यानम् ) इति नलोपः । मृगादन्यत्र नलोपो न भवति रञ्जयति पक्षिणः। तथा रमणादन्यत्र न लोपः । रञ्जयति मृगान् तृणादिदानेन । नलोपाभावे मित्त्वफलम् (अरञ्जि, अराञ्जीत्यादौ) "चिण्णमुलोः" इति दीर्घः । अमन्ताः खल्वपि क्रमयति, गमयतीत्यादि । अत्र केचित् । "जनीजॄष्णसु" इति अक्कारं सूत्र पठन्तः षकारमुत्तरधातोरादि व्याचक्षाणाः दैवादिकस्य निरसनार्थस्य स्नस्यतेः स्नसयतीति मित्वमाहुः । तथा च दिवादावात्रेयमैत्रेयौ ष्णसु निरसन इत्येके मिदिति ॥

"ज्वलह्वलह्मलनमामनुपसर्गाद्वा" ॥ ज्वलादीनां वा मित्त्वं भवति उपसर्गात् परेषां नायं विकल्प इत्यर्थः । क्व चित्तु पठ्यते । ज्वलह्वलनमोऽनुपसर्गाद् वेति । तत्र न क्लेशो मित इति सम्बन्धः । ज्वलादीनां पूर्वपाठात् प्राप्तिः, नमेस्त्वमन्तत्वात् । (ज्वलयति ज्वालयति । ह्वलयति, ह्वालयति । ह्मलयति, ह्मालयति । नमयति, नामयतीति )। उपसृष्टे तु नित्ये मित्त्वे प्रज्वलयतीत्यादि । उन्नामयतीति प्रयोगो घञन्तात् "तत्करोति" इति णौ । एवमन्येषामपीदृशां निर्वाहः । "मितां ह्रस्वः"इति वृत्तौ "वा चित्तविरागे" इत्यतो वेत्यनुवृत्तेर्व्यवस्थितविभाषाविज्ञानाच्च संक्रामयतीत्यादिसिद्धिरिति । यत्तु सुधाकरोक्तं घञन्तादुत्क्रामशब्दात् "तत्करोति" इति णिचि उत्क्रामयतीति; तदयुक्तं, "नोदात्तोपदेशस्य" इति वृद्धिनिषेधात् उत्क्रामशब्दस्यैवाभावात् ॥

"ग्लास्नावनुवमां च" ॥ अनुपसर्गाद्वेति वर्त्तते । पूर्ववत् व्याख्यानमत्रापि । अत्रापि पूर्ववत् क्व चित् ग्लास्नावनुवमश्चेति प्रथमान्तं पठ्यते । ग्लै हर्षक्षये । अत्र स्नेति ष्णै शौचवेष्टनयोरिति वक्ष्यमाणस्य ष्णा शौच इत्यादादिकस्य च, श्रा पाक इत्यत्रोक्तन्यायेन । वनु च नोच्यत इति इह पठितो वनतिः अनन्तरस्य विधिरिति न्यायादनूद्यते न तु तानादिको वनोतिः । टुवम उद्गिरणे । अमन्तः । तदयं वन्वमोः प्राप्ते ग्लास्नोरप्राप्ते इत्युभयत्र विभाषेयम् । ( ग्लपयति । ग्लापयति । स्नपयति । स्नापयति । वनयति । वानयति । वमयति । वामयति ) । ग्लास्नोरुपसृष्टयोर्मित्वाभावात् (प्रग्लापयति, प्रस्नापयतीत्येव )। वनुवमोस्तु नियमितत्वात् (प्रवनयति । प्रवमयतीत्येव) ॥

"न कम्यमिचमाम्" ॥ कमु कान्तौ, अम गत्यादौ, चमु अदने, एषाममन्तत्वात् मित्त्वे प्राप्ते निषिध्यते । ( कामयते । आमयति । आचामयति ) ।

"शमो दर्शने" ॥ शम उपशमने दिवादिः । अयं च दर्शने न मिदमन्तोपि, ( निशामयति रूपम् ) अत्युत्कृष्टमिदं तीर्थं भारद्वाज निशामयेति, शम लक्ष आलोचन इति चौरादिकः । अस्मात् कारिते णावर्थो न संगच्छते । दर्शनादन्यत्र निशमयति वचः । अत्र स्वामी नेत्यनपेक्ष्य अदर्शन इति पदं दर्शनादन्यत्र मिदिति संव्याचष्ट एवमप्यत्र न फलभेदः ॥

"यमो ऽपरिवेषणे" ॥ यम उपरम इत्यग्रे, अयं परिवेषणादन्यत्र भोजनाद् अन्यत्रामन्तोपि न मित । (आयामयति) । द्राघयति व्यापारयति वेत्यर्थः । परिवेषणे तु (यमयति ब्राह्मणान् ।) अत्र स्वाम्यादयो नेत्यनपेक्ष्य परिवेषणादन्यत्र मिदिति व्याचक्षते, । तद्वृत्तिविरुद्धम् । तथाहि "पादमि"० इत्यत्र आयामयति इत्युदाहृत्य यमोपरिवेषण इति मित्संज्ञा प्रतिपिध्यते इति । तत्र न्यासे च । तत्र हि न कम्यमिचमामित्यतो नेति प्रतिषेधो वर्त्तत इति, तथा मैत्रेयादयोपि नेत्यनुवृत्त्यैव व्याचक्षते । नियमयतीति प्रयोगोयं "तत्करोति" इति णौ द्रष्टव्यः॥

स्खदिरवपरिभ्यां च ॥ न मिदिति शेषः । (अवस्खादयति । परिस्खादयति) । अपावपरिभ्य इति बोधिन्यासे । अत्रापि स्वाम्यादयो नेत्यनपेक्ष्य स्खादेः पूर्वपाठात् सामान्येन प्राप्तं मित्वमुपसृष्टाद्यदि भवति अवाद्युपसृष्टादेवेति व्याचक्षाणाः प्रस्खादयतीत्यादौ मित्त्वं नेच्छन्ति । इदं वृत्तिकारादीनामनभिमतम् । यतस्तैः सर्वत्र नेत्यपेक्ष्यते, एवं हि निषेधानन्तरं पाठ उपपद्यते । अन्यथा स्खद् खदन इत्यस्यानन्तरमेव अवपरिभ्यां चेति पठेत् (१), द्विःस्खदिग्रहणं न कर्त्तव्यं भवति ॥

फण गतौ ॥ नेति निवृत्तम्, असम्भवादिति मैत्रेयः । निषेधात्पूर्वमपाठः फणादिकार्यानुरोधात् इति च । ( फणति । पफाण । फेणतुः । फेणुः । पफणिथ । पफण । पफणिव । फेणिव । पफणिम । फेणिम ) *फणां च सप्तानाम्* इति किति लिटि थलि च सेटि एत्वाभ्याससलोपविकल्पः । ( फणितेत्यादि । अफणीत् अफाणीत ) । "अतो हलादेः" इति वृद्धिविकल्पः । ( पिफणिषति । पम्फण्यते ) अनुनासिकत्वान्नुक्, ( पम्फणीति । पम्फाण्टि । पम्फाण्टः ) । "अनुनासिकस्य क्वि झलोः क्ङिति" इति दीर्घः । (पम्फाण्हीत्यत्र) हेर्झलः परत्वाभावात् धिभावो न भवति । ( फणयति । अपीफणत् ) । अन्यत्र फाणयति सक्तून् स्नेहयतीत्यर्थे इति स्वामिसम्मताकारौ । ( फाण्टः ) । "क्षुब्धस्वान्त०" इत्यादिना अनायासेनिट्त्वं निपात्यते । अत्रानायासशब्देनाल्पप्रयाससाध्यः कषायविशेष उच्यते । तथाहि । औषधस्य पञ्चकल्पना, रसः, कल्कः, शृतः, शीतः, क्वाथः, शीतो नाम क्षुण्णमौषधमुदके प्रक्षिप्य रात्र्यवधिवासितं यदुदकं प्रातः पीयते सः, तदेवोष्णोदके प्रक्षिप्य सद्योभिषुत्य पूत्वा पीयते स फाण्ट इति तद्विदः ॥ ८०६ ॥

वृत् ॥ समाप्तो घटादिर्वर्तत इत्यर्थः । अस्मात्पूर्वं वृदित्येक इति मैत्रेयः । ज्वरादय उदात्ता उदात्तेतः ॥

राजृ दीप्तौ ॥ उदात्तः स्वरितेत् । ( राजति । रराज । रेजतुः । रराजतुः । रेजिथ । रराजिथ । राजितेत्यादि । तङि राजते । रराजे । इत्यादि पूर्ववत् । रिराजिषति । रिराजिषते । राराज्यते । राराष्टि । व्रश्चादिना षत्वं झलि पदान्ते च । राजयति । अरराजत् ) "नाग्लोपि०" इत्यृदित्त्वादुपधाह्रस्वनिषेधः । सम्यक् राजते इति (सम्राट्) । "सत्सूद्विष०"इत्यादिना *मो राजि समः क्वौ* इति समो मकारस्य मकारः क्विबन्तस्मिन् परे मोनुस्वारापवादः, सम्राजोपत्यं (साम्राज्यः) "सम्राजः क्षत्रिये' इति कुर्वादिपाठात् क्षत्रियवचनादस्मादपत्ये ण्यः, अक्षत्रियादणि (साम्राजः) । राजत इति (राट्) । "अन्येभ्योपि दृश्यते" इति क्विप् । (राष्ट्रम् ) "ष्ट्रन्" इति ष्ट्रन् । "तितुत्र०" इतीण्नषेधः । षित्वात् स्त्रियां (राष्ट्री), स्वामिनीत्यर्थः । (राष्ट्रियः) । "राष्ट्रावारपाराद् घखौ" इति भावादौ शैषिकज्छापवादो घः । ( राजा ) । "कनिन्युषि" इत्यादिना कनिन् । दन्तानां राजा, (राजदन्तः) । *राजदन्तादिषु परम्* इति षष्ठ्यन्तस्य परप्रयोगः । (राजन्यः क्षत्रियः) । "राजश्वशुराद्यत्" इति अपत्येर्थे यति व्युत्पत्तिः, जातिवचनस्त्वयम् । तथा च तत्र वार्त्तिकं [राज्ञोपत्ये जातिग्रहणम् ] इति । जतिश्चेह क्षत्रियजातिरुच्यते । "ये चाभावकर्मणोः" इति प्रकृतिभावात् "नस्तद्धिते" इति टिलोपाभावात् । क्षत्रि-

---

( १ ) पाठात् सिद्धिरिति क्वचित्पाठः । द्विर्ग्रहणं च नास्ति ।

यजातेरन्यत्रापि (राजनः)। "अनू" इति प्रकृतिभावः, राज्ञां समूहो (राजकम् )। "नस्तद्धिते" इति टिलोपः। "गोत्रोक्षोष्ट्रोरभ्रराज०" इति वुञ् । (राजन्यकम् )। *आपत्यस्य च तद्धितेनाति*इति यकारस्य अनाति तद्धिते भसंज्ञानिमित्ते विधीयमानो लोपः "प्रकृत्याके राजन्यमनुष्ययुवानः" इति प्रकृतिभावान्न भवति यद्वायं यकारो राज्ञोपत्ये जातिग्रहणमित्युक्तत्वान्नापत्ये, राज्ञ इदं (राजकीयम् )। "राज्ञः क च" इति छप्रत्ययः शैषिकः। कश्चान्तादेशः। राज्ञः कर्म भावो वा (राज्यम् )। पत्यन्तपुरोहितादिषु "राजासे" इति पाठादसमासेऽयम्। यकारस्य भावकर्मविषयत्वात् प्रकृतिभावाभावात् "नस्तद्धिते" इति टिलोपः। समासे तु ष्यञ्। (आधिराज्यम् ) ब्राह्मणादिषु राजन्शब्दः पठ्यते, स हि तदन्तात ष्यञर्थः। केवलस्य यको विधानात्, "राजासे" इत्येतद्वचनं ज्ञापकमत्र तदन्तत्वम्। अन्ये के ब्राह्मणादेराकृतिगणत्वात् राजन्शब्दान्तात् ष्यञि सिद्धे तत्र राजन्शब्दस्य पाठसामर्थ्यात् केवलात ष्यञपि भवतीत्याहुः। तथा च शाबरभाष्यमते व्यधिकरणे (राज्यं,) तस्य कर्मणि ष्यञिति। अधिको राजा (अधिराजः,) "कुगतिप्रादयः" इति समासः। *राजाहः सखिभ्यष्टच्* इति राजाद्यन्तात् तत्पुरुषाट्टचि टिलोपः। अत्र लघ्वक्षरं पूर्वं निपतति इति "द्वन्द्वे घि" इति च लघ्वक्षरत्वात् घ्यन्तत्वात् सखिशब्दस्य पूर्वनिपाते कर्त्तव्ये राजन्शब्दं पूर्वं निपात्य सवर्णदीर्घेण निर्देशात् यस्य राजन्शब्दस्य सवर्णदीर्घप्रसङ्गस्तस्यैव टजिति ज्ञापनाल्लिङ्गविशिष्टपरिभाषया अधिराज्ञीत्यादौ टज्न भवति। अयं समासान्त उत्तरपदादकृत एव समासे भवतीत्युक्तं, तेन पञ्चराजीत्यादौ अकारान्तोत्तरपदसमाहारद्विगुत्वेन स्त्रियां ङीप् भवति। शोभनो राजा, (सुराजा। अतिराजेत्यत्र) "न पूजनात्" इति समासान्तनिषेधः। तत्र [ स्वती पूजायाम् ] इति परिगणितं, प्रतिराजेत्यत्र तु *प्रतेरंश्वादयस्तत्पुरुषे* इति प्रतेः परेषामंश्वादीनामाद्युदात्तविधौ प्रतिराजेति पाठात् समासान्ताभावः। (किंराजा अराजेत्यत्र) "किमः क्षेपे" "नञस्तत्पुरुषात्" इति समासान्ताभावः। महाराजो देवता अस्य, (महाराजिकः) *महाराजप्रोष्ठपदाट्ठञ्* इति प्रथमान्ताद्देवतोपाधिकात् अस्येत्यर्थे ठञ्। । महाराजो भक्तिर्भजनीयो यस्य ( महाराजकः ) *महाराजाट्ठञ्* इति प्रथमान्तात् भक्त्युपाधिकात् अस्येत्यर्थे ठञ्। शोभनो राजा यस्यास्ति स, (राजन्वान् ) "राजन्वान् सौराज्ये" इति मतुपि नलोपाभावो निपात्यते ॥ ८०७ ॥

टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ ॥ उदात्ता अनुदात्तेतः। अत्र स्वामी आद्यावधिकृत्य दुरुभयसङ्गीत्येके इत्याह। त्रयोपि द्वित इति मैत्रेयः। वृत्तिकारोप्यत्रैवानूकूलः। यदाह "वा भ्राश०" इत्यत्र टुभ्राशृ टुभ्लाशृ इति। तथा "फणां च सप्तानाम्" इत्यत्र न्यासपदमञ्जर्योः त्रयोपि द्वितः पठ्यन्ते। तस्मादयमेव पाठो बहूनां संमतः। भ्राजतेः पठितस्यापीह पाठः फणादित्वेन किति लिट्येत्वाभ्यासलोपविकल्पार्थः, द्वित्त्वं तु न फलं भवति तत्रापि टुशब्दस्यासङ्क्तुं शक्यत्वात्। अनेनैव सिद्धे तस्य पाठो व्रश्चादिषत्वनिवृत्त्यर्थ इति इति तत्रैवोक्तं, (भ्राजते। बभ्राजे। भ्रेजे। भ्राजितेत्यादि। बाभ्राष्टि। अबाभ्राट् ) इत्यादौ व्रश्चादिषत्वम्। (भ्राजथुः) "ट्वितो ऽथुच्"। न भ्राजयतइति (नभ्राट् )"नभ्राणनपात्" इति नञः प्रकृतिभावः। चङ्परे णौ "भ्राज०" इत्यादिना उपधाह्रस्वविकल्पनात्(अबिभ्रजत्। अबभ्राजत् ) अस्यापि ऋदित्त्वं पूर्ववत् अनुदात्तेत्त्वमात्रफलम्। (भ्राष्ट्रम् )। ष्ट्रन्। भ्राष्ट्रमिन्ध इति (भ्राष्ट्रमिन्धः) कर्मण्यण्। "भ्राष्ट्राग्न्योरिन्धे" इति मुम्। ( भ्राशते। बभ्राशे। भ्रेशे। भ्राशिता। भ्राशिष्यते। भ्राशताम्। अभ्राशत। भ्राशेत। आशषि भ्राशिषीष्ट। अभ्राशिष्ट )। सार्वधातुके "वा भ्राश०" इत्यादिना पक्षे शपोपवादे श्यनि ( भ्राश्यते। भ्राश्यताम्। अभ्राश्यत। भ्राश्येतेति भवति। बिभ्राशिषते। बाभ्राष्टि। भ्राशयति। अबभ्राशत् ) ऋदित्त्वान्नोपधाह्रस्वः। ( भ्लाशति ) सर्वं भ्राशतिवत्। ( भ्राशथुः। भ्लाशथुः )। ट्वित्वात् थुच ॥ ८१० ॥

स्यमु स्वन ध्वन शब्दे ॥ स्यमादयः ज्वलन्ती उदात्ता उदात्तेतः। ( स्यमति। सस्याम। सस्यमतुः। स्येमतुः। सस्यमिथ। स्येमिथ। स्येमुः )। इत्यादि। (अस्यमत्) इदित्यत्र "अतो

हलादेः" इति वृद्धिः "ह्म्यन्त०" इति निषिध्यते । (सिस्यमिषति। सेसिस्यते)। "स्वपिस्यमिव्येञां यङि" इति सम्प्रसारणे द्विर्वचने अभ्यासस्य गुणः । (संस्यमीति । संस्यन्ति)। यङो लुका लुप्त्वात् तत्परत्वाभावान्न संप्रसारणम्, "नुगतोऽनुनासिकान्तस्य" इति अभ्यासस्य नुक्। (संस्यान्त) इत्यादौ "अनुनासिकस्य क्विझलोः" इति दीर्घः । (संस्यन्मि ) "मो नो धातोः" "म्वोश्च" इति नत्वम्। (संस्यादीत्यत्र) पूर्वमनुनासिकस्य दीर्घे पश्चात् "नश्चापदान्तस्य झलि" इत्यनुस्वारः । (असंस्यन्नित्यत्र) पदान्तत्वात् "मो नो धातोः" इति नः । (स्यमयति । असिस्यमत् ) । अमन्तत्वान्मित्त्वम् ( स्यमित्वा । स्यान्त्वा ) । उदित्त्वादिड्विकल्पः । अनिट्पक्षे "अनुनासकस्य" इति दीर्घः । (स्यान्तम्) । "यस्य विभाषा" इत्यनिट् । (स्यमन्तको मणिः) । बाहुलकादन्तच् संज्ञायां कन्। अयं चुरादौ वितर्कार्थः । (स्वनति । सस्वान । सस्वनतुः । स्वेनतुः। स्वनितेत्यादि । अस्वनीत् । अस्वानीत ) । "अतो हलादेः" इति वा वृद्धिः । ( सिस्वनिषति । संस्वन्यते । संस्वन्ति । संस्वान्तः । स्वनयन्ति । असिस्वनत् ) । शब्दे घटादित्वान्मित्त्वम् । ( विष्वणति । अवष्वणति ) । "वेश्च स्वनः०" इति षत्वम् । चकारेणावादित्यनुकृष्यते । (विष्वणनं) सशब्दभोजनम्। तथा च वृत्तौ अभ्यवहारक्रियाविशेषोऽभिधीयते । यत्र स्वननमस्तीति सशब्दं भुङ्क्ते इत्यर्थः । पिनाकी तु भुञ्जानः किं चिच्छब्दं करोतीति । काश्यपस्तु भोजनमेवार्थमाह । बोधिन्यासेपि पक्षत्रयमपि दर्शितम् । ( विषष्वाण । विषिष्वणिषतीत्यादौ ) "स्थादिष्वभ्यासेन०" इत्युभयत्र षत्वम् । तच्चाषोपदेशार्थंमवर्णाभ्यासार्थं षणि प्रतिषेधार्थं चेत्युक्तम् । ( व्यष्वणत ) । "प्राक्सितात्" इति षत्वम् । (अवपंष्वण्यत) इत्यादौ "नुम्विसर्जनीय०"इति "वेश्च स्वनः"इति षत्वम् । उक्तं च अयोगवाहानामट्सु णत्वं शर्षु भषभावषत्वे इति । अयोगवाहाश्चानुस्वारविसर्जनीयोपध्मानीयजिह्वामूलीययमा उक्ताः । षत्वे कृते "रषाभ्याम्" इति णत्वे विष्वणतीत्यत्र णत्वं, पूर्वत्रासिद्धत्वात् "नश्चापदान्तस्य झलि" इत्यनुस्वारे परसवर्णो नकारः । तस्य पुनर्णत्वं न भवति । असिद्धत्वादेव (स्वनः स्वानः) । "स्वनहसोर्वा"इति वा अप् । तदभावे घञ् । उपसृष्टात्तु (प्रस्वान) इत्येव । (निस्वानः, निस्वनः) । "नो गदनद०" इत्यादिना घञपौ । (स्वान्तम् )। "क्षुब्धस्वान्त"इत्यादिना निष्ठायामनिट्त्वं निपात्यत मनोऽभिधानं चेत, अन्यत्र (स्वनितो मृदङ्गः) । आङ्पूर्वादस्मात् "रुष्यमत्त्वरसंघुषा"इति निष्ठायाड्विकल्पः। इयं चोभयत्र विभाषेति मनसोऽन्यत्र च (आस्वानितम्, आस्वनितमिति) । फणादयो गताः। (ध्वनति । दध्वान । ध्वनितेत्यादि स्वनिवत् । ध्वान्तम् ) । "क्षुब्धस्वान्त०" इति तस्यानिट्त्वम् । अन्यत्र ( ध्वनितम् । ध्वनिः ) अयं कथादिश्च । अत्र स्वनिध्वन्योर्मध्ये ष्टनेति क्वचित् पठ्यते । ष्टन वन शब्द इति पूर्वमेव गतत्वादयमनार्षः । केचित्पौनरुक्त्यपरिहारादन्त्यादिं पठन्ति सोऽप्यनार्षः । षोपदेशलक्षणविरोधात् । अत एव "फणां च" इत्यत्र सप्तानामिति किमित्युक्त्वा ध्वनिः प्रत्युदाह्रियते, तथा च न्यासे फणादीन् ध्वन्यन्तानष्ट पठित्वा ध्वनिवर्जिताः शेषाः फणादयः सप्तेत्युक्तम् । पदमञ्जर्यां चैवमष्ट पठित्वा ऽन्त्यवर्जं फणादय इत्युक्तम् ॥ ८१३ ॥

षम ष्टम वैक्लव्ये ॥ ( समति । ससाम । सेमतुः । सेमिथ । समिता । सिसमिषति । संसम्यते । संसमीति । संसन्ति । ससान्तः । समयति । असीषमत् । स्तमति । तस्ताम । तस्तमतुः स्तमिता । तिस्तमिषति । तंस्तम्यते । तंस्तन्ति । स्तमयति । अतिष्टमत् ) । अत्र स्वाम्यादयः के चिदेतदन्ता घटादय इति । बोधिन्यासे तु ध्वन्यन्ता इति । तत्र फणतौ मित्त्वे न विवादः । राजादीनां त्वनन्तराणां चतुर्णां णौ चङ्युपधाह्रस्वनिषेधार्थादुदित्करणाल्लिङ्गान्न मित्त्वं भविष्यति । स्यमेरमन्तत्वात्स्वनिध्वन्योश्च पूर्वत्र पाठान्मित्वं, सिद्धम् सर्वैरपि शब्दार्थत्व एव मित्वं यथा स्यादिति पूर्वत्र पाठोऽङ्गीकृतः । षमिष्टम्योरप्यमन्तत्वादेव मित्वं सिद्धमिति आहोपुरुषिकामात्रमेवैतत्, ध्वन्यन्ता घटादय इति मतद्वयम् । यत्तु तैरुक्तं षमिष्टम्योरमन्तयोः पुनः पाठेनामन्तलक्षणस्य मित्त्वस्यानित्यत्वज्ञापकादुत्कामयतीत्यादिसिद्धि-

रिति, तदस्माभिरमन्ताच्चेति मित्वविधौ प्रकारान्तरेणोपपादितम् ॥ ८१५ ॥

ज्वल दीप्तौ ॥ ( ज्वलति । जज्वाल । जज्वलतुः । ज्वलिता । अज्वालीत् ) । "अतो ल्रान्तस्य" इति वृद्धिः । ( जिज्वलिषति । जाज्वल्यते । जाज्वलीति । ज्वालयति । ज्वलयति । प्रज्वलयति ) घटादिपाठान्नित्यं मित्वं सोपसर्गत्वे, अन्यदा तु ज्वलह्वलेति विकल्पेन, घटादिपाठादेव ज्वलयतीति सिद्धाविहास्य पाठो "ज्वलीति कसन्तेभ्योणः" इति पाक्षिके णप्रत्यये (ज्वाल) इति यथा स्यादिति । ज्वलीतीतिशब्द आद्यर्थः । णोभावे पचाद्यचि (ज्वलः ज्वलनः), "जुचंक्रम्य" इति तच्छीलादौ युच् कर्त्तरि ॥ ८१६ ॥

चल कम्पने ॥ ( चलति । चचाल । चेलतुः । चेलुः ) । चलितेत्यादि पूर्ववत् । कम्पने घटादिपाठात् चलयति । अन्यत्र ( चालयति । ।चलः । चालः ) ज्वलतीति णविकल्पः । ( चलाचलः ) । इत्यर्थः । [चरिचलिपतिवदीनां द्वित्वमच्याक्चाभ्यासस्य] इति द्विर्वचनम् अभ्यासस्यागागमश्च । ( चाचलिः ) । सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनाविति तयोरन्यतरः । "अतो लोपः" "यस्य हलः" इति अल्लोपयलोपौ । ( चलनः ) । "चलनशब्दार्थादकर्मकाद्युच्" इति युच् । चल विसलन इति तुदादौ, चल गताविति चुरादौ ॥ ८१७ ॥

जल घातने ॥ घातनं तैक्ष्ण्यमिति स्वामी । जलतीत्यादि पूर्ववत् । ( जलः । जालः ) । लडयोरेकत्वस्मरणात् (जडः) । गोधाशब्दाद्रकापि गौधार इति सिद्धे "आरगुदीचाम्" इत्यारगवचनं (जाडारः पाण्डारः) इति सिद्ध्यर्थमिति तत्र स्थितम् । ( जाड्यम् । जडिमा ) । "वर्णदृढादिभ्यः ष्यञ्" इति ष्यञ् । दृढादित्वात् भावकर्मणोः ष्यञिमनिचौ । जल अपवारण इति चुरादौ ॥ ८१८ ॥

टल ट्वल वैक्लव्ये ॥ टलतीत्यादि चलतिवत् । ( ट्वलति । टट्वाल । -ट्वलतुः । ट्वलितेत्यादि । अट्वालीत् । ट्वालः, ट्वलः) ॥ ८२० ॥

स्थल स्थाने ॥ स्थानं प्रतिष्ठा । ( स्थलति । तस्थाल । स्थलिता । अस्थालीदित्यादि तिस्थलिषति ) । "स्तौतिण्योरेव" इति न षत्वम् ( तास्थल्यते । तास्थल्ति । स्थालयति । अतिष्ठलत् । स्थलः । स्थालः । स्थलम् । स्थली ) "जानपद" इत्यत्राकृत्रिमायां भूमौ ङीष् । अन्यथा (स्थला । स्थाली) । गौरादित्वात् ङीष् । (विष्ठलम् ) । "विकुशमिपरिभ्यः स्थलम्" इति मूर्द्धन्यः ! एवं कादिभ्यः । ( कपिष्ठलम् ) । "कपिष्ठलो गोत्रे" इति मूर्द्धन्यो निपात्यते । अन्यत्र कपीनां स्थले, (कपिस्थलम् ) ॥ ८२१ ॥

हल विलेखने ॥ विलेखनं कर्षणम् । ( हलति । जहाल । हलिता । अहालीदित्यादि । हलः । हालः । हलिः) । इन् । हलिं गृह्णाति (हलयति । अजहलत् ) । "मुण्डमिश्र"इत्यादिना गृह्णातीत्यर्थे णिचि हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमितीकारस्यात्वे वृद्धौ कृतायामकृतायां वा लोपेऽग्लोपित्वमित्यभ्यासस्य सन्वदित्वं न भवति । हलनां समूहो (हल्या) । "पाशादिभ्यो यः"इति पाशादिपाठात् समूहे यः । हलस्येदं (हालिकम् ), *हलसीराट्ठक्* इति षष्ठ्यन्तात् इदमर्थे ठक् । हलं वहति (हालिकः) । बलीवर्दः । "हलसीराट्ठक्" इति द्वितीयान्ताद्वहतीत्यर्थे ठक् । हलस्य कर्षः (हल्यः), कर्षः कर्षणं कृष्यमाणं वा,"मतजनहलात्करणजल्पकर्षेषु"इति षष्ठ्यन्तात् कर्षेऽर्थे वत् (द्विहल्या भूः) । "रथसीताहलेभ्यो यद्विधौ"इति तदन्तविधिः । न विद्यते हलिर्यस्य असौ (अहलः) । "नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम्" इति पक्षे समासान्ता । एवं दुःसुपूर्वादपि । अत्र हलिहलशब्दाभ्यां बहुव्रीहिणा रूपद्वये सिद्धे पक्षे समान्तविधानं *शेषाद्विभाषा* इति हल्यन्तात् कम्माभूदिति । यस्माद्बहुव्रीहेः समासान्तो नोक्तः स शेषः । न चात्र हलिग्रहणं मतभेदनिबन्धनं मन्तव्यं, महत हलं (हलिः,) हलमात्रं त्वन्यदिति नायमर्थभेदः किंचित्करः, यस्मादकारान्येनापि समासो न दण्डवारित इति प्रकरणादिवशेनैवार्थविशेषावगतिः ॥ ८२२ ॥

णल गन्धे ॥ बन्धनइति काश्यपः । (प्रणलतीत्यादि । नालः, नलः । नाली । प्रणाली )

गौरादिः । डलयोरेकत्वस्मरणात् (नडः) व्युत्पन्नं प्रातिपदिकमिति हरदत्तः । नडानां समूहो (नड्या) "पाशादिभ्यो यः" इति यः । नडा अस्मिन्देशे सन्तीति (नड्वलः नड्वान् ।) "कुमुदनडवेतसेभ्यो ड्मतुप्" । "नडशादाड्ड्वलच्" इति चातुरर्थिको ड्मतुप् ड्वलच्च (नली) नन्ददक्षिभ्यामिनन्निति इनन् बाहुलकादस्मादपि । (नलिनी) गौरादिषु दर्शनात् "जातेरस्त्रीविषयात्" इति वा ङीप् । यद्वा नलशब्दात् "पुष्करादिभ्यो देशे"इति मत्वर्थीय इनौ ङीपि द्रष्टव्यः । नलं गन्धं ददातीति नलदं त्वामज्जकम् ॥ ८२३ ॥

पल गतौ ॥ पलतीत्यादि । पलमुन्मानविशेषः पललं मांसम् । "कलत्रपश्च"इत्यत्र प्राक् प्रत्ययनिर्देशादन्येभ्यो भवतीति कुण्डलादिवदस्मादपि कलप्रत्ययः । पलालं, स्थालयतीत्यालच् बाहुलकादस्मादपि । महत् पलालं (पलाली) । पिप्पल्यादित्वान् ङीप् । पलाली यस्यास्तीति पलालिनः । शाकीपलालिदद्रूणां ह्रस्वत्वं चेति पामादिपाठान्नप्रत्ययो ह्रस्वत्वं च । पाल रक्षण इति चुरादौ ॥ ८२४ ॥

बल प्राणने धान्यावरोधे च ॥ प्राणनं जीवनं, धान्यमवरुध्यते यत्र कुसूलादौ तद्धातूनामनेकार्थत्वाद्धान्यावरोधनव्यापार इत्यर्थः । बलतीत्यादि । (बालं । बलम्) करणस्य कर्तृत्वोपचारादच् । (बाला) । अजादिपाठात् "वयसि प्रथमे" इति ङीपं बाधित्वा टाप् । (बलवान् । बलूलः) वातदन्त बलललाटानामूङ् चेति सिध्मादिपाठाल्लच्प्रत्यय ऊङ् चागमः । (बलः पुरुषः) "अर्श आदिभ्योच्" इति मत्त्वर्थेऽच् । (बाहुबली । ऊरुबली) "बलाद्बाहूरुपूर्वपदात्" इति पुष्करादिपाठादिनिर्मत्त्वर्थे । (सर्वबलं) तत्रैव सर्वादेश्चेति पठ्यते । (बलिः) । इन् । बल्यर्थास्तण्डुला (बालेयाः) । *छदिरुपधिबलेर्ढञ्* इति छदिबलिभ्यां विकृतवाचिभ्यां विकृत्यर्थायां प्रकृतौ ठञिति ठञ् । उपधेस्तु स्वार्थेयं प्रत्ययः । कुबेराय बलिः । (कुबेरबलिः) । *चतुर्थी तदर्था०* इति चतुर्थ्यन्तस्य तदर्थादिभिस्तत्पुरुषः । तदर्थेत्यर्थग्रहणं,तस्मा इदं तदर्थम् । अन्यानि तु प्रातिपदिकानि । अयं चुरादिर्मित् ॥ ८२५ ॥

पुल महत्त्वे ॥ (पोलति । पुपोल । पोलिता । पुपुलिषति । पुपोलिषति । पुलित्वा, पोलित्वा) । "रलो व्युपधात्" इति कित्त्वविकल्पः । (पोपुल्यते । पोपुलीति । पोपोल्ति । पोलयति । अपूपुलत्) "उदुपधात्" इति भावादिकर्मणोर्निष्ठायाः सेटः कित्त्वविकल्पनात्, (पुलितमनेन, पोलितमनेनेत्यादि । पुलः) । व्यभावे इगुपधलक्षणः कः । (पुलकः) । संज्ञायां कुन् । पुलिनं, बाहुलकादिने गुणाभावः । (पुलाकः) । बलाकादयश्चेत्याकनन्तो निपातितः । अयं चुरादावपि । तुदादावपीति क्षीरस्वामी ॥ ८२६ ॥

कुल संस्त्याने बन्धुषु च ॥ संस्त्यानं संघात इति स्वामी । क्वचित्तु सन्तान इति पठ्यते । सन्तानी विजातीयैरवच्छिन्नः प्रवाहः । बन्धुशब्देन तद्व्यापारः सम्बन्धोभिधीयते । (कोलतीत्यादि), पोलतिवत् । कुलस्यापत्यं, (कुलीनः । कुल्यः । कौलेयः) । कुलशब्दो वृत्तौ तद्वति वर्तते । "कुलात्खः" । "अपूर्वपदादन्यतरस्यां यड्ढकञौ" इति खयड्ढकञः । अत एवापूर्वपदग्रहणम् । खस्तदन्तादपि भवति । (ब्राह्मणकुलीनः । महाकुलीनः) "महाकुलादञ्खञौ" इति अञ्खञौ । अन्यतरस्यांग्रहणानुवृत्तेः खश्चेति (माहाकुलः । महाकुलीनं) इति भवति । दुष्कुलशब्दात् "दुष्कुलाड्ढक्"इति ढक् । (दौष्कुलेयः) । अत्रान्यतरस्यांग्रहणानुवृत्तेः खे (दुष्कुलीनः । कौलेयकः श्वा) । *कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु* इति यथासंख्याच्छुन्यभिधेये कुलाड्ढकञ् । अमुष्य कुलस्य भावः (आमुष्यकुलिका) । मनोज्ञादिपाठाद्वुञ् । [आमुष्यायणामुष्यपुत्रिकामुष्यकुलिका] इत्युपसंख्यानमिति षष्ठ्या अलुक् । स्वभावात्स्त्रीलिङ्गः । (कालकम्), अयं मनोज्ञादिः । (निष्कुलाकरोति पशुम्) । *निष्कुलान्निष्कोषणे* इति कृञो योगे निष्कोषणार्थान्निष्कुलशब्दाद् डाच् । निष्कोषणमन्तरवयवानां बहिर्निस्सारणम् । नास्ति कुलमस्य, (नकुलः) । "नभ्राण्नपात्" इति नञ्प्रकृतिभावः । (कुलकम्) । श्लोकसंघातः । संज्ञायां वुन् । कुलशब्दात्कन्वा ॥ ८२७ ॥

शल हुल पत्लृ गतौ ॥ हुल हिंसासंवरणयोश्च । अत्र मैत्रेयः । चकारोऽत्रान्वाचये गताव-स्य तावत्प्रयोगः । क्व चित्तु हिंसासंवरणयोश्चेति । क्व चित्तु पठ्यते शल हुल झल पत्लृ गतौ । हुल हिंसासंवरणयोश्चेति । अत्र पाठे चकाराद्गतौ चेति व्याख्येयम् । हुलतेर्ह्वलतेश्च घटादिपठितस्यापीह पाठो न विकल्पार्थः, घटादिपाठस्त्वर्थविशेषे मित्वार्थ इति बोद्धव्यम् । (शलति । शशाल । शलितेत्यादि । शालः । शाला । ) शल इति चलनसंवरणयोर्गतः । (होलतीत्यादि) । पोलतिवत् । ( पतति । पपात । पेततुः । पतिता । अपप्तत् ) । लृदित्त्वा-दङ् । *पतः पुम्* इत्यङि परे पुमागमः । ( पिपतिषति ) । [ तनिपतिदरिद्राणामुपसं-ख्यानम् ]इति वा इडागमः । अनिट्पक्षे *सनि मीमा* इत्यादिना अच इस् सकारादौ सनि विधीयमाने इस्भावे "सत्यार्धधातुके" इति तत्त्वे पित्स्शब्दस्य द्विर्वचनम् । "अत्र लोपो-ऽभ्यासस्य" इत्यभ्यासलोपः । अत्र ग्रहणं "सनिमीमा"इत्यादिचतुः सूत्रीविषये अभ्यासलोपा-र्थमिति स्थितम् । अभ्यासलोपोऽनर्थकत्वादन्त्यस्य न भवति । 'नानर्थकेऽलोन्त्यविधिः' इति । अन्ये त्वत्रग्रहणं सर्वाभ्यासलोपार्थमाहुः । तत्र मते ऽभ्यासलोपस्य सनि मीमादिचतुः सूत्री-विषयत्वमधिकाराद् बोद्धव्यम् । ( पित्सति । पनीपत्यते । पनीपत्ति ) । "नीग्वञ्चु" इति अभ्यासस्य नीक् । (प्रणिपतति) । "नेर्गद०" इति णत्वम् । अड्व्यवायेपीदमिष्यते । (प्रण्यप-प्तत् । पतापतः) । [ चरिचलिपतिवदीनां द्वित्वमक् चाभ्यासस्य ] इति पक्षे द्विर्वचनमक् चा-भ्यासस्य । ( उत्पतिष्णुः । ) "अलंकृञ्" इत्यादिना इष्णुच् । पतनः । "जुचङ्क्रम्य"इत्या-दिना युच् । ( पातुकः ) "लषपत" इत्यादिना उकञ् । पतत्यनेनेति (पत्रम् ) । "दाम्नी०" इत्यादिना करणे ष्ट्रन् । सर्वपत्रं व्याप्नोतीति (सर्वपत्रीणः) सारथिः,"तत्सर्वादेः"इत्यादिना सर्वपत्रं व्याप्नोतीत्यर्थे खः । (सपत्राकरोति) सपत्रं शरं मृगकाये प्रवेशयतीत्यर्थः । (निष्पत्रा-करोति ) । सपत्रं शरमपरभागे निष्क्रामयतीत्यर्थः । *सपत्रनिष्पत्रादतिव्यथने* इति कृञो योगे डाच् । अतिव्यथनमतिपीड़ा । गेहानुप्रपातमास्ते । *विशिपतिपदिस्कन्दां व्याप्यमा-नासेव्यमानयोः* इति कर्मण्युपपदे व्याप्यमानत्वे आसेव्यमानत्वे गम्यमाने णमुल् । तत्र व्याप्तिर्गुणेन च क्रियया वा द्रव्याणां सम्बन्धः सा चेह विश्यादिक्रियादिभिर्गेहादिकर्मणः, आसेवा पौनः पुन्यं, तच्च स्वभावात्क्रियायाः । तदायमर्थः । (गेहङ्गेहमनुप्रपत्य आस्ते गेहमनु-प्रपत्य आस्ते गेहमनुप्रपत्यानुप्रपत्यास्ते) इति वा । आसिप्रयोगो धातुसम्बन्धे प्रत्ययविधा-नात् । तत्र व्याप्त्यासेवनयोः समासेनैवोक्तत्वान्नित्यवीप्सयोरिति द्विर्वचनं न भवतीति भा-ष्यादौ स्थितम् । यदा "तृतीयाप्रभृतीनि" इति समासः तदा गेहंगेहमनुप्रपातमास्ते गेह-मनुप्रपातमनुप्रपातमिति द्विर्वचनं भवत्येव । तत्र नित्यता पौनःपुन्यं, तच्च क्रियाविषयमिति तत्र क्रियावाचिनोर्द्विर्वचनम् । वीप्सातु व्याप्तुमिच्छा, सा च द्रव्यविषयेति द्रव्यवचनस्य । अत्रासेवायाम् "अभीक्ष्णे णमुल् च" इति क्त्वाणमुलोर्विधानादेव णमुलि सिद्धे पुनर्विधानं तृतीयान्तस्योपपदत्वार्थं, तेन पाक्षिकः समासो भवति । क्त्वो निवृत्यर्थं तु न भवति इष्टत्वा-त्स्येति हि स्थितम् । आपततीति (आपात्यः) । "भव्य"इति निपातनात्पक्षे कर्त्तरि ण्यत् । वाव-चनेन यथाप्राप्तोऽभ्यनुज्ञानाद् (आपात्यमनेनेति) भावेपि ण्यद्भवति । (पतितः) । गत्यर्थत्वात्क-र्त्तरि क्तः । नरकं पतितः, नरकपतितः । "द्वितीयाश्रित०" इति समासः । स्वर्गात्पतितः । (स्वर्गपतितः) "अपेतापोढ०" इति पञ्चमीतत्पुरुषः । अल्पश इति वचनात्क्व चित्समासो न भवति प्रासादात्पतित इत्यादौ । अत एव निपातनादिट् । अन्यथा "तनिपति" इति विक-ल्पेट्कत्वात् "यस्य विभाषा" इति इट्प्रतिषेधः स्यात् । अन्ये तु कृतिवृत्तीनां "सेसिचि" इत्यादिना सकारादाविड्विकल्पनादेव निष्ठायामप्यनिट्त्वसिद्धावनिडथमिदित्करणात् "यस्य विभाषा" इत्यस्यानित्यत्वज्ञापनादित्याहुः । (पापतिः) । 'सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ'इति किकिनोरन्यतरः । "अतो लोपः" । "यस्य हलः" इति अल्लोपयलोपौ । अ-भ्यासस्य "नीक् वञ्चु"इत्यादिना नीक् न भवति, सासह्यादीनां निपातनमिति वार्त्तिककारव-

चनात् । (सन्निपातः) । घञ् । तस्य शमनं कोपनं वा,(सान्निपातिकम्) । [ सन्निपाताच्चेति वक्तव्यम् ]इति ठक् । (पतङ्गः)। "पतेरङ्गच् पक्षिणि"इत्यङ्गच् । (पतत्रम्)। "पतेरत्रन्"इत्यत्रन् । (पतत्रिः) । "पतेरत्त्र"इति त्रिन्प्रत्ययः, अगागमश्च । पतत्रिशब्दः पतत्रशब्दादिनौ मत्त्वर्थे । (पातालम् )। "पतिचण्डाभ्यामालञ्"इत्यालञ्, बाहुलकाद् वृद्धिः । के चिद्वृद्ध्यर्थमालजिति पठन्ति । तद्युक्तादित्यत्राणप्रकरणे "कुलालवरुडकर्मारनिषादचण्डालमित्रामित्रेभ्यः छन्दसि" इति चण्डालात्स्वार्थेऽण्विधानादयुक्तम् । (पताका) पिनाकादिर्बलाकादिर्वा आकप्रत्ययान्तः। (पताकी) । मत्त्वर्थीय इनिः । व्रीह्यादित्वात्, (पन्थाः)। "पतेस्थ च"इतीन्प्रत्ययः, तकारस्य थकारः । *पथिमथ्यृभुक्षामात्* इति आकारादेशोन्त्यस्य सौ परे, *इतोत्सर्वनामस्थाने* इति पथ्यादीनामिकारस्याकारे सवर्णदीर्घः । *थो न्थः* इति पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । (पन्थानौ) । सर्वनामस्थाने दीर्घः । शसाद्यजादौ (पथ) इत्यादि । *भस्य टेर्लोपः* भसंज्ञकानां पथ्यादीनां टेर्लोप इति लोपः, हलादौ नलोपः ( पथिभ्याम् । विपथम् । कापथम्) "कुगतिप्रादयः" इति तत्पुरुषः । *कां पथ्यक्षयोः* इति पथ्यक्षयोरुत्तरपदयोः कुशब्दस्य कादेशः । त्र्याणां पन्थाः (त्रिपथम्) । "ऋक्पूरब्धूः" इति समासान्तो ऽकारः । "नस्तद्धित" इति टिलोपः । "पथः संख्याव्ययादेः" इति नपुंसकत्वम् । इदञ्च परवल्लिङ्गतापवाद इति (विपथो देशः । विपथा नगरी) । बहुव्रीहौ न भवति । यथा पन्थानमतिक्रान्तो ऽतिपथ इत्यादौ [अत्यादयः क्रान्ताद्यर्थे द्वितीयया] इत्यादिना तत्पुरुषोपि न भवति । अत्र हि [ द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधः ] इति परवल्लिङ्गता प्रतिषिध्यते । 'पथः संख्याव्ययात् परे' इति यदमरसिंहेन नपुंसकत्वमुक्तं तदप्युत्तरपदार्थप्राधान्य एव, तथा च तत्र व्याख्यातारः, प्रधानलिङ्गापवादत्वात् क्लीबविधानप्रस्तावादिह न भवति । (अपथा नगरी । उत्पथो देश इति) । कथं तर्हि व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा इति । विपथकापथयोः पुंस्त्वमुक्तम्, तत्रैवं व्याख्येयम् । अस्त्यन्यो ऽकारान्तः पथिपर्यायो पथशब्दो ऽर्द्धर्चादिपाठादुभयलिङ्गः । तेन समासात्पुंस्त्वमिति विपथकापथौ पुन्नपुंसकाविति चाहुः सुभूतिचन्द्रादयः। पठितश्च काण्डशेषे अकारान्तः पथशब्दः । पथः पन्थाश्च मार्गः स्यादिति । शाक्यमुनिस्तु संख्याव्ययाभ्यां परस्य पथशब्दस्य पुंस्त्वमेवाह, तत् [पथः संख्याव्ययात् परे]इति वार्त्तिकविरोधात् तत्रत्यभाष्यकैयटवृत्त्यादिमहाग्रन्थविरोधादमरविरोधाच्च चिन्त्यम् । अत्र कृतसमासान्तस्य निर्देशात् "न पूजनात्" "किमः क्षेपे" "नञस्तत्पुरुषात्" इति यदा समासान्तो निषिध्यते तदा "परवल्लिङ्गम्" इति पुंस्त्वमेव (सुपन्थाः । किंपन्था इति) "न पूजनात्" इत्यत्र स्वत्योः परिगणनात् सत्पथ इत्यादौ समासान्तो भवति । "अव्ययीभावश्च" इत्यत्र सुपथमिति यदुदाहरणं तत्र सुशब्दस्य वैपुल्यमर्थो न पूजेति समासान्तलाभः, अपथमित्यत्र "नञस्तत्पुरुषात्" इति निषेधस्य "पथो विभाषा" इति विकल्पनात् समासान्तः । "अपथं नपुंसकम्" इति नपुंसकत्वम् । "पथः संख्याव्ययादेः" इत्येव सिद्धे किं सूत्रेणेत्याशङ्कायां कैयटः पूर्वकालत्वात् सूत्रस्य नायं दोष इति, यदुक्तम् मस्त्यकारान्तः पथशब्द इति तत् "पथो विभाषा" इति सूत्रविरुद्धम्, सति हि तेनापथमिति सिद्ध्यति नकारान्तेन वा ऽपन्था इति तत्किं सूत्रेण । पथि जातः(पन्थकः)। *पथ पन्थ च* इति सप्तम्यन्ताज्जातेर्थे वुन् पथश्च पन्थादेशः। पथो ऽनपेतं (पथ्यम्) । *धर्मपथ्यर्थन्यायादनपेते* इति पञ्चम्यन्तादनपेतेऽर्थे यत् । पथि साधु (पाथेयम्) । "पथ्यतिथि" इति ढञ् पन्थानं गच्छतीति (पथिकः । पथिकी) *पथः ष्कन्* इति द्वितीयान्ताद्गच्छतीत्यर्थे ष्कन्, षित्त्वात् स्त्रियां ङीष् । पन्थानं नित्यं गच्छतीति विवक्षायां "पन्थो ण नित्यम्" इति णप्रत्यये (पान्थः) । अत एव निर्देशात् णसन्नियोगेन पन्था देशः । शतपथमधीते वेद वा (शतपथिकः । एवं षष्टिपथिकः) । *शतषष्टेः पथः षिकन्*इति द्वितीयान्तात् षिकन् अध्येतृवेदित्रोः षित्त्वात् स्त्रियां(शतपथिकी)। पन्थानंपन्थानं प्रति प्रतिपथम्) । "अव्ययं विभक्ति"इत्यादिना वीप्सायामव्ययीभावः । पथोभिमुखमिति वा (प्रति-

पथम्)। *लक्षणेनाभिप्रती आभिमुख्ये* इति लक्षणं चिन्हं तद्वाचिनाऽभिप्रती आभिमुख्ये गम्यमाने समस्येते स चाव्ययीभावसमास इति। प्रतिपथमेति (प्रतिपथिकः प्रातिपथिको वा)। *प्रतिपथमेति ठंश्च* इति द्वितीयान्तादेतीत्यर्थे ठन्ठकौ। पन्थानं प्रति गच्छतीति समासेनाभिधानान्नेमौ प्रत्ययाविति व्याख्यातारः। सर्वपथं व्याप्नोति (सर्वपथीनः पथिकः)। "तत् सर्वादेः" इति खः। उत्तरपथेनाहृतं गच्छति वा (औत्तरपथिकः)। *उत्तरपथेनाहृतं च* इति तृतीयान्ताद्गच्छत्यर्थे ठञ्, [ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वादुपसंख्यानात् ] वार्यादिपूर्वपदादपि ठञ् भवति। ( वारिपथिकमित्यादि। आजिपथिकः शाङ्कुपथिकः )। "अजपथशङ्कुपथाभ्यां च" इति तेनाहृतम् इत्यत्र विषये ठञ्। स्थलपथेनाहृतं मधुकं मारिचं वा ( स्थालपथम् )। मधुकमरिचयोः "अण् स्थलादिभ्य" इत्यण्। देवपथ इव प्रतिकृतिः (देवपथः)। *इवे प्रतिकृतौ* इति इवार्थे सादृश्ये वर्त्तमानात् प्रथमान्तात्कन्, तस्य सदृशस्य प्रतिकृतित्वे सतीति सूत्रार्थः। तदेतदुक्तं भवति। प्रतिकृतिरूपे सदृशे वर्त्तमानात् कन्निति कन्। देवपथ इव कश्चिद् (देवपथः)। सत्सङ्ग इवेत्यर्थे वर्त्तमानात् कन्। उभयत्र "देवपथादिभ्यश्च" इति कनो लुक्। परिपन्थशब्दस्तु परिपथपर्यायोऽव्युत्पन्नः, उक्तं च "परिपन्थं च तिष्ठति" इत्यत्र वृत्तौ, समर्थविभक्तिप्रकरणे पुनर्द्वितीयोच्चारणं लौकिकवाक्यप्रदर्शनार्थं परिपथशब्दपर्यायः परिपन्थशब्दोऽस्तीति ज्ञापयति स विषयान्तरेऽपि प्रयोक्तव्य इति। एवं पंथः पन्थाश्च मार्गः स्यादिति काण्डशेषे पथिपर्यायोऽयं पथशब्दः उक्तः। स नास्तीति प्रतीयते। सति हि परिपथशब्दवत् परिपन्थशब्दस्यापि सिद्धेः किं ज्ञापकवर्णनेन। "पन्थोण नित्यम्" इत्यत्र प्रत्ययसन्नियोगेन पथः पन्थादेशकल्पनं प्रकृत्यन्तराभाव एव घटते। अयं कथादावपि॥

क्थे निष्पाके॥ ( क्थति। चक्थाथ। क्थिता। क्थीत्। क्थाथः। ) क्वथयतीति घटादिपाठात्॥ ८३१॥

पुथे गतौ। ( पथति॥ पपाथ। पेथतुः। अपथीत्। पथः। पाथः ) पथि गताविति चुरादौ॥ ८३२॥

मथे विलोडने॥ ( मथति। ममाथ। मेथतुः। अमथीत्। माथः। मथः ) क्थ्यादीनां त्रयाणामेदित्वात् "ह्मयन०" इति न वृद्धिः। दण्डमाथं धावति ( दाण्डमाथिकः। माथः। मन्थाः )। दण्ड इव रज्जुरित्यर्थः। *माथोत्तरपदपदव्यनुपदं धावति* एभ्यो द्वितीयान्तेभ्यो धावतीत्यर्थे ठगिति ठक्॥ ८३३॥

टुवम उद्गिरणे॥ उद्गिरणमन्तर्गतस्य मुखान्निसारणम्। अत्र सुधाकर उद्गिरण इति पठन्निपानात् तत्र इंद्वातोरित्याह। ( वमति। ववाम। ववमतुः) वादित्वान्नेत्वाभ्यासलोपौ। भागवृत्तौ त्वनयोर्विकल्पेन वेमतुरित्युदाहृतं, तद्भाष्यादिषु चिरन्तनेषु कुत्रापि न दृष्टम्। ( वमिता। अवमीत् )। "ह्मयन्त" इति न वृद्धिः। ( विवमिषति। वंवम्यते। वंवन्ति। वंवान्तः ) हेरपित्वात् ङित्वात् "अनुनासिकस्य" इति दीर्घेऽनुस्वारे ( वंवांहि। अवंवन्। वमयति। वामयति ) "ग्लास्नावनुवमामनुपसर्गाद्वा" इति मित्वनिषेधः। ( वामः )। "नोदात्तोपदेशस्य" इति वृद्धिनिषेधस्य [आचमिकमिवमीनाम्] इति निषेधः। (वान्तः। वान्तवान्) "आदितश्च" इति चकारस्यानुक्तसमुच्चयार्थतया निष्ठायामनिट्त्वमिति वृत्तौ। भाष्यवार्त्तिकयोरनुक्तमपीदं प्रयोगबाहुल्यादुक्तमिति हरदत्तः, तदेवं काश्यादीनामुदित्पाठः प्रत्युक्तः। ( वमथुः ) टित्वादथुच्॥ ८३४॥

भ्रमु चलने॥ भ्रमति। बभ्राम। बभ्रमतुः। भ्रेमतुः। भ्रेमुः। बभ्रमुः। बभ्रमिथ। भ्रेमिथ ) "वा जॄभ्रमुत्रसाम्" इति किति लिटि थलि च सेटि वा एत्वाभ्यासलोपौ। ( भ्रमिता। भ्रमिष्यति। भ्रमतु। अभ्रमत्। भ्रमेत्। भ्रम्यात्। अभ्रमीत् ) शब्विषये "वा भ्राश०" इति पक्षे श्यनि ( भ्रम्यति ) भ्रम्यतु। अभ्रम्यत्। भ्रम्येत् ) भ्राम्यतीति दिवादौ शमादिपठितस्यानवस्थानार्थस्य "शमामष्टानाम्" इति दीर्घः ( बिभ्रमिषति। बंभ्रम्यते )

अनुनासिकान्तत्वान्नुक्, ( बम्भ्रन्ति । बम्भ्रान्तः ) लोटि हौ (बम्भ्रांहि । अबम्भ्रत । *मो नो धातोः* इति मकारस्य नकारः । (भ्रमयति) । अमन्तत्वान्मित्त्वम् । घञि (भ्रमः) । "नोदात्त०" इति वृद्धिनिषेधः । प्रयोजनं तु भ्रमितुं न शक्ताः अभ्रम इत्यत्र *अच्कावशक्तौ* इति अजन्तस्य कान्तस्य च नञः परस्योत्तरपदस्य तत्पुरुषे अशक्तौ गम्यमानायां विधीयमानस्यान्तोदात्तत्वस्याभावः । तेन *तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीया कृत्याः* । तत्पुरुषे तुल्यादिपूर्वपदस्य विधीयमानः प्रकृतिस्वरो भवति स च निपातत्वादाद्युदात्त एव । अचि तु "अच्कौ"इत्यन्तोदात्तमेव । (भ्रमित्वा । भ्रान्त्वा । भ्रान्तः) । भ्रान्तं देशमनेकदुर्गविषममित्यत्र देशश्चाकर्मणामिति देशस्य कर्मत्वेनाभिधानं तु भवतावेवोपपादितम् । (भ्रमणः) । चलनार्थत्वाद्युच् । (भ्रमीति) शमादिपठितस्य घिनुण् । (भ्रमरः) । "अर्त्तिचमिकमिभ्रमिदेविवासिभ्यश्च" इत्यरप्रत्ययः । ( भ्रुमलः ) अक्षिरोगः । "भ्रमेरुच्चोपधायाः" इति कलप्रत्यय उपधायाश्चोकारः ( भ्रूः ) "भ्रमेर्डूः" इति डूः । डित्त्वाट्टिलोपः । ( भ्रुवौ । भ्रुवः ) अजादौ "अचि श्नुधातुभ्रुवाम्" इत्युवङ् । (हे भ्रूः) इत्यत्र "नेयङुवङ्स्थानावस्त्री"इति नदीसंज्ञानिषेधः । "अम्बार्थनद्योर्ह्रस्वः" इति ह्रस्वाभावः । ङिद्वचनेषु *ङिति ह्रस्वश्च* इति नदीविकल्पः । ङिद्वचनेषु इयङुवङ्स्थानेष्वीदन्तमिकारोकारान्तं च स्त्र्याख्यं वा नदी स्त्रीशब्दं वर्जयित्वेति सूत्रार्थः । तेन नदीसंज्ञायाम् "आण् नद्याः"इत्यादि वृद्धावुवङि (भ्रुवै) इत्यादि । अन्यदा केवलमुवङि (भ्रुवे) इत्यादि । आमि स्त्रीशब्दव्यतिरिक्तयोरियङुवङ्स्थानयोः"वामि" इति नदीनिषेधविकल्पनात् (भ्रूणां भ्रुवामिति) । भ्रूर्नामा का चित्तस्या अपत्यं (भ्रौवेयः) । *भ्रुवो वुक् च* इति ढक् तत्सन्नियोगेन वुगागमः । (लेखाभ्रेयः) । "शुभ्रादिभ्यश्च"इत्यापत्ये ढक्, *ढे लोपो ऽकद्र्वाः* इति ढे परे कद्रूवर्जितस्योवर्णान्तस्याङ्गस्योकारस्य लोप इत्यूकारलोपः । अक्षिणी च भ्रुवौ च (अक्षिभ्रुवम्) । "अचतुर०"इत्यादिनाऽचि समासान्ते निपातितम् । भ्रूकुलं भ्रूभङ्ग इत्यादौ *इको ह्रस्वोऽङ्यो गालवस्य* इति इगन्तस्याङ्यन्तस्य उत्तरपदे विधीयमानो ह्रस्वस्तत्रानुवृत्तस्यान्यतरस्याङ्ग्रहणस्य व्यवस्थितविभाषाद्वा भवति । ( भ्रूकुसः । भ्रूकुटिः भ्रुकुटिः) इत्यत्र पक्षे ह्रस्वो भवति । अत्र भाष्ये अपर आह 'अकारो भ्रुकुंसादीनां वक्तव्यः' । भ्रकुटिः । भ्रकुंस इति ॥ ८३५ ॥

क्षर संचलने ॥ ( क्षरति । चक्षार । क्षरिता । अक्षारीत ) । "अतो ल्रान्तस्य" इति वृद्धिः । ( चिक्षरिषति । चाक्षर्यते । चाक्षर्ति । चाक्षर्हि । अचाक्षः ) । हल्ङ्यादिलोपः । (क्षारः । क्षरः । क्षरेजः ) । *विभाषा वर्षक्षरशरवरात्* इति जशब्दे उत्तरपदे विभाषा सप्तम्या अलुक् । अत्र क्षल संचलन इति क्वचित्पठ्यते । तदपि क्षरवित । शम्याद्य उदाता उदात्तेतः ॥ ८३६ ॥

षह मर्षणे ॥ उदात्तोऽनुदात्तेत् । (सहते । सेहे । सहिता । सोढा ) । "तीषसहलुभ"इती इविकल्पः । इडभावे ढत्वधत्वष्टुत्वढलोपाः, "सहिवहोरोदवर्णस्य" इति ढलोपे अवर्णस्यौकारः । ( सिसहिषते ) । "स्तौतिण्योरेव" इत्यपत्वम् । (सिसाहयिषतीत्यत्र) "स्तौस्ति" इति नियमं बाधित्वा "सः स्विदिस्वदिसहीनाम्" इति सत्त्वं भवति । ( सासह्यते । सासोढि । सासोढः ) पूर्ववद्ढत्वादि, (सासक्षि) षढोः कः सीतिकत्वम् । लोटिहेर्धिभावे ढत्वष्टुत्वढलोपाः । तेषु (सासोढीति) भवति । ( साहयति । असीषहत् । परिषहते । विषहते ) "परिनिविभ्यः" इति षत्वम् । इदं च *सिवादीनां वाड्व्यवायेपि* इति अड्व्यवाये विकल्प इति । ( पयषहत । पर्यसहतेति ) "स्वादिष्वभ्यासेन च" इत्यत्र "प्राक् सितात्" इत्यनुवर्त्तनात (परिषिसहिषत)इति । अत्रोत्तरखण्डस्य षणि प्रतिषेध एव भवति। अत एव "प्राक् सितात्" इत्यनुवर्त्तनात्तत्राभ्यसस्येति योगभेदेन स्थादिष्वेवाभ्यासस्य षत्वमिति क्रियमाणो नियमोस्मिन्प्राक्सितीये नेति षत्वमभ्यासस्य भवत्येव । तथा च तत्र वृत्तौ प्राक्सितीयः सुनोत्यादिरेव प्रत्युदाहृतः । अत्रयस्तु सामान्येन नियममिच्छन् षत्वमाह । तत्र

"स्तम्भुसिवुसहां च" इति अभ्यासे षत्वनिषेधे वैयर्थ्यप्रसङ्गात् वृत्त्यसामञ्जस्याच्च हेयम्। परिसोढेत्यादौ सहेः षोढरूपत्वात् "षोढः" इति षत्वं निषिध्यते। परिषासोढीत्यत्राभ्यासस्यासोढरूपत्वान्नायं निषेधः। पर्यसीसहदित्यादौ "स्तम्भुसिवुसहां चङि" इति "परिनिविभ्यः" इति षत्वं निषिध्यते। परस्य तु "इण्कोः" इति भवत्येव। "दाश्वान्साह्वान्" इत्यत्र वृत्तौ साह्वानिति निपातनमस्येत्युक्तम्। यदाह परस्मैपदमुपधादीर्घत्वमनिट्त्वं च निपात्यत इति। कैयटे तु "आश्वपाद्वा" इति विभाषितणिच इत्युक्तम्। एवं पदमञ्जर्यामपि। अत्र मते तस्य सहेः षादेशः कनिनश्च लुक् परस्मैपदित्वात्क्वसुर्निपात्यः। (सह्यम्)। "शकिसहोश्च" इति कर्मणि यत्। साहयतीति, (साहयः)। "अनुपसर्गाल्लिम्प०"इत्यादिना शप्रत्ययः। शपि गुणायौ। (साहः। सहः)। णाभावे ऽच्। (सर्वंसहा) वसुमती। "संज्ञायां भृतृवृजि"इत्यादिना खच्। "अरुर्द्विषत्" इति मुम्। सर्वं सहत इति (सर्वंसहः)। "पूः सर्वयोः" इति यथासंख्यादस्य सर्वशब्दे कर्मण्युपपदे खच्। ( सहिष्णुः )। "अलङ्कृञ्" इत्यादिनेष्णुच्। (सहनः)। "अनुदात्तेतः" इति युच्। (सासहिः)। "सहिपतिविदिभ्यो यङन्तेभ्यः किकिनौ" इति किकिनोरन्यतरः। (सहित्रम्)। "अर्तिलूधूसूखनसहचर इत्रः" इति कारण इत्रप्रत्ययः। (षट्) "सिहेः षष् लुक् च" इति सहेः षषादेशः कनिनश्च लुक् "ष्णान्ताः षट्" इति षट्संज्ञायां "षड्भ्यो लुक्" इति जश्शसोर्लुक्। "षिष्णुमित्यत्र "षट्चतुर्भ्यश्च" इति षट्संज्ञकत्वादामो नुट्। षण्णां पूरणः (षष्ठः)। *तस्य पूरणे डट्* इति षष्ठ्यन्तात्पूरणे संख्यान्तरस्योत्पादकत्वे डटि "षट्कतिकतिपयचतुरां थुक्" इति थुक्। टित्वात् स्त्रियां (षष्ठी)। यदा तु पूरणो भागो भवति तदा "षष्ठाष्टमाभ्यां ञ च" इति स्वार्थे ञप्रत्ययः। चकारादन् च, (षाष्ठः। षष्ठः)। यदा तु पूरणो भागो माने भवति तदा *मानपश्वङ्गयोः कन्लुकौ च* इति तथासंख्यात् षष्ठस्य माने कन्। अष्टमस्य लुक् *षष्ठाष्टमाभ्यां ञ च* इति विहितयोर्ञाञोः, चकाराद् यथाप्राप्तौ ञाञौ। तेन (षष्ठकं मानं षाष्ठं षष्ठमिति) त्रीणि रूपाणि भवन्ति। "पूरणगुण०"इति पूरणात्समासनिषेधात्तान्युच्छषष्ठेत्यादिप्रयोगश्चिन्त्यः। षट् दन्ता अस्य (षोडन्)। *वयसि दन्तस्य दतृ* इति दन्तान्तस्य बहुव्रीहौ वयसि गम्यमाने दत्रादेशः। उगित्त्वान्नुम्। षट् च दश च (षोडश इति)*चार्थे द्वन्द्वः* इति द्वन्द्वः। समुच्चयादयश्चार्थास्तत्रासामर्थ्यात् समुच्चयान्वाचययोर्न समास इति स्थितम्। (षोढा)। 'संख्याया विधार्थे धा'"अधिकरणविचाले च" इति धाप्रत्ययः। "तत्र षष उत्वम्" इति उत्वषत्वे धासु वेति वचनाद् धाप्रत्यये पक्षे न भवत इति (षड्धा) इत्यपि भवति। अत्र षकारस्य धाप्रत्यये "स्वादिषु" इतिपदत्वाज्जश्त्वं डकारः। धकारस्य ष्टुत्वं *न पदान्तात्* इति निषेधान्न भवति। पदान्ताट्टवर्गात् परस्य नाम्वर्जितस्य स्तोः ष्टुत्वं नेति सूत्रार्थः॥ ८३७॥

रम क्रीडायाम्॥ अनुदात्तोऽनुदात्तेत्। ( रमते। रेमे। रेमिषे। रेमिध्वे )। क्रादिनियमादिट्। ( रन्ता। रंस्यते। रमताम्। अरमत। रमेत। रंसीष्ट। अरंस्त। रिरंसते। रंरम्यते। रंरन्ति। रंरतः )। प्रकृतिग्रहणन्यायेन "अनुदात्तोपदेश०" इत्यनुनासिकलोपः। ( रंरंसि। रंरण्मि। रंरण्मः)। "म्वोश्च"इति नत्वे णत्वम्। (रंरहीत्यत्र) अनुनासिकलोपस्यासिद्धत्वात् "अतो हेः" इति लुङ् न भवति। (अरंरन्)। "मो नो धातोः" इति नत्वम्। ( रमयति। अरीरमद्। विरमति। आरमति। परिरमति ) "व्याङ्परिभ्यो रमः" इति परस्मैपदम्। (उपरमति) "उपाच्च" इति परस्मैपदम्, इदं सकर्मकविषयम्। अकर्मकत्वे (उपरमति। उपरमते ) "विभाषाकर्मकात्" इति विकल्पस्योक्तत्वात्। अन्तर्भावितण्यर्थोऽयं सकर्मकः। ( विरराम। विरेमतुः। विरेमिथ। विररन्थ ) थलि *उपदेशेत्वतः* इति। उपदेशेत्वतस्तासौ नित्यानिटस्थलीणनिषेधेपि इह भारद्वाजनियमादिट् पक्षे न भवति। लुङि *यमरमनमातां सक् च* इति परस्मैपदपरे सक्। सिचश्चेट् "इट ईटि" इति सिज्लोपः। ( व्यरंसीत्। व्यरंसिष्टाम्। रमः। रामः )। "ज्वलितिकसन्तेभ्योणः" इति णः। मातन्त्वेण्यनुदात्तोदेपश-

त्वात् वृद्धिनिषेधाभावः । ( रमणः ) । नन्द्यादित्वात् ण्यन्ताल्ल्युः । ( स्तम्बेरमः ) *स्तम्ब-कर्णयोरसिजपोः* इति स्तम्ब उपपदेऽच् प्रत्ययः । [हस्तिसूचकयोः] इति वचनात् हस्तिविषयत्वायम् । "तत्पुरुषे कृति" इति सप्तम्या अलुक् । ( रन्तिः ) "न क्तिचि दीर्घश्च" इति दीर्घानुनासिकलोपनिषेधः । अयमुदिदिति के चित् । क्त्वायामिड्विकल्पमुदाहरन्ति । तन्महान्तो न सहन्ते । ( रत्नम् ) "रमेस्तश्च" इति नप्रत्ययस्तकारश्चान्तादेशः । ( रमतिः स्वर्गः) "रमेर्नित"इत्यतिप्रत्ययः। (सुरतः कामः) । "सौ रमे क्तः"इतिक्तः। (सुरतः । कृपावान्) । "रमेः पूर्वपदस्य च दीर्घः" इति क्ते पूर्वपदस्य दीर्घः । ( रथः ) । "हनिकुषि" इत्यादिना थन् । ( रथ्या । रथकट्या ) *खलगोरथात्* । *इनित्रकट्यचश्च* इति यत्कट्यचौ "तस्य समूहः" इति विषये । स्वभावात् स्त्रीलिङ्गता । रथस्येदं (रथ्यम्) । *रथाद्यत्* "तस्येदं"विषये यत् । अत्र वृत्तौ रथाङ्ग एवेष्येते इति [ रथसीताहलेभ्यो यद्विधौ तदन्तविधिः ] इत्युक्तत्वात् (परमरथ्यम्) इत्याद्यपि भवति । (आश्वरथम् ) । *पत्रपूर्वादञ्*इति वाहनवाचिपूर्वपदात् रथान्तात् अञ् यतोपवादः । अयमपि रथाङ्ग एवेष्यते ; रथं वहति (रथ्यः) । *तद्वहति रथयुगप्रासङ्गात्* । इति द्वितीयान्तात् वहतीत्यर्थे यत् ( रथाय हिता रथ्या) *खलयवमाषतिलवृषब्रह्मणश्च* इति चकारस्यानुक्तसमुच्चयार्थत्वात् चतुर्थ्यन्ताद्धितार्थे यत् । वामरथस्यापत्यं (वामरथ्यम्) । "कुर्वादिभ्यो ण्यः"इति ण्यः, तत्र 'वामरथस्य कण्वादिवत् स्वरवर्जम्'इति पठ्यते । तस्यायमर्थः । वामरथ्यशब्दस्य गर्गाद्यन्तर्गतस्य यञन्तस्य काण्वादेर्यत्कार्यं तद्भवति स्वरं वर्जयित्वेति, तेन "यञञोश्च" इति गोत्रबहुत्वे विधीयमानो लुगस्यापि भवति । ( वामरथा इति ) । तथत्रायं "प्राचां ष्फ तद्धितः" इति स्त्रियां विधीयमानो ङीष्फश्चास्यापि भवतः । ( वामरथ्यः । वामरथ्यायनी ) ष्फस्य षित्त्वान् ङीष् । "हलस्तद्धितस्य" इति यलोपः । "यस्येति च" इत्यलोपः तथा यूनि "यञञोश्च" इति विधीयमानष्फगत्रापि भवति । ( वामरथ्यायन ) इति । "आत्यस्य" इति यलोपस्तत्रैव अनातीति निषेधान्न भवतीति । तथा *सङ्घाङ्कलक्षणेष्वञ्यञिञामण्* इति यञन्तात् सङ्घाङ्कलक्षणेषु विधीयमानोऽण् अस्मादपि भवति । (वामरथानि) सङ्घाङ्ककरणानीति । तत्र घोषग्रहणं चोदितं, तेन (वामरथो घोषः) इत्यपि भवति । "आपत्यस्य" इति यलोपः । तथा *कण्वादिभ्यो गोत्रे* इति गोत्रापत्यवाचिभ्यः कण्वादिभ्यो विधीयमानोण् अस्मादपि भवति । (वामरथाः छात्राः) । स्वरवर्जमित्युक्तत्वात् । "ञ्नित्यादिर्नित्यम्" इति प्रकृतेराद्युदात्तत्वं न भवति, प्रत्ययस्वर एव भवति ॥ ८६८ ॥

षद्लृ विशरणगत्यवसादनेषु ॥ अयं शदिकुशी चानुदात्ता उदात्तेतः(सीदति) *पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्छधौशीयसिदाः* इति शिति प्रत्यये परे यथासंख्यात् सदेः सीदादेशः । ( ससाद । सेदतुः । ससत्थ । सेदिथ ) थलि भारद्वाजनियमादिट्पक्षे "थलि च सेटि" इत्येत्वाभ्यासलोपौ । ( सेदिव । सेदिम ) क्रादिनियमान्नित्यमिट् । ( सत्ता । सत्स्यति । असीदत । सीदेत् । सद्यात् । असदत् ) लृदित्त्वादङ् । ( सिषत्सति । सासद्यते ) भावगर्हायां "लुपसद०" इति यङ् । ( सासत्ति ) । लङि सिपि "दश्च" इति वा रुत्वम् , (असासः । सादयति । असीषदत् । निषीदति ) । *सदिरप्रतेः* इति अप्रतेरिणन्तादुपसर्गात् परस्य षत्वे (न्यषीदत्) । "प्राक् सितादड्व्यवायेपि" इति षत्वम् ( निषिषत्सति ) । न्यषीषददित्यत्र "स्थादिष्वभ्यासेन च" इत्युभयत्र षत्वम् । यद्वाभ्यासस्य "सदिरप्रतेः" । "प्राक् सितादड्व्यवायेपि" इति षत्वम् । उत्तरस्य तु"इण्को" इति । (निषसादेत्यत्र) तु "सदिष्वञ्जोः परस्य लिटि" इति उत्तरखण्डस्य षत्वनिषेधः । (निषेदतुरित्यादौ) अभ्यासस्य लोपे सति अभ्यासात् परत्वाभावान्नायं निषेधः। (सेदिवान्)। *भाषायां सदवसश्रुवः* इति भूतसमान्ये वा लिट् , तस्य च क्वसुः । अस्मादेव वचनात् भूतसामान्ये सदादिभ्यो लिडनुमीयते । इदं चानुमानं विकल्पेन, अस्य च लिटो नित्यं क्वसु-

रिति न तिङां श्रवणं नापि लुङो धातुसामान्यविहितस्य सदादिविशेषविहितेनानेन बाधः। न च सदादौ भूतसामान्ये सावकाशस्यास्य लिटः "अनद्यतने लङ्" "परोक्षेलिट्" इति भूतविशेषविहिताभ्यां बाधः, तद्विधानेप्यस्यानुवर्त्तनादिति भाष्यादौ स्थितम्। क्रादिनियमादिट्, उगित्वान्नुम्। *सान्तमहतः* इति असंबुद्धौ सर्वनामस्थाने दीर्घे सोः "हल्ङ्याब्भ्यः" इति लोपः। सकारस्य संयोगान्तत्वात् लोपः। भसंज्ञायां वसोः संप्रसारणे "संप्रसारणाच्च" इति पूर्वत्वे परस्य (आसेदुष इत्यादि), सम्प्रसारणविषये नेडागमः प्रवर्तते। पश्चात् निमित्तविघातो भविष्यतीति, हलादौ "वसुस्रंसु" इत्यादिना दत्वे (आसेदिवद्भ्यामिति। परिषत्)। "सत्सूद्विष०"इति क्विप्। पर्षच्छन्दस्तु पृषोदरादित्वाद् परेरिकारलोपे, परिषदा कृतं (पारिषदम्।) *कुलालादिभ्यो वुञ्*इति तेन कृतमिति विषये वुञ्। परिषद इदं (पारिषदम्)। "पत्राध्वर्युपरिषदश्च"इति तस्येदमर्थे अञ्। (परिषद्वलः)। "रजःकृष्यासुतिपरिषदो वलच्"इति मत्वर्थे वलच्। परिषदं समवैति, तत्र साधुर्वा (परिषद्यः)।*परिषदो ण्यः* इति योगाभ्यां समवैति तत्र साधुरिति विषये ण्यः। एकदेशविकृतस्यानन्यत्वात् कृतेकारलोपस्याप्येते प्रत्यया भवन्ति। तथा च भाष्ये "एवोङ्" इत्यत्र पार्षदकृतिरेषा तत्र भवतामिति, तथा सम्प्रति पर्षद्वलोक्तमिति भारते वलच्। भट्टिकाव्ये पर्षद्वल इति वलच् दृश्यते। (द्विविषत्)। पूर्ववत् क्विप्, "तत्पुरुषे कृति बहुलम्" इति अलुक्। सुषामादिपाठात् षत्वम्। बहुलग्रहणात् लुकि (द्युसत्)।"दिव उत्"इति पदत्वे उत्वम्। (सदः। सादः)। निषीदत्यस्मिन् पापमिति (निषादः)। "हलश्च"इति अधिकरणे घञ्। "उपसर्गस्य घञि"इति दीर्घस्तत्रैव"अमनुष्य" इति प्रतिषेधाच्च भवति। निषादस्यापत्यं, (नैषादकिः),"अत इञ्"। "सुधातृव्यासवरुडनिपाद०" इति अकङादेशः। (।सद्रुः)। "दाधेट्सिशदसदो रुः" इति तच्छीलादौ रुः। (निषद्या)। "संज्ञायां समज०" इत्यादिना स्त्रियामकर्त्तरि क्यप्। (सदः) असुन्। सत्रं, "गुधुविपचिवचियमिसदिभ्यश्च" इति त्रप्रत्ययः। पापं चिकीर्षति, (सत्रायते)। "सत्रकक्ष०" इत्यादिना कण्वचिकीर्षायां, क्यङ्। कण्वं पापं, सत्रादयो वृत्तिविषये पापार्था इत्युक्तम्। (निषद्वरः कामकर्दमौ,) "नौ सद०" इति वरच्। (सद्म)। मनिन्। सूकरसद्मन इमे (सौकरसद्माः)। "नान्तस्य टिलोपः" इत्यादिना अञिति प्रकृतिभावापवादः टिलोपः। (सादिः)। "वपिवदिराजिघ्रषिसहिनिवाशिषदिवृभ्यः" इतीञ् प्रत्ययः। अयं तुदादावपि। उभयत्र पाठे प्रयोजनं उञ्छतिवन्नेयम्। चुरादौ चायम्॥ ८३९॥

शद्लृ शातने॥ अत्र मैत्रेयः। शद्लृ विशातने। विशीर्णतायां वर्त्तते, शातनं विषयभावेन निर्दिश्यते प्रसिद्धत्वादिति। (शीयते)। "पाघ्रा"इत्यादिना शीयादेशः। "शदेः शितः" इति शिद्भाविनोस्मात्तङ्। (शशाद। शेदतुः। शशत्थ। शेदिथ। शेदिव) क्रादिनियमादिट्। थलि भारद्वाजनियमादिड्विकल्पः। (शत्ता, शत्स्यति। शीयताम्। अशीयत।शीयेत) आशिषि (शद्याद्। अशदत्) लृदित्त्वादङ्। (शिशत्सति)। शिद्भावे च शादेरात्मनेपदनिमित्तं केवल इति प्रकृतेरतङ्निमित्तत्वात् "पूर्ववत्सनः" इति न भवति। (शाशद्यते। शाशत्ति। शातयति) "शदेरगतौ तः" इति णौ तत्त्वम्, गतौ तु (शादयते गोपालक) इति तत्वं न भवति। अयमेव गतौ तत्त्वप्रतिषेधो गत्यर्थत्वे प्रमाणम्। (शादः। शदः)। शाद्वलम्)। "नडशादाड्ड्वलच्"इति वलच् चातुरर्थिकः, डित्त्वाट्टिलोपः।(शद्रुः)। "दाधेट्सिशदसदो रुः" शातयतीति (शद्रुः,) तृशादिभ्यां "त्नुन्" इति त्नुन्। बाहुलकात् णेर्लोपो वृद्ध्यभावश्चेति प्रत्ययलक्षणेन णिज्निमित्तं तत्त्वम्॥ ८४०॥

क्रुश आह्वाने रोदने च॥ सदादयस्त्रयोनुदात्ता उदात्तेतः। तथा च व्याघ्रभूतिः।

अर्दि हर्दि स्कन्दिभिदिच्छिदिक्षुदीद् सर्दि शर्दि स्वद्यतिपद्यती स्विदिम्।
तुदि नुदि विद्यवि विन्त इत्यपि प्रतीहि दान्तान् दशपञ्च चानिटः॥
दिशि दृशि दंशिमथो स्पृशि मृशिम् रुशि रिशि क्रोशतिमष्टमं विशिम्।

लिशि च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥

( क्रोशति । चुक्रोश । चुक्रुशतुः । चुक्रोशिथ । चुक्रुशिव । चुक्रुशिम ) क्रादिनियमादिट् । ( क्रोष्टा । क्रोक्ष्यति । क्रोशेत् ) आशिषि (क्रुश्यात् । अक्रुक्षत् ) "शल इगुपधाद्" इति क्सः । ( चुक्रुक्षति ) । "हलन्ताच्च" इति कित्त्वं, ( चोक्रुक्षते चोक्रोष्टि हौ चोक्रुड्ढि । धित्वषत्वढत्वजश्त्वानि । लङि तिप्सिपोः ( अचोक्रोट् । क्रोशयति । अचुक्रुशत् । आक्रोशकः ) । *देविक्रुशोश्चोपसर्गे* इति तच्छीलादौ वुञ् । (हे क्रोष्टो ।) "सितनिगमि" इत्यादिना तुन् । अस्य *तृज्वत् क्रोष्टुः* इति असम्बुद्धौ सर्वनामस्थाने तृजन्तरूपातिदेशात् क्रोष्टा क्रोष्टारावित्यादि ।.शसि (क्रोष्टून्) । अन्यत्र *विभाषा तृतीयादिष्वचि* इति तृज्वद्भावविकल्पनात् ( क्रोष्ट्रा । क्रोष्टुनेत्यादि ) आमि [ नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ] इति नुमि अनजादित्वात् तृज्वद्भावाभावे (क्रोष्टूनामिति) भवति । ( क्रोष्ट्री ) "स्त्रियां च" इति तृज्वद्भावः । "मतिबुद्धि" इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् (अक्रुष्टः) । वर्त्तमाने क्तः । ( क्रोशः । क्रुशः) णाभावे इगुपधत्वात्कः ॥ ८४१ ॥

कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु ॥ एतदादयः कसन्ता उदात्ता अनुदात्तेतः । (कोचति) । कुच शब्दे तार इति पठितस्यापीह पाठः संपर्चनादादेव कोच इति ज्वालादिसम्बन्धेन णो यथा स्यादिति ॥ ८४२ ॥

बुध अवगमने । (बोधति । बुबोध । बोधिता इत्यादि बुबुधिषति । बोधित्वा ) "रलो व्युपधा०" इति कित्त्वविकल्पः । रुधि संराधियुधिबन्धिसाधयः क्रधिक्षुधी युद्ध्यतिबुध्यती व्यधिरित्यत्र श्यनानिर्देशात् दैवादिकस्य ग्रहणं नान्यस्य नापि बुद्धिर् बोधन इति वक्ष्यमाणस्य ( बोबुध्यते । बोबोद्धि )"झषस्तथोः"इति धत्वे जश्त्वे (बोभोत्सि) । "एकाचो बशो भष् झषन्तस्य स्ध्वोः" इति भष्त्वे "खरि च"इति चर्त्वे, लोटि हेर्धिभावे जश्त्वे च (बोबुद्धि । बोबुधानि) । "नाभ्यस्तस्य०" इति गुणनिषेधः । लङि तिपि (अबोभोत्) । पदत्वात् भष्भावो जश्त्वं च । सिपि तु "दश्च" इति वा रुत्वे (अबोभोरित्यपि भवति । बोधयति देवदत्तः । अबूबुधत् ।) "अणावकर्म्मकात्" इति परस्मैपदं, यदायमणावचित्तवत्कर्तृकस्तदापि "बुधयुध०" इति परस्मैपदमेव, न च तत्र युधादिसाहचर्यात् बुध्यतेरेव ग्रहणमिति वाच्यम् । एवं बुधिग्रहणं व्यर्थं स्यात् । यतो बोधने बोधयते इति दुर्वारम् , न च बोधतिबुध्यत्योरर्थभेदः, एवं "दीपजन०" इति लुङि तशब्दे वा चिण्विधावपि श्यन्विकरणैरात्मनेपदिभिश्च साहचर्यात् बुध्यतिबोधत्योर्द्वयोर्ग्रहणमिति (व्यत्यबोधि, व्यत्यबोधिष्टेति भवति), असत्यपि वाग्रहणे न विशेषः, यतो दैवादिकेन व्यत्यबोधि व्यत्यबोधिष्टेति रूपद्वयं दुर्वारं, भावादिकर्मणोः (बुधितमनेन बोधितमनेनेत्यादि) ॥ ८४३ ॥

रुह बीजजन्मप्रादुर्भावे च ॥ अनुदात्ता उदात्तेतः ( रोहति रुरोह । रुरोहिथ रुरुहिव ) क्रादिनियमादिट् । ( रोढा ) । गुणढत्वधत्वष्टुत्वढलोपाः ( रोक्ष्यति ) "षढोः कः सि" इति कत्वं ( रोहतु । अरोहत् । रोहेत् ) आशिषि ( रुह्यात् । अरुक्षत् ) "शल इगुपधादनिटः क्सः" ( रुरुक्षति । रोरुह्यते रोरोढि । रोरूढः ) "ढ्लोपे" इति दीर्घः ( रोरोक्षि ) लोटि सोढिले धित्वष्टुत्वलोपदीर्घेषु (रोरूढि) । लङि (अरोरोट् । अरोरूढाम् । रोहयति । अरूरुहत् । रोपयति । अरूरुपत् ) "रुहः पोऽन्यतरस्याम्" इति पक्षे हकारस्य पकारः, (आरूढो वृक्षम् । आरूढो वृक्षः) । "गत्यर्थाकर्मकः" इत्यादिना कर्तृकर्मणोः क्तः (रोहितिः ) "हृसृरुहियुषिभ्य इतिः" इतीतिः । ( रोहितः । लोहितः) "रहेरितश्च लो वा"इति इतः । पक्षे रेफस्य लत्वम् । अलोहितो लोहितो भवति,(लोहितायते । लोहितायति)। *लोहितादिडाज्भ्यः क्यष्* च्व्यर्थविषयाद्व्यन्तात् भवत्यर्थे क्यष् । "वा क्यषः"ति पक्षे तङ् । (लोहित एव लोहितको मणिः) । "लोहितान्मणौ"इति मणौ वर्तमानात् लोहितशब्दात् स्वार्थे कन् । (लोहितकं मुखं कोपेन) । "वर्णे चानित्ये" इति अनित्यवर्णे वर्त्तमानात् । लोहितशब्दात् स्वार्थे कन् , स्त्रियां

[लोहिताल्लिङ्गबाधनं वा) इत्युक्तत्वात् "वर्णादनुदात्तात्" इति पक्षे क्नोन ङीब्विधिरिति (लोहितिकेति भवति)। अन्यदा तु ङीम्नकारयोर्लिङ्गविशिष्टपरिभाषया कनि ह्रस्वे च (लोहिनिकेति)। लोहितेन रक्तो (लोहितकः पटः)। "रक्ते" इति लाक्षादिना रक्तेऽर्थे वर्त्तमानात् लोहितशब्दात्स्वार्थे कन्; अत्रापि स्त्रियां "लोहिताल्लिङ्गबाधनं वा" इत्यस्यानुवर्तनात् (लोहितिका पटी लोहिनिका पटीत्युभयं भवति। रोहिषो मृगभेदः।) "रुहेर्वृद्धिश्च" इति टिषचि वृद्धिः। स्त्रियां (रौहिषी)॥ ८४४॥

कस कतौ॥ ( कसति। चकास। कसिता। अकसीत्। अकासीत्। चिकसिषति। चनीकस्यते। चनीकसीति चनीकधीत्यत्र) "धिच" इति सलोपः तस्यासिद्धत्वात् "अतो हेः" इति लुङ्न भवति। लङि तिपि "तिप्यनस्तेः"इति सकारस्य पदान्तत्वात् दत्वे (अचनीकत्)। "सिपिधातोर्वा" इति रुत्वं, "नीग्वञ्चु" इत्यभ्यासस्य नीक्। (कासयति। अचीकसत्। कस्वरः) "स्येशभास" इति वरच्। शब्दकुत्सायां कसत इति गतम्। कुथ्यादय उदात्ता उदात्तेतः। रुहिस्त्वनुदात्तः॥ ८४५॥

वृत्। ज्वलादयो वृत्ता इत्यर्थः॥

अथोभयपदिनः॥

हिक्क अव्यक्तशब्दे॥ एतदादयो गूहत्यन्ता उदात्ताः स्वरितेतः। ( हिक्कति। जिहिक्क। हिक्किता। हिक्किष्यति। हिक्कतु। अहिक्कत्। हिक्केत्। हिक्क्यात्। अहिक्कीत्। जिहिक्किषति। जेहिक्क्यते। जेहिक्ति ) "स्कोः" इति कलोपस्य असिद्धत्वात् अलघूपधत्वान्न गुणः ( हिक्कयति। अजिहिक्कत्। हिक्कते। जिहिक्के। हिक्किता। हिक्किष्यते। हिक्कताम्। अहिक्कत। हिक्किषीष्ट। अहिक्किष्ट। जिहिक्किष्यते ) "पूर्ववत्सनः" इति तङ्॥ ८४६॥

अञ्चु गतौ याचने च॥ (अञ्चतीत्यादि)। अञ्चु गतिपूजनयोरित्यत्रैवोदाहृतम्। (अञ्चते। आनञ्चे। अञ्चितासे। अञ्चिचिषते ) पूर्वत्र गताविति पाठः क्रियाफलस्य कर्तृगामित्वे परस्मैपदार्थः। अचु इत्येक इति मैत्रेयः। क्षीरस्वामी अञ्चु गतौ, अचि गताविति द्वौ धातू पपाठ। तत्र इदित्त्वप्रयोजनमच्चित इत्यादौ नलोपाभावमाहुः। काश्यपमैत्रेयसंमताकारास्त्वस्य इदित्त्वं नानुमन्यन्ते, अञ्चु इति पठन् शाकटायनोपि उदित्पक्ष एवानुकूलः, तेन त्विदित्स्थान एव उदित्पठ्यते॥ ८४७॥

टुयाचृ याञ्चायाम्। ( याचति। ययाच। याचिता। याचते। ययाचे। यियाचिषते। यायाच्यते। यायाक्ति। याचयते। अययाचत् )। "नाग्लोपि" इति ह्रस्वनिषेधः। न याचत इति(अयाची)। ग्रहादिषु याचृव्यवहप्रजवदसां प्रतिषिद्धानामिति पाठाद्णिनिः। प्रतिषिद्धानां नञ्पूर्वाणामित्यर्थः। (याचथुः)। "ट्वितोऽथुच्"। के चित् ड्वितं पठन्ति। तदपि प्रमाणं तेन याचित्रमित्यपि भवति। याचितेन निर्वृत्तं (याचितकम्)। "अपमित्ययाचिताभ्यां कक्कनौ" इति तृतीयान्तात् निर्वृत्तमित्यर्थे यथासंख्यात कन्, अपमित्यशब्दस्य अव्ययत्वात् न तृतीयास्तीति। (याच्ञा)। "यजयाच" इत्यादिना नङ्, श्चुत्वम्। (याच्यम्)। "यजयाचरुचप्रवचर्चश्च" इति ण्यति कुत्वनिषेधः। निष्ठायामनिट्त्वे कुत्ववचनमितिवार्त्तिकमते कुत्वस्य नैव प्रसङ्गः॥ ८४८॥

रेटृ परिभाषणे॥ (रेटति। रिरेट। रेटिता। रिरेटिषति। रेरेट्यते। रेरेट्टि। रेटयति। अरिरेटत्) ऋदित्त्वान्नोपधाह्रस्वः ( रेटते। रिरेटे ) इत्यादि। ( रेटित्वा। रेटितः )॥ ८४९॥

चते चदे याचने च॥ ( चतति। चेततुः। चतिता। अचतीत् )। एदित्त्वान्न वृद्धिः (चिचतिषति। चाचत्यते। चाचत्ति। चातयति। अचीचतत्। चतते। चेते। चिचतिषते ) इत्यादि ( चतित्वा। चतितः। चत्यम् ) "चतितकिशसि" इति यत्। ( चतुरः )। "मन्दिवशि" इत्यादिनोरच्। न चतुरः,अविद्यमाना वा चतुरा यस्य अचतुरः,तस्य भावः (आचातु-

र्य्यम्) । ब्राह्मणादिपाठात् ष्यञ् । "न नञ्पूर्वात् तत्पुरुषात्" इति निषेधोऽत्रैव अचतुरेति पर्युदासात् न भवति । ( चत्वारः ) "चतेरुरन्" इत्युरन् । *चतुरनडुहोरामुदात्तः* इति सर्वनामस्थाने आमागमः। तदन्तविधेरत्रेष्टत्वात् । प्रियचत्वाः ।(प्रियचत्वारौ)इत्यादावाम् भवति । हे (प्रियचत्वः)। "अम् सम्बुद्धौ"इत्यमागमः । अयं समास एव । केवलस्य नित्यबहुवचनान्तत्वात् सम्बुद्ध्यभावात् । आमि "षट्चतुर्भ्यश्च"इति नुटि चतुर्णाम् । अत्रापि तदन्तविधिना (परमचतुर्णाम्)इत्यत्रापि नुट् भवति । "षट्चतुर्भ्यश्च"इति बहुवचननिर्देशात् यत्र संख्यायाः प्राधान्यं तत्रैवायमिति प्रियचतुरामित्यादौ अप्रधाने नुट् न भवति । (चतुर्षु) इत्यत्र "रोः सुपि" इति नियमान्न विसर्जनीयः। स्त्रियां "त्रिचतुरोः स्त्रियां तिसृचतसृ" इति विभक्तौ चतस्रादेशे *अचिरऋतः* इति अजादावृकारस्य पूर्वसवर्णदीर्घापवादे च रेफे (चतस्रः) इत्यादि । "ऋन्नेभ्यो ङीप्"स्वस्रादिपाठात् "न षट्स्वस्रादिभ्यः"इति निषिध्यते । (चतसृणामित्यत्र) [ नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ] इति नुट् । आजादिविभक्त्यभावे न रेफादेशः । नामि दीर्घो "न तिसृचतसृ" इति प्रतिषेधान्न भवति । चतस्रादेशस्तदन्तेपि भवति (परमचतस्रः) इत्यादि। यत्र बहुव्रीह्यादिना समासस्यान्यलिङ्गत्वं तत्रापि चतुरर्थस्त्रीत्वाश्रयोयमादेशो भवति । प्रियाश्चतस्रो यस्य (प्रियचतसा ब्राह्मणः। प्रियचतस्रावित्यादि)। सावानाङादेशः । आजादौ "अचिर ऋतः" अयं परत्वात् पूर्वसवर्णत्वं बाधते । "ऋतोङिसर्वनामस्थानयोः" गुणं बाधित्वा पूर्वविप्रतिषेधेन, तेनाजादौ सर्वत्र रेफ एव भवति । अत्र "नद्यृतश्च" इति कप् सन्निपातपरिभाषया न भवति । कपि हि प्रकृतिविभक्त्योरानन्तर्यं विहन्यते । प्रियाश्चत्वारोस्याः (प्रियचत्वा स्त्री । प्रियचत्वारौ) इत्यत्र अङ्गस्य स्त्रीत्वेपि चतुरर्थस्यास्त्रीत्वात् चतस्रादेशो न भवति । चतुर्णां पूरणः चतुर्थः) । "तस्य पूरणे डट्"इति डटि "षट्कतिकतिपयचतुरां थुक्" इति थुक्, ( तुर्यः, तुरीयः ) *चतुरश्छयतावाद्यक्षरलोपश्च* इति पूरणार्थे छयतौ आद्यक्षरलोपश्चेति चशब्दस्य लोपः। तुरीयं भिक्षायाः(तुरीयभिक्षा),चतुर्थंभिक्षायाः(चतुर्थभिक्षा)। *द्वितीयातृतीयचतुर्थतुर्याण्यन्तरस्याम्* इति द्वितीयादीन्येकदेशवाचिना षष्ठ्यन्तेन सह वा समस्यन्ते इति तत्पुरुषः । एकदेशिसमासः। अन्यदा षष्ठीसमासे (भिक्षातुरीयं,भिक्षाचतुर्थमिति भवति)। पूर्वनिपातभेदः। (चतुष्टयम्) । *संख्याया अवयवे तयप्* इति अवयवे वर्त्तमानायाः संख्याया अवयविनि तयप् । "खरवसानयोः" इति रेफस्य विसर्जनीये "ह्रस्वात्तादौ तद्धिते" इति सस्य षत्वं ष्टुत्वं तकारस्य । जसि "प्रथमचरमतय०" इति वा सर्वनामत्वात् (चतुष्टये, चतुष्टयाः)। स्त्रियां "टिड्ढाणञ्"इत्यादिना ङीप् ।(चतुष्टयी । चतुर्भुङ्क्ते,)चतुरो वारान् भुङ्क्ते इत्यर्थः । *द्वित्रिचतुर्भ्यः सुच्* इति क्रियाभ्यावृत्तिगणने कृत्वसुच् । "रात्सस्य" इति सकारलोपः । एककर्तृकाणां तुल्यजातीयानां क्रियाणां जन्मसंख्यानं क्रियाभ्यावृत्तिगणनम् । स्वाद्युत्पत्तिः । स्वरादिषु सुजितिपाठात् अव्ययत्वात् सुब्लुक् ( चतुः करोति । चतुष्करोति ) *द्विस्त्रिश्चतुरिति कृत्वोर्थे* इति कृत्वोर्थे वर्तमानानामेषां विसर्जनीयस्य कुप्वोर्वा षत्वम् । अन्यदा तु "कुप्वोः ≍क≍पौ च" इति विसर्जनीयजिह्वामूलीयौ ( चतुष्कपालम् । चतुष्पात् ) *इदुदुपधस्य चाप्रत्ययस्य* इकारोकारोपधस्य यो विसर्जनीयोऽप्रत्ययसम्बन्धी तस्य कुप्वोः षत्वमिति षत्वम् । अविद्यमानानि विशिष्टानि शोभमानानि चत्वारि यस्य सः ( अचतुरः । विचतुरः । सुचतुरः) "अचतुर" इत्यादिना बहुव्रीहौ अचि निपात्यन्ते । त्रयश्चत्वारो वार्थोऽन्यपदार्थः । (त्रिचतुराः ) वृत्तिस्वाभाव्यात् संदिग्धेस्य वृत्तिः । चतुर्णां समीपे ( उपचतुराः ) *संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये* । अव्ययादीनि पूर्वपदानि संख्येयवाचीनि संख्यया समस्यन्त इति बहुव्रीहिः । चतुरोच्प्रकरणे [ त्र्युपाभ्यामुपसंख्यानम् ] इत्यच् समासान्तः । ( चात्वालः ) यत उत्तरवेद्यर्थाः पांसवो ह्रियते तदुच्यते ।। "स्थाचतिमृजेरालज्वालजालीयचः" इति यथासंख्यात् वालन् । ( चत्वरम् ) "छित्वरचत्वर०" इति रचि निपात्यते ।उणादिवृतौ छद अपवारण इत्यस्य निपातनमुक्तम् । द्वितीयादिश्च पठ्यते (चदति।

चदते) । इत्यादि ॥ ८९१ ॥

प्रोथृ पर्याप्तौ ( प्रोथति । पुप्रोथ । प्रोथिता । प्रोथते ) इत्यादि । ( पुप्रोथिषति । पुप्रोथिषते । पोप्रोथ्यते । पोप्रोत्ति । प्रोथयति । अपुप्रोथत् ) ऋदित्त्वान्नोपधाह्रस्वः । "प्रोथदश्वोभयवस"इत्यत्र प्रोथति सूदति शश्वदश्व इवायमग्निरिति भट्टभास्करः।अयमेवापप्रोथदुन्दुभे दुच्छुनादित्यत्रापप्रोथत् । यमारभ्य 'दुच्छुनात् दुरवलिप्सात् उपसर्गस्य तकारः, प्रोथु पर्याप्तिगतावित्याह । क्षरे अपुप्रोथनं कारणमिति । (प्रोथः) । "हलश्च" इति करणे घञ् ॥ ८९२ ॥

मिदृ मेदृ मेधाहिंसनयोः ॥ अयं पाठो दिवादीनाम् ( मेदति । मिमेद । मेदिता । मेदिष्यति । मिमिदिषति । मिमेदिषति । मिदित्वा । मेमिद्यते । मेमेत्ति । मेदयति । अमिमेदत् । मेदत् इत्यादि) द्वितीयस्य तु मिमेदतुरित्यादौ क्ङितोरेकारश्रवणं विशेषः। क्षीरस्वामी थान्तावेतौ । मिदादिसूत्रे मेधाशब्दं व्युत्पादयन् न्यासकरो धान्तावाह । भोजराजस्तु मेधिं नानुमन्यते । यदाह । अङ्विधौ रखिलिखिसिधिमिथिगुहिभ्यो गुणश्चेति । कौमारश्चात्रैवानुकूलः। मेदत इति घुतादौ स्नेहने गतः ॥ ८९५ ॥

मेधृ संगमे च ॥ ( मेधति । मिमेध । मेधिता । मेधिष्यते इत्यादि ) मेधृ सेचने । मिदादित्वादङ् । गृहमेधो देवतास्य (गृहमेध्यम् । गृहमेधीयम् ) । "द्यावापृथिवी" इत्यादिना छयतौ ॥ ८९६ ॥

णिदृ णेदृ कुत्सासंनिकर्षयोः ॥ (नेदति) इत्यादि, मिदृमेदृवत् । (प्रणेदति) । "उपसर्गात्" इति णत्वम् । निन्दतीति कुत्सायां गतम् ॥ ८९७ ॥

शृधु मृधु उन्दने ॥ उन्दनं क्लेदनम् । ( शर्द्धति । शशर्द्ध । शशृधतुः । शर्द्धिता । शर्द्धते शशृधे । इत्यादि । शिशर्द्धिषति । शरीशृध्यते । शरीशर्द्धि ) हौ द्वेद्धिः । "झषस्तथो" इति धत्वे जश्त्वे,लोटि हौ (शरीशृद्धि) । लङि तिपि (अशरीशर्त्) । "रात्सस्य" इति नियमात् न संयोगान्तलोपः । सिपि तु कत्वे "दश्च" इति वा रुत्वे "रो रि"लोपे "ढ्रलोपे" इति दीर्घे (अशरीशाः) इत्यपि भवति । एवं रुग्रिकोरपि । ( शर्द्धयति । अशशर्द्धत् । अशीशृधत् ) । उदित्त्वाद्वेट् ( शर्द्धित्वा । शृद्धा । शृद्धः ) । एवं (मर्द्धतीत्यादि) । शृधेर्वृतादौ पाठः शब्दकुत्सायां क्रियाफलस्य अकर्तृगामित्वेपि आत्मनेपदार्थः । तथा *वृद्भ्यः स्यसनोः* इति स्यसनोर्लृटि च क्रियाफलस्य कर्तृगामित्वेपि परस्मैपदार्थः । तथा "पुषादिद्युतादि" इत्यङर्थश्च । वृतादिश्च द्युताद्यन्तर्गणः। तथा "न वृद्भ्यश्चतुर्भ्यश्च" इति स्यसनोः परस्मैपद इण्निषेधार्थश्च ॥

बुधिर् बोधने ( बोधति । बुबोध । बोधिता । अबुधत् । अबोधीत् ) "इरितो वा" इत्यङ्विकल्पेन ( बोधते । बुबुधे ) इत्यादि । क्षीरस्वामी तु बुधेत्यनिरितं पपाठ । बोधतीति ज्वलादिः परस्मैपदी अवगमने गतः । अस्य तशब्दे "दीपजन" इति चिण् नेति अबोधिष्ट इत्येव भवति अत्र दैवादिकेन वात्मनेपदिभिरकर्मकैः साहचर्यात् तादृश एव बुधिर्गृह्यते । तथा "बुधयु० इत्यत्र युधनशजनैरकर्मकैः साहचर्यान्नास्य संग्रहः । स्पष्टं चैतत् तत्र वृत्तौ । तेन (बोधयति बोधयते इति भवति) ॥ ८६० ॥

उबुन्दिर् निशामने ॥ निशामनं चक्षुर्विज्ञानम् ( बुन्दति । बुबुन्द । बुन्दिता । अबुन्दत् । अबुन्दीत् । बुबुन्दिषति । बोबुन्द्यते । बोबुन्ति ) हौ ङित्वादनुनासिकलोपे ( बोबुन्दि । बुन्दते । बुबुन्दे इत्यादि ) उदित्वात् क्त्वायामिड्विकल्पनात ( बुन्दित्वा । बुत्त्वा ) निष्ठायां (बुन्नम् )। नलोपे "रदाभ्याम्" इति निष्ठानत्वम् ।'(बुबुदः) [घञर्थे कप्रादीनांके द्वेभवतः] इति द्विवचनम् । पृषोदरादित्वान्न हलादिशेषः ॥ ८६१ ॥

वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ॥ वादित्रग्रहणं नाम वादित्रस्य वाद्यभाण्डस्य वादनार्थं ग्रहणमिति क्षीरस्वामी (वेणति विवेण । वेणिता । विवेणिषति । वेवेण्यते । वेवेण्टि । वेणयति । अविवेणत् । वेणते । विवेणे इत्यादि । वेणिः । वेणी ) इन् । "कृदिकारादक्तिनः" इति ङीष्वा । उत माता महिषमस्वेनम् इत्यत्र भाष्यकारास्तवर्गपञ्चमान्तममुं पेठुः ॥८६२॥

खनु अवदारणे ॥ ( खनति । चखान । चख्नतुः ) "गमहन०" इत्याजादावुपधालोपः । तस्य "द्विर्वचनेचि" इति स्थानिवत्त्वात् द्विर्वचनम् ( खनिता । खनिष्यति । अखनत् । खनेत् । खन्यात् । खायात् ) "जनसनखनां सञ्झलोः" "ये विभाषा" इत्यात्वम् । धातुपारायणे तु "लोपो यि" इतिवत् "ये विभाषा" इति वर्णमात्रे निर्दिष्टत्वे य इत्यत्वतोनिर्देशादिदमात्वं यग्यङोरेव न तु यासुटीत्युक्तम् । ( अखनीत् । अखानीत् । चिखनिषति चङ्खन्यते । चाखायते । चङ्खन्ति । चङ्खातः ) "अनुनासिकस्य" इति दीर्घं परत्वात् बाधित्वा "जनसनखनाम्" इत्यात्वं भवति । तत्र झल्ग्रहणं सनोत्यर्थं तस्यैव झलादेः सनः संभवात्, तेन चिखनिपतीत्यत्रात्वाभावः। (खानयति । अचीखनत् । खनते । चख्ने इत्यादि । खेयम् )।*ईचखनः*क्यपि तत्संनियोगेन "ईकारेन्तादेशे आद्गुणः । इइ इति प्रश्लेषेणेकारद्वयं विधीयते । एकस्मिन्विधीयमाने "ये विभाषा" इत्यात्वाभावपक्षे सावकाशोसौ परेणान्तरङ्गेण चात्वेन बाध्येत, यतो हि यकारादौ बुद्धिस्थ एव विधानादन्तरङ्गमात्वम्, ईकारः, क्यप्संनियोगेन विधानात् बहिरङ्गः । यदा तु "ये विभाषा" इति परसप्तमी तदात्वमेव बहिरङ्गमीत्वं तु क्यप्संन्नियोगेनान्तरङ्गमिति नार्थः प्रश्लेषेणात्वबाधनार्थेन, एवं च सूत्रेपि ह्रस्व एव पठितव्यः । नन्वेवमेकादेशस्य "षत्वतुकोरसिद्धः" इत्यसिद्धत्वात् ह्रस्वाश्रयस्तुक् स्यात्। नैतत् । 'पदान्तपदाद्योरेकादेशोऽसिद्धः' इत्येवं तत्र व्यवस्थापनात् । ( खनकः । खनकी ) "शिल्पिनि ष्वुन्" । तत्र च "नृतिखनिरञ्जिभ्यः" इति पगिण्यते । परितः खाता, ( परिखा ) । "अन्येष्वपि दृश्यते" इति डः। खायते अनेनेति ( खनित्रम् ) । "अतः" इत्यादिना करणे इत्रः ( खात्वा । खनित्वा ) उदित्त्वादनिट्पक्षे झलादिक्त्परत्वात् पूर्ववदात्वम् । ( निखाय ) । "ये विभाषा" इति आत्वं । (खातः) "यस्य विभाषा" इत्यनिट्त्वम् । खन्यतेनेन अत्रेति (आखनः ) *खनो घ च* इति करणाधिकरणयोर्घः चकारात् घञ् ( आखानः । आखः ) । [ डो वक्तव्यः ] इति डः ; ( आखरः ) । [ डरो वक्तव्यः ] इति डरः । ( आखनिकः ) । [ इको वक्तव्यः ] इतीकः । ( आखनिकवकः ) । [ इकवको वक्तव्यः ] इति इकवकः । आखादयः खनित्रवचनाः। परिखा भवेदस्मिन्नस्य वा (पारिखेयं स्थलम् ) *परिखाया ढञ्* इति प्रथमान्तात् सभावनोपाधिकाद् अस्यास्मिन्नित्यर्थे ढञ् । ( आखनतीत्याखुः ) । "आङ्परयोः खनिशृभ्यां डित्" इति उप्रत्यये डित्त्वाट्टिलोपः । ( मुखं ) "डित् खनो मुट् चोदात्तः" इत्यत्र प्रत्यये डित्त्वाट्टिलोपः, धातोर्मुडागमश्च । मुखे भवं, ( मुख्यम् ) । "दिगादिभ्यो यत्" इति यत्प्रत्ययः । इह पाठोऽशरीरावयवार्थः । शरीरावयवस्य तु "शरीरावयवाद्यत्" इत्येव सिद्धः । मुखमिव ( मुख्या ) । "शाखादिभ्यो यः" इति भवार्थे यः । मुखतो भव ( मुखतीयम् ) । [ मुखपार्श्वतसोर्लोपः ] इति गहादिपाठाच्छप्रत्यये सलोपो "यस्य" इति लोपः परिमुखं भवं ( परिमुख्यम् ) । "अव्ययीभावाच्च" इति यः । तत्र हि [ परिमुखादिभ्य उपसंख्यानम् ] इति वार्त्तिकं, तेन परिमुखादेरेवाव्ययीभावादयं प्रत्ययः । परिमुखं वर्त्तते ( पारिमुखिकः ) सेवकः । *परिमुखं च* इति द्वितीयान्तात अस्माद्वर्त्तते इत्यस्मिन्नित्यर्थे ठक् । मुखस्य सादृश्यं ( यथामुखं ) प्रतिबिम्बम् । समं मुखं ( संमुखम् ) । समशब्दः सर्वपर्यायः । यथामुखं दर्शनः ( यथामुखीनः ) । आदर्शादिः । एवं संमुखस्य दर्शनः ( संमुखीनः ) । दर्शन इत्यधिकरणे ल्युट् । *यथामुखसंमुखस्य दर्शने* इति षष्ठ्यन्ताभ्यामाभ्यां दर्शन इत्यर्थे खः। अत एव सादृश्येपि निर्देशात् यथामुखमित्यव्ययीभावः । तथा समोन्त्यलोपश्च । अयं च लोपः प्रत्ययनियोगेनेति केवलो न प्रयोगार्ह इति व्याख्यातारः । यथामुखीना सीताया इति भट्टिप्रयोगश्चिन्त्यः । ( गौरमुखा नाम का चित् ) "नखमुखात् संज्ञायाम्" इति स्वाङ्गलक्षणस्य ङीषो निषेधात् टाबेव । असंज्ञायां तु ( सुमुखी सुमुखा ) इत्युभयं भवति ॥ ८६३ ॥

चीवृ आदानसंवरणयोः ॥ ( चीवति । चिचीव । चीविता । चिचीविषति । चेचीव्यते । चीवयति । अचिचीवत् । चीवते । चिचीवे ) इत्यादि । ऊद्भावित्वान्नास्य यङ्लुगस्ति ।

अवृदिदित्येके । ( चीवरम् ) । "छित्वर" इत्यादिना वरचि वलोपः । चिनोतेर्वा निपातनम् । ( संचीवरयते भिक्षुः ) चीवरमर्जयति परिधत्त इति वार्थः । "पुच्छभाण्डचीवराण्णिङ्" इति तत्र चीवरादर्जने परिधाने चेति वृत्तिः। अयं चुरादौ च ॥ ८६४ ॥

चायृ पूजानिशामनयोः ॥ ( चायति । चचाय । चायिता । चिचायिषति । चेकीयते ) । "चायः की" इति यङ्यङ्लुकोः कीभावः । दीर्घोच्चारणं यङ्लुगर्थमिति स्थितम् । ( चेकयीति । चेकेति । चेकीतः । चाययति । अचचायत् ।- चायते । चचाये । इत्यादि । अचायिष्ट । चायित्वा । अपचितः ) । *अपचितश्च* इति निष्ठायामनिट्त्वं चिभावश्च पक्षे निपात्यते, अन्यदा ( अपचायितम् ) । [ क्तिनि नित्यं चिभावो वक्तव्यः ] । ( अपचितिः । चनः ) । अन्नम् । "चायतेर्ह्रस्वश्च" इत्यसुनि नुगागमे ह्रस्वश्च, वलिलोपः ॥ ८६५ ॥

व्यय गतौ ॥ (व्ययति । वव्याय । व्ययिता । व्याययति । अविव्ययत् । व्ययते । वव्यये ) इत्यादि । व्ययत इति वित्तत्यागे नित्यमात्मनेपदी । अयं चुरादावदन्तः ॥ ८६६ ॥

दाशृ दाने ॥ ( दाशति । ददाश । दाशिता । दिदाशिषति । दादाश्यते । दादाष्टि । दाशयति । अददाशत् । दाशते । ददाशे ) इत्यादि । *दाश्वान्साह्वान्* इति क्वसावद्वित्वमनिट्त्वं च निपात्यते । दाशतेऽस्मै इति ( दाशः ) । "दाशगोघ्नौ संप्रदाने" इति अचि निपात्यते । पुरो दाश्यत इति ( पुरोडाशः ) । तत्सहचरितग्रन्थोपि (पुरोडाशः) । पुरोडाशस्य संस्कारो 'मखस्य शिरोसि' इत्यादि मन्त्रः । ( पौरोडाशः) । पुरोडाशस्य पौरोडाशस्य च व्याख्यानं तत्र भवं वा ( पुरोडाशिकं, पौरोडाशिकम् ) । *पौरोडाशपुरोडाशात्ष्ठन्* इति प्रत्येकं षष्ठ्यन्ताभ्यामाभ्यां भवव्याख्यानयोरर्थयोष्ठन् । अत्रैव निर्देशात् दाशेर्दकारस्य डकारः । अस्मादनन्तरं स्वामिकाश्यपावयति पठतः । तदनार्षं प्रतीयते । यदाह । "उपसर्गस्यायतौ" इत्यत्र हरदत्तः । अयतिरनुदात्तेदिति ॥ ८६७ ॥

भेषृ भये ॥ क्व चित् गतावपि वर्त्यते । ( भेषति । बिभेष । भेषिता । बिभेषिषति । बेभेष्टि । भेषयति । अबिभेषत् । भेषते । बिभेषे ) इत्यादि ॥ ८६८ ॥

भ्रेषृ भ्लेषृ गतौ ॥ ( भ्रेषतीत्यादि पूर्ववत् । ( भ्रेषः ) ॥ ८७० ॥

अस गतिदीप्त्यादानेषु ॥ ( असति । आस । असिता । असिसिषति । आसयति । आसिसत् । आसते इत्यादि) अष इत्येकइति क्षीरस्वामिमैत्रेयौ । शाकटायनस्तूभावपि७७१।

स्पश बाधनस्पर्शनयोः ॥ स्पर्शनं ग्रथनमिति स्वामी । ग्रहणश्लेषणयोरयं चुरादौ । (स्पशति । पस्पाश । स्पशिता । अस्पाशीत् । अस्पशीत् । पिस्पशिषति । पास्पश्यते । पास्पष्टि । पस्पशा ) यङ्लुगन्तादचि टाप्, 'संज्ञापूर्वको विधिरनित्य' इति नाभ्यासस्य दीर्घः । ( स्पाशयति । अपस्पशत् ) । "अत्स्मृदृत्वर" इत्यादिनाभ्यासस्यात्वम् । ( स्पशते । पस्पशे इत्यादि ) अत्र स्वामी पष इत्येक इति, तेन ( पाषण्डः, पाषाण, इत्याह) । दुर्गशाकटानयोरप्ययमेव पक्षः, अनयोः पाठे 'प्रतिस्पशो विसृजतूर्णितमं, यतो व्रतानि पस्पशे' उपसर्गश्च स्पशः। 'शब्दविद्येव नो भाति राजनीतिरपस्पशा' इत्यादिप्रयोगोननुगुणः। पाषण्डपाषाणप्रयोगस्तु "अनुपसर्गात्" इति कथादेर्भविष्यति । यद्वा पष गन्धन इति युजादेः । अस्तिचायं युधादौ, यद्वक्ष्यति चुरादौ मैत्रेयः पष बन्धन इति युजादावेके पठन्तीति । अत्र स्वामिकाश्यपादयः । पाशादिदर्शनात् पशेति पठन्ति । पाशादयोपि चौरादिकेन खण्डनार्थेनापि सिद्धाः । पशुशब्दस्तु पशेर्व्युत्पादयिष्यते । पसेति दन्त्यान्तस्सौत्रो धातुः । तस्य पसतीत्यादि । पशेर्यङ्लुकि "जपजभ" इत्यादिना अभ्यासस्य नुकि ( पंपश्यते । पंपशीतीत्यादि । पंपश्यतीति ) कण्ड्वादेः । दुखायत इत्यर्थः ॥ ८७२ ॥

लष कान्तौ ॥ ( कान्तिरिच्छा । लषति । ललाष । अलषीत् । अलाषीत् । लिलषिषति । लालष्यते । लालष्टि । लाषयति । अलीलषत् । लषते । लेषे) इत्यादि । "वा भ्राश०" इत्यादिना श्यन्विषये वा श्यन् । ( लष्यति, लष्यते । लषणः ) । "जुचङ्क्रम्य" इत्यादिना

युच् । ( लापुकः ) । "लपपत०" इत्यादिनोकञ् । ( विलापी । अपलापी ) । "अपे च लषः" इति घिनुण् । चशब्दाद्धौ च । त्रयोपि ताच्छीलिकाः ॥ ८७३ ॥

चप भक्षणे ॥ ( चपतीत्यादि ) । लपतिवत् । ( चपकः ) । "कुन्न शिल्पिसंज्ञयोः" इति क्वुन् । ( चापः ) । घञ् ॥ ८७४ ॥

छप हिंसायाम् ॥ ( छपतीत्यादि) पूर्ववत् । (चच्छाप । चच्छतु) इत्यादौ अभ्यासस्य जश्त्वचर्त्वम् [ जश्त्वचर्त्वमेत्वत्तुकोः सिद्धं वक्तव्यम् ] इत्यत्र यथासंख्याश्रयणात् एत्वाभ्यासलोपयोरपि चर्त्वस्य सिद्धत्वादादेशादित्वान्नैत्वाभ्यासलोपौ ॥ ८७५ ॥

झप आदानसंवरणयोः ॥ (.झपतइत्यादि) लपिवत् । अयं हिंसार्थः परस्मैपदिषु गतः८७६।

भ्रक्ष अदने ॥ भ्लक्षेति क्षीरस्वामी । भक्षेति मैत्रेयः । तत्र "गतिबुद्धि" [ भक्षेरहिंसार्थस्य प्रतिषेधः ] इति वार्तिकस्य भक्षयति पिण्डीं देवदत्तः । भक्षयति पिण्डीं देवदत्तेनेति ण्यन्ताद्धेतुमण्णौ प्रयोज्यस्य कर्मत्वाभावं दर्शयता भाष्यकृता भक्षतिरनभिहितः । सति हि अणिकर्त्ता स णावित्यसामञ्जस्यादस्मादेव हेतुमण्णावुदाहृतं स्यात्, तथा वृत्तितद्व्याख्यानेष्वपि [ भक्षेर्हिंसार्थस्य ] इत्यत्र चुरादिण्यन्तादेव भक्षेर्हेतुमण्णावुदाह्रियते । ( भ्लक्षति । भ्लक्षिता । बिभ्लक्षिषति । बाभ्लक्ष्यते । बाभ्लष्टि ) । "स्कोः" इति कलोपः । लोटि हौ ( बाभ्लड्ढि ) धित्वष्टुत्वजश्त्वानि । लङि तिप्सिपोर्हल्ङ्यादिलोपौ ( अबाभ्लट् । भ्लक्षयति ।; अबभ्लक्षत । भ्लक्षयति । अबभ्लक्षत् । भ्लक्षते । बभ्लेक्षे ) इत्यादि । योत्र प्लक्ष इति केषांचित् पाठः सोपि प्रक्षरतीति प्लक्षइति प्रपूर्वात् क्षरतेः प्लक्षशब्दस्य भाष्यकारेण व्युत्पादितत्वादनार्ष एव । तथा च श्रुतिरपि 'तस्य शिरश्छित्वा मेध्यं प्राक्षारयात् स प्लक्षोऽभवत्तत्प्लक्षस्य प्लक्षत्वं, यत् प्लक्षशाखेति' अत्र लत्वं कपिलादित्वाद्द्रष्टव्यम् ॥ ८७७ ॥

दासृ दाने ॥ ( दासति । ददास । दासिता । दासत इत्यादि ) । दाशतिवत् ॥ ८७८ ॥

माहृ माने ॥ ( माहति । ममाह । माहिता । माहते । ममाहे । मिमाहिषते । मामाह्यते । मामाढि ) धित्वढत्वष्टुत्वढलोपाः ( माहयति । अममाहत् ) ॥ ८७९ ॥

गुहू संवरणे ॥ ( गूहति । जुगूह ) "ऊदुपधाया गोहः" इति अजादौ प्रत्यये ऊकारः । स च 'गोह' इति विकृतनिर्देशात् गुणविषय एव, तेन जुगुहतुरित्यादौ न भवति । (गूहिता) ऊदित्त्वादनिट्पक्षे धत्वढत्वष्टुत्वढलोपगुणेषु ( गोढा ) । ढत्वादेरसिद्धत्वात्पूर्वमेव गुण इति ढलोपदीर्घप्रसङ्गः । ( गूहिष्यति । घोक्ष्यति ) ढत्वभष्भावयोः "षढोः कः सि" इति कत्वम् । ( गूहतु । अगूहत् । गूहेत् । आशिषि गुह्यात् ) अगुणविषयत्वादनजादित्वाच्च च ऊत्वं न भवति । ( अगूहीत् ) इडभावे "शल इगुपधा" इति क्सढत्वभष्भावेषु ( अघुक्षत् । गूहते । जुगुहे । गूहितासे । गोढासे । गूहिष्यते । घोक्ष्यते । गूहताम् । अगूहत । गूहेत । आशिषि गूहिषीष्ट ) इडभावे "लिङ्सिचौ" इति कित्त्वान्न गुणः । तत एव गोहिरूपाप्रसङ्गात् अजादित्वाभावाच्चोत्वं न भवति ( घुक्षीष्टेति । अगूहिष्ट ) इडभावे *लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये* इति दन्त्यादावात्मनेपदे पक्षे लुक्, धत्वष्टुत्वढलोपदीर्घेषु ( अगूढ । अगूढाः ) । अत्र तावति वक्तव्ये दन्त्यग्रहणस्य दन्त्योष्ठ्यस्यापि परिग्रहार्थत्वात् । ( अगुह्वहि ) इत्यत्रापि लुग्भवति । अलुक्पक्षे ढत्वभष्भावकत्वेषु ( अघुक्षत, अघुक्षातामित्यादि ) । "क्सस्याचि" इत्यजादावल्लोपः । कर्मकाण्येकवचने चिणि (अगूहि । ) अन्यत्र पूर्ववत् । सनि "सनि ग्रहगुहोश्च" इति इण्निषेधे "हलन्ताच्च" इति कित्त्वढत्वादौ ( जुघुक्षति । जोगुह्यते । जोगुहीति ) "नाभ्यस्तस्य" इति गुणनिषेधादूत्वाभावः । ( जोगोढि ) अनजादित्वादूत्वाभावः । ( गूहयति । अजुगूहत् ) । ऊदिति तपरकरणात् णौ चङ्युपधाह्रस्वत्वं बाध्यते इति केचिदाहुः । एतद्भाष्यवार्त्तिकादौ न दृश्यते । अपरे तु ब्रुवते निगुह्य गत इत्यत्र "ल्यपि लघुपूर्वात्" इति णेरयादेशे कर्तव्ये "असिद्धवदत्रा" इत्यूत्वस्यासिद्धत्वनिवृत्त्यर्थमिति । नै-

तद्युक्तम् । व्याश्रयत्वेनासिद्धत्वाप्रसङ्गात् । ल्यपि णेरयादेशः, ऊत्वगुणावुपधायाः । ( गुह्यं, ) [ शंसिदुहिगुहिभ्यो वा ] इति वक्तव्ये क्यपि मिप् । तदभावे ण्यति गोह्यं, । काकेभ्यो गुह्यन्त इति ( काकगुहास्तिलाः ) [मूलविभुजादिभ्य उपसंख्यदानम् ] इति कः । गूहतेऽत्रानयेति वा ( गुहा ) । गिर्योपध्योरित्यङ् । ( गूढिरन्यत्र । गूहित्वा । गूढ्वा । गूढः ) ॥ हिक्कादय उदात्ताः स्वरितेतः ॥ ८८० ॥

अथाजन्तानुभयपदिन आह ॥

श्रिञ् सेवायाम् ॥ उदात्तः ( श्रयति । शिश्राय । शिश्रियतुः । शिश्रियुः । शिश्रयिथ । शिश्राय । शिश्रय । शिश्रियिव ) अचि इत्यादेशः । अन्यत्र वृद्धिगुणौ अत्र "असंयोगाल्लिट् कित्" इति लिटः कित्त्वात् "श्र्युकः क्किति" इति प्राप्तस्येटो निषेधस्य क्रादिनियमेन बाधः । ( श्रयिता । श्रयिष्यति । श्रयतु । अश्रयत् ) आशिषि ( श्रीयात् ) । "अकृत्सार्वधातुकयोः" इति दीर्घः । ( अशिश्रियत् ) । "णिश्रि" इति चङ् । लघूपधगुणादन्तरङ्गत्वादियङ् । ( श्रयते । शिश्रिये इत्यादि । शिश्रयिषति । शिश्रीषति ) "सनीवन्तर्द्ध" इत्यादिना इड्विकल्पः । अनिट्पक्षे "अज्झन०" इति दीर्घः । "इको झल्" इति कित्त्वादगुणत्वं, ( शेश्रीयते । शेश्रयीति । शेश्रेति । श्राययति । अशिश्रयत् ) वृद्ध्यायौ, णौ कृतस्य स्थानिवत्त्वात् श्रीशब्दस्य द्विर्वचनम् ( श्रायः ) । "श्रिणीभूवोनुपसर्गे" इति घञ् । ( उच्छ्रायः ) । "उदि श्रयतियौतिपूद्रुवः" इति घञ् । कथं पतनान्ताः समुच्छ्रया इति, "कृत्यल्युटो बहुलम्" इति वचनात्, एवं च उदिश्रयतीति श्तिपा निर्देशात् यङ्लुगन्तात् ( उच्छ्राय ) इति अजेव । ( विश्रयी ) "जिदृक्षिविश्रि" इति ताच्छीलिक इनिः । ( श्रित्वा । श्रितः ) । "श्र्युकः किति" इति इण्निषेधः । ( कष्टश्रितः ) "द्वितीया श्रिता" इति समासः । ( श्रेणिः ) "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" इति निः । ( श्रेणीकृताः ) "श्रेण्यादयः कृतादिभिः" इति तत्पुरुषः । [श्रेण्यादिषु च्व्यर्थवचनम् ] इति तत्र वार्त्तिकम् । [ क्विब् वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसंप्रसारणं च ] इति क्विब्दीर्घौ । इयङ् स्थानित्वात्, नदीत्वाभावात् ( हे श्रीः ) इत्यत्र "अम्बार्थनद्योर्ह्रस्वः" इति न ह्रस्वः। ङिद्वचनेषु "ङिति ह्रस्वश्च" इति पक्षे नदीत्वादाटि ङेश्रामि ( श्रियै । श्रियाः । श्रियामित्यादि ) अन्यदेयङि ( श्रिये, श्रियः । श्रियि ) षष्ठीबहुवचने च "वामि" इति नदीत्वे नुटि (श्रीणां, श्रियाम् । श्रिमन्यं ब्राह्मणकुलम् ) भाष्यकारवचनात् श्रीशब्दस्य ह्रस्वः मुमभावश्च । ( श्मश्रु ) । "श्मनि श्रयतेर्डुन्" इति श्मन्शब्दे उपपदे डुन्, टिलोपः, ( श्मश्रुणः, ) पामादित्वान्नः ॥ ८८१ ॥

भृञ् भरणे ॥ एतदादयो वयत्यन्ता अनुदात्ता उभयपदिनः । ( भरति । बभार । बभ्रतुः । बभर्थ । बभृव ) । क्रादिनियमादिडभावः । पिति गुणः, वृद्धिः, अन्यत्राजादौ यण् । ( भर्त्ता । भरिष्यति ) "ऋद्धनोः स्ये" इतीट् । (भरतु । अभरत । भरेत ) आशिषि ( भ्रियात् )। "रिङ् शयग्लिङ्क्षु" इति रिङादेशः । रीङि प्रकृते रिङ्ग्रहणात् अकृत्सार्वधातुकयोर्न दीर्घः ( अभार्षीत् । भरते । बभ्रे । भर्त्तासे । भरिष्यते । भरताम् । अभरत । भरेत ) आशिषि ( भृषीष्ट )। "उश्च" इति आत्मनेपदविषययोर्झलाद्योर्लिङ्सिचोः कित्त्वान्न गुणः । ( अभृत ) । "ह्रस्वादङ्गात्" इति सिचो लोपः । सिजाश्रयो गुणः "उश्च" इति कित्त्वान्न भवति । ( बिभरिषति )। "सनीवन्त०" इत्यादिना वेट् । इडभावे सनो झलादित्वात् "इको झल्" इति कित्त्वे "अज्झनगमाम्" इति दीर्घे "उदोष्ठ्यपूर्वस्य" इति उत्वरपरत्वयोः "हलि च" इति दीर्घे (बुभूर्षति । बेभ्रीयते ) । "रीङ ऋतः" इति परत्वाद्रीङि कृते द्विर्वचनं, ( बर्भर्त्ति ) लोटि हेर्ङित्त्वादगुणत्वे ( बर्भृहि ) लति "हल्ङ्याप्" इति लोपे ( अबर्भः ) एवं रिग्रीकोरपि । "सनीवन्त०" इत्यत्र भरेति शपा निर्देशात् यङ्लुकि नेड्विकल्प इति ( बर्भरिषति ) इत्येवं भवति । अत एव शपा निर्देशात् आचार्याः शब्विकरणं नेच्छन्तीति मतं प्रत्युक्तम् । तथा च वर्द्धमानसुधाकरशिवस्वाम्यादयो भरेति शपा निर्देशाद्भृञ् भरण इति भौवादिकस्य ग्रहणमिच्छन्ति ।(भारयति ।

अबीभरत्। भर्त्ता ) भर्तुर्भावकर्मणी, ( भात्रम् )। उद्गात्रादित्वादञ्। ( ग्रामभर्त्ता )। याजकादित्वात् समासः। जारं भरति इति ( जारभरः )। जारभरेति वचादिपाठादच् ( भृत्यः ) भरणीयः। "भृञोसंज्ञायाम्" इति क्यपि तुक्। संपूर्वाद् विभाषेत्युक्तत्वात्। ण्यदपि भवतीति ( सम्भृत्यः संभार्य इति ) क्यब्ण्यतौ भवतः। संज्ञायां ण्यदेव ( भार्येति ) पाणिगृहीतीत्यर्थः। ( संभार्यं ) गवामयनो हविर्विशेषः। भृत्या भरणविशेषः। "संज्ञायां समज०" इत्यादिना स्त्रियां भावे क्यप्, "कर्मणि भृतौ" इति निर्देशात् ( भृतिरिति ) क्तिन् भवति। ( आत्मम्भरिः "फलेग्रहिरात्मम्भरिश्च" इति इन्प्रत्ययान्तो निपातितः। चकारात् ( कुक्षिम्भरिश्चेति ) वृत्तौ। अत एव चकारात् ज्योत्स्नाकरम्भमुदरम्भरयश्चकोरा इत्यपि निर्वाह्यः। ( विश्वम्भरा ) "संज्ञायां भृतॄवृजि०" इत्यादिना खचि मुमागमः। ( भारः ) घञ्। वंशभारं वहति, ( वांशभारिकः ) *तद्धरतिवहत्यावहति भाराद्वंशादिभ्यः"* वंशादिपूर्वपदाद् भारान्तात् प्रातिपदिकात् द्वितीयासमर्थात् वहत्यादिष्वर्थेषु ठगिति ठक्। अपो भरतीति ( अभ्रम् )। मूलविभूजादित्वात् कः। अभ्रं करोति, ( अभ्रायते ) *शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे* इति द्वितीयान्तात् करणे क्यङ्। करणं क्रिया। "अकृत्सार्वधातुकयोः" इति दीर्घः। ( भरुः, भर्त्ता )। भृमृशीत्युप्रत्ययः। ( बभ्रुः ) पिङ्गललोचनो नकुलश्च। "कुर्भ्रश्च" इति कुप्रत्यये द्वित्वम्। ( भरतः ) "भृशियज्", इत्यतच्।। ड्विदयं जुहोत्यादौ, ऋकारान्तो भर्त्सनादौ क्र्यादौ॥ ८८२॥

हृञ् हरणे॥ हरणं प्रापणं स्वीकारः स्तैन्यं नाशनं च। यथा भारं हरति ग्रामं अशं हरति सुवर्णं हरति चौरः पापं हरतीति, विहाराहारादावर्थान्तराभिधानं तूपसर्गवशात्। तत्र यदा प्रापणार्थस्तदा "अकथितं च" इति द्विकर्मकोयम्। तत्रास्य लादयः प्रधानकर्मणि भवन्ति। ( ह्रियते भारो ग्रामम्, हर्त्तव्यः, हृतः सुहर इति )। कृद्योगेलक्षणा षष्ठी द्वितीयावत् उभयत्र भवति ( हर्त्ता हारस्य ग्रामस्येति )। उभयथा गोणिकापुत्र इति भाष्य उक्तत्वात् गुणकर्मणि द्वितीयापि द्रष्टव्या। हर्त्ता हारस्य ग्राममिति। हर्त्तव्यो भारो ग्रामं देवदत्तेनेत्यत्र "कर्तृकर्मणोः कृति" इति प्राप्ता षष्ठी "कृत्यानां कर्त्तरि वा" इति कृत्यानामिति योगं विभज्य उभयप्राप्ताविति नेति चानुवर्त्य उभयप्राप्तौ कृत्ये षष्ठी नेति भाष्ये प्रतिपादनान्न भवति। स्पष्टं चैतत् कैयटादौ। ( हरति। हरते इत्यादि ) भरतिवत्।। ( हारयति अजीहरत् भारं देवदत्तं यज्ञदत्तः, देवदत्तेनेति वा ) "हृक्रोरन्यतरस्याम्" इत्यणौ कर्तुर्णौ वा कर्मत्वम्। इयं च विभाषा यदायमभ्यवहारार्थं तदा पूर्वेण नित्ये कर्मत्वे प्राप्ते, अन्यदा त्वप्राप्त इत्युभयत्र विभाषा द्रष्टव्या। ( हारयति भारम् इत्यत्र ) प्रापणार्थत्वेप्यस्ति गतिप्रतीतिरिति गत्यर्थत्वेन प्राप्तिरुक्ता, स्पष्टं चैतत "हृक्रो" इत्यत्र न्यासपदमञ्जर्योः। कैयटाकारस्याप्यत्र गत्यर्थत्वमनभिमतमेव, यदाह। "न वेति विभाषा" इत्यत्र हृक्रोरित्यस्य उभयत्रविभाषोक्तौ प्रत्युदाहरणप्रदर्शने विपूर्वोहरतिर्गत्यर्थ इति। संप्रहरन्ते राजान इत्यत्र हरतेर्हिंसार्थत्वेपि "न गतिहिंसा" इति निषेधस्य [ह्वह्योरप्रतिषेधः] इति तङ्। अत्र हरदत्तः। अर्थग्रहणसामर्थ्यात् ये शब्दान्तरनिरपेक्षा गतिहिंसनयोर्वर्त्तन्ते त इह गृह्यन्ते इत्युपहसतीत्यत्र "निगरणचलनार्थेभ्यः" इति परस्मैपदनियमो न स्यात्, तथा इह येषामभ्यवहृतमित्यत्र "क्तोधिकरणे च" इति क्तो न स्यात्। किं चार्थग्रहणमन्तरेणापि यत एवान्यापेक्षया तदर्थाभिधायिनां ग्रहणस्य सिद्धत्वादर्थग्रहणं यथाकथंचित्तदर्थाभिधायिनां ग्रहण एव प्रत्युत प्रमाणम्, एवं हि "उपमानं शब्दार्थप्रकृतावेव" इति प्रकृतिग्रहणमप्यर्थवत्। तस्येदं हि प्रयोजनं यत्र णिनिप्रकृतिरेव शब्दार्थे तत्रेवायं स्वरो यथा स्यात्, यत्रोपसर्गाद्यपेक्षया शब्दार्थत्वं गर्दभोच्चारीत्यादौ तत्र मा भूदिति। यद्यर्थग्रहणमप्यन्यानपेक्षयोपात्तार्थाभिधायिनां ग्रहणार्थं स्यात् किं प्रकृतिग्रहणेन, तथा च वृत्तिरपि, प्रकृतिग्रहणं किं, प्रकृतेरेव यत्रोपसर्गनिरपेक्षा शब्दार्था भवतीति। एवं तत्र न्यासपदमञ्जर्योरपि, तस्मादर्थग्रहणं यथाकथं चिदुपात्तार्थाभिधायिनो ग्रहण एव प्रमाणम्। अत एव "न

गतिहिंसा" इत्यत्र पदमञ्जर्यामाहुरिति कर्त्रन्तरनिर्देशः। ततः संग्रहरिष्यन्तौ दृष्ट्वा कर्णधनञ्जयौ इत्यत्र युद्धाभिमुख्यमात्रमर्थं इति कर्मव्यतिहारस्याभावात् परस्मैपदम्। ( पैतृकमश्वा अनुहरन्ते, ) पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः। *हरतेर्गतताच्छील्ये* इति तङ्। गतं प्रकारः। ताच्छील्यं तत्स्वभावता। न्यासे तु गतीति पठ्यते। यदाह गतौ ताच्छील्यमिति, ( शतस्य व्यवहरति ) शतं पणते, क्रीणाति विक्रीणीत इति वार्थः। *व्यवहृपणोः समर्थयोः* इति शेषे कर्मणि षष्ठी। द्यूते क्रयविक्रयव्यवहारयोः समानार्थत्वमनयोः। अन्यत्र ( शलाकां व्यवहरतीति ) इति द्वितीयैव, विक्षिपतीत्यर्थः। ( प्रतिहर्त्ता ) तस्य भावकर्मणी ( प्रातिहर्त्रम्, )।उद्गात्रादित्वादञ्। ( अवहारः। ग्राहः। ग्रहः )। "श्याद्व्यधा" इत्यादिना णः। ( अंशहरः। *हरतेरनुद्यमनेच्* इति कर्मण्युपपदेऽच्। अनुद्यमनमनुत्क्षेपणम्। उद्यमने तु ( भारहारं ) इत्येव। ( कवचहरः )। *वयसि च* इति कर्मोपपदात् हरतेरच् वयसि गम्यमाने। कालकृतशरीरावस्थां यौवनादिर्वयः। उद्यमनार्थोयमारम्भः। उद्यमनं क्रियमाणं सम्भाव्यमानं वा वयो गमयतीति वृत्तिः। ( पुष्पाहरः )। *आङि ताच्छील्ये* इति कर्मोपपदात् आङ्पसृष्टात् ताच्छील्येऽच् प्रत्ययः। ( दृतिहरिः पशुः। नाथहरिः पशुः )। *हरतेर्दृतिनाथयोः पशौ* इति दृतिनाथयोः कर्मणोरुपपदयोः हृञः पशौ कर्त्तरि इन् प्रत्ययः। संह्रियन्तेऽनेनात्रेति वा ( संहारः )। *अध्यायन्यायोद्यावसंहाराधारावायाश्च* इति करणाधिकरणयोर्घञ् निपात्यते। ( हरणं हारा ) कारावन्धन इति भिदादिपाठादङ् गुणो दीर्घत्वं च। आह्रियन्तेस्माद्रस इति (आहारः) "अकर्तरि च कारके" इति घञ्। ( हरिः )। इन्प्रत्ययः। ( प्रहिः ) कूपः। प्रहरतेः कूप इति प्रोपसृष्टादस्मादिकारप्रत्ययः। तत्र डिदित्यनुवृत्तेः टिलोपः। ( हृदयम् )। "वृहृञोर्युक्दुकौ च" इति कयप् प्रत्ययो दुगागमः। हृदयस्य प्रियं, (हृद्यम् ) *हृदयस्य प्रिय* इति पष्ठ्यन्ताद्यत्। हृदयस्य वन्धनो ( हृद्यो मन्त्रः, ) *वन्धने चर्षौ* इति पष्ठ्यन्तात यत्। बध्यते ऽनेनेति बन्धनम्। ऋषिर्वेदः। हृदये भवं ( हार्दम् )। "प्राग्दीव्यतोण्" हृदयं लिखतीति ( हृल्लेखः हृदय्यम् ) ब्राह्मणादिपाठात् ष्यञ्। एवं ( दौहृदय्यम् )। हृदयस्य लासो ( हृल्लासः )। *हृदयस्य हृल्लेखयदण्लासेषु* इति हृदादेशः। तत्र वृत्तौ लेखेत्यणन्तस्य ग्रहणं घञि ( हृदयलेख इति ) हृदयस्य शोको ( हृच्छोकः, हृदयशोकः )। रोगे, ( हृद्रोगः। हृदयरोगः )। "वा शोकष्यञ्रोगेषु" इति हृदादेशविकल्पः। ष्यञि हृद्भावपक्षे "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" इत्युभयपदवृद्धिः। (सुहृत्। दुर्हृत्) *सुहृद्दुर्हृदौ मित्रामित्रयोः* इति बहुव्रीहौ हृदयस्य हृदादेशः समासान्तः। मित्रामित्राभ्यामन्यत्र ( सुहृदयो दुर्हृदय इति ) भवति। सुहृदो भावकर्म्मणी सुहृदयस्य, ( सौहार्दम् ) "हृयनान्तयुवादिभ्यो ऽण्" इति अण् "हृद्भग०" इत्युभयपदवृद्धिः। "हृदयस्य हृल्लेख" इत्यादिना हृदयस्य हृद्भावः हृदयस्य भावकर्मणी ( हार्दम्। ) युवादिषु हृदयस्य हृद् इति पाठात् अणि हृद्भावः। हृदयमस्यास्तीति ( हृदयालुः )। "हृदयाच्चालुरन्यतरस्याम्" इति मत्वर्थीय आलुच् तदभाव इनिठनौ। ( हृदयी हृदयिक इति। हरिणः ) "शास्त्याहृश्रिभ्य इनच्" इत्यनच्। ( हरिणी )। "जातेरस्त्रीविषयात्" इति ङीप् ( हरेणुः )। गन्धद्रव्यविशेषः। "कृहृभ्यामेणुः" इति एणुः प्रत्ययः। ( हरितः ) "हृश्याभ्यां तन्" इति तन्। ( हरिणी ब्राह्मणी। *वर्णादनुदात्तात्तोपधात्* इति स्त्रियां वा ङीप् तकारस्य नकारः। अवमितनो नित्त्वादुदात्तादिस्तकारोपधश्च भवति। ङीबभावे टापि ( हरिता ब्राह्मणी। हरित् ) "हृसृयुषिभ्य इतिः" इति इतिप्रत्ययः॥ ८८३॥

धृञ् धारणे॥ (धरतीत्यादि) भरतिवत्। "धारेरुत्तमर्ण" इत्यत्र धृञ् अनवस्थाने इति तौदादिकस्य ग्रहणमिति न्यासपदमञ्जर्यादिषु। "इङ्धार्योः" इत्यत्राप्यस्येति न्यासे, "अध्यायन्याय" इति निपातनमस्त्यस्येति वृत्तिकारेण दर्शितम्। धारयतीति ( धारयः )।

"अनुपसर्गाल्लिम्पविन्द०" इत्यादिना शे शपि गुणायौ । वसु धारयतीति ( वसुन्धरा )। "संज्ञायां भृतॄवृजि" इति खचि "खचि ह्रस्वश्च" इति ह्रस्वत्वे मुमागमः । ( धारा ) धारा प्रपातन इति भिदादिपाठादङि गुणो दीर्घत्वं च । द्रवद्रव्यनिपातनं धारेतिन्यासे खड्गधारादावुपसानात् प्रयोगः । ( धर्मः ) । "अर्त्तिस्तुसुहुसृधृक्षिभायावापदियक्षिनीभ्यो मन्" इति मन् । धर्मं चरति ( धार्मिकः ) । *धर्मं चरति* इति द्वितीयान्तात् चरतीत्यर्थे ठक् । तत्र [ अधर्माच्चेति वक्तव्यम् ] इत्युक्तत्वात् (आधार्मिकोपि) । धर्मेण प्राप्यं, ( धर्म्यम् ) । *नौवयोधर्म* इति तृतीयान्तात् प्राप्येर्थे यत्, धर्मादनपेतमपि ( धर्म्यम् ) । "धर्मपथ्यर्थ०" इति यत् । कल्याणो धर्मो ऽस्येति ( कल्याणधर्मा ) *धर्मादनिच् केवलात्* इति धर्मान्तात् बहुव्रीहेरनिच् । अत्र केवलादिति बहुव्रीह्याक्षिप्तस्य पूर्वपदस्य विशेषणत्वेन पूर्वपदीभवतः केवलादन्यनिरपेक्षात्परो यो धर्मशब्दस्तदन्तात् बहुव्रीहेरिति सूत्रार्थः । तेन परमस्स्वोधर्मोस्य परमस्त्वधर्म इति त्रिपदे बहुव्रीहावनिच् न भवति । अत्रान्यपदापेक्षयैव स्वशब्दः पूर्वपदं भवति । [ सर्वनामसंख्ययोरुपसंख्यानम् ] इति स्वशब्दस्य पूर्वनिपातो न भवति आहिताग्न्यादेराकृतिगणत्वात् । यदा स्वो धर्मः स्वधर्मः । परमः स्वधर्मोस्येति बहुव्रीहिस्तदा यद्यपि पूर्वपदं केवलं भवति तथापि ततः परो न धर्मशब्द इति समासान्ताभावः । निवृत्तधर्मा हीत्यत्र निवृत्तिशब्दो बहुव्रीहेः पूर्वपदं भवन्नान्यमपेक्षत इति केवलादस्मात् परो धर्मशब्द इति अनिच् सम्भवति । एवं ( साध्यसमानधर्मा सपक्ष) इत्याद्यपि निर्वाह्यम् । साध्येन समानः साध्यसमानः, साध्यसमानः धर्मोस्येति । ब्राह्मणस्य धर्मो (ब्राह्मणधर्मः ) सोऽस्यास्तीति ( ब्राह्मणधर्मी ) । *धर्मशीलवर्णान्ताच्च* इति मत्वर्थीय इनिः । सिद्धे सति वचनं ठनो निवृत्त्यर्थम् । धृञ् अवध्वंसन इत्यत्राग्रे । धृञ् धारणे चुरादौ क्षीरस्वामी । तद्भाष्यकारस्यानभिमतम् । यदाह भिदादौ धारा, प्रपतने वृत्तिरस्येति । यद्ययं चुरादिः स्यादस्मादेवाङि धारणान्येति ब्रूयात् । एवं हि दीर्घनिपातनक्लेशोपि न भवति, न चास्त्यर्थे भेदः । तथा न्यासहरदत्तावपि न सहेते । यदाहतुः दीर्घत्वं निपातनादिति । तथा "अनुपसर्गाल्लिम्प०" इत्यत्र न्यासे धृञ् हेतुमण्ण्यन्त उक्तः । स पार्थादयस्तूभयथा, यदाह, पारतीरकर्मसमासौ चुरादिण्यन्तः । अथ वा पॄ पालनपूरणयोर्हेतुमण्ण्यन्त इत्यादि, हरदत्तोपि धृञ् धारणे धृञ् अनवस्थाने ण्यन्तौ, विद चेतनाख्याननिपातनेषु चुरादिः । ज्ञानाद्यर्थानामन्यतमो वा हेतुमण्ण्यन्त इति । यदि चुरादिः स्यात् इतरच्चुरादिण्यन्तौ चेति ब्रूयाताम् । अत्र के चित् कृञ् करणइति धातुं पठन्ति तदनार्षम् । यदाहतुर्न्यासकारहरदत्तौ "कः करत् करति" इत्यत्र व्यत्ययेन शबिति । किं च यद्ययं स्यात् अकरदित्येवमर्थं "कृमृदृरुहिभ्यः छन्दसि" इति करोतेरङ्विधानमनर्थकं स्यात् । अस्मात् लङि शपि अस्य सिद्धे "छन्दसि लुङ्लङ्लिटः" इति लुङादीनामेकत्र विधानात् नास्त्यर्थभेदः ॥ ८८४ ॥

णीञ् प्रापणे ॥ इह प्रापणं गमनाङ्गं भवति । ( प्रणयति । अन्तर्णयति ) [ अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गत्वमुक्तम् ] ( निनाय ) वृद्ध्यायौ । "द्विर्वचनेचि" इति स्थानिवद्भावान्नीशब्दो द्विरुच्यते । ( निन्यतुः ) । इयङः स्थानिवद्भावान्निशब्दे द्विरुक्ते पुनरुत्तरखण्डस्येयङ् न भवति । अस्यां दशायामनेकाच्त्वात् "एरनेकाचः" इति यणा बाधादियङेवेत्यत्रोपपादितम् । ( निनयिथ । निनेथ । निन्यथुः । निन्य । निनाय । निनय ) गुणवृद्ध्योरयायौ । ( निन्यिव ) । क्र्यादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः ( नेता । नेष्यति । नयतु । अनयत् । नयेत् । नीयात् । अनैषीत् । निनीषति । नेनीयते । नेनयीति । नेनेति । नेनीतः । नाययति । अनीनयत् नाययति अजां यज्ञदत्तेन देवदत्तः ) । [ नीवह्योः प्रतिषेधः ] इति प्रयोज्यस्य कर्मत्वनिषेधः । अत्र हरदत्तः । यद्यपि नैतयोर्गतिरर्थः, अथापि गतिफलं प्रापणमर्थ इति फलतया गतः प्रतीयते इति मत्वा प्रतिषेध इति । तथा च कैयटे

तयोर्गद्धत्यर्थत्वमुक्तं तत्फलं तथा प्रतीयमानगत्यपेक्षम् । ( नयते । निन्ये । निन्यिषे । निन्यिध्वे । निन्यिढ्वे । निन्यिवहे । नेतासे । नेष्यते । नयताम् । अनयत । नयेत । नेषीष्ट । अनेष्ट ) । *सम्माननोत्सञ्जन०* इति आत्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । सम्माननं पूजनम् । उत्सर्जनमुत्क्षेपणम् । आचार्यकरणमाचार्यक्रिया । ज्ञानं प्रमेयनिश्चयः । भृतिर्वेतनम् । विगणनमृणादेः प्रतिनिर्यातनम् । व्ययो धर्मादिप्रयोजनो विनियोगः । तत्र संमाननाचार्यकरणादयो धात्वर्थविशेषणानि । अन्ये तु धात्वर्थाः । ईदृशान्नयतेस्तङ् स्यात् । ( नयते शास्त्रे ) । अर्थान्युक्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रतिपादयतीत्यर्थः । इह पूजा शास्त्रार्थस्य युक्तिभिः स्थिरीकरणम् । शिष्याणां चैवंविधा प्रतिपादना । ( पुत्रमुदानयते ) । उत्क्षिपतीत्यर्थः । ( माणवकमुपनयते ) । शास्त्रीयेन विधिनात्मसमीपं प्रापयतीत्यर्थः । ( नयते शास्त्रे ) तत्त्वप्रमेयं निश्चिनोतीत्यर्थः । अत्रायमकर्मकः । कर्मणो धात्वर्थान्तर्भावात् । ( कर्मकरानुपनयते ) । भृतिदानेनात्मनः समीपे प्रापयतीत्यर्थः । ( ऋणं विनयते ) । निर्यातयतीत्यर्थः । ( शतं विनयते ) । धर्मादौ विनियुङ्क्ते इत्यर्थः । *कर्तृस्थे चाशरीरे कर्मणि* । नयत्यर्थस्य यः कर्त्ता तत्स्थे शरीरैकदेशवर्जिते कर्मणि कारके सति नियस्तङ् स्यात् । इह शरीरं तदेकदेश इति वृत्तौ । ( मन्युं विनयते ) । कर्तृग्रहणाद् देवदत्तस्य मन्युं विनयतीत्यत्र न भवति, तथा शरीरग्रहणात् गडुं विनयतीत्यत्र न भवति । अयमकथितेप्सिततमाभ्यां द्विकर्मक इत्युक्तम् । तत्र लादयः प्रधाने कर्मणि भवन्ति, षष्ठी तूभयत्र । अत्र प्रधाने पक्षे द्वितीयापि "उभयप्राप्तौ कृति" कर्तृकर्मणोः षष्ठी नेति सर्वमेतद्धरतावुक्तमुदाहृतं च, इहापि तथैवोदाहरणं नेयम् । "अकथितं च" इत्यत्र न्यासे नीवहिहरिजिदण्डीन्प्रस्तुत्य ग्रामादीनामप्यजादिवत् क्रियाजन्यफलभाक्त्वेऽपि तदविवक्षयाऽकथितत्वमुक्तम् । यदाह । अकथितत्वेऽप्येषां ग्रहणं यदा ग्रामादीनामीप्सिततमत्वमनीप्सिततमत्वं च न विवक्ष्यते किन्तु कर्तुरीप्सिततमत्वमात्रमेव तदर्थमिति । न्यासोद्योते च अजादीनां ग्रामादीनामीप्सिततमत्वमविशिष्टमित्युक्तम्, तत्र नीवहिहरीणां प्रापणमर्थः । तथा च "न गतिहिंसा" इत्यत्र भाष्यम् । देशान्तरप्रापणक्रिया वहिरिति । तत्रैव कैयटे । देशान्तरप्राप्त्युपसर्ज्जनं प्रापणमस्य वाच्यं, तत्र गतिर्नान्तरीयकत्वात्प्रतीयते न त्वसौ धात्वर्थ इति, "गतिबुद्धि" इत्यत्र नीवही प्रकृत्य पदमञ्जर्यामेतयोर्गतिफलं प्रापणमर्थ इति । तस्मादत्र गतेरधात्वर्थत्वादकर्तृकत्वात्तत्फलसंयोगाद्याप्यमानत्वेपि ग्रामादीनां न कर्मतोपपत्तिः । अजादीनां तु धात्वर्थकर्तृव्यापारप्रापणफलगतिद्वारेणाप्यमानत्वाद्युक्तं कर्मत्वम् । न चैवं वाच्यम् । अजादिभिः स्वव्यापारे गतौ कर्तृभिस्तत्संयोगद्वारेणाप्तुमिष्यमाणत्वादनीप्सितकर्मत्वमिति । यतः "कर्तुरीप्सिततमम्" इत्यत्र कर्तृग्रहणं कर्मणः स्वव्यापारद्वारेणाप्तुमिष्यमाणत्वमस्य कर्मत्वनिवृत्त्यर्थमिति स्थितम् । अत एव माषेष्वश्वं बध्नातीत्यत्र गन्धनकर्मणाश्वेन स्वव्यापारेण भक्षणेनाप्तुमिष्यमाणानामपि माषाणां कर्मत्वं न भवति । कथं तर्हि "गत्यर्थ०" इत्यत्र भाष्यकृता उह्यन्तां देवदत्तेनेति वहिर्गत्यर्थ उदाहृतः । नैष दोषः । तत्र गतिलोटीत्युच्यमानेपि अर्थाद् गत्यर्थलोटीति सिद्धे ऽर्थग्रहणस्य प्रतीयमानगतीनामीदृशामपि संग्रहार्थत्वात् । यच्च "हृक्रोरन्यतरस्याम्" इत्यत्र हरतेः "गतिबुद्धि" इति नित्ये प्राप्ते विकल्प इति हरदत्तादिवचनम् । तत्र "गतिबुद्धि॰" इत्यत्रार्थग्राहणस्य पूर्ववन्नयत्याद्यर्थपरिग्रहार्थत्वात् युक्तमेव । प्रतीयमानानां गतीनामपि तत्र ग्रहणं, एवं नीवह्योः प्रतिषेध उपपद्यते । "न गतिहिंसा" इत्यत्र त्वर्थग्रहणेन प्रतीयमानगतीनां ग्रहणं भाष्यकारस्य नेष्टम् । यत्तत्र "हृवह्योरप्रतिषेधः" इति वार्त्तिकपरिग्रहणान्न वहिर्गत्यर्थ इति प्रत्याचष्टे । ( त्रिनीयः कल्पः, ) कल्कश्च पिष्टौषधे पक्वान्नतैलादीनामृर्जीषे पाके वर्त्तते । *विपूयविनीयजित्या मुञ्जकल्कहलिषु* इति विपूर्वादस्मात्कल्के क्यपि निपात्यते । ( आनाय्यः ) गार्हपत्यादाहवनीयादानीतो दक्षिणाग्निः । तस्य हि योनिर्विकल्प्यते वैश्यकुला-

क्षित्तवतो वा गृहात् गार्हपत्याद्वेति । *आनाय्योऽनित्ये* इति आङ्पूर्वादस्मात् ण्यदायौ निपात्येते । अनित्यत्वं चास्य नित्यमज्वलनात्, निपातनस्य रूढ्यर्थत्वाद् घटादावन्ययोनौ च दक्षिणाग्नौ च ( आनेय इति ) भवति । ( प्रणाय्यः ) अपूज्यो निष्कामो वा *प्रणाय्योऽसम्मतौ* इति प्रपूर्वादस्माण्ण्यदायौ । संमतिः पूजाभिलापो वा, सा यस्य नास्तीत्यसावा संमतिः । संमतौ तु ( प्रतिप्रणेयः । सान्नाय्यं हविः ) तच्च दधिपयसी । "पाय्यसान्नाय्य०" इति हविषि ण्यदायौ । उपसर्गस्य दीर्घत्वं च । ( नयतीति नायः ) । *दुन्योरनुपसर्गे* इति अनुपसृष्टादस्मात्कर्त्तरि णः । उपसृष्टात् ( अनुनयः ) । पचाद्यच् । ( प्रणीः ) । "सत्सूद्विष०" इत्यादिना क्विप् । ( ग्रामणीः ) इत्यत्र पूर्ववत् क्विपि [ अग्रग्रामाभ्यां नयतेरुपसंख्यानम् ] इति णत्वम् । ( नायः ) । "श्रिणीभुवोऽनुपसर्गे" इति घञ् । उपसृष्टात्तु ( निर्णायः ) इत्येतत्तूपसर्गप्रतिरूपकात्परस्य निञो घञि णत्वे चानुपसर्गत्वादेव भवति । कथं नय इति बाहुलकादच् । ( अवनायः । उन्नायः ) "अवोदोर्नियः" इति घञ् । ( उन्नयः पदार्थानाम् ) इति बाहुलकादचि । ( परिणायः ) समन्तादक्षादिना यद् द्यूतम् । *परिन्योर्नीणोर्द्यू ताभ्रे षयोः* इति यथासंख्यात्पराद्युपपदे द्यूते नियो घञ्, अक्षादिभिः क्रीडनं द्यूतम् । अभ्रे षश्चलनमचलनमभ्रेषः । अनपहार इति यावत् । ( आनायः ) । "जालमानाये" इति जाले घञि निपात्यते । ( नीमिः ) नीञो मिरिति मिः । ( नेमः ) अर्तिस्तुस्वित्यादिना मन् । अस्य सर्वादित्वात् तत्कार्यं पूर्वशब्दवत् । ( नीथो ) यज्ञः । "हृतिहषि" इत्यादिना थन् । ( नेष्टा ) । नयतेः षुक्चेति तृनि गुणो धातोः षुगागमः । *अप्तृन्* इत्यादिना *ऋतो ङि* इत्यादिना च यथायोगं गुणदीर्घौ सर्वनामस्थाने । हरत्यादयश्चत्वारोऽनुदात्ता उभयपदिनः ॥ ८८६ ॥

अथाजन्तानिटः परस्मैपदिन आह—

धेट् पाने ॥ एतदादयो जयत्यन्ता अनुदात्ता उदात्तेतः ( धयति । दधौ । दधतुः । दधुः । दधाथ । दधिथ । दधिव) *आदेच उपदेशे शिति* इति एजन्तो यो धातुरुपदेशे तस्यात्वमिति सर्वत्राकारे "आत औ णल" इति औत्वे वृद्धिः, अन्यत्र क्ङित्यजादावार्द्धधातुके "आतो लोपः" इत्याल्लोपः । इटि च तस्य "द्विर्वचनेचि"इति स्थानिवत्त्वाद्धाशब्दस्य द्विर्वचनं, क्रादिनियमादिट् । थलि भारद्वाजनियमादिड्विकल्पः ( धाता । धास्यति । धयतु । अधयत् । धयेत् । आशिषि धेयात् ) । "एर्लिङि" घुमास्थागापाजहातिसामित्येकारः । *दाधा घ्वदाप्* इति दाण् दाने, देङ् रक्षणे, डुदाञ् दाने, दो अवखण्डने, धेट् पाने, डुधाञ् धारणादौ एते घुसंज्ञकाः, दाप् शोधने दैप् लवन इत्येतौ वर्जयित्वा । प्रकृतिवदनुकरणं भवतीत्यात्वेनैजन्तानुकरणमपि दाधारूपमेव । लक्षणप्रतिपदोक्तपरिभाषाया नेह प्रसङ्गः । एवं हि अदाबिति सामान्यग्रहणार्थं दैपः पित्त्वमर्थवद्भवति । ( अदधत् । अदधताम् ) *विभाषा धेट्श्व्योः* इति कर्तृवाचिनि लुङि च्लेर्विभाषा चङि "आतो लोप इटि च०" इत्याल्लोपस्य स्थानिवत्त्वात् "चङि" इति धाशब्दस्य द्विर्वचनम् । चङभावे सिचि "यमरमनमाताम्" इति सकि सिचश्चेटि (अधासीत् । अधासिष्टामित्यादि)। यदा "विभाषा घ्राधेट्शाच्छासः" इति घ्रादिभ्यः परस्मैपदपरस्य सिचो लुक् तदा (अधात् । अधाताम् । अधुरित्यादि) *आतः* इति झेर्जुस् सिज्लुगन्तादपि भवति आत एवेति नियमार्थमिदं सूत्रमित्युक्तम्, यदा कर्मव्यतिहारे तङ् तदा (व्यतिधयते व्यतिदधे) इत्यादि । *आदेच उपदेशे* इत्यत्र शितीति कर्मधारये नञः तत्पुरुषे श एव इत् शित् न शित् अशित् इति । तेन यस्मिन् विधिस्तदादावल्ग्रहण इतीत्संज्ञकशकारादावयं पर्युदास इति एशि आत्वमेव भवति । तङि "विभाषा धेट्श्व्योः" इति वा चङि ( अदधत । अदधेताम् ) । *स्थाघ्वोरिच्च इति* आत्मनेपदपरस्य सिचः कित्त्वे धातोश्चेत्वे "ह्रस्वादङ्गात्" इति झल्परत्वेन सिचो लोपेन ( व्यत्यधित । व्यत्यधिषत )। सिचः कित्त्वात् गुणो न भवति । इत्वविधानं तु गुणविधानार्थमेव स्यात् "स्थाघ्वोरिच्च" इति एकारस्यावि-

धानमपि ह्रस्वादिति सिचो लोपार्थं लघ्वर्थञ्च स्यात्। इदं चेत्वं न सिचीत्युच्यते, किं तर्हि इकारश्चान्तादेशः सिच् किद् भवति इत्येतावत्। तेनास्य सिज्निमित्तत्वात् संनिपातपरिभाषया सिलोपो न स्यादिति नाशङ्कनीयम्। कर्मणि लुङ्येकवचने ( अधायि )। *आतो युक् चिण्कृतोः* इति युक्। चिणि ञ्णिति कृति परे आकारान्ताङ्गस्य युगित्यर्थः। द्विवचनादौ चिण्वदिट्पक्षे युकि ( अधायिषातामित्यादि। अन्यदा ( अधिषातामित्यादि धित्सति ) "सनिमीमा" इत्यादिना इसिः "सः स्यार्द्धधातुके" इति तत्वे "अत्र लोपोऽभ्यासस्य" इति लोपः( देधीयते) घुमास्थागापाजहातिसां हलि"इति एषां हलादौ किङत्यार्द्धधातुके परे आकारस्येकार इतीकारो द्विर्वचनं, ( दाधेति ) ईटि "आद्गुणः"। अन्यदा ( दधाति। दाद्धः ) *श्नाभ्यस्तयोरातः* अनयोराकारस्य क्ङिति सार्वधातुके लोप इति लोपे "झषस्तथोः" इति धत्वे जश्त्वम्। "ई हल्यघोः" इतीत्वमत्रैवाघोरिति निषेधान्न भवति। आकारलोपस्य पूर्वस्मादपि विधाविति स्थानिवद्भावः पूर्वत्रासिद्धे न स्थानिवदिति निषिध्यते। अत एव हि अध इति दधातिः पर्युदस्यते। धयतेस्त्वयं पर्युदासो ऽस्मात् झषन्तात्परस्मैपदपरयोरभावान्न भवति। न च यङ्लुकि संभवात्तदार्थोऽयं पर्युदासः स्यादिति वाच्यम्। दधातौ चरितार्थत्वात्। तथा च तत्र वृत्तिः। दधातिं वर्जयित्वेति। काश्यपपर्पेङ्गणौ ( दाधमि दाधीमि। दाध्वः ) लोटि हौ *घ्वसोरेद्धावभ्यासलोपश्च*इति अन्तस्यैकारोऽभ्यासलोपश्च। अत्र लोपस्य शित्त्वात्सर्वादेशत्वम्। तेन ( धेहीति ) भवति। लङि (अदाधात्। अदाद्धाम्। अदाधुः)। "सिजभ्यस्त" इति झेर्जुस् नित्यम्। परत्वात् "लङः शाकटायनस्यैव" एवंति आकारान्तनिबन्धनो विकल्पो नाशङ्क्यः। अस्मात्परत्वान्नित्यत्वाच्च "श्नाभ्यस्तयोरातः" इति पूर्वमेवाल्लोपे आकारान्तस्याभावात्, लिङि (दाध्यात्)। "श्नाभ्यस्त०" इत्याल्लोपः। आशिषि "एलिङि" इत्येत्वं ( दाधेयात्। लुङि अदाधात्) ) "गातिस्थ०" इति नित्यं सिचो लुक्। "विभाषा घ्राधेट्" इति विकल्पस्तु सानुबन्धकनिर्देशान्न भवति। अत एव "विभाषा घेट्श्व्योः" इति चङपि न भवति ( धापयति धापयते शिशुम् ) आत्वे पुक्। पादिषु [ धेट उपसंख्यानम् ] इति "निगरणचलन०" इति परस्मैपदं निषिध्यते। (अदीधपत् ) इत्यत्राकाराश्रयः पुक् तस्योपधात्वसंपादनेन "णौ चङि" इति ह्रस्वस्य निमित्तं न स्यादिति नाशङ्क्यम्। 'मारणतोषणनिशामनेषु ज्ञा' इति जानातेर्णौ पुकि ह्रस्वार्थात् मित्त्वविधानाल्लिङ्गात्। ( उद्धयः। धयः ) *पाघ्राध्माधेट्दृशः* इति उपसृष्टादनुपसृष्टाच्च कर्त्तरि शः ( स्तनंधयः। नासिकंधयः ) "नासिकास्तनयोर्ध्माधेटोः" इति खशि मुमागमः। नासिकायाः "खित्यनव्ययस्य" इति ह्रस्वश्च। धेटष्टित्त्वमवयवे ऽचरितार्थत्वात् ( स्तनंधयीति ) समुदाये ङीबर्थम्। अत्र हरदत्तः। स्तनन्धयीत्यत्रैव ङीबिष्यते नान्यत्रेत्याहुरिति। इदं खश्प्रत्ययान्तोपलक्षणमित्येके। तथा च क्षीरस्वामी स्तनन्धयीत्यादौ ङीबर्थं इति। वर्द्धमानोपि शुनिन्धयी स्तनन्धयी खश्प्रत्ययान्त एव ङीबिति। ( नाडिन्धयः। मुष्टिंधयः ) "नाडिमुष्ट्योश्च" इति खश्। ( शुनिंधयः ) खश्प्रकरणे [ वातशुनीतिलशर्धेष्वज्धेट्तुदजहातिभ्य उपसंख्यानम् ]इति शुनिशब्द उपपदे खश् ( घटं(१) धयः खरिंधयः खरी गर्दभी, वातन्धयः ) [ खरीघटवातेषु ] इति वक्तव्यात् खश्। केचित्तु खरीशब्दस्थाने खारीशब्दं परिमाणवचनं पठन्ति, वातशब्दो भाष्ये न दृश्यत इति हरदत्तः (धारुर्वत्सोमातरं) "दाधेट्सि" इति रुः। "न लोकाव्यय०" इति कर्मणि षष्ठ्या निषेधः। तत्र हि उकारोऽपि प्रश्लिष्यते। उउक इति, धयन्ति तामिति (धात्री) स्तनपायिका, "धः कर्मणि ष्ट्रन्" इति ष्ट्रन्, कर्मणीतीहाभिधेयनिर्देशः, षित्वं ङीषर्थं, धीत्वा "घुमास्थ०" इतीत्त्वम्। ( प्रधाय ) "न ल्यपि" इतीत्वनिषेधः, "ईत्त्वमवकरादौ" इति भाष्येऽस्थितमिति क्विप्यपि ( धीः। सन्धिः ) "उपसर्गे घोः किः" इति किप्रत्ययः। धीयत इति ( धाना ) "धापॄवस्यजनिभ्यो नः" इति नः। ( धेनुः )। "धेट इच" इति नुप्रत्ययः,

---

( १ ) घटिंमिति २ पु० पा०। घटींति २ पु० पा०।

इकारश्च धातोरिति । ङिद्वचनेषु "ङिति ह्रस्वश्च" इति पक्षे नदीसंज्ञायामाट्। ( धेन्वाइति, धेन्वामित्यत्र ) *इदुद्भ्याम्* इति इकारोकाराभ्यां परस्य ङेरामादेशः । घिसंज्ञापक्षे गुणादौ ( धेनवे, धेनोरिति, धेनावित्यत्र ) *अच्चघेः* इति ङेरौत्वं, घेश्चाकारः धेनुनां समूहो, (धैनुकम् ) "अचित्तहस्तिधेनोष्ठक्" इति ठकि "इसुसुक्तान्तात् कः" इति कादेशः । 'सामूहिकेषु तदन्तविधिरिष्यते' तेन गोधेनूनां समूहो, ( गौधेनुकमिति भवति ) *जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्* इति वृद्धिनिमित्ते तद्धित उत्तरपदस्य वा वृद्धिः, पूर्वपदस्य तु नित्यम् । "पोटायुवति"इत्यादिना समासः । अधेनूनां समूहो आधैनवमित्यत्राधेनोरन इति तन्निषेधात् प्राग्दीव्यतीय उत्सादिलक्षणोञ् । धेनुः बन्धकीकृता, (धेनुष्या) आ(१)हितदुग्धेति यस्याः प्रसिद्धिः। "संज्ञायां धेनुष्या०" इति यत् प्रत्ययः पुगागमश्च निपात्यते । धेनुर्भविष्यतीति, ( धेनुम्भव्या ) "धेनोर्भव्ये मुम्" इति मुमागमः ॥ ८८६ ॥

ग्लै म्लै हर्षक्षये ॥ हर्षक्षयो धातुक्षयः ( ग्लायति । जग्लौ । जग्लतुः । जग्लाथ । जग्लिथ । जग्लौ । जग्लिव । जग्लिम । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ) । आशिषि (ग्लायात् । ग्लेयात् ) *वान्यस्य संयोगादेः* इति घुमास्थादेरन्यस्य संयोगादेरार्द्धधातुके क्ङिति लिङि वा एत्वम् । ( अग्लासीत् ) सगिटौ (जिग्लासति । जाग्लायते । जाग्लेति । जाग्लीतः ) *ई हल्यघोः०* इति क्ङिति सार्वधातुके श्नाप्रत्ययस्य चाघोरभ्यस्तस्य चकारस्य ईकारविधानादीत्वं लोटि हेरपित्त्वात् ङित्वादीत्वं, ( जाग्लीहि । अजिग्लपत् ।प्रग्लापयति) *ग्लास्नावनुवमां च* इति अनुपसर्गस्य वा मित्त्वमुक्तम् । सुग्लायतीति ( सुग्लः ) "आदेच" इत्यात्वं प्रागेव प्रत्ययोत्पत्तेरनैमित्तिकमिति "आतश्चोपसर्गे" इति उपसृष्टादाकारान्तात् विहितः को भवति ( ग्लानः ) "संयोगादेरातो धातोर्यण्वतः"इति निष्ठानत्वम् ( ग्लास्नुः ) "ग्लाजिस्थश्च क्स्नुः" । ( सुग्लानं भवता ) *आतो युच्*इति ईषदादिषु कृच्छ्राकृच्छ्रार्थेषूपपदेषु युच् । स्त्रियां ( ग्लानिः ) । "ग्लाज्याहात्वरिभ्यो निः" । ( ग्लौः) । "ग्लानुदीभ्यां डौः" इति डौः, डित्त्वात् टिलोपः । "चिण्यम्" । एषां च्यन्तानामेवाव्ययत्वमिति नियमात् "कृन्मेजन्तः" इत्यव्ययत्वाभावात् ( ग्लावौ ग्लावः ) इत्यादि यथासम्भवं नेयम् । म्लै गात्रविनाम इति क्व चित्पठ्यते, गात्रविनामः कान्तिहानिः॥८८८॥

द्यै न्यक्करणे । न्यङ्गविमानइति क्षीरस्वामी । न्यङ्गं कुत्सिताङ्गम् ( द्यायति दद्यावित्यादि) ग्लायतिवत् ॥ ८८९ ॥

द्रै स्वप्ने ॥ ॥ ध्रै तृप्तौ ॥ ध्यै चिन्तायाम् ॥ ( द्रायति । ध्रायति । ध्यायति) इत्यादि ग्लायतिवत् । ( निद्रालुः ) । "स्पृहिगृहि" इत्यालुचि द्रा कुत्सायां गतावित्यदादिकस्य ग्रहणमिति वृत्तौ । ( निद्रा ) । "आतश्चोपसर्गे" इत्यङ् । अनिद्रो निद्रावान् भवति, निद्रायते । *लोहितादिडाज्भ्यः क्यष्* इति लोहितादेराकृतिगणत्वादस्मात् च्व्यर्थे भवत्यर्थे वा क्यष् । "वा क्यषः" इति पक्षे तङ् । निद्राशब्दो वृत्तिविषये तद्वति वर्तते इति न्यासकयटपद-मञ्जर्यादिषु । निद्रातीति ( निद्रः ) । "आतश्चोपसर्गे" इति कर्तरि कः, अस्माद्वा, उक्तं चैतत् द्रा कुत्सायां गतावित्यत्र गणे । (निद्राणः) । अकर्मकत्वात् कर्त्तरि निष्ठा, "संयोगादेः"इति निष्ठानत्वम् । ( निद्रितः ) इति तारकादेराकृतिगणत्वादितच् । सुष्ठु ध्यायतीति ध्यायतेः क्विप्प्रसारणयोः "संप्रसारणाच्च"इति परपूर्वत्वे "हलः"इति दीर्घः। (सुधीः। सुधियावित्यादौ) "एरनेकाचः" इति यणे "भूसुधियोः" इति निषेधात् "अचि श्नुधातु०"इति इयङ् ।(ध्यातः) संयोगादेः" इति निष्ठानत्वं "न ध्याख्या०" इति निषिध्यते । ( धीवा ) "ध्याप्योः सम्प्रसारणं च" इति क्वनिपि सम्प्रसारणं पूर्वत्व दीर्घत्वं, स्त्रियां "वनो र च" इति ङीप्(धीवरी)८९२

रै शब्दे ॥ ( रायति । ररौ रातेत्यादि ) पूर्ववत् । कीति रायति इति ( कीरः ) "सुपि स्थः" इति अत्र सुपीतियोगाविभाक्तः । एवमीदृशा अन्येपि निर्वाह्याः। रा.दानइत्यदादौ८९३

( १ ) पीतदुग्धेति २ पु० पा० ।

स्त्यै ष्ट्यै शब्दसंघातयोः ॥ एको दन्त्यादिः । परो मूर्द्धन्यादिः । षोपदेशलक्षणपर्युदासः एक एव गृह्यते उभयोः पाठवैयर्थ्यप्रसङ्गात् । तत्रार्थयोर्यथासंख्यं न भवति पृथग् निर्देशात् । ( स्त्ययति । तस्त्यावित्यादि, ) ग्लैवत् । षोपदेशस्यापि "धात्वादेः षः सः" इदमेव रूपम् । प्रयोजनं तु तिष्ट्यासति अतिष्ट्यपत् ) इत्यादावादेशसकारत्वात् षत्वम् । यत्तु मैत्रेयलक्ष्मताकारकाश्यपादिभिरुक्तं पुनः पाठफलं "धात्वादेः षः सः" इति सत्वाभावे दन्त्यपराः सादयः षोपदेशा इति लक्षणस्याव्याप्तिप्रसङ्गादुपेक्ष्यम् । पाठे षोपदेशानां प्रयोगे सादित्वाद् जन्त्यपरत्वं हि लक्षणं, व्यापकेन च नाम लक्षणेन भवितव्यम् । ( प्रस्तीतः । प्रस्तीतवान्, प्रस्तीमवान् ) । "स्त्यः प्रपूर्वस्य" इति निष्ठायां संप्रसारणे परपूर्वत्वदीर्घत्वयो "प्रस्त्योऽन्यतरस्याम्" इति प्रोपसृष्टादस्मात्पराया निष्ठायास्तकारस्य पक्षे मकारः । मकाराभावे "संयोगादेः" इति निष्ठानत्वस्य "स्त्यः" इति संप्रसारणे पूर्वत्रासिद्धत्वात् कृते च तस्मिन् यण्वत्त्वाकारान्तत्वयोरभावादप्रसङ्गः । प्रस्त्य इति लघु वक्तव्ये "स्त्यः प्रपूर्वस्य" इति वचनं प्रशब्दो यस्माद्धातूपसर्गसमुदायात्पूर्वं इत्याश्रयणार्थम् । तेन ( प्रसंस्तीत ) इत्यादावन्योपसर्गव्यवधानेपि संप्रसारणं भवति । मत्वं तु "प्रस्त्यः" इति निर्देशाद्व्यवहिते न भवति । ( स्त्यानः, संस्त्यान ) इत्यादौ प्रस्त्याभावान्न संप्रसारणं, नापि मत्वं, संप्रसारणविधौ षोपदेशोप्यर्थं स्त्यायो गृह्यतइति वृत्त्यादौ, तेन तस्यापि निष्ठायामुक्तान्येवोदाहरणानि द्रष्टव्यानि । ये ऽस्य सत्वं नेच्छन्ति तेषां स्त्यारूमापन्नयोर्द्वयोर्ग्रह इति वृत्त्यादिमहाग्रन्थविरोधश्च । न च तस्य प्रकृतिवदनुकरणमिति स्त्यारूपत्वं यतस्तैः प्रकृतावेव सत्वं नाभ्युपगम्यते । स्त्यायति संहन्यते ऽस्यां गर्भ इति ( स्त्री ) । संस्त्याने "स्त्यायतेर्ड्रट्" इति । ड्रटि डित्त्वाट्टिलोपे वलि लोपे च टित्त्वान्ङीप् । अजादौ "स्त्रियाः" इतीयङि ( स्त्रियावित्यादि ) । अमूशसोस्तु "वाम्शसोः" इति इयङ्विकल्पनात् ( स्त्रीम् । स्त्रियम् । स्त्रियः । स्त्रीरिति ) प्रथमयोः पूर्वसवर्णदीर्घो भवति । "नेयङुवङ्" इत्यत्र अस्त्रीति निषेधादियङ्स्थानत्वेपि नदीत्वात् ( स्त्रियै स्त्रियामित्यत्र ) "आण् नद्याः" इति ङेराम् भवति । तथा ( स्त्रीणाम् ) इत्यत्र "ह्रस्वनद्यापो" इति नुड् भवति । ( हे स्त्रि ) इत्यत्र "अम्बार्थनद्योः" इति ह्रस्वो भवति । स्त्रियाः संबन्धि ( स्त्रैणम् ) । । *स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्* । आभ्यां यथासंख्यं प्राग्भवीयार्थेषु तत्तदर्थानुकूलसमर्थविभक्तिभ्यां नञ्स्नञाविति नञ् । ( स्त्रीत्वम् स्त्रैता ) । "आ च त्वात्" चकारेण त्वतलोरभ्यनुज्ञानात् त्वतलौ । स्त्रीवन्मा भूमेति भाष्यकारप्रयोगाद्वतिस्साधुः । "स्त्री पुंवच्च" इत्यादिनिर्देशस्य प्रयोगापेक्षत्वाद्वा । अत्र विषये बाधकान्येव निपातनानीति नञ्स्नञौ बाध्येते । यथा सर्वनामेत्यत्र णत्वम् । परस्त्रिया अपत्यं, ( पारशवम् ) । परस्त्री परशुं चेति शिवादिवाठादपत्ये परशुभावश्च । ( पारस्त्रैणेयम् ) "कल्याण्यादीनामिनङ्" इति ढकि ण्यादेशोन्त्यस्येनङ् । अनुशतिकादित्वादुभयपदवृद्धिः । कुस्त्रिया भावः कर्म वा ( कौस्त्रम् ) युवादित्वादण् । एवं ( दौस्त्रम् । स्त्रीतरा, स्त्रितरा ) "नद्याः शेषस्य" इति ह्रस्वो वा । सूत्रार्थश्च ज्वलत्यादौ द्रष्टव्यः(१) । ( स्तूपः । उच्छ्रायः ) "स्त्यः सम्प्रसारणमुच्च" इति पप्रत्ययः, प्रसारणपूर्वत्वे तस्य चकारस्य उकारो दीर्घः । उच्चेत्येव वक्तव्ये दीर्घविधानं ह्रस्वस्यापि श्रवणार्थं, तेन ( स्तुपः ) इत्यपि भवति ॥ ८९५ ॥

खै खदने ॥ खदनं स्थैर्यं हिंसा च ( खायति । चखौ । खातेत्यादि ) ॥ ८९६ ॥

क्षै जै षै क्षये ॥ ( क्षायति । चक्षौ । क्षातेत्यादि । क्षामः । क्षामवान् ) "क्षायो मः" इति निष्ठातो मः । णौ ( क्षपयति ) । अयं मिदिति घटादौ ध्वनतावुक्तम् । एवं ( जायति, जजौ, जाता । सायति । ससौ । साता ) "घुमास्था" इत्यत्र साग्रहणेन स्यतेर्ग्रहणं नास्येति आशीर्लिङि ईत्वाभावात् ( सायादिति भवति ) । अत एव ( सासायते

(१) व्याख्यात इति २ पु० ।

सायते ) इत्यादौ "घुमास्था" इति ईत्वं न भवति । तथा च तत्र न्यासे । गामादाग्रहणेष्वविशेषमुक्त्वा पो अन्तकर्मणीत्ययमेवोपात्तः । तथा च तन्त्रान्तरे । पास्यति जास्यति सास्यतीति स्पष्टं पो अन्तकर्मणीत्ययमेव निर्दिश्यते । "विभाषाघ्राधेट्शाच्छासः" इति सिचो लुग्विधावपि श्यन्विकरणाभ्यां साहचर्यात्स्यतिरेव गृह्यते इत्यस्मात्सिचि सति च असासीदित्येव भवति । ( सिषासति ) आदेशसकारत्वात्षत्वम् । ( साययति । असीषपत् ) "शाच्छासा०" इति युग्विधावपि श्यन्विकरणाभ्यां साहचर्यात् स्यतिरेव गृह्यते इति अस्य पुगेव भवति । के चिद्मुं दन्त्यादिं पठन्ति । तत् षोपदेशलक्षणविरोधादुपेक्ष्यम् ॥ ८९९ ॥

कै गै शब्दे ॥ इह शब्दः शब्दविशेषः । उक्तं ह्येवं स्वामिना । ( कायति । चकौ । काता । काकः ) "इण्नीक"इति कन् ( गायती । जगौ । गातेत्यादि ) "घुमास्था०" इत्यत्र गामादाग्रहणेष्वविशेष इति लाक्षणिकगारूपस्य गायतेरपि ग्रहणात् आशीर्लिङि एत्वं (गेयादिति ) भवति । "गातिस्था०" इत्यत्र गापोर्ग्रहणे इण्पिबत्योर्ग्रहणमिति वृत्तावनुक्तत्वात् अस्मात्सिचोलुगभावात् ( अगासीदिति ) भवति ( गाथकः । गायनः ) "गस्थकन्" इति "ण्युट् च" इति कर्त्तरि थकन् , ण्युटो णित्त्वात् "आतो युक्" इति युक् , टित्त्वात् स्त्रियां ( गायनी ) वासरूपेण ण्वुल्तृचौ, (गायकः, गातेति) भवति । (उद्गाता) । तस्य भावकर्म्मणी ( औद्गात्रम् ) । "उद्गात्रादिभ्योञ्" इति अञ् । साम गायतीति, ( सामगः ) । *गापोष्टक्* इति कर्मण्युपपदे टक् । टित्त्वात् स्त्रियां ( सामगी । गीत्वा । गीतम् ) "घुमास्था०"इति ईत्वम् । ( प्रगीतिः )। "स्थागापापचो भावे" इति स्त्रियां भावे क्तिन् । "स्त्रियां क्तिन्" इत्येव सिद्धे पुनर्वचनं "आतश्चोपसर्गे" इति स्थन् । ( अवगथः ) प्रातस्सवनं सोमो वा । "निशीथगोपोथावगथाः" इत्यवपूर्वादस्मात्थनि धातोर्ह्रस्वत्वं च निपात्यते । ( उद्गीथः ) "गश्चोदि" इति उदुपसृष्टात्क्थन् । "घुमास्था०" इतीत्वम् ॥ ९०१ ॥

श्रै श्रै पाके ॥ इह पाको विक्लित्तिः । तथा 'श्रतं पाक' इत्यत्र वृत्त्यादावुक्तम् ( शायति शशौ । शाता । श्रायति । शश्रौ, श्रातेत्यादि ) गायतिवत् । ( श्रपयतीति ) घटादित्वात्पाके मित्वम् । अन्यत्र ( श्रापयति ) स्वेदयतीत्यर्थः ( श्रतं क्षीरम् ) । "श्रतं पाके" इति क्ते श्रभावो निपात्यते । तत्र पाको विक्लित्तिः, तत्फलको व्यापारश्च । तत्र तत्फलके व्यापारे णिचमन्तरेण वृत्तेरभावात् श्रपेरप्ययं श्रभाव इति ( श्रतं क्षीरं देवदत्तेनेति भवति ) । तथा च तत्र वार्त्तिकं, 'श्राश्रप्योः श्रभावो निपात्यते'इति । यत्तु श्रपेर्णिचि श्रापिशब्दः, न तस्यायमादेशः, पाक इति वचनात्, अत्र पाचनार्थः पाकस्तु गुणीभूतः । अयं श्रभावो व्यवस्थितविभाषाविज्ञानात् क्षीरहविषोर्नित्यं भवति । अन्यत्र तु न भवति । ( श्राणा यवागूः । श्रपिता यवागूरिति ) "संयोगादेः" इति निष्ठानत्वम् । श्राणास्मै नियमेन दीयते ( श्राणिकः ) । *श्राणामांसौदनाट्टिठन्* इति नियमेन दीयमानोपाधिकार्थात्तद्स्मै दीयते चतुर्थ्यर्थे टिठन् । टित्त्वात् स्त्रियां ( श्राणिकी श्राता ) इत्यादादिकस्य, (श्रापयतीति) (चौरादिकस्य) ॥९०३॥

पै ओवै शोषणे ॥ (पायति । पपौ) "पाघ्रा"इत्यत्र नास्य ग्रहणम् । पारूपस्य लाक्षणिकत्वात् । एजन्तोपदेशसामर्थ्यादशिति पारूपस्य भेदाभावात् । ( पपौ । पाता । पास्यति । पायतु । अपायत् । पायेत् , आशिषि पायात् ) "घुमास्था" इतीत्वं तद्विशेष "एर्लिङि"इत्येत्वं चास्य न भवति, पारूपस्य लाक्षणिकत्वात् । अत एव "गातिस्था०"इति सिज्लुग्विधावपि अस्याग्रहणात् ( अपासीदिति ) भवति ( पिपासति । पापायते ) "ई हल्यघोः" इत्यभ्यस्ताश्रयमीत्वं ङित्सार्वधातुकविषयमितीह भवति ( पापाति । पापेति ) ईटि गुणः, (पापीतः) "ई हल्यघोः" इति ङित्सार्वधातुकपरत्वादीत्वम् । (पापति) । "श्नाभ्यस्तयोः" इत्यालोपः लङि ( अपापेत् । अपापात् , अपापीताम् ) इत्यादि । "सिजभ्यस्त" इति नित्यं जुस्भावे ( अपापुः ) "लङः शाकटयनस्यैव" इति विकल्पो नेति धयतावुक्तम् । आशिषि लिङि आर्द्धधातुकत्वात् "ई हल्यघोः" इतीत्वाभावात् ( पापायादिति भवति ) । "घुमास्था" इति

ईत्वमस्य नेति प्रागेवोक्तं, ( पाययति ) "शाच्छासाह्वाव्यावेपां युक्" इति णौ युगागमः। तत्र लाक्षणिकपारूपस्य ग्रहणमिति वृत्तिन्यासपदमञ्जर्यादिषु। ( पीत्वा पानं ) सरः। पा इति पानार्थ इहाग्रे। रक्षणार्थोऽदादौ ( वायति। ववौ ) इत्यादि, पायतिवत्। णौ ( वाययति शिरः ) आत्वे युक्। "वो विधूनने जुक्" इति अत्र 'वा गतिगन्धनयोः'इत्यदादिकस्यैव ग्रहणं तस्यैव विधूनने वृत्तिसम्भवादिति व्याख्यातारः। "शाच्छासा" इति युक्तु तत्रैव वा इति निर्देशात् 'वेञ् तन्तुसन्तान'इत्यग्रे पठिष्यमाणस्यैव, न त्वस्य प्रसजति (वानं) तु फलम्, ओदित्वान्नम् ॥ ९०५ ॥

ष्टै वेष्टने ॥ ( स्तायति। तस्तौ। स्ताता। स्तापयति। अतिष्टपत् ) इत्यादि। अयं च पाठो मैत्रेयस्य। भट्टभास्कारोऽप्यत्रवानुकूलः, यदाह"स्तायूनां पतये नमः"इत्यत्र स्तेना वस्त्रादीनपहरन्ति, ( स्तायवः ) 'ष्टै वेष्टने' इत्यस्माद्बाहुलकादुणिति। स्वाम्यादयस्तु ष्णै वेष्टन इति पठन्ति। तथा च निरुक्तम्–'उष्णीषं स्नायतेर्थाचरकः'। एवमुष्णीषं शिरोवेष्टनम्। स्नायतेः शोभार्थस्य उभयत्रापि सम्भवादिति। अत एव व्याख्यानात् ष्णै शोभन इत्यपि भूवादौ द्रष्टव्यः। प्रयुज्यते च भारते—

पाञ्चाल्याः पद्मपत्राक्ष्याः स्नायन्ति जघनं घनम्।
याः स्त्रियो दृष्टवन्त्यस्ताः पुम्भावं मनसा ययुः॥

इति। क्रियानिघण्टौ च स्तायति स्नायत्याप्लवत इति, दैवे च स्नातीति। शौचे स्नायेदिति चेच्छन्ति केचनेति ॥ ९०६ ॥

दैप् शोधने ॥ पकारो ऽदाबिति विशेषणार्थः। अयमेव लाक्षणिकानामपि घुसञ्ज्ञकानां ग्रहणे लिङ्गम्। दायतीत्यादि पायतिवत्। णिचि ( दापयति अदीदपत् ) दाण् दाने। 'देङ् रक्षणे' इतीहैवाग्रे। 'दाप् लवने' इत्यदादौ। 'डुदाञ् दाने' इति जुहोत्यादौ। दो 'अवखण्डने' 'दीङ् रक्षण' इति दिवादौ ॥ ९०७ ॥

पा पाने ॥ (पिबति) "पाघ्रा"इत्यादिना पिबादेशः 'पिबेर्गुणप्रतिषेधः' इति कात्यायनः। वर्द्धमानस्तु–"लोपः पिबतेः" इति लिङ्गाद्गुणो नेति। वृत्तौ तु अकारान्तोऽयमादेश आद्युदात्त इति, अतो लघूपधत्वाभावान्न गुणप्रसङ्गः ( पपौ। पाता। पास्यति। पिबतु। अपिबत्। पिबेत्। आशिषि पेयात् ) "एर्लिङि" इत्येत्वम्। ( अपात् )। "गातिस्था०" सिचो लुक्। ( पिपासति। पेपीयते ) "घुमास्था" इत्यादिनेत्वे द्वित्वम्। ( पापेति। पापाति। पापीतः )। "ई हल्यघोः" इतीत्वम्। ( पापति ) "श्नाभ्यस्तयोः" इत्याल्लोपः। पापितेत्यादाविटि "आतो लोप इटि च"इत्याल्लोपः। लङि "सिजभ्यस्त०"इति नित्यं जुसि (अपापुः)। "लङः शाकटायनस्यैव०" इति विकल्पो नेति धयतावुक्तम्। लिङि ( पापायात् )। अनार्धधातुकत्वात् "घुमास्था" इत्वं न भवति। आशिषि आर्द्धधातुकत्वादीत्वापवादः, "एर्लिङि" इत्येत्वम्, ( पापेयात् ), लुङि "गातिस्था"इति सिचो लुकि ( अपापात्। अपापुः ) "आतः" इति जुस्। ( पाययति। पाययते ) "न पादमि" इति निगरणे परस्मैपदनिषेधः। "शाच्छासा०" इत्यादिना युक्। णेश्चङि "लोपः पिबतेरीच्चाभ्यासस्य" इत्युपधाया आकारस्य लोपः। युक्ययमुपधा भवति। अल्लोपस्य णौ कृतं स्थानिवदिति स्थानिवत्त्वात् पायशब्दस्य द्विर्वचनमीच्चाभ्यासस्येतीकारे ( अपीप्यत् )। तत्र पिबतेरिति निर्देशाद् यङ्लुकि अपापदिति भवति। ( उत्पिबः )। "पाघ्राध्माधेट्दृशाच्छा सः" इति कर्तरि शप्रत्यये पिबादेशः। ( सुरापः। शीधुपः )। "गोपोष्टक्" इति कर्मण्युपपदे टक् टित्वात्स्त्रियां ( सुरापी ) अत्र पिबतेः सुराशीध्वोः इत्युपपदनियमादुपपदान्तरे "आतोऽनुपसर्गे कः" इति को भवतीति विशेषः। स्त्रियां ङीबभावः, ( क्षीरपा ब्राह्मणीति )। द्वाभ्यां पिबतीति ( द्वीपः )। "सुपि स्थः" इत्यत्र सुपीति योगविभागात्तत्र चात इत्यनुवर्त्तनादाकारान्तादस्मात्सुप्युपपदे कप्रत्ययः। एवं (कच्छपादयः)। प्रपिबन्त्यस्यामिति ( प्रपा )। "घञर्थे क-

विधानम्" इति कः । ( प्रपीतिः ) । "स्थागापापचो भावे" इति भावे क्तिन् । "स्त्रियां क्तिन्" इत्येव सिद्धे वचनम् "आतश्चोपसर्गे" इत्यङ्बाधनार्थम् । ( पीत्वा ) "घुमास्था" इतीत्वम् । ( प्रपाय ) । "न ल्यपि" इतीत्वनिषेधः । ( निपीयेति ) पीङो रूपम् । ( पीत्वा स्थिरकः ) । "मयूरव्यंसकादयश्च" इति तत्पुरुषः । "समासे नञ्पूर्वे" इति क्त्वो ल्यबादेशोऽत एव मयूरव्यंसकादिपाठान्न भवति । यद्वा अनञिति नञसदृशमव्ययं परिगृह्यते, तेन नञोऽन्येनाव्ययेन क्तान्तस्य समासेऽयं ल्यब्विधिरिति इह नैव प्रसजति । (पीतिः) । पीयतेऽनेनेति पानं, क्षीरस्य पानं (क्षीरपानं, क्षीरपाणमिति वा) "वा भावकरणयोः" इति पूर्वपदस्थान्निमित्तादुत्तरस्य भावकरणविषयपानन्नकारस्य णत्वविकल्पः, क्षीरं पानं येषां ते ( क्षीरपाणा उशीनराः ) इत्यत्र "पानं देशे" इति पूर्वपदस्थान्निमित्तादुत्तरस्य भावकरणविषयपानन्नकारस्य देशेऽभिधेये नित्यं णत्वम् । 'पयः पानं भुजङ्गानाम्' इत्यत्र कर्मणि च येन संस्पर्शात् कर्त्तुः शरीरसुखं येन कर्मणा संस्पृश्यमानस्य कर्त्तुः शरीरस्य सुखं भवति तस्मिन्कर्मण्युपपदे धातोर्भावे ल्युडिति ल्युट् । एवं चोपपदसमासः सिद्धः । "ल्युट् च" इति ल्युटि तु षष्ठीसमासस्य "कर्मणि च" इति निषेधः स्यात् । (समाना पीतिः । सपीतिः) विशेषणसमासः, "समानस्य छन्दसि" इति समानस्येति योगविभागात्समानस्य सभावः । कथं पीता गाव इति ? यतः-प्रत्ययसानार्थत्वात्कर्त्तरि निष्ठया न भाव्यम् । उच्यते-पानं पीतमेषामस्तीत्यर्शआद्यजन्तोऽयं द्रष्टव्यः । ( पायुः ) । "कृवापाजि" इत्युण् । ( सोमपीथः सोमपानम् ) । "पावातुदिवदिसिविभ्यः क्यन्" इति क्यन् । ( पेरुः । आदित्यः ) "वापोरुच्च" इति रुप्रत्ययः, इकारश्चान्तादेशः । तस्य च गुणः । ( पापम् ) "पानीयाभ्यः पः" इति पः । ( पाथः ) । "पातेरसुन्" इत्यसुन्प्रत्ययः थुगागमश्च । ( पयः ) "पिबतेरीच्च" इत्यसुनि इकारन्तादेशे गुणायादेशौ । पय इवाचरति । (पयायते पयस्यते) "कर्तुः क्यङ्" इति क्यङ् । "ओजसोऽप्सरसो नित्यं"पयसस्तु विभाषया' इति पक्षे सलोपः । "नः क्ये" इति नान्तस्यैव पदसंज्ञेति नियमात् "ससजुषोरुः" इति न भवति । पयसो विकारः ( पयस्यः ) । "गोपयसोर्यत्" इति यत् । ( पाकः । अर्भकः ) "इण्भीपाक०" इति कन् । ( पात्रन् ) । ष्ट्रन् । षित्त्वात् स्त्रियां ङीष् ( पात्री ) पञ्चानां पत्राणां समाहारः ( पञ्चपात्रम् ) "तद्धितार्थ" इति समाहारे द्विगुः, [ अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते ] इति ङीपि प्राप्ते [ "पात्रादिभ्यः प्रतिषेधः" ] इति निषिध्यते । "स नपुंसकम्" इति समाहारद्विगुद्वन्द्वनिबन्धनं नपुंसकत्वमेव भवति । पात्रस्य वापः क्षेत्रं (पात्रिकम् ) उप्यतेऽस्मिन्निति वापः । "पात्रात् ष्ट्रन्"इति षष्ठ्यन्ताद्वापेऽर्थे ष्ट्रन् । षित्त्वात् ङीपि ( पात्रिकी क्षेत्रभक्तिरीति ) पात्रं परिमाणविशेषः । पात्रं सम्भवति अवहरति पचति वा ( पात्रीणा स्थाली ) "आढकाचितपात्रात्खोऽन्यतरस्याम्" इति द्वितीयान्तात्संभवत्यादिष्वर्थेषु खः । खाभावे प्राग्वतीये ष्ठनि (पात्रिकी) । आधारप्रमाणादाधेयप्रमाणानतिरेकः संभवः । उपसंहरणमभ्यवहारः । विक्लेदनं पाकः । द्वे पात्रे सम्भवति अवहरति पचति वा (द्विपात्रिकी, द्विपात्रीणा) । "द्विगोष्ठंश्च"इति आढकाचितपात्रान्तात् द्विगोर्द्वितीयान्तात् सम्भवत्यादिष्वर्थेषु ठक् । चकारात् खश्च । अत्रान्यतरस्यांग्रहणानुवृत्तेः प्राग्वतीयष्ठन्नपि भवति । तस्य चार्हीयप्रत्ययत्वात् "अध्यर्द्धपूर्वा"इति लुकि "द्विगोः"इति ङीपि ( द्विपात्री ) स्थालीत्यपि भवति । ठन्खञोस्तु विधानसामर्थ्यान्न लुक् । पात्रमर्हति ( पात्रियः । पात्र्यः) "पत्राद् घंश्च"इति द्वितीयान्तादर्हतीत्यर्थे घयतौ । इह पात्रं भाजनं परिमाणं च । सर्वपात्रं व्याप्नोति (सर्वपात्रीणः सूपः) । "तत्सर्वादेः" इति खः (पात्रे समितः पात्रेबहुलः । "पात्रेसमितादयश्च"इदि क्षेपे सप्तमीतत्पुरुषः । अत्रैव पाठादलुक् । अत्रावधारणेन क्षेपः । पात्रण्व समितो न पुनः क्वचित्काय । ( अयस्पात्रम् ) "अतः कृकमिकंस"इत्यादिना अकारात्परस्य विसर्जनीयस्य पात्रे परतः सत्वम् । अत्र करोतिर्धातुः कमिश्च । अन्यानिप्रातिपदिकानि । लिङ्गविशिष्टपरिभाषया ( अयस्पात्री ) इत्यत्रापि भवति पायतीति शोषणे गतम् ॥९०८॥

घ्रा गन्धोपादाने ॥ ( जिघ्रति ) । "पाघ्रा" इत्यादिना जिघ्रादेशः शिति । ( जघ्रौ । जघ्रिथ । घ्रातेत्यादि ) आशीर्लिङि ( घ्रायात् । घ्रेयात्, ) "वान्यस्य" इति एत्वविकल्पः । लुङि ( अघ्रात् अघ्रासीत् ) "विभाषा घ्राधेट्" इति सिचो वा लुक् परस्मैपदे । आत्मनेपदे ( अघ्रायि, अघ्रासाताम् ) सुमनसौ इति नित्यं सिचः श्रवणमेव ( जिघ्रासति । जेघ्रीयते ) "ई घ्राध्मोः" इति यङीत्वम् । ( जाघ्रेति । जाघ्राति । जाघ्रीतः ) "ई हल्यघोः" इतीत्वम् । ( घ्रापयति । अजिघ्रपत् । अजिघ्रिपत् ) । "जिघ्रतेर्वा" इति चङ्परे णावुपधाया वेत्वम् । श्तिपा निर्देशात् यङ्लुकि ( अजाघ्रपदित्येव ) । आ जिघ्रतीति ( आजिघ्रः ) । "पाघ्रा" इत्यादिना उपसृष्टादस्माच्छे शपि जिघ्रादेशः, व्याजिघ्रतीति (व्याघ्रः) । "जिघ्रतेः संज्ञायाम्" इति कः । 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः' इति सुबुत्पत्तेः प्रागेव समासस्तेन स्त्रियां "जातेरस्त्रीविषयात्" इति अदन्तलक्षणो ङीष् भवति (व्याघ्री इति) । सुबन्तेन समासे पूर्वं स्त्रियां टापि अदन्तत्वाभावात् ङीष् न स्यात् । व्याघ्रस्य विकारश्चर्म ( वैयाघ्रम् ) । *प्राणिरजतादिभ्योऽञ्* इति प्राणिवाचिभ्यो रजतादिभ्यश्च षष्ठ्यन्तेभ्यो यथायोगं विकारावयवयोरर्थयोरञि "न य्वाभ्याम्" इति वृद्धिनिषेधे ऐजागमश्च । वैयाघ्रेण परिवृतो रथो ( वैयाघ्रः ) । *द्वैपवैयाघ्रादञ्" इति द्वैपवैयाघ्रशब्दाभ्यां परिवृतो रथ इति विषयेऽञ् । प्राग्दीव्यतीयस्याणोऽपवादः । ( घ्राणम् । घ्रातम्, ) "नुदविद०" इति निष्ठानत्वविकल्पः ॥ १०९ ॥

ध्मा शब्दाग्निसंयोगयोः ॥ इहाग्निसंयोगो मुखवायुना ऽग्निसंयोगः । ( धमति ) । "पाघ्रा" इत्यादिना धमादेशः शिति । ( दध्मौ, ध्मातेत्यादि ) लिङि ( धमेत् ) । आशिषि ( ध्मायात् । ध्मेयात् ) "वान्यस्य" इत्येत्वविकल्पः । ( दिध्मासति । देध्मीयते ) "ई घ्राध्मोः" इति यङीत्वे, दाध्मेति । "ई हल्यघोः" इतीत्वम् । ( दाध्मति ) "श्नाभ्यस्तयोः" इत्यालोपः । ( ध्मापयति । अदिध्मपत् । उद्धमः ) । "पाघ्राध्मा" इत्युपसृष्टाच्छे शपि धमादेशः । ( नासिकंधमः ) *नासिकास्तनयोः* इति नासिकायां कर्मण्युपपदे ऽस्मात् खश् ( नाडिंधमः ) *नाडीमुष्ट्योश्च* इति नाडीमुष्ट्योः कर्मणोरुपपदयोः खश्प्रत्ययः । तत्र मुष्टिशब्दस्यापूर्वनिपाताल्लक्षणव्यभिचारात् लिङ्गात् ध्माधेटोरुपपदयोश्च यथासंख्यं न भवति । पाणयो ध्मायन्ते येषु ( पाणिंधमाः पन्थानः ) । "उग्रंपश्येरंमदपाणिंधमाश्च" इति खशि निपात्यते । ( ध्मात्वा ध्मातम् ) ॥ ११० ॥

ष्ठा गतिनिवृत्तौ । ( तिष्ठति ) । "पाघ्रा" इति तिष्ठादेशः । ( तस्थौ । अधितष्ठौ ) । "स्थादिष्वभ्यासेन चाभ्यासस्य" इति षत्वम् । ( स्थाता । स्थास्यति । अधिष्ठाता । अधिष्ठास्यति ) । "उपसर्गात्" इत्यादिना षत्वम् । ( तिष्ठतु । तिष्ठेत् ) आशिषि (स्थेयात्) "एर्लिङि" इत्येत्वं "वा न्यस्य" इति विकल्पस्तु न भवति । अन्यस्येति घुमास्थादिपर्युदासात् ( अस्थात् ) "गातिस्था" इति सिचो लुक् । ( अध्यष्ठात् ) "प्राक् सितादड्व्यवायेऽपि" इति षत्वम् । ( तिष्ठासति । तेष्ठीयते ) "घुमास्था" इतीत्वे द्वित्वम् ( तास्थाति । तास्थीतः ) । "ईहल्यघोः" इतीत्वम् । ( तास्थति ) । "श्नाभ्यस्तयोः" इत्यालोपः ( स्थापयति । अतिष्ठिपत् ) *तिष्ठतेरित्* इति चङ्परे णौ उपधाया इत्वं श्तिपा निर्देशात् अतास्थपदित्यत्र न भवति ( संतिष्ठते । संतस्थे । संस्थाता । संस्थास्यते । संतिष्ठताम् । समतिष्ठत । संतिष्ठेत । संस्थासीष्ट ) । "समवप्रविभ्यस्थः" इति तङ् । (समस्थित, समस्थिषातामित्यादि) "स्थाघ्वोरिच" इति सिचः कित्त्वं तिष्ठतेश्चेकारः । "ह्रस्वादङ्गात्" इति सिज्लुक्, सन्निपातपरिभाषाया नेति धयतावुक्तं, सिचः कित्त्वात्प्रत्ययलक्षणेन गुणो न भवति । एवम् अवतिष्ठते प्रतिष्ठत इत्यादि नित्यं शब्दमातिष्ठते ) । प्रतिजानातीत्यर्थः । "आङः स्थः प्रतिज्ञाने"इति तङ् । अर्थस्वभावादयमाङ्पूर्वः । ( तिष्ठते कन्या छात्रेभ्यः ) । स्थानेन स्वाभिप्रायं प्रकाशयतीत्यर्थः, प्रकाशनमर्थो ऽनेकार्थत्वाद्धातूनामिति कश्चित् । "श्लाघह्नुङ्" इत्यत्र पदमञ्जर्यो

तु स्थानेन स्वाभिप्रायप्रकाशनमर्थ इत्युक्तम् । "श्लाघह्नुङ्" इति ज्ञीप्स्यमानस्य सम्प्रदानत्वम् । ( धर्माध्यक्षे तिष्ठते ) । तत्र निर्णयमपेक्षमाणस्तिष्ठतीत्यर्थः । *प्रकाशनस्थेयाख्ययोश्च* इति तङ् । प्रकाशनं स्वाभिप्रायाविष्करणं, स्थेयस्याख्या, स्थेयाख्या । तिष्ठत्यस्मिन्निति स्थेयः । रूढश्चायं विवादपदस्य निर्णेतरि, तिष्ठत्यस्मिन्निति स्थेय इत्यत्र प्रकरणादिना विवादपदनिर्णेतुः प्रतीतिः ।

ननु शब्दे नेत्यात्मनेपदाभावो हरदत्तेनोक्तः । कुटुम्ब उत्तिष्ठते तदर्थं घटत इत्यर्थः । "उदोनूर्द्ध्वकर्म्मणि" इति तङ् । ऊर्ध्वकर्मणि आसनात् (उत्तिष्ठति) अत्र उद् ईहायामित्युक्तत्वात् अनूर्द्धकर्मण ईहया विशेषणादस्माद्ग्रामाच्छतमुत्तिष्ठति इत्यत्र ईहाभावात्तङ् न भवति । उत्पद्यत इति ह्यत्रार्थः । ( ऐन्द्र्या गार्हपत्यमुपतिष्ठते ) । ऐन्द्रया ऋचा गार्हपत्यमभिधत्त इत्यर्थः । "उपान्मन्त्रकरणे" इति तङ् । मन्त्रः करणं यस्यार्थस्य मन्त्रकरणः । तदर्थादुपोपसृष्टात् स्थस्तङिति सूत्रार्थः । (आदित्यमुपतिष्ठते) पूजयतीत्यर्थः । ( गङ्गा यमुनामुपतिष्ठते ) । संश्लिष्यतीत्यर्थः । ( राजकीयानुपतिष्ठते ) मित्रीकरोतीत्यर्थः । ( अयम् पन्थाः स्रुघ्नमुपतिष्ठते ) । प्राप्नोतीत्यर्थः । [ उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वक्तव्यम् ] इति तङ् । 'आज्ञा प्रलिप्सुर्विनयादुपास्थुः" इत्यत्र भट्टिश्लोके देवपूजादिभ्योन्योऽर्थ इति तङ् न कृतः । ( अर्थी राजानमुपतिष्ठते । उपतिष्ठतीति वा ) । लिप्सुरुपसर्पतीत्यर्थः, उपोपसृष्टोऽयमार्थान्तरवृत्त्या सकर्मकः । "वा लिप्सायाम्" इति तङ् विकल्पः । (यावद्भुक्तमुपतिष्ठते) वीप्सायामव्ययीभावः । भोजने भोजने सन्निधत्तइत्यर्थः । "अकर्मकाच्च" इति उपोपसृष्टादस्मादकर्मकात्तङ् । तिष्ठतीति (स्थायी) । ग्रहादित्वाण्णिनिः । समे तिष्ठतीति ( समस्थः ) । "सुपिस्थ" इत्यत्र सुपीति योगं विभज्य आकारान्तानां कर्त्तरि कविधानात्कः प्रत्ययः । अत्र स्थ इति वचनं तिष्ठतेरप्याकारान्तत्वात्पूर्वेणैव कस्य सिद्धत्वात् अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति भावे कविधानार्थं, तेनाखूनामुत्थानम् ( आखुत्थम् । शलभोत्थम् ) इति भवति । "उदः स्थास्तम्भोः पूर्वस्य" इति सकारस्य पूर्वसवर्णस्तकारः । शं सुखं तत्र तिष्ठतीति ( शंस्थः ) । "स्थः कः च" इति कप्रत्ययः । चकारात् क्विपि ( संस्थाः ) । "घुमास्था" इति ईत्वं भाष्यकारप्रयोगान्न भवति । [ ईत्वमवकारादौ ] इति तु न स्थितम् ।

ननु "सुपि स्थः" इत्यत्र योगविभागात्कः सिद्धः, क्विविति क्विबपि वासरूपेण, तत्र किं "स्थः क च" इति सूत्रेण, उच्यते । "शमि धातोः संज्ञायाम्" इत्यत्र क्विविति धात्वधिकारादेव धातुग्रहणे सिद्धे पुनर्धातुग्रहणं बाधकबाधनार्थमित्युक्तम् । तेन यदा शङ्करा नाम परिव्राजिका तच्छीला चेत्यत्र "कृञो हेतुताच्छील्य०" इति टं बाधित्वाज्भवति, तथा कक्विपावपि बाधित्वान्नाप्यच् स्यात्, कं तु परत्वादपि बाधेतेति, तन्मा भूदित्यारब्धव्यमेव "स्थः क च" इति सूत्रम्, एवमपि किं क्विपो विधानेन, यतो वासरूपेणायमपि भविष्यति । न । अस्य विधाने यथा कः अचं बाधते तथा क्विपमपि बाधेत । ( स्थास्नुः ) । "ग्लाजिस्थश्च" इति तच्छीलादौ ग्स्नुः, "घुमास्था" इतीत्वं स्थाआ इत्याकारप्रश्लेषेणाकारान्तस्य विधानान्नेति भाष्ये स्थितम् ।

अन्ये तु गिदयं तेनेत्वस्य न प्रसङ्गः । ( जिष्णुः ) इत्यत्र गुणाभावस्तु "न धातुलोप आर्द्धधातुके" "क्ङिति च" इति संहितया सूत्रपाठात् कृतचर्त्वस्य गकारस्यापि तत्र निर्देशात् । तथा "श्र्युकः किति" इत्यत्रापि चर्त्वेन गकारस्यापि निर्देशात् ( भूष्णुः ) इत्यत्रेडभाव इत्याहुः । उक्तं च—

> स्नोर्गित्वान्न स्थ ईकारः किङ्क्तिोरीत्वशासनात् ।
> गुणभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं कगोरितोः ॥

इति । ( स्थायुकः ) । "लषपत" इत्यादिनोकञ् । ( स्थावरः ) "स्येश०" इति वरच् ।

प्रस्थास्यतइति प्रस्थायी। "प्रेस्थः"इति णिनिः। णित्वाद्युगागमः। गस्यादिषु पाठात् "भविष्यति गम्यादयः"इति भविष्यत्कालता ( स्थित्वा । स्थितम् ) । (उपस्थितो गुरुं शिष्यः । उपस्थितो गुरुः शिष्येण ) "गत्यर्था" इत्यादिना कर्तृकर्मणोः क्तः । उपपूर्वोऽयं सकर्मकः । "द्युतिस्यतिमास्थाम्" इति "द्युमास्था" इतीत्वापवाद ईकारः । ( प्रस्थाय ) इत्यत्र 'अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब् बाधते' इति पूर्वमीत्वं न प्रवर्त्तते । पश्चात्तु निमित्ताभावान्नास्य प्रसङ्गः । प्रतिष्ठतेऽस्मिन्निति (प्रस्थः) 'घञर्थे कविधानम्' इति कः। माहकिप्रस्थो नाम उदीच्यग्रामः, तत्र भवो (माहकिप्रस्थः) "प्रस्थोत्तरपदपलद्यादिकोपधादण्" इति प्रस्थोत्तरपलक्षणोऽण् शैषिकः । "उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्"इति अचोऽपवादः । अणचोः स्वरे विशेषः । इन्द्रप्रस्थे भवः ( ऐन्द्रप्रस्थः ) अनुदीच्यग्रामत्वात्प्राग्दीव्यतीयोऽण् । मालाप्रस्थे भवः ( मालाप्रस्थकः ) । "प्रस्थपुरवहान्ताच्च" इति प्रस्थाद्यन्ताद्देशवाचिनः शेषेऽर्थे वुञ् । छस्यापवादः । प्रतिष्ठत्यग्रे गच्छतीति (प्रष्ठः) "आतश्चोपसर्गे" इति कः । "प्रष्ठोऽग्रगामिनि" इति षत्वम् । अग्रगामिनोऽन्यत्र प्रस्थः । ( प्रस्थितिः ) । "स्थागापापचो भावे" इति क्तिन् । "आतश्चोपसर्गे" इत्यङोऽपवादः । "द्यतिस्यतिमास्थामिति कीति" इति इत्वम् । कथं तर्हि (आस्थेति) । "व्यवस्थायामसंज्ञायाम्"इति निर्देशात् ज्ञापकादुत्सर्गोऽपि भवति । आस्था शीलमस्य ( आस्थः ) । "छत्रादिभ्यो णः" इति शीलोपाधिकात्प्रथमान्ताच्छत्रादेरस्येत्यर्थे आस्थाशब्दादण् प्रत्ययः । यद्यपि छत्रादौ स्थाशब्दः पठ्यते, तथापि केवलस्याभावात् सोपसर्गादेव प्रत्ययः । छत्रादीनां तस्य कामँशब्दस्याणिनबन्धनप्रकृतिभावबाधनार्थात् "कार्मस्ताच्छील्ये" इति टिलोपनिपातनाल्लिङ्गात् छत्रादिभ्योणेऽण्कार्यं भवतीति ज्ञापनात् स्त्रियां ङीपि ( आस्थीति ) भवति । तिष्ठत्यस्मिन्निति ( स्थानीयम् ) बाहुलकादधिकरणेऽनीयः ( उपस्थानीयः ) इति "भव्यगेय०"इत्यादिना कर्तृकर्मणोः । भीरूणां स्थानं ( भीरुष्ठानम् ) । "भीरोः स्थानम्" इति समासे षत्वम्, असमासे तु "सात्पदाद्योः" इति निषेध एव भवति । प्राप्तिस्त्वस्त्येव "नुम्विसर्जनीयशर्व्यवायेऽपि" इति । गोः स्थाने जातः ( गोस्थानः ) । "स्थनान्त" इत्यादिनाणो लुक् । ( स्थिरम् ) अजिरशिशिरस्थिरेति किरचि निपातितः ( स्थेष्ठः । स्थेयान् ) "प्रियस्थिर०" इत्यादिना वा इष्ठेमेयस्सु स्थादेशे "प्रकृत्यैकाच्" इति प्रकृतिभावात् लोपाभावे "आद् गुण." । स्थिरशब्दस्य पृथ्वादिषु अपाठादिमनिच् नास्त्येवेति वृत्तौ स्थितम् । तेन स्थेमशब्दश्चिन्त्यः । स्थिरं करोति ( स्थापयति )। "णाविष्ठवत्"इति इष्ठवद्भावाण्णौ स्थादेशे वृद्धिपुकौ । (गविष्ठिरः। युधिष्ठिरः) । "गवियुधिभ्यां स्थिरः" इति षत्वम् । "हलदन्तात्सप्तम्याः" इति अलुक् । अम्बेव तिष्ठतीति अम्बष्ठः ) "सुपि स्थः" इति कः । उपपदसमासे वृत्तिस्वभावात् इवार्थोऽन्तर्भूतः।। न्यासे त्वम्बायां तिष्ठतीति उपा(१)पादि । "ङ्यापोः संज्ञाछन्दसोः" इति पूर्वपदस्य ह्रस्वः । *अम्बाम्बगोभूमि* इति अम्बादिभ्यः परस्य स्थः सकारस्य षत्वम् । एवमम्बष्ठादीन्युदाहार्याणि । तत्र रूढिषु यथाकथञ्चित् व्युत्पत्तिः, सर्वत्र "सुपि स्थः" इति कः । ( गोष्ठः ) इत्यत्र तु गावः तिष्ठन्त्यस्मिन्निति प्रथमान्ते गोशब्दे उपपदे घञर्थे क इत्यधिकरणे कः । भूतपूर्वम् गोष्ठम् ( गौष्ठीनं ) "गोष्ठात् खञ् भूतपूर्वे" इति भूतपूर्वत्वोपाधिकार्थात् गोष्ठात् स्वार्थे खञ् । ( गोष्ठीति ) गौरादित्वात् ङीषि । (सव्येष्ठः) इत्यत्र "हलदन्तात्" इत्यलुक् । एवं ( परमेष्ठदिविष्ठयोरपि) ।

यद्यत्रैव सविभक्तिकनिर्देशसामर्थ्यात् अलुक् । ( अपष्ठ ) इति वृत्तिमुपादाय अपाष्ठ इति क्वचित् पाठः । तत्र "अन्येषामपि दृश्यते" इति दीर्घ इति न्यासे उक्तम् । ( कुष्ठः ) इत्यत्र यदा कुशब्दो निपात स्तदा प्रथमान्तेऽस्मिन्नुपपदे विधिः । अथानिपातस्तदा

( १ ) व्युदपादीति २ पु० पा० ।

सप्तम्यन्त इति च न्यासे ( सव्येष्ठा । सव्येष्ठी । सव्येष्ठा सारथिः ) [ स्थास्थिन्स्थृणामिति वक्तव्यम् ] इति अत्र स्थशब्दे विवदन्ते । "सव्येस्थचछन्दसि" इति ऋन्नन्तस्य च "नयतेर्डिच्च" इत्यतः डिदित्यनुवर्तनाट्टिलोपे "ऋदुशन" इति अनङि सर्वनामस्थानदीर्घत्वमिति न्यासे । प्रदीपादौ तु स्थाशब्दः क्विबन्तः [ ईत्वे वकाराद्वौ प्रतिषेधः] इति घुमास्थादिनेत्वं न भवति । अनयोः क्विबन्तपक्षो न्याय्यः, ऋन्नन्तत्वे स्थाइत्येव स्थृशब्दस्यापि षत्वे सिद्धेस्तदुपादानमनर्थकं स्यात् । हर्म्येष्ठः रथेष्ठा इत्यादय प्रयोगा नोपपद्येरन् । तत्रेत्वे वकारप्रतिषेध इत्यस्य भाष्ये प्रत्याख्यानात् तत्रैव स्थेत्यस्य निर्देशात् ईत्वाभाव इति वाच्यम् । (परमेष्ठी) इत्यत्र "परमे स्थः किच्च"इतीन्प्रत्ययः कित्वादाकारलोपः । (सुष्ठु, दुष्ठु, अपष्ठु,) "अपदुःसुषु स्थः" इति कुप्रत्ययः । मृगय्वादित्वात् कुप्रत्यय इति न्यासकारवचनात् अयं योगरहितः प्रतीयते । "सुषामादिषु च"इति षत्वम् । "उपसर्गात्सुनोति"इत्येव सिद्धे सुषामादिष्वनयोः पाठोऽनुपसर्गार्थः, यदा सुशब्दः पूजार्थस्तदा "सुः पूजायाम्" इति कर्मप्रवचनीयत्वात् एकसंज्ञाधिकारात अनुपसर्गात् सूपसर्गप्रतिरूपकाच्च । ( सौष्ठवं, दौष्ठवं, ) युवादित्वात भावकर्मणोरण् । ( अपष्ठः ) अयमपि सुषामादिषु द्रष्टव्यः ( स्थाणुः ) स्थाणुरिति णुः ( स्थविरः ) अजिरशिशिरेत्यादिना किरचि अवादेशोऽन्त्यस्य निपात्यते, स्थविरस्य भावकर्मणी ( स्थाविरम् ) युवादित्वादण् । दधित्थः कपित्थः ) "सुपि स्थः" इति कः । पृषोदरादित्वात् सकारस्य तकारः । ( स्थाम् ) बलम् । मनिन् । अश्वस्येव स्थामस्य ( अश्वत्थामः ) अययपि पृषोदरादिः । अश्वत्थाम्नोऽपत्यम् , ( अश्वत्थामः ) "स्थाम्नोऽकारः" इति "दित्यदित्यादित्य०" इत्यत्र पाठादकारप्रत्ययः । अत्र केवलस्य स्थाम्नोऽपत्येन सम्बन्धाभावात्तदन्तविज्ञानम् । ( स्थलम् ) "स्थापति"इत्यादिना लः ( स्थाली ) गौरादिपाठात ॥ ९११ ॥

म्ना अभ्यासे ॥ ( मनति ) । "पाघ्रा" इत्यादिना मनादेशः शिति । अन्यत्र ग्लैवत् । मम्नावित्यादि । ( आम्नायः ) घञि युक् ( आम्नातः ) आम्नातमनेनाम्नाती व्याकरणे । "इष्टादिभ्यश्च" इति प्रथमान्तादनेनेत्यर्थे इनिः, सप्तमीविधाने [ क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ] इति कर्मणि सप्तमी । नीचभावमभ्यस्यतीति ( निम्नम् ) सुपीति योगविभागात् "आतोऽनुपसर्गे"इति वा कः । नेर्नीचभाववचनत्वेन मनत्यर्थस्याविशेषणान्न तं प्रतीहोपसर्गत्वं, दिने आम्नायत इति ( द्युम्नम् ) द्युशब्दो दिनवचनम् , दृश्यते च धारयेरत्र ( द्यून् ) सुतरामाम्नायत इति (सुम्नं) सुखम् । घञर्थे कः ॥ ९१२ ॥

दाण् दाने ॥ ( यच्छति ) "पाघ्रा" इति यच्छादेशः शिति । अत्रैव दाणिति विशेषणार्थो णकारः ( प्रणियच्छति ) घुत्वात् "नेर्गद०" इति णत्वम् ( ददौ । दाता । दास्यति । यच्छतु अयच्छत् । यच्छेत् ) आशिषि ( देयात् ) घुत्वात् "एर्लिङि"इति एकारः (अदात्) "गातिस्था" इति सिचो लुक् (प्रण्ययच्छत् । प्रण्यदात् )अड्व्यवायेऽपि नेर्गदादिषु णत्वमिति उक्तम् । ( दित्सति ) "सनि मीमा" इति इस्भावः । "अत्र लोपः" इत्यभ्यासस्य लोपः । "सस्यार्द्धधातुके" इति तत्वम् । ( देदीयते ) घुमास्था" इतीत्वे द्विर्वचनम् ( दादेति । दादाति । दात्तः ) "श्नाभ्यस्तयोः" इत्यालोपे चर्त्वम् । "पूर्वत्रासिद्धम्" इति वा चर्त्वम् । चर्त्वविधिं प्रतीति चालोपस्य न स्थानिवत्त्वम् । लोटि हौ "घ्वसोरेद्धौ" इत्यन्त्यस्यैकारे अभ्यासलोपे च देहि, ( दापयति । अदीदपत् ) ( दास्या मालां संप्रयच्छते ) कामुकः सन् तां तस्यै ददातीत्यर्थः । *दाणश्च सा चेच्चतुर्थ्यर्थे* इति संमुपसृष्टात्तृतीयायुक्तादस्मात्तङ् , सा चेत्तृतीया चतुर्थ्यर्थे, तृतीया "अशिष्टव्यवहारे" इति । पूर्वसूत्रे सम इति षष्ठ्यन्तमित्युक्तं तदेवात्रानुवर्तत इति प्रेण व्यवधानेऽपि तङ्भवति (दास्या मालां सम्प्रयच्छते सम्प्रादित) "स्थाघ्वोरिच्च" इति सिचः कित्वे इत्वं च, "ह्रस्वादङ्गात्" इति सिचो लोपो झलि । दाण इति सानुबन्धकनिर्देशाद्यङ्लुकि नायं तङ्विधिरिति । ( दास्या मालां सम्प्रददातीति भवति ) ।

( गां प्रयच्छतीति, गोप्रदः ) *प्रे दाज्ञः* इति कर्मण्युपपदे प्रोपसृष्टादस्माद्णोऽपवादः कः। ननु "आतश्चोपसर्गे" इति कप्रत्ययेन प्रदशब्दं कृत्वा गोशब्देन षष्ठीसमासे गोप्रद इति सिद्धं किं सूत्रेण ? उच्यते। गां प्रयच्छतीति विवक्षायामणि गोप्रदाय इति स्यात्। यथा प्रादन्ये-नोपसृष्टाद्गोसम्प्रदाय इति स मा भूदिति। (गोदः) "आतोऽनुपसर्गे" इति अनुपसृष्टत्वे कः।

'तं रत्नदायं जितमृत्युलोकं रात्रिचरः कान्तिसुतोऽभ्यतिष्ठत्'

इति भट्टिप्रयोगोऽयं दय दाणित्यपि द्रष्टव्यः।

यद्वा "श्याद्व्यध०" इत्याकारान्तलक्षणे णे दायशब्दं व्युत्पाद्य तेन रत्नस्य दायो रत्नदाय इति षष्ठीसमासे विधेयः। ( दारुः ) "दाधेट्सिशदसदो रुः" इति रुः। ( दानीयो ब्राह्मणः ) "कृत्यल्युटो बहुलम्" इति सम्प्रदानेऽनीयर्। उपदीयत इति (उपदा) "आतश्चोपसर्गे" इत्यङ्। ( देयम् ) "अचो यत्" इति यति "ईद्यति" इतीत्वे गुणः (दत्वा। दत्तः। दत्तवान् इति) *दो दद् घोः* इति तकारादौ किति दद्भावः। ( प्रत्तम् ) *अच उपसर्गात्तः* इति अजन्तादुपसर्गात्परस्य दा इत्यस्य योऽच् तस्य तकारादेशः। "खरि च" इति दकारस्य तकारः। अत्राच इति द्विरावर्त्तते, तत्रैकेनोपसर्गो विशेष्यते परेण स्थानिनिर्देश्यते इत्याकारस्य स्थानित्वलाभः। अन्यथा "आदेः परस्य" इति दकारस्यैव तकारः स्यात्। अन्ये तु "उपसर्गात्तः" इति द्वितकारकोऽयमादेशो निर्दिश्यत इति अनेकाल्त्वात्सर्वादेशं कुर्वन्ति, तेषाम् "अपो भिः" इत्यत्रैकस्तकारोनुवर्त्यः। अन्यथाद्भिरित्यादावपि सर्वादेशत्वं स्यात्। ( नीत्तम्। सूत्तम् ) *दस्ति* दा इत्यस्य यस्तकारस्तदादावुत्तरपदे इगन्तस्योपसर्गस्य दीर्घ इति दीर्घः। चर्त्वस्याश्रयासिद्धत्वात्तकारादित्वमुत्तरपदस्य। येषाम् *अच उपसर्गात्तः* इति द्वितकारक आदेशस्तेषामाश्रयात् सिद्धिरनपेक्ष्या।

'अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते'॥

इति वचनादवदत्तादौ तो न भवति। अत्रैव वार्त्तिके चकारावदत्तादीनामबाधः, तत्रादिकर्मणीत्यर्थात्प्रदत्तविशेषणम्।

अन्ये तु अवदत्तादाववादय उपसर्गप्रतिरूपका निपाता न तूपसर्गा इति तत्वस्य नास्ति प्रसङ्ग इति चाहुः। मरुद्भिर्दत्तो ( मरुत्तः ) [ मरुच्छब्दस्योपसंख्यानम्" इति उपसर्गसंज्ञाविधानसामर्थ्यादनजन्तत्वेऽपि तत्त्वं भवतीति व्याख्यातारः। ( प्रदाय ) "न ल्यपि" इति "घुमास्था" इतीत्त्वं निषिध्यते। ल्यपः पूर्वम् "अच उपसर्गात्तः" इति तो न भवति। "अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधत" इति। ( दानुः )। "दाभाभ्यां नुः" इति नुप्रत्ययः। ( देष्णुः )। दानशीलः। गादाभ्यां चेष्णुः। दायतीति शोधने गतम्॥ ९१३॥

ह्वृ कौटिल्ये॥ ( ह्वरति। जह्वार। जह्वरतुः। जह्वर्थ। जह्वरिव ) क्रादिनियमादिट्। थलि तु "अचस्तास्वत्" इति निषिध्यते। "ऋतश्च संयोगादेर्गुणः" इति गुणः। अयं वृद्ध्या पूर्वविप्रतिषेधेन स्वविषये बाध्यते ( ह्वर्त्ता। ह्वरिष्यति ) "ऋद्धनोः स्ये" इति इट्। ( ह्वरतु अह्वरत्। आशिषि ह्वर्यात्। ) *गुणोर्त्तिसंयोगाद्योः* इति अर्त्तेऋकारान्तस्य संयोगादेर्यकि यकारादावार्द्धधातुके लिङि च गुण इति गुणः। ( अह्वार्षीम्। यकि ह्वर्यते ( लिङीव गुणः। यदाशीर्लिङि यगात्मनेपदे च तदा "लिङ्सिचोरात्मनेपदे" इत्यधिकृत्य "ऋतश्च संयोगादेः" इति पक्षे इटि ( व्यतिह्वरिषीष्ट। व्यात्यह्वर्तेत्यादि )। "लिङ्सिचावात्मनेपदेषु" इति अधिकृत्य "उश्च" इति कित्त्वविधानात् न गुणः। झलि सिज्लोपः ( जुह्वूर्षति ) "अज्झनगमां सनि" इति दीर्घे "उदोष्ठ्यपूर्वस्य" इत्युत्वे रत्वे च "हलि च" इति दीर्घः। ( जाह्वर्यते ) "गुणोर्त्तिसंयोगाद्योः" इत्यधिकृत्य "यङि च" इति गुणः। ( जह्वर्त्ति। जह्वर्ते इत्यादि )। लोटि हेर्धित्वात्। ( जह्वर्हि )। उत्तमे। ( जह्वराणि )। लङि ( अजह्वः )। ( ह्वृतम् )॥ ९१४॥

स्वृ शब्दोपतापयोः ॥ ( स्वरति । सस्वार । सस्वरतुः । सस्वर्थ । सस्वरिथ । सस्वरिम ) "स्वरतिसूति" इति वलादाविड्विकल्पः । अत एव तासौ नित्यानिट्त्वाभावात् "अचस्तास्वत्" इति निषेधो न भवति । नापि "ऋतो भारद्वाजस्य" इति निषेधः । यतोऽयम् "अचस्तास्वत्" "उपदेशेऽत्वतः"इति निषेधावृकारान्तैकविषयाविति नियमादर्थादकारान्तेषु पाक्षिकत्वमात्रफलौ । "श्र्युकः किति" इति निषेधेन पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् परस्यापि स्वरत्यादिविकल्पस्यापि बाधः । तेन वमयोः क्रादिनियमेन नित्यमिडेव, न च मन्तव्यं "श्र्युकः किति" इति निषेधस्य बाधकं क्रादिनियमं स्वरत्यादिविकल्पः परत्वात् बाधेतेति, तस्मिंस्तु प्रसक्ते पुनर्बाधकस्य निषेधस्यापि प्रसङ्गात् । अस्ति च लिङ्गं पुरस्तादारभ्यमाणेनापि प्रतिषेधेन स्वरत्यादिविकल्पस्य बाध्यतेति। यदयं स्वरतेः "सनीवन्त०" इत्यादिना विकल्पं शास्ति, इदं च "सनि ग्रहगुहोश्च" इति उगन्तानां सन्यारभ्यमाणेन निषेधेन परस्यापि स्वरत्यादिविकल्पस्य बाधनेऽर्थवत् । येषां तु दर्शनं यावान् कश्चनेडभावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यत इति तेषामत्र थल्यपि नित्यमिटा भाव्यम् । (स्वर्ता । स्वरिष्यति) । "ऋद्धनोः स्ये" इति नित्यमिट् विप्रतिषेधेन (स्वरतु । अस्वरत् । आशिषि स्वर्यात् ) । "गुणोर्त्तिसंयोगाद्योः" इति गुणः । ( अस्वारीत् अस्वारिष्टाम् । अस्वार्षीत् अस्वार्ष्टाम् । सिस्वरिषति । सुस्वूर्षति ) । "सनीवन्त०" इत्यादिना इड्विकल्पः । इडभावे "अज्झनगमाम्" इति दीर्घे "उदोष्ठ्यपूर्वस्य" इति उत्वे रपरे "हलि च" इति दीर्घः । ( सास्वर्यते ) । "गुणोर्त्तिसंयोगाद्योः" "यङि च" इति गुणः । ( सस्वर्त्ति । सस्वृत ) इत्यादि । ( सस्वरिता ) इत्यादौ स्वरत्यादिविकल्पस्य न प्रसङ्गः । स्वरतीति तिपा निर्देशात् । ( स्वारयति । असिस्वरत् । संस्वरते ) । *समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिस्रुविदिभ्यः* इतिसमुपसृष्टादकर्मकादस्मात्तङ् ( संस्वरे । संस्वरिषे ) किति लिटि स्वरत्यादिविकल्पो नेत्युक्तम् । तेन क्रादिनियमान्नित्यमिट् । ( संस्वरिता । संस्वर्त्ता । संस्वरिष्यते ) । "ऋद्धनोः स्ये" इति नित्यमिट् । ( संस्वरताम् । संस्वरेत । आशिषि संस्वरिषीष्ट । संस्वृषीष्ट ) । लुङि ( समस्वरिष्ट । समस्वृत ) । इडभावे ( ह्वरतिवत् ) । "उश्च" इति कित्त्वादगुणत्वं तङ्विधौ स्वरतीति तिपा निर्देशात् ( सास्वरीति ) इत्यादौ न तङ् । ( स्वृत्वा स्वृतः ) "श्र्युकः किति" इति नित्यमिड् न । ( स्वरुः ) । यूपे छिद्यमाने प्रथमपतितशकलो वज्रश्च । "स्तृस्वृस्निहि" इत्यादिनोप्रत्ययः ॥ ९१५ ॥

स्मृ चिन्तायाम् ॥ ( मातुः स्मरति ) इत्यादि ह्वरतिवत् । "अधीगर्थ" इति कर्मणि शेषे षष्ठी ( सुस्मूर्षते ) "ज्ञाश्रुस्मृ" इति तङ् । स्मरयतीत्याध्याने घटादिपाठात्, अन्यत्र ( स्मारयति । असस्मरत् ) "अत्स्मृदृत्वर०" इत्यभ्यासस्याकार इत्वापवादः । अयमनेकार्थत्वात् विस्मरणे चित्तादपक्रमणे वर्त्तते । अनन्तरं दृवृ इति क्वचित्पठ्यते । ( द्वरतीत्यादि ) स्मरतिवत् । द्वर्यते संह्रियते इति ( द्वारम्, ) द्वारे नियुक्तो ( दौवारिकः ) । "तत्र नियुक्तः" इति ठकि "द्वारादीनां च" इति वृद्धिप्रतिबन्ध एजागमश्च । द्वारादिषु तदादिविज्ञानात् द्वारपालस्येदं, ( दौवारपालम् ) इत्यत्रापि वृद्धिप्रतिबन्ध एजागमश्च भवति । ( द्वाः ) इति ण्यन्तात् क्विपि ॥ ९१६ ॥

सृ गतौ ॥ ( सरति । ससार । सस्रतुः । सस्रुः । ससर्थ । सस्रुव ) । अजादावगृद्धिविषये यण् । क्रादिपाठादनिट्त्वम् । ( सर्त्ता । सरिष्यति ) । "ऋद्धनोः स्ये" इति इट् । ( असरत् । सरेत् । स्रियात् ) । "रिङ् शयग्लिङ्क्षु" इति रिङादेशः । ( असार्षीत् । असार्ष्टाम् ) "सर्त्तिशास्ति" इत्यङ्विधौ अविद्यमानशपा शासिना साहचर्यात् सर्त्यर्त्योरप्यविद्यमानशपोर्जुहोत्यादिक्रयोर्ग्रहणमिति नास्त्याङस्ति । ( सीसीर्षति ) । "अज्झन" इति दीर्घे "ऋतः" इतीत्वे रपरे "हलि च" इति दीर्घे द्विर्वचने सेस्रियते । "रिङ् शय०" इति रिङ् । ( सर्सर्त्ति । सर्सृतः ) इत्यादि । ( सारयति । असीसरत् ) । यदायं सरतिर्वेगितगमने वर्त्तते तदा पात्रा-

दीनां शित्प्रत्यये धावादेशो ( धावतीत्यादि )। उपसर्या गर्भग्रहणे प्राप्तकाला। "उपसर्या काल्या प्रजने" इति यति निपात्यते। प्रजनं गर्भग्रहणं तत्र प्राप्तकालेत्यर्थः। अन्यत्र ण्यति ( उपसार्या सूर्यः ) "राजसूयसूर्य" इति क्यपि उत्त्वं निपात्यते। सूवतेर्वा रुगागमे सूर्यशब्दात् प्रत्ययाः सुवतौ प्रदर्शयिष्यन्ते। ( साधु सरतीति सरकः ) "पृसृल्वः समभिहारे वुन्" इति समभिहारेणात्र साधुकारित्वमुच्यते। तथा च वार्त्तिकम्—[ साधुकारिणि वुन्विधानमिति ]। पुरः सरतीति (पुरः सरः)। "पुरोऽग्रतोऽग्रेषु सर्त्तेः" इति टः। (अग्रेसर इति) "तत्पुरुषे कृति" इति सप्तम्या अलुक्। अत्र न्यासे अग्रे इत्येकारान्तत्वं निपातनादित्युक्तम्। अग्रं सरति अग्रेण सरतीत्यादावपि एकारान्तत्वम्। एवं हि 'सवरुणावरुणाग्रसरो रुचा, 'आयोधनाग्रसरतां त्वयि वीर याते' इत्यादयः प्रयोगाश्चिन्त्याः स्युः। पूर्वः सरतीति ( पूर्वसरः )। *पूर्वे कर्त्तरि* इति कर्तृवाचिनि पूर्वशब्दउपपदे सर्त्तेष्टः। कर्तुरन्यत्राणेव। पूर्वदेशं सरतीति ( पूर्वसारः )। ( उदासारी, प्रत्यासारी )। [ 'उत्प्रतिभ्यामाङि सर्त्तेरुपसंख्यानम्' ] इति णिनिः। ( परिसारी ) "सम्पृच" इत्यादिना घिनुण्। सरणः। "जुचङ्क्रम्य" इत्यादिना युच्। ( सृमरः )। "सृघस्यदः क्मरच्" इति क्मरच्। ( सृत्वरः ) "इण्नशजिसर्त्तिभ्यः क्वरप्" इति क्वरप्। ( सृत्वरी ) "टिड्ढाणञ्"इति ङीप्। ( सस्रिः ) "भाषायां धाञ्कृसृगमिजनिभ्यः" इति किकिनोरन्यतरः। लिड्वद्भावाद् द्विर्वचनम्। ( सारः )। कालान्तरस्थायी। "सृ स्थिर०" इति कर्त्तरि घञ्। स्थिरादन्यत्र भावादौ घञि ( सारः )। अयमुत्कर्षे पुंल्लिङ्गः। न्यायादनपेते नपुंसकलिङ्गः। ( अतिसारो व्याधिः )। विसारो मत्स्यः। सारो बलं ) "व्याधिमत्स्यबलेषु" इति घञ्। अस्थिरार्थमिदं वचनम्। ( अतीसारः ) "उपसर्गस्य घञ्यमनुष्ये" इति दीर्घः। अतीसारोऽस्यास्तीति ( अतीसारकी ) "वातातीसाराभ्यां कुक्च" इति मत्वर्थे इनिः कुगागमश्च ( प्रसारः। आसारः ) भावे "अकर्त्तरि च कारके संज्ञायाम्" इति घञ्। 'रुद्धोरुदन्तमुसलप्रसरं निषेवे' इति माघे बाहुलकादप्। एवं ( निसर ) इत्यपीत्यात्रेयः। ( उपसरो ) गवांस्त्रीगवीषु पुंगवानां गर्भाधानाय प्रथममुपसरणमुच्यते। "प्रजने सर्त्तेः" इत्यप्। ( परिसरः। अपसरः ) *पुंसि संज्ञायाम्* इति करणाधिकरणयोर्घः। ( परितः सरणं परिसर्या ) "इच्छा" इत्यत्र [ 'परिचर्यापरिसर्यामृगया' ] इति भावे शे यकि गुणः। ( वैसारिणो मत्स्यः )। *विसारिणो मत्स्ये* इति विसारिन्शब्दान्मत्स्यवृत्तेः स्वार्थेऽण् प्रत्ययः। "इनण्यनपत्ये" इति प्रकृतिभावः। अस्मादेव विसारिण इति निर्देशादण्, तत्सन्नियोगेन णिनिः। ग्रहादित्वाण्णिनिरित्यात्रेयः। एवं हि पृथक्प्रयोगार्हः स्यात्। ग्रहादिषु न दृश्यते, प्रतिषिद्धश्च पदमञ्जर्यां पृथक्प्रयोगः। पृथक्प्रयोगमसहमानेनैव न्यासकारेणापि ग्रहादित्वाण्णिनिरित्युक्त्वा अत एव निपातनादित्युक्तम्। निपातनं च प्रत्ययसन्नियोगेनैव। ( सृणिका )। "सर्त्तेर्नुट् च" इति इकन् प्रत्ययः, नुडागमः। ( सार्थः )। "सर्त्तेर्णिच्च" इति थन्प्रत्ययः णित्त्वाद्वृद्धिः। ( सर्वः ) 'सर्वपृष्ठ' इत्यादिना वन्, अत्र वक्तव्यं तत् स्वर्तावुक्तम्। ( सरयूः ) "सर्त्तेरयूः" ( इत्ययूः। सरय्वां भवं, सारवम् ) "दाण्डिन" इत्यादिना अण्प्रत्यये युशब्दलोपो निपात्यते। ( सरणिः ) "अर्तिसृधृनृति" इत्यादिना अनिप्रत्ययः। ( सरित् ) "हृसृरुहि" इत्यादिनेतिप्रत्ययः। ( सृणिः )। "सृवृषिभ्यां किप् च" इति निप्रत्ययः। (सरः) असुन्। ( सरसी )। "वर्तमाने पृषद्बृहन्महत्जगत्सरसां शतृवच्च" इति शतृवद्भावात् ङीप्। ( सारङ्गः ) "सृवृङोर्वृद्धिश्च" इति अङ्गप्रत्यये वृद्धिः। ( अद्भ्यः सृते इति अप्सरा ) "अङ्गिराअप्सराः" इत्यसुनि निपात्यन्ते। उणादिवृत्तौ त्वप इति सौत्रो धातुः, अस्मात् सरसुन् प्रत्यय इत्युक्तम्। बहुष्वप्सरस इति बहुवचनं प्रायिकम्। तदुक्तम्। अप्सरःसुमनस्सिकतावर्षाणामिति बहुत्वं प्रायिकम्। अप्सराइव आचरति ( अप्सरायते )। "कर्त्तुः क्यङ् सलोपश्च" इति क्यङि सलोपश्चेति। तत्र विभाषाग्रहणे व्यवस्थितविभाषाश्रयत्वात् इह नित्यं सलोपः। उक्तं च"–ओजसोऽप्सरसो नित्यं, पयसस्तु विभाषया" इति। ( सारथिः )। "सर्तेर्णित्" इति

साथिनूप्रत्यये णित्वात् वृद्धिः ॥ ११७ ॥

ऋ गतिप्रापणयोः ॥ ( ऋच्छति ) । "पाघ्रा" इत्यादिना शिति ऋच्छादेशः । ( आर । आरतुः । आरिथ आरिव ) लिटीत्यधिकृत्य "ऋच्छत्यृताम्" इति गुणः । तत्र हि-ऋ इत्यपि सवर्णदीर्घेणार्त्तिरॄकारान्ताश्च निर्दिश्यन्ते । वृद्धिविषये पूर्वविप्रतिषेधेन वृद्धिः । तत्र गुणवृद्ध्योः "द्विर्वचनेचि" इति स्थानिवत्त्वात् ऋशब्दस्य द्विवचने अभ्यासस्योरदत्वे हलादिशेषे च "अत आदेः" इति दीर्घे पुनरुत्तरखण्डस्य गुणवृद्ध्योः सवर्णदीर्घः । वलादौ च क्रादिनियमादिट् , थलि तु "ऋतो भारद्वाजस्य" इति नियमं बाधित्वा "इडत्यर्तिव्ययतीनाम्" इति इट् । ( अर्ता । अरिष्यति ) । "ऋद्धनोः स्ये" इति इट् । ( ऋच्छतु । आर्च्छत् । ऋच्छेत् । आशिषि अर्यात् ) । "गुणोर्तिसंयोगाद्योः" इति गुणः । सर्वत्रार्तिग्रहणेषु भौवादिकजुहोत्यादिकयोर्द्वयोरपि ग्रहणमिति स्थितं व्याख्यानेषु, अत एवार्तीत्यविकरणनिर्देशः कृतः । भौवादिकग्रहणे ऋच्छतीति वक्तव्यं, जौहोत्यादिकस्य तु शपः श्लौ इयर्त्तीति । "अर्त्तिपिपर्त्योश्च" इति अत्र "श्लौ" इत्यधिकारात् भौवादिकस्य न सम्भवः । "सर्त्तिशास्त्यर्तिभ्यश्च" इत्यङ्विधावपि शासिना अविद्यमानशपा साहचर्यात् सर्त्यर्ती अप्यविद्यमानशपौ गृह्येते इति युक्तं, तेनास्य लुङि ( आर्षीत् । आर्षाम् ) इत्यादि भवति । ( अरिरिषति ) "स्मिपूङ्रञ्ज्वशां सनि" इति इट् । अत्र ऋ इति भौवादिकजौहोत्यादिकयोरपि ग्रहणम् "ऋच्छत्यृताम्" इतिवत् । अत्र द्विर्वचनात् पूर्वं गुणे रपरत्वे "अजादेर्द्वितीयस्य" इति रिशब्दस्य द्विर्वचनं, "द्विर्वचनेऽचि" इति नात्र स्थानिवत्त्वम् । "सन्यङोः" इत्यस्य षष्ठ्यन्तत्वात् । न च कार्यो निमित्तत्वेनाश्रीयते । अत्र हरदत्तः । यत्र सप्तम्या निमित्तं श्रुतं तन्निमित्तं न तु तद्भावितामात्रमिति । ( अरार्यते ) "सूचिसूत्रि" इत्यादिना यङि "यङि च" इति "गुणे नन्द्रा" इति निषेधस्य यकारपरेफस्य प्रतिषेध इति बाधात् रेफादेर्द्विर्वचने "दीर्घोऽकितः" इति दीर्घः । ( अरर्त्ति । अरियर्त्ति ) ऋशब्दस्य द्विर्वचने अभ्यासस्योरदत्वे हलादिशेषे "ऋतश्च" इति रुग्रीग्रिकः । उत्तरखण्डस्य गुणः । अत्र रीग्रिकोर्न रूपभेदः । उभयत्रापि "अभ्यासस्यासवर्णे" इतीयङ् भाव्यत्वात् । ईट्पक्षे ( अरर्तीति ) । तसादौ ङित्वादुत्तरखण्डस्य न गुण इति ( अर्ऋतः । अरियृतः ) इत्यादि । श्लौ, ऋशब्दस्य द्विर्वचने अभ्यासस्य कार्ये रुकि च 'अदभ्यस्तात' इति झेरद्भावे परखण्डस्य यणि "रोरि" इति रेफस्य लोपे "ढ्रलोपे" इति दीर्घे आरतीति भवति । "पूर्वत्रासिद्धे न स्थानिवत्" इति निषेधात् "रोरि" इति लोपे "अचः परस्मिन्" इति न यणः स्थानिवद्भावः । रिग्रीकोर्ऋकारमाश्रित्य इयङि पश्चादद्भावमाश्रित्य तस्य यणि अरियृति इति भवति । न च "लोपो व्योर्वलि" इति इति यलोपप्रसङ्गः । "अचः परस्मिन्" इति यणः स्थानिवत्त्वात् । न चास्ति यलोपं प्रति न स्थानिवदिति, [ स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ] इति वचनात् । ( अरर्षि । अरियर्षि । अरर्मि । अरियर्मि । अर्ऋवः । अर्ऋमः । अर्यृवः । अर्यृमः । अरारांचकार । अरियरांचकार । अररिता । अरियरिता अररिष्यति । अरियरिष्यति । अरर्तु । अरियर्तु । अर्ऋहि । अरियृहि ) ङित्वान्न गुणः । ( अरराव । अरियराव ) आटि पित्वात् गुणः । लङि अभ्यासस्य रुकि परस्य गुणे तिप्सिपोर्हल्ङ्यादिलोपे रेफस्य विसर्जनीये अङ्गस्याटि आढ्, रिग्रीकोरियङि ( आरियः आर्ऋताम् । आरियृताम् ) । बहुवचने "जुसि च" इति गुणे ( आररुः । आरियरुः ) । लिङि । अर्ऋयात् । अरियृयात् । आशिषि आरियात ) "रिङ् शयग्लिङ्क्षु" इति रिङादेशे "रो रि" इति लोपे ढ्रलोपदीर्घः । रिग्रीकोरियङि परस्य रिङादेशे तस्य स्थानिवत्त्वात् यलोपाभावे ( अरिय्रियात् ) । यलोपविधिं प्रति न स्थानिवदिति तु न भवति तस्य लोपाजादेशविषयत्वात् । "गुणोर्ति" इति गुणः श्तिपा निर्देशात् न भवति । लुङि ( आरारीत् । आरियारीत् ) इत्यादि । ( अर्पयति, ) "अर्त्तिह्री" इति पुक् । "पुगन्तलघूपधस्य" इति गुणः । ( मा भवानर्पिपत् ) । "उर्ऋत्" इति पक्षे ऋकारो गुणापवादः । णिलोपस्य "द्विर्वचनेऽचि" इति स्थानिवत्त्वात् पिशब्दस्य द्विर्वचनम् । ऋकाराभावपक्षे गुणे

"न न्द्राः" इति रेफस्य द्विर्वचननिषेधात् पिशब्दद्विर्वचने ( मा भवानर्पिपदिति भवति )। श्तिपा निर्देशाद्यङ्लुकि पुगभावात् ( अरारयतीति भवति । रिक्कीक्पक्षे अरियारयतीति । उपार्च्छेति )। "उपसर्गादृति धातौ" इति ऋवर्णान्तादुपसर्गात् ऋकारादौ धातौ परे पूर्वपरयोर्वृद्धिः। सा च ऋवर्णस्थानिका इति रपरत्वम् । अर्यः। "अर्यः स्वामिवैश्ययोः" इति यति निपात्यते। स्वामिवैश्याभ्यामन्यत्र "ऋहलोर्ण्यत्" इति ण्यत्। ( आर्यः ) स्त्रियाम् ( आर्या । अर्याणी )। "आर्यक्षत्रियाभ्यां वा" इति ङीषानुकौ । पक्षे विना पुंयोगं स्वार्थ एवायं विधिरिति वृत्तिः, तेन पुंयोगेन नित्यं ङीष् भवति । आरी । अरित्रम् )। "अर्त्तिलू" इति करणे इत्रः। ( आरा ) प्रतोदः। (आरा) शस्त्रिकायामिति भिदादिपाठात् अङ् वृद्धिश्च। ( अन्यत्रार्त्तिः )। "उपसर्गात्" इति वृद्धिः। ( ऋणम् )। "ऋणसाधमर्ण्ये" इति निष्ठानत्वं निपात्यते। अधमऋणे ( अधमर्णः ) अत एव निर्देशात् सप्तम्यन्तेन समासः। अधममृणमस्येति बहुव्रीहिर्वा, निष्ठान्तस्य परनिपातः। अत एव निर्देशात् ष्यञभावआधमर्ण्यम्। इदं च कालान्तरदेयविनिमयोपलक्षणार्थं, तेन ( उत्तमर्णः ) इत्यपि भवतीति वृत्तिः। "धारेरुत्तमर्णे" इति निपातनात् वा पूर्ववत् समासः। प्रगतं प्रवृद्धं वा ऋणं ( प्रार्णं ) "प्रादयो गताद्यर्थे प्रथमया" इति समासः। प्रगतं प्रवृद्धं वा ऋणं ( प्रार्णं ) "प्रादयो गताद्यर्थे प्रथमया" इति समासः। "प्रवत्सतरकम्बलवसनार्णदशानामृणे" इति वृद्धिः। ( ऋणार्णम् )। ऋणापाकरणार्थं यदुपादीयते तदुच्यते। षष्ठीसमासः। ( दशार्णो ) देशो नदी च। विशेषणसमासः। यथा कथञ्चित् व्युत्पाद्य ऋणदशभ्यां वृद्धिः। दशार्णमपहाय सर्वे बहुव्रीहयो वा, लिङ्गन्तु विशेषणायत्तं द्रष्टव्यम्। ( वत्सतरार्णं कम्बलार्णम् , ) आधमर्ण्यादन्यत्र ऋतः। ( सुखेन ऋतः सुखार्तः )। 'ऋते च तृतीयासमासे' इति वृद्धिः। अन्यत्र ( परमर्त्तः, आर्त्तः ) इत्यत्राङ्युपपदे "उपसर्गादृति" इति वृद्धिः। आत्रेयस्तु सौत्राद्धतिरितवि प्रज्ञाद्यणि व्युत्पादयति। अन्यथापि सिद्धे कोऽयं यत्न इति न जानीमः। ( अरुः )। अर्तीण्वपियजितनिधनितृपिभ्यो निदित्युसिप्रत्ययः। (अरूकरोति)। "अरुर्मनः" इति च्विप्रत्यये सलोपः। "च्वौ च" इति दीर्घः। (अर्शः)। अर्तेर्गुणः "शुड् च" इत्यसुनूप्रत्ययः शुडागमश्च, अर्शोऽस्यास्तीति ( अर्शसः )। "अर्शआदिभ्योऽच्" इति अच् मत्वर्थे। ( अररुः) असुरविशेषः। अर्त्तेररुरित्य रुः। (अर्भो बालः)। "अर्त्तिदृभ्यां भन्" इति भन्। ( अर्भकः )। स्वार्थे कन्। ( अर्थः )। "उषिकुषिगर्त्तिभ्यस्थन्" इति थन् ( ऊर्मिः )। "अर्त्तेरु च" इति मिन्प्रत्ययः उकारश्चान्तादेशः। ( अर्वा )। "स्नामदिपद्यर्त्तिपृशकिभ्यो वनिप्" इति वनिप्। ( अर्वन्तौ )। *अर्वणस्त्रसावनञः* इति असौ तृ इत्यादेशः, ऋदित्त्वात् "उगिदचाम्" इति नुम्। अर्वन्तीत्यत्र ङीब् भवति, अनञिति वचनात् अनर्वाणावित्यत्र नायमादेशः। ( निर्ऋथः साम )। अर्त्तेर्निरीङि निर्युपपदे थन् प्रत्ययः। अरणिः। 'अर्त्तिसृधसमि' इत्यादिना अनिप्रत्ययः। (अरुणः)। "अर्त्तेश्च" इति उनन्प्रत्ययः। ( ऋतुः )। "अर्त्तेश्च" इति तुन्प्रत्ययः। किदिति तत्रानुवृत्तेर्न गुणः। ऋतुः प्राप्तोऽस्य ( आर्त्तवं पुष्पम् )। "ऋतोरण्" इति "तदस्य प्राप्तम्" इत्यस्मिन् विषये अण् प्रत्ययः। ऋतुर्देवतास्य ( ऋतव्यम् )। "वाय्वृतुपित्रुषसो यत्" इति "सास्य देवता"इति विषये यत्, "ओर्गुणः" "वान्तो यि प्रत्यये" इत्यवादेशः। (अरं कपाटम्। "अर्त्तिकमि" इत्यादिना अरप्रत्ययः। ( इरिणम् उषरम्,) अर्त्तेः किदिनश्चेतीन् प्रत्ययः। किद्वचनान्न गुणः, धातोरिकारादेशश्च। अर्णः अर्तेर्नुडित्यसुन्प्रत्ययः नुडागमश्च। ( अर्णवः )। "अर्णसो लोपश्च" इति मत्वर्थीये वप्रत्यये सलोपः ॥ ९१८ ॥

गॄ घृ सेचने ॥ ( मस्ति । जगार । जगतुः । जगथ । जगिव । गर्त्ता । गरिष्यति । गरतु । अगरत् । गरेत् । आशिषि प्रियात् )। रिङ् । ( अगार्षीत् । जिगीर्षति ) "अज्झन०" इति दीर्घे ऋत इत्वे रपरे "हलि च" इति दीर्घः। ( जेगीयते )। "रिङ् ऋतः" इति रीङ्। ( जर्गर्त्ति । गारयति । अजीगरत् । गर्त्तः )। "हसिमृग्रिण्वमि" इति तन् ( घरति घृतं घृणा घर्मः )

इत्येव विषय इति "तृज्वत्क्रोष्टुः" इत्यत्रोक्तं भाष्ये । गॄ इति दीर्घान्तस्तुदादौ निगरणार्थः । क्र्यादौ शब्दार्थः । ज्ञानार्थश्चुरादौ । घृ क्षरणदीप्त्योरिति जुहोत्यादौ । घृ प्रस्रवण इति चुरादौ ॥ ९२० ॥

ध्वृ हूर्च्छने ॥ हूर्च्छनं कौटिल्यं भ्रातृव्यमेव तद्पध्वरतीत्यादौ हिंसायामपि दृश्यते । (ध्वरतीत्यादि) स्मृवत ॥ ९२१ ॥

स्रु गतौ ॥ (स्रवति । सुस्राव । सुस्रुवतुः) उवङादेशोऽगुणवृद्धिविषये । (सुस्रोथ । सुस्रुव) क्र्यादिषु पाठादनिट्त्वं थल्यपि पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यात् भारद्वाजनियमं बाधित्वाऽयमेव निषेधः प्रवर्त्तते । द्रवतावयमर्थः प्रपञ्चयिष्यते (स्रोता । स्रोष्यति । स्रवतु । अस्रवत् । स्रवेत्) आशिषि (स्रूयात्) "अकृत्सार्वधातुकयोः" इति दीर्घः । असुस्रुवत् । "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्" अत्र च लघूपधगुणादन्तरङ्गत्वादुवङ् । सुस्रूषति "इको झल्" इति सनः कित्वान्न गुणः । "अज्झन०" इति दीर्घः । (सोस्रूयते । सोस्रोति) "उतो वृद्धिर्लुकि हलि" इति न भवति 'नाभ्यस्तस्य' इत्यनुवृत्तेः (सोस्रुतः । सोस्रुवति । स्रावयति) "बुधयुध०" इत्यादिना नित्यं परस्मैपदम् । (असुस्रवत् । असिस्रवत्) "स्रवतिशृणोति" इत्यादिना अभ्यासस्येकारः । (आस्रावः संस्रावः) । "श्याद्व्यध०" इत्यादिना आस्र्वास्रुपसृष्टाद् अस्मात् णः । (प्रस्रावी) "प्रे लप" इत्यादिना घिनुण् । आत्रेयस्तु प्रे लपस्रु इति पाठं प्रतिपद्य सर्तेः प्रसारीत्युदाजहार । (प्रस्रावः) "प्रे द्रुस्तुस्रुवः" इति घञ् । स्रवत्यस्मात् घृतमिति स्रुक् । "स्रुवः कचकिचौ" इति कचकिचौ प्रत्ययौ, इकारककारावनुबन्धावेतौ भीमादित्वादपादाने । (स्रोतः) । "स्रुरीभ्यां तुट् च" इति असुन् तुडागमश्च । अत्र स्वामी तालव्यादिमसुं पपाठ श्रु श्रवणइति । एतत्तु दन्त्यादिरिति न्यासकारादयः । सर्वे विरुद्धमेव पठन्ति । श्रोत्रं श्रुतिः श्रवणमित्यादौ च लोकप्रसिद्धोऽर्थो न सङ्गच्छत इति यत्किञ्चिदेतत् । अत्र मैत्रेयः । सु इत्यरेफमपि धातुं पठित्वा सवतीत्युदाजहार । वोपदेवोऽपि अमुमेव पाठमाश्रित्याह । गतौ तयोश्च सवतिर्द्विरुक्त्यैकस्य सोऽन्यस्य प इति । अयमस्यार्थः । सु गतौ, षु प्रसवैश्वर्ययोश्चेति चकारेणैव गतवगतावपि सवतिः सिध्यति । सु गतौ षु प्रसवैश्वर्ययोरिति सवतेर्द्विः पाठो गत्यर्थस्याषोपदेशत्वार्थं इति । तत् षोपदेशलक्षणस्याव्यापकत्वप्रसङ्गात् अयुक्तमिति पुरुषकारेण दूषितम् ।

अपरे पुनः शु स्रु इति तालव्यादिमाद्यं पठन्ति । तद्युक्तम् । यदुणादौ 'शुवादीनां दीर्घश्च' इति शवतेः क्रनि शूरशब्दो व्युत्पाद्यते । तथा शाकटायनेनापि शु स्रु द्रु स्रु गताविति पठ्यते ॥ ९२२ ॥

षु प्रसवैश्वर्ययोः ॥ प्रसवोऽभ्यनुज्ञा इति पुरुषकारे । (सवति । सुषाव । सुषुवतुः । सुषोथ । सुषुविव । सुषुविम) क्रादिनियमादिट् । थलि तु भारद्वाजनियमाद्विकल्पः । गुणवृद्ध्योरविषये उवङ् । (सोता) इत्यादि पूर्ववत् "स्तुसुधूञ्भ्यः परस्मैपदेषु" इति सिचि । इड्विधौ स्तौतिना लुग्विकरणेन साहचर्यान्न सुतेर्ग्रहणं नाप्यलुग्विकरणेन धूञा परेण साहचर्यात् सवतिसुवत्योर्द्वयोरपि । किन्तु पूर्वपराभ्यां ङिद्भ्यां साहचर्यात् स्वादेर्ङितो ग्रहणमिति नास्येडागमः । अत एव तत्र न्यासे सु इति षु अभिषवे इत्युक्तं, तथात्रेयमैत्रेयावपि तमेव सेट्मुदाहरतां नेतरौ । न च निरनुबन्धकपरिभाषया इड्विधौ सवतेरेव ग्रहणं युक्तमिति वाच्यम् । यतस्तदपेक्षया साहचर्यस्यैव प्राबल्यं, तथा "सत्सूद्विष०" इत्यत्र वृत्तौ सु इति द्विषा साहचर्यात् सूतेरादादिकस्य ग्रहणमिति दर्शितम् । वर्द्धमानस्तु साहचर्यनिरनुबन्धकपरिभाषयोरनित्यतामाश्रित्य लुग्विकरणत्वात् सौतिमपहाय सुवतिसुनोत्योर्द्वयोरपि ग्रहणमिति द्वयोरपीटमाह । तन्मते असावीदिति भाष्यम् । अन्येषां त्वसौषीदिति । (सुसूषति) "स्तौतिण्योरेव०" इत्यषत्वं, (सोषूयते । सोषोति) "उतो वृद्धिः" "नाभ्यस्तस्य" इत्यनुवृत्तेर्न भवति । कर्मणि (सूयते । असावि) असोषातामित्यादि, कर्मकर्त्तरि "अचः कर्मकर्त्तरि" इति तशब्देऽपि पक्षे

सिचो विधानादसोष्टेत्यपि भवति। स्वादिषु कर्मकर्त्तरि चिण्वत्पक्षे साविष्यतइत्याद्यपि द्रष्टव्यम्। (सव्यम्) "अचो यत्" इति यति गुणे "वान्तो यि" इत्यवादेशः। "आसुयुवपि" इति ण्यद्विधौ सुनोतेर्ग्रहणमिति वृत्तिकारहरदत्तादयः। एवं "सुयजोर्ङ्वनिप्" इत्यत्रापि (सुत्वा। सुतम्) ॥ ९२३ ॥

श्रु श्रवणे (शृणोति। शृणुतः। शृण्वन्ति। शृणोषि। शृणोमि। शृणुवः शृण्वः। शृणुमः शृण्मः)। "श्रुवः शृ च" इति श्नुप्रत्ययः। शृभावश्च धातोः। श्नोः शित्त्वात् सार्वधातुकत्वात् अपित्त्वात् ङित्त्वाच्च गुणः प्रकृतेः। स्वस्य तु भवत्यक्ङिति (शृण्वन्ति) इत्यत्रान्तादेशे *हुश्नुवोः सार्वधातुके* इति यणादेश उवङोऽपवादः। सूत्रार्थस्तु जुहोतेः श्नुप्रत्ययान्तस्यानेकाचोऽङ्गस्यासंयोगपूर्वो य उकारः तस्याजादौ सार्वधातुके यणिति श्नोरुकारस्य च "लोपश्चास्यान्यतरस्यां म्वोः" इति पक्षे लोपः। (शुश्राव। शुश्रुवतुः। शुश्रोथ। शुश्रुव। शुश्रुम) पित्सु वृद्धिगुणयोरवावौ, अन्यत्राजादावुवङ्। क्रादिषु पाठात् स्रवतिवत् थल्यप्यनिट् (श्रोता। श्रोष्यति। शृणोतु। शृणु) "उतश्च प्रत्ययादसंयोगपूर्वात्" इति हेर्लुक् (शृणवानि) आटि गुणावौ, (अशृणोत्। अशृणुताम्। शृणुयात्। आशिषि श्रूयात्) "अकृत्सार्वधातुकयोर्दीर्घः"। अश्रौषीत्। शुश्रूषते) "ज्ञाश्रुस्मृदृशां सनः" इति तङ्। (प्रतिशुश्रूषति आशुश्रूषति) इत्यत्र "प्रत्याङ्भ्यां श्रुवः" इति सन्निमित्तस्य तङो निषेध इह प्रत्याङोरुपसर्गयोर्ग्रहणात् (देवदत्तं प्रतिशुश्रूषते। भाष्यादाशुश्रूषते) इत्यत्र तङेव भवति। अत्र हि-प्रत्याङौ कर्मप्रवचनीयौ *लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः* *आङ् मर्यादावचने* इत्येकसंज्ञाधिकारात् कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञा बाध्यते। लक्षणं चिह्नं कंचित् प्रकारं प्राप्त इत्थम्भूतस्तस्याख्यानमित्थम्भूताख्यानं, भागः स्वीक्रियमाणोंशः, उक्ता वीप्सा, विना तेनेति मर्यादा, सह तेनेत्यभिविधिः, वचनग्रहणादभिविधिरपि गृह्यते। तत्र प्रतिशुश्रूषतइत्यस्य देवदत्तः शुश्रूषया लक्षणमित्यर्थः, देवदत्तसकाशात् शुश्रूषत इति यावत्, भाष्यादाशुश्रूषत इत्यस्य विना भाष्येण सह वा तेन शुश्रूषत इत्यर्थः। (शोश्रूयते। शोश्रवीति। शोश्रोति) "उतो वृद्धिः" "नाभ्यस्तस्य" इत्यनुवर्त्तनात् नेत्युक्तं, (श्रावयति। अशुश्रवत्। अशिश्रवत्) णौ कृतस्य स्थानिवत्त्वात् श्रुशब्दस्य द्विर्वचनं "स्रवतिशृणोति" इति पक्षे अभ्यासस्येत्वं, (संशृणुते। संशृण्वाते। संशृण्वते। संशृण्वे। संशृणुवहे। संशृण्वहे। संशुश्रुवे। संश्रोता। संश्रोष्यते। संशृणुताम्। समशृणुत। संशृण्वीत। आशिषि। संश्रोषीष्ट। समश्रोष्ट) झलि सिज्लोपस्य पूर्वत्रासिद्धत्वात् गुणे ह्रस्वाभावाच्च सिज्लोपप्रसङ्गः। कर्मकर्तरि स्रवतिवत् (शुश्रुवान्) "भाषायां सदवसश्रुवः" इति लिट् क्वसुः। अयं च लिट् लुङ्विषयः पाक्षिकः। क्वस्वादेशश्च नित्यः। तेनानेन लिटा मुक्ते यथायोगं लुङ्लङ्लिटो भवन्तीति। सर्वं चैतत् सीदतावुपपादितम्। भसंज्ञायां सम्प्रसारणं सवर्णदीर्घं बाधित्वा धातुवर्णत्वादुवङि (शुश्रुवुष इत्यादि) पदत्वे "वसुस्रंसु" इत्यादिना दत्वे शुश्रुवद्भ्यामित्यादि (देवदत्ताय गां प्रतिशृणोत्याशृणोति वा) याचितः सन् तस्मै ददामीति प्रतिजानीत इत्यर्थः। *प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्त्ता* प्रत्याङ्भ्यामुपसृष्टस्य शृणोतेः प्रयोगे प्रतिशृणोति आशृणोति क्रियापेक्षया पूर्वस्याः क्रियायाः कर्त्ता सम्प्रदानमिति देवदत्तस्य सम्प्रदानत्वाच्चतुर्थी। प्रत्याङ्भ्यामुपसृष्टः शृणोतिः प्रतिश्रवणार्थ इति अर्थात् पूर्वा क्रियेह याचनं, (निश्रावी) रक्षश्रुवपशां नाविति ग्रहादिपाठाण्णिनिः। (विश्रावः) "वौ क्षुश्रुवः" इति घञ् श्रूयतेऽनया इति (श्रुतिः)। "श्रुयजिस्तुभ्यः करणे" इति क्तिन् स्त्रियां, ल्युटोऽपवादः। अस्त्रियां श्रूयते अनेनेति (श्रवणं श्रोत्रं) यदा नक्षत्रवचनस्तदा श्रवणेन युक्ता रात्रिरिति विगृह्य "नक्षत्रेण युक्तः कालः" इति विहितस्याणः "संज्ञायां श्रवणाश्वत्थाभ्याम्" इति लुपि (श्रवणा रात्रिरिति) भवति। अत्र "लुपि युक्तवद्व्यक्तिवचने" इति प्रकृत्यर्थलिङ्गं न भवति, *विभाषा फाल्गुनीश्रवणा* इति निर्देशात्। लुबिति लुप्संज्ञया लुप्तप्रत्ययाथ उच्यते। तत्र युक्तवद्व्यक्तिवचने भवत इति सूत्रार्थः।

युक्तः प्रकृत्यर्थः प्रत्ययार्थेन सम्बद्ध इति कृत्वा, व्यक्तिर्लिङ्गं, वचनमेकत्वादि। यदा श्रवणाशब्दः पौर्णमासीवचनस्तदा श्रवणा पौर्णमासी अस्मिन्निति विगृह्य "विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्यः" इति अण्लुकोः कृतयोः ( श्रावणः श्रावणिकः) इति भवति। ( श्रवः ) असुन्, विश्रवसोऽपत्यं ( वैश्रवणः ) रावणश्च। शिवादिषु विश्रवणं चेति पाठात् अपत्येऽणि तत्सन्नियोगेन विश्रवणरवणावादेशौ। श्रोत्रम् ) ष्ट्रन्निति ष्ट्रन्। ( श्रोणिः ) "वहिश्रुश्रियुद्रुग्लाहात्वरिभ्यो नित्" इति नित् प्रत्ययः॥ ९२४॥

ध्रु स्थैर्ये॥ ध्रवति। दुध्राव। दुध्रुवतुः। दुध्रोथ। दुध्रविथ ) क्रादिनियमादिट्, थलि भारद्वाजनियमादिड्विकल्पः। शेषं श्रवतिवत्। ध्रुव इति बाहुलकात्कः, यद्वा "ध्रुवमपाये" इति निर्देशात् साधुः, अयं तुदादौ गत्यर्थश्च। तस्मात् वा अचि (ध्रुवः) स हि कुटादिः॥९२५॥

दु द्रु गतौ ( दवति। दुदाव। दुदुवतुः। दुदोथ। दुदविथ। दुदुविव। दोता ) इत्यादि पूर्ववत्, लिटि क्रादिनियमादिट्, थलि भारद्वाजनियमादिड्विकल्पः। ( दवः ) पचाद्यच्। "दुन्योरनुपसर्गे" इति णविधौ दुनोतिरेव वृत्तौ गृहीतः। पदमञ्जर्यां नयतिना साहचर्यात् सानुबन्धकस्य दुनोतेरिह ग्रहणमिति। ( संदावः ) "समि युद्रुदुवः" इति घञ्। ( दूनः ) "ल्वादिभ्यः" इत्यत्र "दुग्वोर्दीर्घश्च" इति वचनान्निष्ठानत्वं दीर्घत्वं च ( दूतः ) "दुतनिभ्यां दीर्घश्च" इति तन् दीर्घश्च। दूतस्य भावकर्मणी ( दूत्यम् ) "दूतवणिग्भ्यां चेष्यत" इति यः। द्रुञ् उपताप इति स्वादौ (द्रवति। दुद्राव। दुद्रुवतुः। दुद्रोथ। दुद्रुव) क्रादिपाठादनिट्त्वम्। ननु "स्नुद्रुस्तुश्रुवां" निषेधस्य थलोऽन्यत्र चरितार्थत्वात् थलि भारद्वाजनियमाद्विकल्पः स्यात्। न चैवं शक्यते वक्तुं स्वादिव्यतिरिक्तानां ग्रहणं नियमार्थमिति, स्वादीनां तु भारद्वाजनियमप्राप्तस्यैवेटो निषेधार्थमिति। एवं हि क्रादिनियमात् थलोऽन्यत्र नित्यमिट् स्यात्। एवं तर्हि स्वादीनां ग्रहणं यः क्रादिनियमात् इट् प्राप्तो यश्चापि भारद्वाजनियमात् तयोर्द्वयोर्निषेधार्थं भविष्यति। न च मन्तव्यं येन नाप्राप्तिन्यायेन क्रादिनियमप्राप्तस्यैवेटो निषेधो युक्त इति। पुरस्तात् प्रतिषेधकाण्डारम्भादुभयोर्निषेध इति वृत्तावुक्तत्वात्। अथ वा सर्वेषां नियमार्थत्वेऽपि न दोषः। अनेन नियमेन यः क्रादिव्यतिरिक्तानां नित्यमिट् प्राप्तः सः "अचस्तास्वत्" इति निषिध्यते। यत्र चायं निषेधस्तत्रैव भारद्वाजनियम इत्यर्थादस्य नियमस्य क्राद्यष्टकव्यतिरिक्तविषयत्वलाभात् ( द्रोता। द्रोष्यति ) इत्यादि पूर्ववत्। लुङि "णिश्रिद्रुस्रुभ्यः" इति चङि (अदुद्रुवत्)। लघूपधगुणादन्तरङ्गत्वादुत्वादुवङित्युक्तं, ( दुद्रूषति। दोद्रूयते। दोद्रोति। द्रावयति। अदुद्रवत्। अदिद्रवत् ) "श्रवतिश्रृणोतिद्रवति" इत्यभ्यासस्येत्वम्। "बुधयुध" इत्यादिना नित्यं परस्मैपदम्। ( सन्द्रावः ) "समि युद्रुदुवः" इति घञ्। ( उद्द्रावः ) "उदि श्रयति" इत्यादिना घञ्। ( प्रद्रावः ) "प्रे द्रुस्तुस्रुवः" इति घञ् (हरिद्रुः। मितद्रुः। शतद्रुः) [ द्रुप्रकरणे मितद्र्वादिभ्य उपसंख्यानम् ] इति डुः। हरिद्रुणा प्रोक्तं छन्दोऽधीते ( हारिद्रविणः )। "कलापिवैशम्पायनान्तेवासिभ्यश्च" इति प्रोक्तार्थे णिनिः। तदन्तात् "छन्दोब्राह्मणानि" इति नियमादध्येतृवेदितृप्रत्ययान्तमेवेत्युक्तं, तस्याणः "प्रोक्ताल्लुक्" इति लुक्। कलाप्यन्तेवासिनश्च।

> हरिद्रुरेषां प्रथमस्ततश्छगलितुम्बुरू।
> उलपेन चतुर्थेन कालापकमिहोच्यते॥

इत्युक्ताः। ( द्रविणम् ) "द्रुदक्षिभ्यामिनन्" इति इनन्। ( द्रोणः ) परिमाणादिः। "द्रुञ्रुसिपण्यनि" इति नप्रत्ययः। स्त्रियां गौरादिपाठात् ( द्रोणी। द्रोणस्य गोत्रापत्यं द्रौणायनः। द्रौणिः ) "द्रोणपर्वतजीवन्तादन्यतरस्याम्" इति फक्। तदभावे "अत इञ्" ( द्रोणं पचतीति द्रौणः, द्रौणिकः )। "तत् पचतीति द्रोणादण् च" इति अण्ठकौ ( द्विद्रोणेन धान्यं क्रीणाति )। तृतीयाविधाने [ प्रकृत्यादिभ्य उपसंख्यानम् ] इति तृतीया॥ ९२६॥

जि ज्रि अभिभवे॥ अभिभवो न्यूनीकरणम्। ( जयति। जिगाय ) इत्यादि तिङन्ते

जि जयइतिवत्। पुनः पाठे फलं तत्रवोक्तम्। (अध्ययनात्पराजयते) पराजिरत्र न्यूनीभावे वर्त्तते। अत्रायमकर्मकः। अध्येतुं ग्लायतीत्यर्थः। अत्र पष्ठ्यां प्राप्तायां *पराजेरसोढः* इति अध्ययनस्यापादानत्वात् पञ्चमी, परापूर्वस्य जयतेः प्रयोगे असोढः सोढुमशक्यो योऽर्थस्तत्कारकमपादानमिति सूत्रार्थः। (धनञ्जयः) "संज्ञायां भृतॄवृजि"इति खचि मुमागमः पूर्वपदस्य। (शत्रुजित्। प्रजित्) "सत्सूद्विष" इत्यादिनोपसर्गेऽप्यनुपसर्गेऽपि सुबन्ते उपपदे क्विप् (जिष्णुः) "ग्लाजिस्थश्चग्स्नुः" इति ग्स्नुः (जयी) "जिदृक्षि" इति इनिप्रत्ययः (जित्वरः) "इण्नशजि" इति क्वरप्। त्रयोऽपि ताच्छीलिकाः (जैत्रम्) बाहुलकात् त्रण् प्रत्ययः। (ज्रयति जिज्राय। जिज्रियतुः। जिज्रयिथ। जिज्रेथ। जिज्रियिव। ज्रेता। ज्रेष्यति ज्रयतु। अज्रयत्। ज्रयेत्। आशिषि ज्रीयात्। अज्रैषीत्। जिज्रीषति) "इको झल्" इति सनः कित्वान्न गुणः। "अज्झनगमां सनि" इति दीर्घः (जेज्रीयते। ज्राययति। अजिज्रयत्) जु इति सौत्रो धातुः। (जवतीत्यादि) अयं गत्यर्थः। वेगवचन इत्यपरे। जवनम्। "जुचङ्क्रम्य" इत्यादिना युच्। (प्रजवशीलः, प्रजवी) "प्रजोरिनिः" इतीनिप्रत्ययः (जूः) "भ्राजभास" इत्यादिना क्विप्। तत्रैव जू इतिपाठात् क्विप्सन्नियोगेन दीर्घः (जवः। अप्। जूतिः) "ऊतियूतिजूति" इति निपातनात् क्तिनि दीर्घः। धयत्यादयोऽनुदात्ता उदात्तेतः। श्रयतिस्तूदात्तः। तथा जित उभयपदिनः॥ ९२८॥

ष्मिङ् ईषद्धसने॥ एतदादयः स्वरन्त्यन्ता अनुदात्ता आत्मनेपदिनः (स्मयते। सिष्मिये। सिष्मियिढ्वे। सिष्मियिध्वे। सिष्मिये। सिष्मियिवहे) "अचि श्नुधातु" इत्यादिना इयङ् (स्मेता। स्मेष्यते। स्मयताम्। अस्मयत। स्मयेत। स्मेषीष्ट। अस्मेष्ट। सिस्मयिषते) "स्तौतिण्योरेव" इत्यषत्वम्। "स्मिपूङ्रञ्ज्वशां सनि" इतीट्, (सेष्मीयते। सेष्मेति) (मुण्डो विस्मापयते। असिष्मपत) "नित्यं स्मयतेः" इति हेत्वेककारके स्मयत्यर्थे आत्वं, तत्र पुक्, "भीस्म्योर्हेतुभये" इति हेत्वेककारयोर्नित्यं तङ्। अत्र भयग्रहणं चित्तविकारोपलक्षणं, तेन बिभेतेर्हेतुभये स्मयतेर्हेतुस्मय इत्यर्थो भवति। यदा तु हेतुत एव स्मयो न भवति तदात्वं न, नापि तङ्नियम इति (मुण्डो रूपेण विस्माययतीति भवति)। (स्मेरं) मुखम्। "नमिकम्पि" इति रः। स्मित्वा। स्मितम्) अयमनादरे चुरादिः॥ ९२९॥

गुङ् अव्यक्ते शब्दे (गवते। जुगुवे। जुगुविषे। जुगुविवहे। गोता। गोष्यते। आशिषि गोषीष्ट। अगोष्ट। अगोष्यत। जुगूषते) "अज्झन" इति दीर्घः (जोगूयते) "अकृत्सार्वधातुकयोर्दीर्घः" (जोगोति। गावयति। अजूगवत्) णौ कृतस्य स्थानिवत्त्वाद् गुशब्दस्य द्विर्वचनं, (गुत्वा। गुतः) "दुग्वोर्दीर्घश्च" इति अत्र निरनुबन्धस्य तौदादिकस्य गु पुरीषोत्सर्गइत्यस्य ग्रहणमिति नात्र निष्ठानत्वदीर्घत्वे भवतः। (गोत्रम्) "गुपचि" इत्यादिना त्रप्रत्ययः। (ब्राह्मणिगोत्रा)। "कुत्सितानि कुत्सनैः" इति समासः। वृत्तिविषये गोत्रशब्दः कुत्सनवचन इति चेलतावुक्तम्। "घरूप" इत्यादिना पूर्वपदस्य ह्रस्वः। (गवाक्षः) क्रमुकवचनः, पिनाकादिपाठादाकप्रत्ययः। (गवलं) माहिषं शृङ्गम्। बाहुलकादलप्रत्ययः। अनन्तरं धृञ् धारण इति पठ्यते। वर्धमानोऽमुं न सहते। यदाह केचित् धृञ् धारणइति पठन्ति। सोनार्पः (धरति। धरते) इति प्रयोगदर्शनात् तत्साहसमात्रमुपादीयते च "अनुपसर्गात् लिम्प" इत्यत्र न्यासपदमञ्जर्योर्धृञ् धारणइति। दैवेऽवधारणार्थः (धरति। धरते) इत्युभयमिति। अस्माभिस्तु मैत्रेयाद्यनुसारेण करणे प्रत्यये हरतेरनन्तरं पठित्वायमुदाहृतः॥ ९३०॥

गाङ् गतौ॥ (गते) त्रिष्वपि वचनेषु समानं, गा अ आतामिति स्थिते 'अत्रान्तरङ्गत्वाद्धातुशपोरेकादेशे सवर्णदीर्घे ङिदवयव आकारोऽतः परो न भवतीति "आतो ङितः" इतीयादेशो न भवति। न च सवर्णदीर्घस्यादिवद्भावेनातः परत्वमकारस्य, [अन्तादिवद्भावो वर्णाश्रये न] इति स्थितत्वात्। न च मन्तव्यं 'वार्णादाङ्गं बलीय' इति सवर्णदीर्घात् प्रागेव

इआदेशः स्यादिति, यङ्यमङ्गात् परस्येत्यङ्गस्य न भवति । बहुवचने झस्य "आत्मनेपदेष्वनतः" इति अदादेशः, अत्राप्यनत इति पर्युदास आदिवद्भावेन न भवति, वर्णाश्रयत्वात् । न च मन्तव्यमित्यादि पूर्ववत् । ( गासे । गाथे । गाध्वे ) गे इति टेरेत्वे वृद्धिः । धातुशपोरेकादेशस्यादिवद्भावात् "अतो गुणे" इति पररूपं वर्णाश्रयत्वादेव न भवति । "आतो लोप इटि च" इत्यत्र आर्द्धधातुकस्येटो ग्रहणात् नालोपप्रसङ्गः (जगे । जगाते । जगिषे । जगिध्वे । जगे । जगिवहे ) "आतो लोप इटि च" इत्याल्लोपः (गाता । गास्यते) "गाङ्कुटादिभ्योऽञ्णिन्ङित्" इत्यत्र गाङिति इङादेशग्रहणात् अस्मात् परस्याञ्णितः प्रत्ययस्य ङित्त्वाभावात् न "घुमास्थागा" इतीत्वं, ( गाताम् । गास्व । गै । गावहै । अगात । अगाताम् । अगाव ) झस्यादादेशः, (अगाथाः । अगे ) । "आद्गुणः" (अगावहि । गेत । गेयाताम् । गेथाः । गेय) लिङः सलोपः, "आद्गुणः," यलोपः । आशिषि ( गासीष्ट । अगास्त । अगासाताम् । अगासत । अगास्थाः । अगासि । जिगासते जेगीयते ) "घुमास्थागा०" इतीत्वम् ( गापयति । अजीगपत् । "गापोष्टक्" इत्यत्र न्यासपदमञ्जर्योरयं धातुरादादिक इति स्थितं, शपि पाठे चास्य प्रयोजनं नास्ति । अस्माभिस्तु क्वापि पठितव्य इति मैत्रेयाद्यनुसारेणेह पठितः । गायतीति गतं शब्दे शपि ॥ ९३१ ॥

कुङ् घुङ् उङ् ङुङ् शब्दे ( कवते । चुकुवे । घवते । जुघुवे ) इत्यादि गवतिवत् । ( कोकूयत इत्यत्र ) "न कवतेर्यङि" इति अभ्यासस्य चुत्वनिषेधः । यङीति वचनात् तल्लुकि ( चोकोतीति ) चुत्वं भवति । अयमव्यक्तशब्दइति न्यासे । तथा देवश्च अव्यक्तशब्दे कवतइति, अयमार्त्तशब्दे तुदादौ, शब्दमात्रे ऽदादौ, (अवते । अवसे । ऊवे । ऊविवहे) अत्रोवङि तस्य "द्विर्वचनेऽचि" इतिस्थानिवत्त्वात् उशब्दस्य द्विर्वचने वार्णादन्तरङ्गादपि सवर्णदीर्घात् पूर्वं बहिरङ्गेऽप्युवङि 'वार्णादाङ्गं बलीयः' इति पश्चात् सवर्णदीर्घः ( ओता । ओष्यते । अवताम् । आवत । अवेत ।) आशिषि (ओषीष्ट साभवानौष्ट । ऊषिषते) "इको झल्" इति सनः कित्त्वान्न गुणः । "अज्झन०" इति दीर्घः, "सन्यङोः" इति षष्ठ्यन्तत्वात् षशब्दस्य द्विर्वचनम् । ( आवयति । मा भवानवीवत् ) वृद्ध्यावौ चङि णेर्लोपे "णौ चङि" इति ह्रस्वे "चङि" इति द्विर्वचनं, णिलोपस्य "द्विर्वचनेऽचि" इति स्थानिवत्त्वात् द्वितीयस्यैकाचो विशब्दस्य द्विर्वचनम् । ( ङवते । जुङुवे ) इत्यादि गवतिवत् ॥ ९३८ ॥

च्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ ॥ ( च्यवते । चुच्युवे । चुच्युविषे । चुच्युविध्वे । चुच्युवे )। "अचि श्नुधातु०" इति उवङ् । ( च्योता । च्योष्यते । अच्यवत । च्यवेत । च्योषीष्ट । अच्योष्ट । चुच्यूषते )। "इको झल्" इतिकित्त्वे "अज्झन०" इति दीर्घः । ( चोच्यूयते । चोच्योति । च्यावयति । अचुच्यवत् । अचिच्यवत् )। "स्रवतिशृणोति" इत्यादिना अभ्यासस्येत्वम् ( च्यवनम् ) चलनार्थत्वात् युच् ( च्योत्नम् ) बाहुलकात्त्नण् । ( ज्यवते ) इत्यादि च्यवतिवत् । अत्र नन्दी जु इत्युकारं पठति, तद् जु इति सौत्रो धातुरिति वृत्तिन्यासपदमञ्जर्यादिष्वभिधानादनार्षमिव प्रतीयते ( प्रवते । पुप्रुवे । प्लवते । पुप्लुवे ) इत्यादि गवतिवत् । अत्र मैत्रेयः । क्लुङ् इत्येके । ( क्लवते ) इत्यादि । (क्लव इति विक्लव इति च) बवयोरभेदात् द्रष्टव्यम् । क्रुङ् इति क्वचित्पठ्यते ॥ ९३९ ॥

रुङ् गतिरेष (१)णयोः ॥ ( रवते । रुरुवे ) इत्यादि, गवतिवत् । ( रावयति । अरीरवत् ) "ओः पुयण्जि" इति यण्परत्वादभ्यासस्येत्वे दीर्घः । रु शब्दे इत्यदादौ । अस्यैव निरनुबन्धकस्य "उपसर्गे रुवः" "विभाषाङि रुप्लुवोः" इत्यत्र ग्रहणं वृत्त्यादौ कृतम् ॥ ९४० ॥

धृङ् अवध्वंसने ॥ ( धरते । दध्रे ) इत्यादि धृञ्वत् ॥ ९४१ ॥

मेङ् प्रणिदाने प्रणिदानं विनिमयः । प्रत्यर्पणमित्यपरे (अपमयते । प्रणिमयते) "नेर्गद०" इति

( १ ) शोषणयोरिति २ पुस्त० पा० ।

णत्वं, तत्र माङ्मेङोर्ग्रहणमिति वृत्तिः। मेङआत्वाभावेऽपि णत्वमिति हरदत्तः (ममे। ममिषे) "आतो लोपः" इत्याल्लोपः (मातासे। मास्यते। मयताम्। अमयत। मयेत। मासीष्ट। प्रण्यमास्त) अड्व्यवायेऽपि णत्वमिष्यते। (मित्सते) "सनि मीमा०" इतीस् अभ्यासस्य लोपः। "सः स्यार्द्धधातुके" इति तत्त्वं, (मेमीयते)। "घुमास्था" इतीत्वम् (मामाति। मामीतः) "ई हल्यघोः" इतीत्वं हलादौ स्थितम्। अजादौ तु "श्नाभ्यस्तयोः" इत्याल्लोपः (माययति। अमीमयत्। मितम्) "द्यतिस्यतिमेति" इत्वम्। अपमित्य याचते। अपमाय याचते। "न ल्यपि" इतीत्वनिषेधः। "मयतेरिदन्यतरस्याम्" इति पक्षे इकारः। "उदीचां माङो व्यतीहारे" इति व्यतिहारार्थादस्मात् क्त्वा। अपूर्वकालार्थं वचनम्। याचित्वा ह्यसावपमयते। अत्रोदीचां ग्रहणात् यथाप्राप्तमपि भवति। याचित्वापमयत इति, अन्यथा येन नाप्राप्तिन्यायेन अपूर्वकालात् क्त्वो बाधः स्यात्। अपमित्य निवृत्तमापमित्यकम्। "अपमित्ययाचिताभ्यां कक्कनौ" इति निर्वृत्ते यथासंख्यादस्मात् कक्, धान्यमायः। "ह्वावामश्च" इति कर्मण्युपपदे ऽणि युक्। अत्र वृत्तौ माङ् मानइत्युपादाय "गामादाग्रहणेष्वविशेष" इति मेङोऽप्युपलक्षणमिति हरदत्तः॥ ९४२॥

देङ् रक्षणे॥ दयते। दिग्ये। दिग्याते। दिग्यिषे। दिग्ये) "दयतेर्दिगि लिटि" इति दिग्यादेशे "एरनेकाचः" इति यण्। 'दिग्यादेशेन द्विर्वचनस्य बाधनमिष्यत'इति वृत्तिः। दा- तेत्यादि (अदित। अदिथ) "स्थाघ्वोरिच" इति सिचः कित्त्वमित्वं च (प्रङाय) "घु- मास्था" इतीत्वं 'न ल्यपि' इति निषिध्यते। शेषं मयतिवत्॥ ९४३॥

श्यैङ् गतौ (श्यायते। शिश्ये। शिश्याते। शिश्यिषे। श्याता। श्यास्यते। श्यायताम्। अ- श्यायत। श्यायेत। आशिषि श्यासीष्ट। अश्यास्त। शिश्यासते। शाश्यायते। शाश्याति। श्यापयति। आशिश्यपत्। अवश्यायः। प्रतिश्यायः) "श्याद्व्यध०" इति णः। श्यैङो ऽक- स्यतेश्चाकारान्तत्वादेव णे सिद्धे प्रतिपदोपादनं सोपसर्गार्थमिति स्थितम्। शीतं मेदः। शी- तो वायुः। "द्रवमूर्त्तिस्पर्शयोः श्यः" इति द्रवस्य मूर्त्तौ काठिन्ये स्पर्शगुणे च वर्त्तमानस्य श्यायतेर्निष्ठायां परतः संप्रसारणे "हलः" इति दीर्घः। तत्रास्पर्शे "श्योऽस्पर्शे" इति निष्ठानत्वे द्रवमूर्त्तिस्पर्शाभ्यामन्यत्र श्यानो वृश्चिक इति संप्रसारणं न भवति, निष्ठानत्वं "संयोगादे- रातः" इत्येव सिद्धं, प्रतिशीनं, "प्रतेश्च" इति श्यैङः प्रतेः परस्य निष्ठायां संप्रसारणं, "श्यो- ऽस्पर्शे" इत्यत्र स्पर्शग्रहणेन गुणो निषिध्यते न तु रोग इत्यत्रापि निष्ठानत्वं भवति। (अ- भिशीनः। अभिश्यानः। अवशीनः। अवश्यानः) "विभाषाभ्यवपूर्वस्य" इति श्यैङो नि- ष्ठायां वा संप्रसारणम्। अत्राभ्यवाभ्यामिति वक्तव्ये पूर्वग्रहणं व्यवहिते तथा स्यादिति अभिसंशीन इत्याद्यपि भवति, मूर्त्तिस्पर्शयोः परत्वादियमेव विभाषा भवति, सर्वत्र संप्रसार- णपक्षे स्पर्शादन्यत्र "श्योऽस्पर्शे" इति निष्ठानत्वमन्यत्र "संयोगादेरातः" इति॥ ९४४॥

प्यैङ् वृद्धौ॥ प्यायते। पप्ये इत्यादि श्यैवत्॥ ९४५॥

त्रैङ् पालने॥ (चौरात् त्रायते) "भीत्रार्थानां भयहेतुः" इति भयहेतोश्चौरस्यापादानत्व- म्। त्राणं, त्रातः। "नुदविद०" इत्यादिना निष्ठानत्वं वा, इदं च व्यवस्थितविभाषाविज्ञा- नादेव त्रातः इत्यादौ न भवति। स्मिङ्प्रभृतय एतदन्ता अनुदात्ता आत्मनेभाषाः॥ ९४६॥

पूङ् पवने॥ एतदादयो डीङन्ता उदात्ता आत्मनेपदिनः (पवते। पुपुवे। पविता। पविष्यते। पवताम्। अपवत। पवेत। पविषीष्ट। अपविष्ट। पिपविषते) "सनि ग्रहगुहो- श्च" इति चकारेणोगन्तानां समुच्चयात् निषेधे प्राप्ते तदपवादः "स्मिपूङ्" इति इट्। "द्विर्व- चनेऽचि" इति गुणावादेशयोः स्थानिवत्त्वात्पूशब्दस्य द्विर्वचनं, पुयणजीत्यभ्यासस्येत्वं, (पोपूयते। पोपोति। पावयति। अपीपवत्। पूत्वा। पवित्वा। पूतवान्। पवितवान्। पूतं, पवितम्) "पूङश्च" इति क्त्वानिष्ठयोर्वेडागमः। "पूङः क्त्वा च" इति सेटोः क्त्वानि- ष्ठयोर्नित्यमकित्त्वं, पूङ इति सानुबन्धकनिर्देशात् यङ्लुकि निष्ठायां कित्त्वमेव। (पोपुवितम्।

पोपुवितवान्)इति । क्त्वायां तु "न क्त्वा सेट्"इति कित्त्वनिषेधात् (पोपुवित्वा)इति भवति । (पवमानः) "पूङ्यजोः शानन्"इति शानन्प्रत्ययः। (पोत्रं) हलस्य सूकरस्य वा मुखम् । "हलसूकरयोः पुवः"इति करणे ष्ट्रन्, तच्चेत् करणं हलसूकरयोरवयवो भवति । (पवित्रं) दर्भः । "पुवः सञ्ज्ञायाम्" इति करणइत्रः । पूयतेऽनेनेति पवित्रमृषिर्मन्त्रश्च । पवत इति पवित्रम्, अग्न्यादिः । "कर्त्तरि चर्षिदेवतयोः" इति ऋषौ करणे देवतायां कर्त्तरि पवतेरित्रः । यदार्यमित्रःकर्त्तरि तदा नपुंसकलिङ्ग एवोदाहृतः । पूञ् क्र्यादौ, तस्यापि ष्ट्रनित्रयोर्विधौ सामान्येन ग्रहणमित्युक्तानि रूपाणि तस्यापि ॥ ९४७ ॥

मूङ् बन्धने ॥ भवतइत्यादि पवतिवत् । ( मुमूषते । मूत्वा ) मूतः इत्यत्र "श्र्युकः किति" "सनि ग्रहगुहोश्च" इति इण्णिषेधः ॥ ९४८ ॥

डीङ् विहायसा गतौ ॥ विहायसा गताविति क्वचित्पठ्यते । तदाकाशगमनइतिपठ्यां चन्द्रधनपालाभ्यां प्रत्युक्तम् । व्योमोरोभ्यां गमने डयते अंहते च इति पठन् केशवस्वाम्यत्रैवानुकूलः । अयमेव पाठो मैत्रेयादीनामपि ( डयते । डिड्ये । डिड्यिषे ) "एरनेकाचः" इति यण् । ( डयिता । डयिष्यते । डयताम् । अडयत । डयेत । डयिषीष्ट । अडयिष्ट । डिडयिषते । डेडीयते । डेडेति । डाययति । अडीडयत् । डयित्वा ) "निष्ठा शीङ्" इत्यत्र निष्ठेति योगविभागात् डयितमित्यपि भवतीति पारायणे । डीङ् शब्दे दैवादिकस्य । पूङादयस्त्रय एते उदात्ता आत्मनेपदिनः ॥ ९४९ ॥

तॄ प्लवनतरणयोः ॥ उदात्तः परस्मैभाषा । ( तरति । ततार । तेरतुः । तेरुः । तेरिथ । तेरथुः । तेर । ततार । ततर । तेरिव) "ऋच्छत्यॄताम्" इति गुणः, वृद्ध्या तु स्वविषये पूर्वविप्रतिषेधेनायं बाध्यते । "तॄफलभजत्रपश्च"इति किति लिटि थलि च सेटि एत्वाभ्यासलोपौ। ( तरिता । तरीता । तरिष्यति । तरीष्यति ) *वृतो वा* इति इटो वा दीर्घः । वृङ्वृञ्भ्यामॄदन्ताच्च परस्येटो वा दीर्घ इति सूत्रार्थः । अत्र अलिटीत्यनुवृत्तेर्न लिटि दीर्घः ( अतरत् । तरेत् । ) आशिषि ( तीर्यात् ) । "ऋत इद्धातोः" इति इत्वरपरत्वयोः "हलि च" इति दीर्घः । 'इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन'इत्युक्तत्वात् न तयोर्विषये इत्वम् (अतारीत् । अतारिष्टाम् । अतारीः । अतारिष्टम् । अतारिष्ट ) "वृतः" इतीटो दीर्घः "सिचि च परस्मैपदेषु" इति बाध्यते ( तितीर्षति । तितरिषति । तितरीषति ) "वृतो वा" इत्यधिकृत्य "इट् सनि वा" इति इटो विकल्पनात् "सनिग्रहगुहोश्च" इति निषेधोऽत्र न भवति । इडभावे "इको झल्" इति सनः कित्त्वादगुणत्वे "ऋत" इति इत्वरपरत्वयोः "हलि च" इति दीर्घः । इट्पक्षे "वृतः" इति दीर्घविकल्पनात् ( तार्त्तर्ति ) अभ्यासस्योरदत्वे हलादिशेषे "दीर्घोऽकितः" इति दीर्घः । "रुग्रिकौ च" इति रुग्रिग्रीको न भवन्ति, "ऋतश्च" इति तपरकरणेन ऋकारान्तस्याङ्गस्याभ्यासे तद्विधानात् (तातीर्त्तः । तातिरति । तातर्षि । तातीर्थः) अगुणविषये इत्वे रपरत्वं, हल्परत्वे तु दीर्घश्च । लोटि (तातर्तु । तातीर्त्तात् । तातीर्ताम् । तातिरतु । तातीर्हि ) ताताराणि । तातङो ङित्त्वादगुणः, इत्वादि, लिङि तिप्सिपोर्हल्ङ्यादिलोपे ( अतातः । अतातीर्त्ताम् । अतातरुः ) अत्र "जुसि च" इति गुणेन परत्वादित्वं बाध्यते । ( तातीर्यात् । तातीर्याताम् ) आशिषि सलोपाभावो विशेषः । ( तातीर्यास्ताम् ) इत्यादि । ( तारयति । अतीतरत् । व्यतितरते । व्यतितेरे । व्यतितरीता । व्यतितरिष्यते । व्यतितरीष्यते । व्यतितरताम् । व्यत्यतरत । व्यतितरेत । व्यतितरिषीष्ट । व्यतितीर्षीष्ट ) "लिङ्सिचोरात्मनेपदेषु" इति ऋत इटो विकल्पनात् पक्षे इट् । तस्य च दीर्घत्वं "न लिङि" इति निषेधान्न भवति । इडभावे "उश्च" इति लिङसिचोः कित्त्वादगुण इत्यादि लुङ्यपि पूर्ववत् । सिच इडभावे कित्त्वेत्वयोर्व्यत्यतीर्ष्टेति, इट्पक्षे दीर्घविकल्पे (व्यत्यतरिष्ट, व्यत्यतरीष्ट)इत्यादि । अयं च दीर्घविकल्पः प्रकृतस्येट इति चिण्वदिटो न भवति, तेन (तारिता, तरिता, तरीता, तारिष्यते, तरिष्यते, तरीष्यते,) इति त्रीणि रूपाणि भवन्ति । लिङि शुद्धोऽपीट् पाक्षिकस्त-

स्य च न दीर्घ इति (तारिषीष्ट, तरिषीष्ट, तरीषीष्ट)इति त्रीणि रूपाणि। लुङि'स्त्वेकवचने (अतारि) अन्यत्र चिण्वदिट्। (अतारिषाताम्) वृद्धौ पुनरिटि दीर्घविकल्पनात्, (अतरिषाताम्, अतरीषाताम्) अयं चेट् "लिङ्सिचोरात्मनेपदेषु"इति पक्षे न भवति तदा "उश्च" इति कित्वेत्वादौ अतीर्षातामित्यपीति चातूरूप्यं भवति। ध्वसि चिण्वदिटि वृद्धेटश्च दीर्घादीर्घयोः "विभाषेटः" इति मूर्द्धन्यविकल्पनात् ( अतारिध्वम्, अतारिढ्वम्, अतरिध्वम्। अतरिढ्वम्, अतरीध्वम्, अतरीढ्वम्, ) इति षड् रूपाणि। इडभावे नित्ये मूर्द्धन्ये अतीर्ढ्वमिति आहृत्य सप्त रूपाणि। (रथन्तरम्) साम। "सञ्ज्ञायां भृतॄवृजि"इति खच्। (अवतारः) पक्षे, "अवे तॄस्त्रोर्घञ्" इति करणाधिकरणयोर्घञ् ( तीर्त्वा। तीर्णः। तीर्णवान् ) "श्र्युकः किति" इतीण्निषेधः। निष्ठायामित्वरपरत्वदीर्घत्वेषु "रदाभ्याम्" इति नत्वं तीर्णिः। ऋत इकारः। ॠल्वादिभ्यःक्तिन् निष्ठावत् भवति"इति नत्वम् ( तरुणः ) "ॠवृतृदारिभ्य उनन्" इति उनन् प्रत्ययः। कवयः तरुणिमा इतीमनिचं प्रयुञ्जते। नास्य लक्षणमस्ति। तरुणी। "वयसि प्रथमे" इति ङीप्। तलुनी सुरा। कपिलकादीनां सञ्ज्ञाछन्दसोर्वा लत्वमापद्यतइति लत्वं, [ नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ] इति ङीप्। नञ्स्नञ्कक्ख्युंकः प्रत्यया इतरे प्रातिपदिकानि। तरुः। "भृमृतृशि"इत्यादिनो प्रत्ययः। तालु। "तरतेर्लश्च"इति उण्प्रत्यये रेफस्य च लत्वम्। तीर्थम्। "पातॄतुदि" इत्यादिना थे ऋत इत्वादि। तर्ष उत्साहः। तूर्षोऽभिलाषः। "वृतॄवदि" इत्यादिना सः। तरणिः। "अर्त्तिसृतॄ" इत्यादिना अनिप्रत्ययः ॥ ९९० ॥

गुप गोपने ॥

तिज निशाने ॥

मान पूजायाम् ॥

बध बन्धने ॥

गुप गोपनकुत्सनयोरिति मैत्रेयः। एते च गुपादयः। "गुप्तिज्किद्भ्यः सन्"। "मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य" इति नित्यसन्नन्ताः। तथा च भाष्यं, नैतेभ्यः प्राक् सन आत्मनेपदं नापि परस्मैपदं पश्याम इति। तथा च "पूर्ववत्सनः" इत्यत्र वार्त्तिकं पूर्वस्यात्मनेपददर्शनात् सनन्तादात्मनेपदमिति चेत् गुपादिष्वप्रसिद्धिरिति। अयं च सन् गुपेर्निन्दायां, तिजेःक्षमायां, मानेर्जिज्ञासायां, बन्धेर्वैरूप्य, इति वृत्तावुक्तत्वात्। अत्रापठितेष्वर्थेषु न च सन् अस्ति, न चैषां केवलानां पठितेष्वर्थेषु प्रयोगः। पूर्वोक्तभाष्यवार्तिकविरोधात्। किं च भाष्ये ऽनुबन्धकरणसामर्थ्यात् 'अवयवे ऽकृतं लिङ्गं समुदायस्य विशेषकं भवति'इति सन्नन्तादात्मनेपदसमर्थनं च विरुध्येत, तथा निन्दादेरन्यत्र केवलानां गुपादीनां प्रयोगे तन्नैवानुबन्धासञ्जनस्यात्मनेपदार्थत्वेन चरितार्थत्वात् कथं सामर्थ्यं कथं चानुबन्धत्वम्, एवं च गोपते, तेजते, इति स्वामिनोक्तः केवलात् तिङः प्रयोगः प्रत्युक्तः। अत्र नन्दिमैत्रेयौ। नह्येतेभ्य इत्यादिना भाष्येण तिङामभावः प्रतीयतइति निन्दादेरन्यत्र कृतमुदाजह्तुः। हरदत्तस्त्वेतन्नानुमन्यते, यदाह। "पूर्ववत्सनः" इत्यत्र कथं तर्हि जुगुप्सादेः समुदायस्यानुदात्तेत्त्वमत आह। अवयवइति। अवयवे ह्यचरितार्थं लिङ्गं सामर्थ्यादवयविनो विशेषकं भवति। यद्येवं गोपयति तेजयतीत्यादावपि प्रसङ्गः। अथ यं समुदायं योऽवयवो न व्यभिचरति तत्र कृतं लिङ्गं तस्य विशेषकं भवति णिजन्तं च व्यभिचरति विनापि तेन जुगुप्सत इति गुपेः प्रयोगादित्युच्येत, सन्नन्तादपि न स्यात्, विनापि तेन गोपयतीति गुपेः प्रयोगात्, वक्तव्योऽत्र विशेषः। अयमुच्यते। गुप गोपन इत्यस्य सन्विधौ ग्रहणन्तस्माच्च नित्यः सन्नेव भवति नापरः प्रत्ययः। गोपयतीत्यादिकस्तु प्रयोगो गुप रक्षणे इत्यस्य, स चान्य एव। अवश्यं चैतदेवं विज्ञेयम्। अन्य एव सन्प्रकृतिस्तस्माच्च सनेव भवतीति। अन्यथा निन्दाया अन्यत्र यथा णिज्भवति तथा लडादिरपि स्यात्। एवं तिजिप्रभृतयोऽपि क्षमाद्यर्थे यत्र सन्निष्यते तत्रानुदात्तेतो नित्यसन्नन्ताश्च, क्षमादिभ्योऽन्यत्र यत्र णिजिष्यते तत्राननुबन्धका एव चुरादौ पठितव्या इति।

तत्रैवं मते अवयवे ऽकृतं लिङ्गमिति भाष्योपपत्तिः । यदि हि कृतः स्युस्तर्हि अनुदात्तत्त्वं युजर्थं स्याद् इति अनुदात्तत्त्वस्य कथमचारिताथ्यम् । अथोदाहरणानि ( जुगुप्सते । जुगुप्साञ्चक्रे । जुगुप्सिता । जुगुप्सिष्यते जुगुप्सताम् । अजुगुप्सत । जुगुप्सेत । जुगुप्सिषीष्ट । अजुगुप्सिष्ट ) अत्रास्य सनो धातुसंशब्दनेनाविधानादनार्धधातुकत्वान्नेड्गुणौ । एवं तितिक्षतइत्यादि । मीमांसतइत्यादौ–"मान्बन्ध"इत्युपधादीर्घः । अयं चाभ्यासविकारेष्वपवादा नोत्सर्गान्विधीन् बाधन्तइति अभ्यासस्य हलादिशेषह्रस्वादिषु कृतेष्वेव । एवं बीभत्सतइत्यादावपि । अत्र "एकाचो बशः" इति बकारस्य भकारः । धकारस्य "खरिच" इति चर्त्वं तकारः । गोपायतीति रक्षणे ।। गुपादयश्चत्वार एतेऽनुदात्तेतः ॥ ९९४ ॥

रभ राभस्ये ॥ राभस्यमुपक्रमः । एतदादयो ह्वदेत्यन्ता अनुदात्ता अनुदात्तेतः ( आरभते । आरेभे । आरेभिषे । आरेभिवहे) क्रादिनियमादिट् । एत्त्वाभ्यासलोपौ, ( आरब्ध ) "झषस्तथोः" इति धत्वं "झलां जश् झशि" इति जश्त्वं भकारस्य बकारः । (आरप्स्यते) "खरि च" इति चर्त्वम् । ( आरभताम् । आरभत ) ( आशिषि । आरप्सीष्ट । आरब्ध ) सिज्लोपधत्वजश्त्वे, ( आरिप्सते ) "सनि मीमा" इत्यादिना इस् । "स्कोः" इति सलोपः । (आरारभ्यते । आरारम्भीति । आरारब्धि ) इट्पक्षे "रभेरशब्लिटोः" शब्लिड्भ्यामन्यत्राजादौ नुम्विधानान्नुमि अनुस्वारपरसवर्णौ ( आरारब्धः । आरारभति ) अत्राङ्भावे ऽजादित्वात् कृतस्य नुमः "अनिदिताम्" इति नलोपः । ( आरारम्भाणि । आरारम्भामः ) आट्यजादित्वान्नुम्, पित्त्वान्नलोपाभावः । लङि तिप्सिपोर्हल्ङ्यादिलोपे जश्त्वचर्त्वयोः ( आरारप् । आरम्भयति । आररम्भत् ) अत्र परामपि वृद्धिं नित्यत्वात् नुम् बाधते ( आरम्भः । आरम्भणम् ) अजादित्वान्नुम् । ( रम्भा ) पचाद्यचि टाप् ( रभसः ) सत्यमीत्यादिना ऽसच् । बाहुलकान्नुमभावः, राभस्येति निपातनात् वा ॥ ९९५ ॥

डुलभष् प्राप्तौ ॥ लभतइत्यादि सर्वं रभतिवत् । अस्यापि शब्लिड्वर्जिते ऽजादौ नुम् । आलभ्या गौः । "आङो यि" इति आङ्पूर्वाल्लभेर्यकारादौ नुम् । अत्र यीत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तेः पूर्वं नुमि अदुपधत्वाभावात् "पोरदुपधात्" इति यन्नेति ण्यद् भवति । ण्यद्यतोश्च स्वरे विशेषः, ण्यति "गतिकारकोपपदात् कृत्" इति कृदन्तोत्तरपदप्रकृतिस्वरः "तित्स्वरितम्"इति स्वरितत्वं भवति । यदि तु उत्तरपदप्रकृतिस्वरत्वेन "यतोऽनावः"इति यदन्तं द्व्यच्कमाद्युदात्तं स्यात् । अत्र च विषयसप्तमीत्वमिति "इदितो नुम् धातोः" इत्यतः धातोरित्यनुवृत्त्या भाष्ये प्रतिपादितम् । उपलम्भ्या विद्या । "उपात् प्रशंसायाम्" इति लभेर्यकारादौ विषये नुम् । अत्र धात्वर्थस्य प्राप्तेः प्रशंसापादनद्वारेण प्राप्यमाणद्वारेण वा प्रशंसा । अन्यत्र नुमभावात् "पोरदुपधात्" इति यति उपलभ्यमस्मात् वृषलात् न (१)किंचिद् भवति । अत्रापि ण्यद्यतोः स्वरे विशेषः ( ईषत्प्रलम्भः । सुप्रलम्भः ) "उपसर्गात्खल्घञोः" इति नुम् । "लभेश्च" इतिं सिद्धे वचनमिदं नियमार्थं खल्घञोरजाद्योर्यदि भवति उपसर्गात् परस्यैवेति, तेन इषल्लाभो लाभ इत्यत्र नुम् न भवति ( सुलभः । दुर्लभः । सुलाभः । दुर्लाभः ) इत्यत्र तु उपसर्गात् परत्वेन "सुदुर्भ्यां केवलाभ्याम्" इति नुम्निषेधः । अत्र केवलशब्द उपात्ताभ्यां सदुर्भ्यामन्यस्य सजातीयोपसर्गस्याभावमाह, तेन सुदुर्भ्यामन्योपसर्गरहितस्य लभेः खल्घञोर्नुम् न भवतीति सूत्रार्थः । उपसर्गान्तरयोगे तु अतिप्रसुलम्भ इति नुम् भवत्येव । (सुदुर्लभमतिदुर्लभं सुलभं, सुदुर्लाभः, अतिदुर्लाभः)इति प्रयोगास्तु "सुः पूजायाम्" "अतिरतिक्रमणे च" इति स्वत्योः कर्मप्रवचनीयत्वे द्रष्टव्याः । अतिक्रमणं फलप्राप्तावपि क्रियानुपरतिः । उक्तेषूदाहरणेषु खल्घञोर्न बाधः, विषयभेदात्, कर्मणि खल्, भावे च घञ् इति । यद्वा सुरत्र क्षेपे यथा सुषिक्तं किं तवात्रेति, दुर्निन्दायां यथा दुर्ब्राह्मण

( १ ) इति भवतीति २ पु० पाठः ।

इति । तेन कृच्छ्राकृच्छ्रार्थत्वाभावात् खलभावः ( अलाभि, अलम्भि, लाभंलाभं, लम्भंलम्भं, "विभाषा चिण्णमुलोः" इति लभेर्नुम्विकल्पः, व्यवस्थितविभाषाविज्ञानात् सोपसर्गस्य नित्यं नुम् भवति । प्रालम्भि, प्रलम्भंप्रलम्भमिति । लाभेन निर्वृत्तं लब्ध्रिमं, "ड्वितः क्त्रिः" "क्त्रेर्मम्नित्यम्" इति मप् । षित्वादङ् । लभा । लब्धिः । "क्तिन्नवादिभ्यः" इति क्तिन् ॥ ९९६ ॥

ष्वञ्ज परिष्वङ्गे ॥ स्वजते । "दंशसञ्जस्वजां शपि" इति अनुनासिकलोपः ( सस्वजे, सस्वञ्जे । सस्वजिषे । सस्वञ्जिषे । सस्वजिवहे ) "इन्धिभवतिभ्याम्" इत्यत्र 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां वा" इति वक्तव्यमिति लिटः कित्वविकल्पनात् पक्षेऽनुनासिकलोपः । तथा "सदिस्वञ्ज्योः" इत्यत्र वृत्तिव्याख्यानेषु स्वञ्जेः संयोगान्तादपि लिटो विभाषा कित्त्वमिच्छन्तीति (स्वङ्क्ता । स्वङ्क्ष्यते । स्वजताम् । अस्वजत । स्वजेत । स्वङ्क्षीष्ट । अस्वङ्क्त । सिस्वङ्क्षते ) "स्तौतिण्योरेव" इत्यषत्वम् । ( सास्वज्यते । सास्वङ्क्ति । सास्वञ्जीति । सास्वक्तः । सास्वजति ) लोटि हौ (सास्वग्धि) लङि तिप्सिपोर्हल्ङ्यादिलोपे संयोगान्तलोपे (असास्वन् । स्वञ्जयति । असस्वञ्जत् । प्रतिष्वजते ) "उपसर्गात् सुनोति" इत्यादिना षत्वं, (प्रत्यष्वङ्क्त) "प्राक् सितादड्व्यवायेऽपि" इति षत्वं (परिष्वजते । निष्वजते । विष्वजते ) । "परिनिविभ्यः" इत्यादिना षत्वम् । "उपसर्गात् सुनोति" इत्यादिनैव सिद्धे स्तुस्वञ्ज्योरुपादानं "सिवादीनां वाड्व्यवायेऽपि" इति परिनिविभ्यः परत्वे अड्व्यवाये सिवादित्वादनयोः षत्वविकल्पोऽयं यथा स्यादिति । तेन पर्यष्वजत पर्यस्वजत । इत्याद्युभयं भवति । प्रतिसस्वजे इत्यादौ "स्थादिष्वभ्यासेन" इत्यभ्यासात् परस्य प्राप्तं षत्वं "सदिस्वञ्ज्योः परस्य लिटि" इति निवार्यते ॥ ९९७ ॥

हद पुरीषोत्सर्गे ॥ ( हदते । जहदे । जहदिषे । हत्ता । हत्स्यते । हदताम् । अहदत । हदेत । हत्सीष्ट । अहत्त । जिहत्सते । जाहद्यते । जाहदीति । जाहत्ति । हादयति । अजीहदत् । हन्नः ) "रदाभ्याम्" इति नत्वम् । रभादयश्चत्वारोऽनुदात्ता अनुदात्तेतः । नन्दी तु हदिं विभाषानुदात्तेतमाह ॥ ९९८ ॥

ञिक्ष्विदा अव्यक्ते शब्दे ॥ अयमुदात्त उदात्तेत् । ( क्ष्वेदति । चिक्ष्वेद । चिक्ष्वेदिथ । चिक्ष्विदिव ) तासौ नित्यानिट्त्वाभावान्न भारद्वाजनियम इत्युक्तम् । ( क्ष्वेदिता । क्ष्वेदिष्यति । क्ष्वेदतु । अक्ष्वेदत् । क्ष्वेदेत् । क्ष्विद्यात् । अक्ष्वेदीत् । चिक्ष्विदिषति । चिक्ष्वेदिषति ) "रलो व्युपधात्" इति कित्त्वविकल्पः (चेक्ष्वेत्ति । क्ष्वेदयति । अचिक्ष्विदत् । क्ष्विदित्वा । क्ष्वेदित्वा । क्ष्विण्णः ) "ञीतः क्तः" इति वर्तमाने क्तः । "आदितश्च" इति इडभावः, "रदाभ्याम्" इति निष्ठानत्वम् । क्ष्विण्णमनेन, क्ष्वेदितमनेन (प्रक्ष्विण्णः । प्रक्ष्वेदितः) "विभाषा भावादिकर्मणोः" इतीड्विकल्पः । "निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः" इति सेटो निष्ठाया अकित्त्वात् गुणः । ञिक्ष्विदा स्नेहनमोहनयोरिति दिवादौ ॥ ९९९ ॥

स्कन्दिर् गतिशोषणयोः ॥ इतो मिहन्ता उदात्तेतोऽनुदात्तेतः ( स्कन्दति । चस्कन्द । चस्कन्दिथ । चस्कन्थ । चस्कन्दिव) क्रादिनियमादिड् , थलि भारद्वाजनियमात् विकल्पः । (स्कन्ता । स्कन्त्स्यति ।स्कन्दतु।अस्कन्दत । स्कन्देत् । स्कद्यात् ) "किदाशिषि" इति कित्त्वात्" "अनिदिताम्" इति नलोपः । अस्कदत् । "इरितो वा" इति वाङिनलोपः । अङोभावे (अस्कान्त्सीत्। अस्कान्ताम् । अस्कान्त्सुः) "वदव्रज" इति वृद्धिः, झलादौ "झलो झलि" इति सिज्लोपः। चिस्कन्त्सति। चनीस्कद्यते । "नीग्वञ्चु" इत्यादिना नीक् (चनीस्कन्ति। चनीस्कत्तः। चनीस्कदति । स्कन्दयति। अचस्कन्दत् ) गेहास्कन्दमास्ते । "विशिपति" इत्यादिना णमुल् । तृतीयाप्रभृतित्वाद्वा समासः । तेनैवोक्तत्वात् "नित्यवीप्सयोः" न द्विर्वचनम् । असमासे वीप्सायां द्रव्यवचनस्य द्विर्वचनं नित्यत्वे क्रियावचनस्येति गेहंगेहमवस्कन्दं, गेहमवस्कन्दमवस्कन्दमिति । क्रियाभेदे त्वापीष्यते इत्युक्तत्वात् गेहंगेहमवस्कद्येत्याद्यपि भवति ।

(विष्कन्ता विस्कन्ता) "वेः स्कन्देरनिष्ठायाम्" इति वा षत्वम् । अनिष्ठायामिति पर्युदासे नञिवयुक्तन्यायेन कृत्येवायं विकल्पः । तथा च वृत्तिकारेण पर्युदासो व्याख्यातः, कृतश्चोदाहृताः । निष्ठायां विस्कन्नः । "रदाभ्याम्" इति निष्ठानत्वम् (परिष्कन्ता, परिस्कन्ता) "परेश्च" इति वा षत्वम् । पृथग्योगकरणात् अनिष्ठायामिति नानुवर्त्ततइति वृत्तिः, तेन परिष्कण्णः परिस्कन्न इति भवति । अत एव पर्युदासाभावात् नञिवयुक्तन्यायो नास्तीति तिङ्यपि भवत्येव विकल्पः । (परिष्कन्दति, परिस्कन्दति) इति । (परिस्कन्दः) "परिस्कन्दः प्राच्यभरतेषु" इत्यषत्वम् । अस्य प्रयोगस्य प्राच्यभरतविषयत्वम् । स्कन्त्वा । प्रस्कन्द्य ) "क्त्वि स्कन्दिस्यन्दोः" इति नलोपाभावः । उत्कन्दो नाम रोगः । "उदः स्थास्तम्भोः" इत्यत्र [ रोगे चेति वक्तव्यम् ] इति वचनात् स्कन्देः सकारस्य पूर्वसवर्णस्तकारो भवति ॥ ९६० ॥

यभ विपरीतमैथुने ॥ विपरीतानुष्ठानइत्यर्थं इति मैत्रेयः । पुरुषकारे तु यभ विपरीतमैथुने इति विपरीतयभनइत्यर्थ इति । क्व चित्पठ्यते यभ मैथुनइति (यभति । ययाभ । येभतुः । येभिथ । ययब्ध । येभिव ) क्रादिनियमान्नित्यमिट् । थलि भारद्वाजनियमात् विकल्पः । (यब्धा । यप्स्यति । यभतु । अयभत् । यभेत् । यभ्यात् । अयाप्सीत् । अयाब्धाम् । यियप्सति । यायभ्यते । यायब्धि । याभयति । अयीयभत् । यब्ध्वा । यभ्यम् ) "पोरदुपधात्" इति यत् । जभेत्येक इति मैत्रेयः । जभ चेति धनपालशाकटायनौ । जप जभेति शाकटायनः । तत्र जभेः पाठो न्यासपदमञ्जरीकृतोरनभिमतः, सति ह्यस्मिन् "लुपसदचरजपजभदहदशभञ्जपशां च" "रधिभजोरचि" इत्यादौ जभजृम्भीतिवदमुमप्युपाददीयाताम् । किञ्च जभेः पाठेनाप्यनिटा भाव्यत्वात्, रभिश्च भ्रान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरः" इति व्याघ्रभूतिवचनेनापि विरोधः स्यात् । तृतीयश्च यभिरेव, तत्र वृत्तौ यभेत्युदाहरणात् । जम्भत इति गात्रविनामे गतः ॥ ९६१ ॥

णम प्रह्वत्वे शब्दे ॥ नमति । (ननाम । नेमतुः । नेमिथ । ननन्थ । नन्ता । नंस्यति । नमतु । अनमत् । नमेत् । नम्यात् । अनंसीत् । अनंसिष्टाम् ) । "यमरमनमातां" इति सगिटौ, परस्मैपदे ( निनंसति । नंनम्यते । नंनमीति । नंनन्ति । नंनन्तः । नंनमति । नंनन्वः, नन्नन्मः ) । "म्वोश्च" इति नत्वम् । लङि अनंनन् । अनन्नताम् । "मो नो धातोः"इति पदान्ते नत्वम् ( नमयति । नामयति ) "ज्वलह्वलह्मलनमामनुपसर्गाद्वा" इति मित्त्वविकल्पः । सोपसर्गात्तु अमन्तत्वान्नित्यमित्त्वम् (प्रणमयति) "उपसर्गादसमासेऽपि"इति णत्वम् । ( अनीनमत् ) नमते दण्डः स्वयमेव । अनंस्त दण्डः स्वयमेव । "न दुहस्नुनमाम्" इति यक्चिणोर्निषेधः ( नम्रः ) "नमिकम्पि" इति रः ( नेमिः ) भाषायां "धाञ्कृसृगमिजनिनमिभ्यः" इति किकिनोरन्यतरः । तस्य लिड्वद्भावादेत्वाभ्यासलोपौ भवतः । "अनुदात्त" इत्यनुनासिकलोपः । (प्रणत्य । प्रणम्य) "वा ल्यपि"इत्यनुनासिकलोपविकल्पः । नृन् नमयति नृनमो नाम कश्चित् "क्षुभ्नादिषु च"इति पाठाण्णत्वाभावः । नमः । असुन् । नमस्यति देवान् । पूजयतीत्यर्थः । "नमोवरिवश्चित्रङः क्यच्"इति क्यच् । नमसः पूजायामिति तत्र वृत्तिः (नमस्कृत्य । नमस्कृत्वा ) "साक्षात्प्रभृतीनि च" इति कृञो योगे पक्षे गतिसञ्ज्ञा, गतित्वे "कुगति" इति समासः । "नमस्पुरसोर्गत्योः" इति विसर्जनीयस्य सत्त्वं च । नमो देवेभ्यः । "नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च"इति नमो युक्ताच्चतुर्थी । नाकुर्वल्मीकः । "फलपाटिनमि" इत्यादिना उप्रत्ययो नाकादेशश्च ( नप्ता ) । "नप्तृनेष्टृ" इत्यादिना तृनि मकारस्य पकारो निपात्यते । नप्तारावित्यादौ असम्बुद्धौ सर्वनामस्थाने "अप्तृन्" इत्यादिना उपधादीर्घः ॥ ९६२ ॥

गम्लृ सृप्लृ गतौ ॥ गच्छति । "इषुगमियमां छः" इति छः । "छे च" इति तुक् । ( जगाम । जग्मतुः । जगन्थ । जगमिथ । जग्मिव । जग्मिम ) क्रादिनियमादिट् । थलि

भारद्वाजनियमात् विकल्पः। ङितोरजाद्योः "गमहन०" इत्युपधालोपे तस्य "द्विर्वचनेऽचि" इति स्थानिवत्त्वात् द्विर्वचनम्। ( गन्ता । गमिष्यति )। "गमेरिट् परस्मैपदेषु" इति सकारादेरिट् ( गच्छतु । अगच्छत्। गच्छेत्। आशिषि गम्यात् । अगमत् ) लृदित्वात् अङ्। "गमहन" इत्यत्रानङिति पर्युदासात् नोपधालोपः। ( जिगमिषति )। जिगमिष त्वमिन्न हेर्लुका लुप्तत्वात् परस्मैपदाभावे भाष्यवार्त्तिकयोः सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येटः प्रतिषेधात् इति न्यासान्तरेण आत्मनेपदेन समानपदस्थस्य गमेः सकारादेरिण्निषेधात् इडभाव इति। एवं जिगमिषितेत्यादौ कृत्यपीट् भवति। इदं भाष्यवार्त्तिकं चेति आत्मनेपदेऽपीण्निषेधे सिद्धं एवारभ्यमाणमर्थादन्यत्रेटं बोधयति। अत एव भाष्यवर्त्तिकविरोधात् "गमेरिट्" इत्यत्र परस्मैपदग्रहणं गम्युपलक्षणार्थम्। परस्मैपदेषु यो निर्दिष्ट इति पुरुष(१)कारदर्शनमुपेक्ष्यं, वृत्तावयं पक्षः प्रतिक्षेपार्थमेव उपक्षिप्तः। यदाह तत्र हरदत्तः। न पुनरयं पक्षः स्थापितो भाष्यवार्त्तिकविरोधादिति। कः पुनरत्र फलभेदः। उच्यते। समपूर्वस्याकर्मकस्य गमेः "समो गम्यृच्छि" इत्यात्मनेपदित्वात् परस्मैपदेष्वदर्शनात् संजिगमिषिते इत्यादौ इण् न स्यात्, तथा जिगमिषां चक्र इत्यत्र भावकर्मविषयस्य गमेः परस्मैपदेष्वदर्शनात् इण्न स्यात्। अथ मतं परस्मैपदेषु दृष्ट एव गमिः उपसर्गादिवशेनात्रात्मनेपदेऽ(२)पीति इड्भविष्यतीति। तर्ह्यस्य गमेः सर्वत्रेट् स्यात्, गंस्यते स विशेष इति भाष्यप्रयोगश्च विरुद्ध्येत। कथं तर्ह्यात्मनेपदेन समानपदस्थस्येण्निषेधे जिगमिषितेवाचरति जिगमिषितीयत इति हरदत्तादयः। बहिरङ्गस्य आत्मनेपदस्य प्रतिषेधाभाव इति। अयं च प्रकारो ऽस्माभिः क्रमतावुपपादितः। ( जङ्गम्यते ) "नित्यं कौटिल्ये गतौ" इति गतिवचनत्वात् कौटिल्यएव यङ्, "नुगतः" इत्यभ्यासस्य नुक्यनुस्वारपरसवर्णौ ( जङ्गमीति । जङ्गन्ति । जङ्गतः ) "अनुदात्तोपदेश०" इत्यनुनासिकलोपः। ( जङ्गमति ) प्रकृतिग्रहणन्यायेन "गमहन" इत्युपधालोपः। (जङ्गन्मि । जङ्गन्वः) "म्वोश्च"इति नत्वम्। जङ्गहीत्यत्रानुनासिकलोपे तस्य "असिद्धवदत्रा" इत्यसिद्धत्वात् "अतो हेः" इति लुग् न भवति। अत्र सुधाकरः। अनुदात्तोपदेशा यम्यादय इति यम्यादेर्गणत्वेन निर्देशात् निर्दिष्टे यद्गणेन चेत्यनुनासिकलोपाभावमुक्त्वा यदा धातुपाठ एवं गणस्तदा भवितव्यमेव लोपेनेत्याह। "हन्तेर्जः" इत्यत्र जहीत्युदाहरणे न्यासकारोऽपि व्याख्यातवान्। निर्देशेन गणनिर्देशं नानुमन्यते। अत एव न्यासकारसुधाकरविरोधात् श्तिपा शपेत्यत्र यत्रोपदेशग्रहणमिति क्व चित्पाठः स उपेक्ष्यः ( अजङ्गन् ) "मो नो धातोः" इति नत्वम् ( गमयति । अजीगमत् ग्रामं देवदत्तं यज्ञदत्तः' ग्रामायेति वा ) "गतिबुद्धि" इति प्रयोज्यस्य कर्मत्वम्, अत्र "गत्यर्थकर्मणि"इति ग्रामात् द्वितीयाचतुर्थ्यौ। ग्रामश्चात्र गमेरेव कर्म, यतो ग्रामकर्मिकायां गतौ प्रेष्यते ग्रामं गच्छतीति, प्रयोज्यस्तु ण्यन्तस्य कर्म न गमेरिति न तत्र चतुर्थी भवति। अत्र कर्मणि लादयो "ण्यन्ते कर्त्तुश्च कर्मण"इत्यभिधानात् प्रयोज्ये भवन्ति। गम्यते ग्रामं देवदत्तः। गमयितव्य इत्यादि, अत्र कृद्योगलक्षणा षष्ठी "गत्यर्थकर्मणि" इत्यत्र चतुर्थी चेति वक्तव्येति द्वितीयाग्रहणात् बाध्यते, यद्वा "कृत्यानाम्" इत्यत्र योगविभागेन उभयप्राप्तौ कृत्ये षष्ठी नेत्युक्तत्वात् कर्तृवत् कर्मण्यपि षष्ठ्या नैव प्रसङ्गः। ग्रामं गन्ता गमयितेत्यादौ तु पुनर्द्वितीयाग्रहणादेव षष्ठ्या बाधः। अत्रानध्वनीति पर्युदासात् अध्ववचनेभ्यो यथायोगं द्वितीयाषष्ठ्यावेव भवतः, अध्वानं गच्छति पन्थानं गच्छति अध्वनो गन्ता पथो गन्ता इति। अयं चानध्वनीति प्रतिषेध आस्थितप्रतिषेधश्चायं विज्ञेय इति वृत्तावुक्तत्वात् आस्थितिविषयः, आस्थितः प्रथममेव स्वीकृतः, तेन यद्योत्पथेन पन्थानं गच्छति तदा ग्रामादिवत् द्वितीयाचतुर्थ्यौ द्वे अप्युदाहार्य, द्वितीयया षष्ठ्या बाधेऽपि चेष्टाग्रहणं मनसा पाट-

( १ ) परिशेषकार इति २ पु० पाठः।
( २ ) पीड्भवतीति २ पु० पा०।

लिपुत्रं गच्छतीत्यादौ चतुर्थीनिवृत्त्यर्थम् । आगमयते माणवकः, कालं हरत न त्वरते इत्यर्थः । [ आगमेः क्षमायामात्मनेपदं वक्तव्यम् ] इति ण्यन्तात्तङ्, क्षमा उपेक्षा, कालहरणमिति वृत्तिः । ण्यन्त एवायमत्रार्थे च वर्त्तेत इति तस्योदाहरणम्, ( सङ्गच्छते, ) "समो गम्यृच्छि"इत्यकर्मकात्तु सङ्गमेः तङ् । (सञ्जग्मे । सञ्जग्माते) "गमहन"इत्युपधालोपः (सङ्गन्ता । सङ्गंस्यते । सङ्गच्छताम् । समगच्छत । सङ्गच्छेत) आशिषि (संङ्गंसीष्ट) लुङि (समगत समगंस्त । समगंसाताम् ) "वा गमः" इति झलाद्योर्लिङ्सिचोरात्मनेपदविषये वा कित्त्वं, तदा "अनुदात्तोपदेश" इत्यनुनासिकलोपः झलि, "ह्रस्वादङ्गात्" इति सिज्लोपः । न चास्मात् पूर्वम् "अतो लोपः"इत्यल्लोपस्य प्रसङ्गः, आर्द्धधातुकोपदेशे ऽनकारान्तत्वात् "असिद्धवदत्रा" इत्यनुनासिकलोपस्यासिद्धत्वाद्वा, सर्वत्र गमेरात्मनेपदेन समानपदस्थत्वात् सकारादेरिडभावः(सञ्जिगंसते) अत्र "अज्झन०"इति दीर्घो न भवति, आदेशस्य गमेर्ग्रहणात् । यत्तु तरङ्गिण्यां दीर्घप्रदर्शनं, तद्गमेर्दीर्घे इगिङ्ग्रहणमग्रहणे ह्यनादेशस्यापि दीर्घत्वप्रसङ्गात् इति वार्त्तिकविरोधादुपेक्ष्यं, (गम्यम् ) 'पोरदुपधात्'इति यत् । सुतङ्गमो नाम कश्चित् । "गमश्च"इति सुप्युपपदे संज्ञायां खच् । "अरुर्द्विषदजन्तस्य" इति मुम् । सुतङ्गमेन निर्वृत्तः सौतङ्गमिः । "बुञ्छणकठजिलसेनिरढञ्ण्ययफक्फिञिञ्यकक्ठको ऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः" । इति यथासंख्यात् सुतङ्गमादेश्चातुरर्थिकइञ् । (अन्तगः) "अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः" इति अन्तादिषु गमेर्डः कर्मसूपपदेषु, डित्त्वसामर्थ्यादभत्वेऽपि टिलोपः । एवमत्यन्तग इत्युदाहार्यम् । (सर्वत्रगः । पन्नगः) । [ सर्वत्रपन्नयोरुपसंख्यानम् ] इति डः । उरसा गच्छतीत्युरगः । 'उरसो लोपश्च' इति डप्रत्ययः, उरसः सलोपश्च । ( सुखेन गच्छतीति सुगः । दुर्गः ) । "सुदुरोरधिकरणे" इति डः । अत्र न्यासे वासरूपविधिना ल्युडित्युक्तम् । तदयुक्तम् । [क्तल्युट्तुमुन्खलर्थेषु वासरूपविधेः प्रतिषेधः] इत्युक्तत्वात् । अधिकरणादन्यत्र सुगम इति खलेव भवति । निर्गच्छन्त्यत्रेति निर्गो देशः । "निर्गो देशे" इति डः, देशादन्यत्र निर्गमनमिति ल्युट् भवति । (ग्रामगः) । [ डोऽन्यत्रापि दृश्यत ] इति डः । मितं गच्छतीति मितङ्गमो हस्ती, खच्प्रकरणे [ गमेः सुप्युपसंख्यानम् ] इति खच् । ( विहङ्गमः ) । "विहायसो विहश्च" इति खचि विहायसश्च विहादेशे मुमागमः । ( विहङ्गः ) । [खश्च डिद्वा वक्तव्य] इति खचो डित्त्वाट्टिलोपः, ( विहगः ) । "हे च विहायसो विहादेशो" इति विहादेशः । अस्मादेवानुवादात् 'डोऽन्यत्रापि दृश्यत' इति वा डः । ( गामुकः ) । "लषपत०"इत्यादिना उकञ् । ( गत्वरः ) । "गत्वरश्च" इति क्वरपि अनुनासिकलोपो निपात्यते । ( गत्वरी ) । "टिड्ढाणञ्" इत्यादिना ङीप् । ( जग्मिः ) । "भाषायां धाञ्कृसृगमि" इति किकिनोरन्यतरस्मिन् उपधालोपः, लिड्वद्भावात् द्विर्वचनम् । ( जगत् ) । "द्युतिगमिजुहोतीनां द्वे च" इति क्वौ द्विर्वचनम् "गमः क्वौ" इत्यनुनासिकलोपः, स्त्रियां–"वर्त्तमाने पृषद्बृहन्महज्जगच्छतृवच्च" इति शतृवद्भावान्ङीप् । उत्सादिषु जगतीति पाठात् जगत्या अपत्यादिषु जागतम् । "उत्सादिभ्योऽञ्" इति प्राग्दीव्यतोऽञ् प्रत्ययः । जगत इदं जागतमित्यत्र अचामादिरचो वृद्ध्या उपधालक्षणा वृद्धिर्बाध्यते इति वृत्तिः । जगत्येव जागतं छन्दः । छन्दसः प्रत्ययविधाने [ नपुंसके स्वार्थउपसंख्यानम् ] इत्यञ् । ( अध्वगत् । कलिङ्गत् ) । "अन्येभ्योऽपि दृश्यते" इति क्विपि अनुनासिकलोपः । अग्रे गच्छत्यग्रेगूः । "ऊङ् गमादीनाम्" इति क्वौ अनुनासिकलोपे अकारस्योकारः, अयं च धातोरुकारइति अग्रेग्वावित्यादावुवङादेशे प्राप्ते "ओः सुपि" इति यण् । "तत्पुरुषे कृति" इत्यलुक् । ( गमी ) । "गमेरिनि" इति "भविष्यति गम्यादयः" इति भविष्यदर्थे च । ( आगामी ) । आङि च णिदिति णित्त्वात् वृद्धिः । अयमपि गम्यादिपाठात् भविष्यति, अयं बाहुलकात् केवलादपीति गामीत्यपि भवति । ( ग्रामगमी । ग्रामगामी ) । श्रितादिषु गमिगामीत्यादिना तत्पुरुषः । "अकेनोर्भविष्यदाधमर्ण्ययोः" इति क्रुयोगलक्षणां षष्ठी

बाधित्वा एतयोर्योगे द्वितीया । (गमः) । "ग्रहवृदृनिश्चिगमश्च" इति भावे कर्त्तरि च कारके-अप्रत्ययः । एकाहेन गम्यतइत्येकाहगमः । "अश्वस्यैकाहगमः" इति निपातनादप् । अन्यथात्र "परिमाणाख्यायां सर्वेभ्यः" इति परिमाणस्य गम्यमानत्वात् घञ् स्यात् । अत्र सर्वग्रहणमजपोर्बाधनार्थमित्युक्तम् । (निगमः) "गोचर०" आदिना करणाधिकरणयोर्घः । (गत्वा) । "अनुदात्तोपदेश०" इत्यादिना अनुनासिकलोपः । (आगम्य । आगत्य) । "वा ल्यपि" इति अनुनासिकलोपविकल्पः । (गतम्) । "क्तोऽधिकरणे च" इति कर्त्तृकर्मभावाधिकरणेषु क्तः । (ग्रामगतः) । "द्वितीयाश्रित०" इति तत्पुरुषः । गतं च तत्प्रत्यागतञ्च गतप्रत्यागतम् । [ कृतापकृतादीनामुपसंख्यानम् ] इति तत्पुरुषः गतमेव तत्कालं गतप्रत्यागमनेन गतप्रत्यागतमुच्यते । (गन्तुः(१) । "तनिगमि" इत्यादिना तुन् । (गान्त्रम्) "अस्जिगमिनमिहनिविश्यशां वृद्धिश्च" इति ष्ट्रनि वृद्धिः । गन्त्री कम्बलिवाह्यं शकटम् । बाहुलकात् वृद्ध्यभावः । तृतृचावित्यादिना सञ्ज्ञायां तृतृचोरन्यतरो वा । कम्बलः सास्ना तद्योगान्मत्वर्थीयेनिना कम्बलिनो बलीवर्दा उच्यन्ते । तथा च रभसः-'प्रवारेऽप्युत्तरासङ्गे सास्नायामपि कम्बलः' इति । (गात्रम्) । "गमेरा च" इति ष्ट्रनि मकारस्याकारः, (सुगात्री । सुगात्रा) । "स्वाङ्गाच्चोपसर्जनात्" इत्यत्र अङ्गगात्रकण्ठेभ्य इति पक्षे ङीप् । (गौः) । "गमेर्डोः" इति डोप्रत्यये डित्वात् टिलोपः । "गोतो णित्" इति सर्वनामस्थानस्य णित्त्वात् वृद्धिः । अम्शसोस्तु "औतोऽम्शसोः" इति पूर्वपरयोराकारे गां गा इति, "तस्माच्छसो नः पुंसि" इत्यत्र तच्छब्देन प्रथमयोः पूर्वसवर्णदीर्घस्य परामर्शनादिह नत्वं न भवति । ङसिङसोस्तु "ङसिङसोश्च" इति ङसोरेङश्च पूर्वरूपे गोरिति, (गवां समूहो गव्या । गोत्रा) "खलगोरथात्" इति यः, "इनित्रकट्यचश्च" इति यथा संख्याद्यस्यभावात्, स्त्रीलिङ्गौ, यकारादौ प्रत्यये "वान्तो यि" इत्यवादेशः । (गोत्रोऽस्यास्तीति गौत्रिकः,) "एकगोपूर्वाट्ठञ् नित्यम्" इति मत्वर्थे ठञ् । (गोमी) "ज्योत्स्नातमिस्राश्रृङ्गिणोर्जस्विन्नूर्जस्वलगोमिन्मलिनमलीमसाः" इति मत्वर्थे मिनिप्रत्यये निपात्यते । गोर्विकारोऽवयवो वा गव्यम् । "गोपयसोर्यत्" इति षष्ठ्यन्तात् विकारावयवयोर्यत् । (गोः पुरीषं गोमयम्) । गोः पुरीषे मयट्, (गवे हितं गव्यम्) । *उगवादिभ्यो यत्* इति प्राक्क्रीतीयो यत् । गोर्निमित्तं संयोग उत्पातो वा गव्यः । प्राणिनां शुभस्य अशुभस्य वा सूचको महाभूतविकार उत्पातः । *गोद्व्यचोसंख्यापरिमाणाश्वादेर्यत्* इति यत् । गोशब्दात्संख्याश्वादिवर्जितात् द्व्यचश्च तस्य निमित्तं संयोग उत्पातो वेति विषये यदिति सूत्रार्थः । (गोरिदं गव्यम्) । [ "सर्वत्र गोरजादिप्रत्यये यद्वक्तव्यः" ] इति प्राग्दीव्यतीये वार्थे यत् । एवं च तत्र तत्रार्थे सूत्रेण यद्विधानं प्रपञ्चार्थम् । दाराश्च गावश्च दारगवम् । द्वन्द्वात् "अचतुर०" इत्यादावचि निपातितः । अनुगवं शकटम् । गौर्यथा आयतं तथायतमित्यर्थः । "अनुगवमायाम" इति अनुगुशब्दादचि निपात्यते । इह आयाम इति अर्शआद्यजन्तः, तद्वति वर्त्तते । अनुगुशब्दश्चायं *यस्य चायामः* इति अव्ययीभावः, अनुर्यस्यायामवाची तेनान्यस्यायामवतो लक्षणभूतेन समस्यतइति सूत्रार्थः । इह गोरायामः शाकटायामस्य लक्षणं भवति । (आगवीनः) । गवा भूतो य आगतः । यः प्रत्यर्पणात् कर्म करोति स एवमुच्यते । आगवीन इति आगुशब्दात् कारिणि खप्रत्यये निपात्यते । आगुश०दश्च "आङ्मर्यादाभिविध्योः" इति आङो मर्यादावचनस्य पञ्चम्यन्तेन गोशब्देन गोप्रत्यर्पणे वर्त्तमानेनाव्ययीभावे पञ्चमी, "आङ् मर्यादावचने" इति आङः कर्मप्रवचनीयत्वे तद्युक्तत्वात् "पञ्चम्यपाङ्परिभिः" इति विधीयते, गोः पश्चात् अनुगु, "अव्ययं विभक्ति" इत्यादिना पश्चादर्थेऽव्ययीभावः । अनुगवलं पर्याप्तं गन्तुं शीलमस्य अनुगवीनो गोपालकः । "अनुगवलं गामि" इति क्रियाविशेषणाद् द्वितीयान्तादलङ्गामीत्यर्थे खः । तिष्ठन्ति गावो यस्मिन् काले दोहनाय स

---

(१) गन्तासीत्यधिकम् २ पु० ।

कालस्तिष्ठद्गु । वहन्ति आगच्छन्ति गावो दोहनाय यस्मिन् स कालः वहद्गु । श्रयन्ति यस्मिन्काले गोदोहनाय स कालः श्रयद्गु।इति । आयन्ति यस्मिन् काले दोहनाय स कालः अयद्गु इति । "तिष्ठद्गुप्रभृतीनि च" इति अव्ययीभावे निपात्यते । (परमगवः) । "सन्महत्परम०" इति तत्पुरुषे "गोरतद्धितलुकि" इति टच् । टित्वात् स्त्रियां परमगवी । अतद्धितलुकीति वचनात् पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यत्र टच् न भवति । अत्र हि "आर्हादगोपुच्छसंख्यापरिणाट्ठक्" इति गोपुच्छादिव्यतिरिक्तात् प्रातिपदिकात् यथायथं समर्थयुक्तात् आर्हीयेष्वर्थेषु विहितस्य ठकः "अध्यर्द्धपूर्वद्विगोर्लुगसंज्ञायाम्" इति लुक् क्रियते, द्विगुत्वं च "तद्धितार्थोत्तरपद०" इति समासे "संख्यापूर्वो द्विगुः" इति द्विगोश्च "द्विगुश्च" इति तत्पुरुषत्वात् अस्ति टचः प्रसङ्गः, पञ्चगवधन इत्यत्र पञ्च गावो धनमस्येति त्रिपदे बहुव्रीहौ "तद्धितार्थोत्तरपद" इति पूर्वयोः समासे संख्यापूर्वत्वेन द्विगुत्वात् तत्पुरुषत्वे टच् । पञ्चानां गवां समाहारः पञ्चगवम् । "तद्धितार्थे" इति समासे पूर्ववत् द्विगुतत्पुरुषयोश्च टच् , अत्र समासार्थादुत्तरपदादकृत एव समासे समासान्ता इति अकारान्तोत्तरपदद्विगुत्वात् [ आकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत ] इति प्राप्तस्य स्त्रीत्वस्य [पात्रादिभ्यः प्रतिषेध] इति निषेधः । (चित्रा गावो यस्य चित्रगुः) "गोस्त्रियोरुपसर्जनस्य" इति उपसर्जनगोशब्दान्तप्रातिपदिकत्वात् ह्रस्वः, अत्र "गोः पूर्वत्वणित्त्वात्वस्वरेषु" इति स्थानिवत्त्वनिषेधात् न गोतो णित्त्वम् । ननु तत्कालव्याप्त्यर्थाद् गोत इति तपरकरणादेव न भविष्यति, अस्त्वत्र परिहारः चित्रगो चित्रगव इत्यत्र सम्बुद्धौ "जसि च" इति गुणे विकृतं गोरूपमिति स्थाणित्त्वं, नन्वेवमत्राप्यनेन निषेधेन स्थानिवत्त्वकृतमेव णित्त्वं निवार्यतां न तु स्वाश्रयमपीति गोरूपस्याव्याहतत्वात् तदाश्रयं णित्वं स्यादेव, नैष दोषः । यदत्र गोरूपस्य लाक्षणिकत्वाल्लक्षणप्रतिपदोक्तपरिभाषया तदपि न भविष्यति । वृत्तौ तु गोत इति षष्ठ्यन्तमाश्रित्य गोशब्दार्थसम्बन्धिसर्वनामस्थानं णिदिति व्याख्यातमत्र मते न कुत्रापि णित्त्वप्रसङ्गः । यदत्र सर्वनामस्थानं तदन्यपदार्थस्य, सम्बन्धिनो गोशब्दार्थस्य, तपरकरणं त्वोकारान्तोपलक्षणार्थं, वर्णनिर्देशेषु प्रसिद्धत्वात्, तेन द्योशब्दस्यापि णित्कार्यं भवति, अपरे तु ओत इति पठन्तीति चोक्तं वृत्तौ । ( गोऽग्रम्, गोअग्रम् ) । "सर्वत्र विभाषा गोः" इति छन्दसि भाषायां चाति परे वा प्रकृतिभावः । अन्यदा "एङः पदान्तादति" इति पूर्वत्वम् । ( गवाग्रम् ) । "अवङ् स्फोटायनस्य" इति अवङादेशः, अयं च व्यवस्थितविभाषात्वात् गवाक्षमित्यत्र नित्यः, चित्रग्वग्रमित्यत्र "गोः पूर्व"इति स्थानिवत्त्वनिषेधाच्च प्रकृतिभावादि । (गवाश्वम् । गवाविकम् । गवैडकम् ) । अत्र "गवाश्वप्रभृतीनि च" इति समाहार एव द्वन्द्वः, अयं च नियतो गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्वे वृत्तमिति वृत्तावुक्तत्वात् अवङ्भाव इति । "विभाषा वृ०" इत्यादिना पशुद्वन्द्वं विभाषैव तेन गोश्वं गोश्वा इत्यादि । (गङ्गा) "गन् गम्यादेः" इति गन् प्रत्ययः । ( गङ्गाया अपत्यं गाङ्गेयः ) । "शुभ्रादिभ्यश्च" इत्यत्र चकारेणाकृतिगणत्वद्योतनाड्ढक् । तिकादिपाठादपत्येति फिञि गाङ्गायनिरित्यपि भवति । (सर्पति । ससर्प । ससृपतुः । ससर्पिथ । ससृपिव) क्रादिनियमादिट् । (स्रप्ता । सर्प्ता । सर्प्स्यति । स्रप्स्यति) । "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" इति।झलदावकिति प्रत्यये पक्षे मित्त्वादन्त्यादचः परेऽमागमे यणादेशः । अन्यदा गुणः । ( सर्पतु । असर्पत् । सर्पेत् । आशिषि सृप्यात् । असृपत् । असृपताम् ) । लृदित्वादङ् । सिसृप्सति । "हलन्ताच्च" इति सनः कित्त्वान्न गुणो नाप्यमागमः । सरीसृप्यते । "रीगृत्वतः" इति रीक् । ( सरीसृपीति । सरीसर्प्ति । सरीसृप्ति ) । प्रकृतिग्रहणन्यायेन "अनुदात्त०" इति अमागमः । ( सरीसृपः ) । पचाद्यचि "यङोचि च" इति यङो लुकि "न धातुलोपः" इति लघूपधगुणाभावः, यङ्लुगन्तात् इगुपधलक्षणः को वा । ( सर्पयति । अससर्पत् । असीसृपत् ) । "उभयत्र" वा । ( सृप्यः ) । "ऋदुपधाच्च" इति क्यप् । ( सर्पः ) । पचादित्वादच् । ( स्रप्ता । सृप्तः ) । पीठेन स्रप्तुं शीलमस्येति पीठसर्पी, णिनिः "सुप्यजातौ"

इति (पीठसर्पिण इमे पैठसर्पा) "इनण्यनपत्ये" इति प्रकृतिभावं बाधित्वा "नान्तस्य टिलोपे पीठसर्पि" इत्यादिना टिलोपः। (सर्पिः)। "अर्चिशुचिहुसृपिच्छादिच्छर्दिभ्य इसि" इतीस् प्रत्ययः। ( प्रियसर्प्पिष्कः ) उरःप्रभृतित्वात् नित्यं कप्। "इणः षः" इति अपदाद्योः कुप्वोर्विसर्जनीयस्य षत्वम्। ( सृप्रः )। "ऋज्रेन्द्र०" इत्यादिना रक् ॥ ९६३ ॥

यम उपरमे ॥ अत्र मैत्रेयः—उदित्त्वमस्य केचिदिच्छन्तीति। यच्छति। "इषुगमियमाम्" इति छः शिति ( ययाम। येमतुः। ययन्थ। येमिथ। यन्ता। यंस्यति। यच्छतु। अयच्छत्। यच्छेत्। आशिषि यम्यात्। अयंसीत् ) "यमरम०" इति सगिटौ ( यियंसति। यंयम्यते। यंयन्ति। यंयन्तः। यमयति। अयीयमत् ) भोजयतीत्यर्थः। अमन्तत्वात् मित्त्वम्। अस्य च "यमोपरिवेषणे" इति परिवेषणादन्यत्र मित्त्वनिषेधात् आयामयते आयामयतीति भवति। "न पादम्या" इत्यत्रायामग्रहणेन "अणावकर्मकात्" इति कर्त्रभिप्रायप्राप्तस्य परस्मैपदस्य निषेध इति यथायोगमत्रात्मनेपदपरस्मैपदे भवतः (आयच्छते) दीर्घो भवति, व्याप्रियतइतिवार्थः। आयच्छते स्वरूपाणि द्राघयति व्यापारयति वेत्यर्थः। "आङो यमहनः" इति अकर्मकात् [स्वाङ्गकर्मकाच्चेति वक्तव्यम्] इति अकर्मकात्स्वाङ्गकर्मकाच्चाङ्पूर्वादस्मात्तङ्। इह स्वमङ्गं स्वाङ्गं न तु अद्रवन्मूर्त्तिमदित्यादिना लक्षितं पारिभाषिकमिति देवदत्तस्य पाणिमायच्छतीत्यत्र न भवति। उपयच्छते कन्यां, परिणयतीत्यर्थः। *उपाद्यमः स्वकरणे* इति तङ्। अत्र भाष्यम्, इह कस्मान्न भवति स्वं शटकं तमुपयच्छति, अयं यदा स्वं करोति तदा भवितव्यमेव। अत्र वृत्तिकारशिवस्वामिभ्यामिदं भाष्योक्तमस्वस्य स्वत्वेन करणं प्रसिद्धिवशात्पाणिग्रहणविषयउपसंहृतम्(१)। कैयटे तु निष्पादनलक्षणोऽत्र करोत्यर्थो गृह्यते इति, सामान्येनापि वार्त्तिककारेण पाणिग्रहणविशिष्टं स्वकरणं शिवस्वामिजयादित्यावूचतुः। प्रसिद्धत्वादुपायंस्त नतीरित्यादिप्रयोगस्तु साधर्म्यात्। भाष्यकारस्तु स्वकरणमात्रे विशिष्टे स्थित इत्युक्तं, भट्टिकाव्ये च शास्त्राण्युपायंस्त जित्वराणीति सामान्येन प्रयुज्यते। संयच्छते व्रीहीन् उपयच्छते भारम्। आयच्छते वस्त्रम्। "समुदाङ्भ्यो यमो ग्रन्थ"इति समादिभ्यो यमेस्तङ्। यदा तु कर्त्रभिप्रायत्वमुपपदेन प्रतीयते तदा "विभाषोपपदेन प्रतीयमान" इति स्वान् व्रीहीन् संयच्छतीत्यपि। इहाङो ग्रहणमस्वाङ्गकर्मकार्थम्। स्वाङ्गकर्मकात् "आङो यमहनः" इत्येव सिद्धम्। अग्रन्थइति वचनात् उद्यच्छति चिकित्सां वैद्य इति अत्र परस्मैपदमेव, विचिकित्सामधिगन्तुमुद्यमं करोतीत्यर्थः। यदायं यमिर्गन्धने वर्तते गन्धनं सूचनं परेण प्रच्छाद्यमानस्य आविष्करणं तदा "यमो गन्धने" इत्यात्मनेपदम्। परस्मैपदस्य सिचः कित्वादनुनासिकलोपः। (उदायत। उदायसातामित्यादि।) झलि सिज्लोपः। उपयमनार्थत्वे तु "विभाषोपयमने" इति तङ्। तङ्परस्य यमेः सिचः कित्त्वविकल्पनात् उपायत कन्याम्, उपायंस्त कन्यामित्युभयं भवति। उपयमनमिह दारकर्म ( यम्यम् ) "गदमद" इत्यादिना यत्। उपसृष्टात्तु ण्यति विनियाम्यमिति। त्वया नियम्या इति प्रयोगः नियमशब्दात् करोतीति णौ यति द्रष्टव्यः। धातोर्णौ "यमोपरिवेषणे" इति मित्त्वनिषेधात् वृद्ध्या भाव्यम्। (वाचंयमः)। "वाचि यमो व्रते"इति खच्। "वाचंयमपुरन्दरौ च" इति निपातनादलुक्। (संयमः। संयामः) "यमस्समुपनिविषु च" पक्षेऽच्, तदभावे घञ्। एवं समुपनिविभ्योप्युदाहार्यम्। (संयत्) सम्पदादित्वात् "अन्येभ्योऽपि दृश्यते" इति वा क्विपि "गमः क्वौ" इत्यत्र [गमादीनामिति वक्तव्यम्] इति उक्तत्वात् अनुनासिकलोपे तुक्। ( यच्छतीति यमः ) अच् (याम्यम्) प्राग्दीव्यतीयेष्वर्थेषु [यमेश्चेति वक्तव्यम्] इति ण्यः (यमुना) "अर्जियमिशीङ्भ्यश्च" इति उनन् प्रत्ययः। यन्त्रम्। "गृधुजी" इत्यादीना त्रः प्रत्ययः॥ ९६४॥

तप सन्तापे। ( तपति। ततापः। तेपिथ। ततप्थ। तप्ता। तप्स्यति। तपतु। अतपत्।

(१) संस्कृतमिति पाठः।

तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् ) "झलो झलि" इति सिज्लोपः । ( तितप्सति । तातप्यते । तातप्ति । तापयति । अतीतपत् ) । चौरं सन्तापयतीत्यत्र "रुजार्थानां भाववचनानामज्वरेः" इति कर्मणि षष्ठी न भवति तत्राज्वरिसन्ताप्योरिति निषेधात् । ( उत्तपते, वितपते ) । "उद्विभ्यां तपः" इत्यकर्मकात्स्वाङ्गकर्मकाच्च तङ् । अकर्मकत्वं भासनार्थत्वेन । यदाऽयमस्वाङ्गकर्मकस्तदोत्तपति सुवर्णमित्येव भवति । तप्यते तपस्तापसः । अतप्त तपस्तापसः। "तपस्तपःकर्मकस्यैव" इति तपःकर्मकस्य तपेः कर्त्तुः कर्मवद्भावादात्मनेपदम् । अत्र तपेरर्जनमर्थं इति तापसस्तत्र कर्त्ता, यत्रासौ कर्मोपवासादीनि तपांसि तापसं सन्तपन्तीति तत्र तपिर्दुःखानुभावनार्थ इति कर्मणस्तपसो व्यापारो दुःखजननमिति क्रियाभेदाद्विध्यर्थमेतत् । एवकारः सूत्रे च सर्ववाक्यानां सावधारणार्थत्वादर्थप्राप्तस्यैवावधारणस्यानुवादकः। अत्र "तपोऽनुतापे च॰" इति चकारेण कर्मकर्त्तरि चिणो निषेधात्सिच् । अत्रानुतापग्रहणस्य कर्मकर्त्रर्थत्वादन्वतप्त पापेन कर्मणेत्यत्रापि चिण्न भवति, अनुतापादन्यत्रोदतापि सुवर्णं सुवर्णकारेणेति भवितव्यमेव चिणा(तप्यम्) "पोरदुपधात्" इति यत् । (ललाटन्तप आदित्यः) "असूर्यललाटयोर्दृशितपोः" इति यथासंख्यात् ललाटे कर्मण्युपपदे तपेः खशि मुम् (शत्रुन्तपः) "सञ्ज्ञायां भृतॄवृजि" इत्यादिना खचि पूर्वपदस्य मुमागमः (द्विषन्तपः । परन्तपः) "द्विषत्परयोस्तापे" इति खचि णिलोपे "खचि ह्रस्वः" इति ह्रस्वः । द्विषतस्तकारस्य मुमि संयोगान्तलोपः । अत्र द्विषत्परयोरिति द्वितकारनिर्देशात्तकारान्तएव द्विषच्छब्दउपपदेऽयं प्रत्ययः, न तु लिङ्गविशिष्टपरिभाषया द्विषतीशब्दउपपदइति कर्मण्यणि द्विषतीतापइति भवति । तथा तापेरिति ण्यन्तस्य ग्रहणात्केवलादण्यणेव भवति । असंज्ञायां द्विषत्ताप इति, संज्ञायां तु "सञ्ज्ञायां भृतॄवृजि" इत्यादिना खजुक्तः । तपः असुन् । तपश्चरति तपस्यति । *कर्मणो रोमन्थतपोभ्यां वर्तिचरोः* इति रोमन्थतपोभ्यां कर्मभ्यां यथासंख्यं वर्त्तिचरोरर्थयोः क्यङिति क्यङ् । कर्मण इति प्रत्येकसम्बन्धापेक्षमेकत्वम् । "तपसः परस्मैपदं च" इति परस्मैपदम् । ( तपस्या ) क्यङन्तत्वात् "अ प्रत्ययात्" इति स्त्रियामकारः । तपः शीलमस्य तापसः । "छत्रादिभ्यो णः" इति णः । अत्र णेऽण्कृतं कार्यं भवतीति प्रागेवोक्तं, तेन तापसीत्यत्र ङीप् भवति । ( तपस्वी ) । "तपः सहस्राभ्यां विनीनी" इति मत्वर्थे विनिः । अत्रैवार्थे "अण्च" इत्यणि तापसः, तपस्वीत्यत्र "तसौ मत्वर्थे" तकारान्तं सकारान्तं च मत्वर्थे प्रत्यये भमिति भसञ्ज्ञयाऽऽकडारीययाऽनवकाशया "स्वादिष्वसर्वनामस्थाने" इति पदसञ्ज्ञाया बाधात् "ससजुषोरुः" इति रुत्वं न भवति । (तापः) । घञ् । सन्तापाय प्रभवति सान्तापिको रोगः । "तस्मै प्रभवति सन्तापादिभ्यः" इति चतुर्थ्यन्तात्सन्तापशब्दात्प्रभवत्यर्थे ठञ् । ( निष्टपति । निष्टप्तम् ) "निसस्तपतावनासेवने" इति षत्वम्, आसेवनं पौनः पुन्यं ततोऽन्यदनासेवनम् । अयमैश्वर्ये दिवादौ दाहे चुरादौ॥ ९६९ ॥

त्यज हानौ ॥ ( त्यजति । तत्याज । तत्यजतुः । तत्यजिथ । तत्यक्थ । तत्यजिव । त्यक्ता । त्यक्ष्यति । त्यजतु । अत्यजत् । त्यजेत् । त्यज्यात् । अत्याक्षीत् । अत्याक्ताम् । तित्यजिषति । तात्यज्यते । तात्यक्ति । त्याजयति । अतित्यजत् ) त्यागशीलस्त्यागी । संपृचादित्वात् घिनुण् । "चजोः कु घिण्ण्यतोः" इति कुत्वम् । त्याज्यमित्यत्र ण्यति प्रतिषेधे [ त्यजेरुपसंख्यानम् ] इति कुत्वाभावः । ( त्यद् ) "त्यजियजितनिभ्यो डित्" इत्यदिप्रत्यये डित्त्वाट्टिलोपः । (स्यः) "त्यदादीनामः" इति त्यदाद्यर्थे विभक्तिनिमित्तनिबन्धनेऽन्त्यस्यात्वे पररूपे च त्यदादीनामित्यधिकारे "तदोः सः सावनन्त्ययोः" इति तकारस्य सकारः । (त्यौ त्ये) इत्यादौ सर्वनामकार्यं पूर्ववत् । अत्वादिस्त्यदादिप्राधान्येपीष्यतइति परमस्य इत्यादि भवति, अप्राधान्ये तु अतित्यदित्यादि । त्यस्येदं त्यदीयम् । "त्यदादीनि च" इति वृद्धत्वात् "वृद्धाच्छः" इति छः । त्यस्यापत्यं त्यादायनिः । "उदीचां वृद्धादगोत्रात्" इति फिञ्, अगोत्रप्रत्ययान्ताद्वृद्धादपत्ये फिञुदीचां मतेनेति सूत्रार्थः । स्यश्च देवदत्तश्च त्यौ । "त्यदादीनि

सर्वैर्नित्यम्" इति त्यदः शेषः । स च स्यश्च तावित्यत्र त्यदादीनां यत्परं तच्छिष्यतइति वा परस्य तदः शेषः स्त्रियां "त्यदादीनामः" इति विभक्तावत्वे टापि "हल्ङ्याभ्यः" इति सुपो लोपे स्या इति भवति । सन्निपातपरिभाषा "न यासयोः" इति निर्देशाल्लिङ्गादनित्यत्वज्ञापनान्न भवति । अयं ण्यन्तो द्विकर्मक इति सुधाकरादिमतेन नाथतावुक्तं, दृश्यते च प्रयोगः, "त्याजितैः फलमुत्खातैः" "पूषोष्मणा त्याजितमात्रभावः" इत्यादि । "अकथितं च" इत्यत्र गौःपयस्त्यजति गवा पयस्त्याजयतीति प्रयुञ्जानयोः कैयटहरदत्तयोः प्रयोज्यस्य कर्मत्वमनभिमतम् ॥ ९६६ ॥

षञ्ज सङ्गे ॥ (सजति) "दंशसञ्जस्वञ्ज" इत्यनुनासिकलोपः । (ससञ्ज । ससञ्जतुः । ससङ्क्थ । ससञ्जिथ । ससञ्जिव ) । "असंयोगाल्लिट्कित्" इति कित्त्वनिषेधात् "अनिदिताम्" इत्युपधालोपो न भवति । (सङ्क्ता । सङ्क्ष्यति । सजतु । असजत् । सजेत् ) आशिषि कित्वादुपधालोपे ( सज्यात् । असाङ्क्षीत् । असाङ्क्ताम् ) "वदव्रज०" इति वृद्धिः । तत्र हल्ग्रहणं हल्समुदायप्रतिपत्त्यर्थं, (सिसङ्क्षति) "स्तौतिण्योरेव" इत्यषत्वम् । (अभिषजति) । "उपसर्गात्" इति षत्वम् । अभ्यषजदित्यादौ तु "प्राक् सितादड्व्यवायेऽपि" इति षत्वम्, अभिषिषङ्क्षतीत्यत्र "स्तौतिण्योरेव" इति नियमं बाधित्वा "स्थादिष्वभ्यासेन च" इत्यादीना परस्य षत्वं, पूर्वस्य तु "उपसर्गात्" इत्यनेनैव सिद्धम् । अङ्गुलौ संगोऽस्याः अङ्गुलिषङ्गा यवागूः । "समासेऽङ्गुलेः" इति षत्वम् । ( अभिषजति ) "उपसर्गात्" इति षत्वम् ( प्रासङ्गं वहति, प्रासङ्ग्यः ) "तद्वहति रथयुगप्रासङ्गम्" इति द्वितीयान्तात् वहतीत्यर्थे यत् । प्रासङ्गो युगाद्यासङ्गः । (निषङ्गः) । "नौ सञ्जेर्घञ्" इति घञ् प्रत्ययः । घित्त्वात् कुत्वम् । (सक्थि) "असिसञ्जिभ्यः क्थिन्" इति क्थिन् । अजादौ विभक्तौ "इकोऽचि" इति नुमि सक्थीनीत्यादि। तृतीयाद्यजादौ तु "अस्थिदधिसक्थि" इत्यादिना ङित्त्वादन्त्यस्य अनङादेशे "अल्लोपोऽनः" इत्यल्लोपे सक्थ्नेत्यादि । सप्तम्येकवचने अल्लोपस्य "विभाषा ङिश्योः" इति विकल्पितत्त्वात् सक्थ्नि सक्थिनीत्युभयं भवति । अङ्गाधिकारे तदन्तविधेरभ्युपगमात् प्रियसक्थ्नेत्यादावप्यनङ् भवति। यदानङ्विधौ नपुंसकेत्यनुवृत्तं तदस्थ्यादीनां विशेषणं नाङ्गस्येति प्रियसक्थ्ना शुनेत्यादौ लिङ्गान्तरेऽपि भवति । नपुंसकानुवृत्तिस्तु यदृच्छाशब्दानां पुल्लिङ्गानामस्थ्यादीनामनङ् मा भूदिति अस्थिर्नाम कश्चिदित्यादि । नन्वत्र

'अभिव्यक्तपदार्था ये प्रसिद्धा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिषु ॥

इति नास्ति प्रसङ्ग इति चेत्तर्हि मन्दधियामनुग्रहायैवानुवृत्तिराश्रिता, अत्रोदाहरणे सक्थिशब्दोऽस्वाङ्गवाची द्रष्टव्यः। स्वाङ्गवाचिनस्तु "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्" इति षच् समासान्तः प्रियसक्थ इति, स्वमङ्गं चेह स्वाङ्गं न तु पारिभाषिकम्, उत्तरसक्थं, मृगसक्थं, पूर्वसक्थम्, "उत्तरमृगपूर्वाच्च सक्थ्नः" इति तत्पुरुषे टच् समासान्तः । अत्र चकारेणोपमानादित्यनुवृत्तौ फलकमिव सक्थि फलकसक्थमित्यत्रापि भवति । अस्मादेव ज्ञापकात् असामान्यवचनेनापि सक्थिशब्देन उपमानस्य समासः । न विद्यते सक्थि यस्य असक्थि, असक्थः । "नञ् दुस्सुभ्यो हलि सक्थ्योरन्यतरस्याम्" इति पक्षेऽच् समासान्तः । एवं सुदुरोरुदाहार्यम् । एवं सुसक्थः । गौर्याः सक्थीव सक्थि यस्य गौरिषक्थः, "बहुव्रीहौ सक्थ्यक्ष्णोः" इति षच् । यदा गौर्याः सक्थीति षष्ठीसमासस्तदा "अच् प्रत्य०" इत्यत्र अजिति योगविभागादुभयत्र, सुषामादिषु गौरिसक्थः संज्ञायादिति पाठात् षत्वं पूर्वपदस्य ह्रस्वत्वं च ॥ ९६७॥

दृशिर् प्रेक्षणे ॥ ( पश्यति ) "पाघ्रा०" इत्यादिना पश्यादेश इत्संज्ञकाशकारादौ शपि ( ददर्श । ददृशतुः । ददर्शिथ । दद्रष्ठ । ददृशिव ) "विभाषा सृजिदृशोः" इति थलि इडभावपक्षे "सृजिदृशोर्झल्यमकिति" इति अकिति झलादौ अमागमविधानात् अमि यणि "व्रश्च" इत्यादिना षत्वं च । ( द्रष्टा । द्रक्ष्यति ) । षत्वं, "षढोः कः सि" इति कत्वं ( पश्यतु ।

पश्येत्। आशिषि दृश्यात्। अदर्शत्, अदर्शताम्)। "इरितो वा" इत्यङि "ऋदृशोऽङि गुणः" इति गुणः। अङभावे "न दृशः" इति क्सनिषेधात् सिच्यमि यणादेशे हलन्तलक्षणायां वृद्धौ (अद्राक्षीत्। दिदृक्षते) "ज्ञाश्रुस्मृदृशां सनः" इति सनन्तात्तङ्। "हलन्ताच्च" इति सनः कित्त्वात् न गुणः, नाप्यमागमः। (दरीदृश्यते) रीक्। (दर्द्रष्टि। दर्द्रष्टः) लोटि हेर्धित्वेऽसागमे षत्वष्टुत्वजश्त्वेन दर्द्रड्ढि। दर्दृशानि। आटि "नाभ्यस्तस्य" इति गुणनिषेधः। लङि तिप्सिपोः अदर्द्रक्। *क्विन्प्रत्ययस्य कुः* इत्यत्र क्विन् कुरिति वक्तव्ये प्रत्ययग्रहणं यस्मात् क्विनस्ति तस्य सर्वत्र पदान्ते कुत्वार्थमिति षत्वं बाधित्वा शकारस्यान्तरतम्यात्कुत्वेन खकारे "वावसाने" चर्त्वं ककारः। दर्शयति रूपतर्कं कार्षापणम्। (अदीदृशत्। अददर्शत्) "उर्ऋत्" वा। दृशेः सर्वत्र प्रयोज्यस्य रूपतर्कस्य कर्मत्वं, यदायं दृशिश्चक्षुःसाधने ज्ञानविशेषे वर्त्तते तदेदमुपसंख्यानं, यदा तु ज्ञानमात्रवचनस्तदा बुद्ध्यर्थत्वादेव सिद्धम्। तत्र बुद्ध्यर्था ज्ञानसामान्यवचना न तु विशेषवचना इति स्थितं, यदा तु ण्यन्तादात्मनेपदं तदा [अभिवादिदृशोरात्मनेपदउपसंख्यानम्] इति प्रयोज्यस्य कर्मत्वविकल्पनात् दर्शयते रूपतर्केण कार्षापणं रूपतर्कमित्युभयं भवति, पश्यन्ति भृत्या राजानं, दर्शयते भृत्यान् राजा भृत्यैरिति वा। संपश्यते [दृशेश्चेति वक्तव्यम्] इति संपूर्वात् अकर्मकात् तङ् (संददृशे। संद्रक्ष्यते। संपश्यताम्। समपश्यत। संपश्येत। आशिषि संदृक्षीष्ट। समदृक्षत) लिङ्सिचोः कित्वात् न गुणः, नाप्यमागमः। झलि सिज्लोपे प्रत्ययलक्षणेन "षढोः कः सि" इति कत्वं न भवति सिज्लोपस्य प्रत्ययलक्षणेऽसिद्धत्वादिति तत्रोक्तम्। कर्मणि दृश्यते (अदर्शि) स्यादिषु पक्षे चिण्वदिटि (दर्शिष्यते। द्रक्ष्यते। अदर्शिषाताम्। अदृक्षाताम्। दर्शिषीष्ट। दृक्षीष्ट। दर्शिता) द्रष्टेत्युभयं भवति (दृश्यम्) "ऋदुपधाच्च" इति क्यप् (उत्पश्यः) "पाघ्राध्माधेट्दृशःशः" इति उपसृष्टात् कर्त्तरि शे पश्यादेशः। दर्शनं पश्यः। अत्र "पश्यार्थैः" इति निपातनात् भावे शः। अदर्शनमित्यादिनिर्देशात् ल्युडपि भवति। असूर्यंपश्या राजदाराः। गुप्तिपरं चैतत्। एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि न पश्यन्ति इति "असूर्यललाटयोः" इति खश्। अत एवासूर्येति निर्देशात् दृशिना नञ्संबन्धेन असमर्थत्वेऽपि समासः। (उग्रंपश्यः)। "उग्रंपश्य" इत्यादिना क्रियाविशेषणे कर्मण्युग्रशब्दउपपदे खशि निपात्यते (तादृक्) "त्यदादिषु दृशोऽनालोचने कञ् च" इति त्यदादिषु कर्मसूपपदेषु आलोचनात् चक्षुर्विज्ञानात् अन्यत्र वर्त्तमानात् दृशेः कञ् प्रत्ययः। चकारात् क्विन्, कञः कित्वात न गुणः, (तादृशी)। "टिड्ढाणञ्"इत्यादिना ङीप्, (तादृक्षः), [क्सश्च वक्तव्यः]इति क्सश्च। "आ सर्वनाम्नः" इति दृग्दृशवतुषु परतः सर्वनाम्नोऽन्त्यस्याकारः। [दृक्षे चेति वक्तव्यः] इति चाकारः (सदृक्। सदृशः। सदृक्षः) दृग्दृशवतुषु इति समानस्य सभावे [दृक्षे चेति वक्तव्यम्] इति दृक्षे च सभावे, अत एव दृगादिषु सभाववचनात् समानान्ययोश्चेति व्यक्तव्याद्वा कञ्। क्विन् कः। समानान्ययोरपि उपपदयोर्भवति। सदृशीत्यत्र पूर्ववन्ङीब् भवति। (परलोकदृश्वा)। "दृशेः क्वनिप्" इति कर्मण्युपपदे भूते क्वनिप्। स्त्रियां "वनो र च"इति ङीप्। (परलोकदृश्वरी। सुदर्शनः) [भाषायां शासियुधिदृशिभ्यो युज्वक्तव्यः] इति खलोऽपवादो युच्। कन्यादर्शं वरयति। यां यां कन्यां पश्यति तां तां वरयतीत्यर्थः। "कर्मणि दृशिविदोः साकल्ये" इति कर्मण्युपपदेऽस्मात् साकल्ये गम्ये णमुल्। (पशुः)। "अर्दिदृशि" इत्युप्रत्ययः पशादेशश्च। यदायमसत्त्ववचनस्तदा चादित्वान्निपातत्वं, यथा लोधं नयन्ति पशुमन्यमाना इति, पशु सम्यगिति ह्यत्रार्थः। (दर्शनः)। "भूदृशि" इत्यादिना ऽनच्। (दृक्) संपदादित्वात् क्विप्। क्तिनपीष्यत इति क्तिनि (दृष्टिः) ॥ ९६८ ॥

दंश दंशने ॥ दंशनं दंष्ट्राव्यापारः। अत एव निर्देशादनुनासिकलोप इति स्वामी (दशति) तत्रापि "दंशसञ्ज"इति अनुनासिकलोपः शपि। (ददंश ददंशतुः। ददंशिथ। ददंष्ठ। ददंशिव। दंष्टा। दङ्क्ष्यति। दशतु। अदशत्। दशेत्। दश्यात्) "क्दिाशिषि" इति यासुटः कित्वा-

दनुनासिकलोपः ( अदाङ्क्षीत् । अदांष्टाम् ) "वदव्रज" इति वृद्धिः । ( दिदङ्क्षति । दन्द्श्यते ) "लुपसदचरजपजभदहदशगॄभ्यो भावगर्हायाम्" इति यङ् भावगर्हायाम् । "जपजभदहदश" इत्यभ्यासस्य नुक् ( दन्दंशीति । दन्दंष्टि । दन्दष्टः ) यङ्विधौ नुग्विधौ च दशेति कृतनलोपस्य निर्देशात् यङ्लुकि अकृङित्यपि लोपो नुक् च भवति ( दंशयति । अददंशत् । दंदशूकः ) । "यजजपदशां यङः" इति यङन्तादूकप्रत्यये "अतो लोपः" "यस्य हलः" इत्यल्लोपयलोपौ । ( दंष्ट्रा ) "दाम्नी" इत्यादिना ष्ट्रन् । अजादिषु दर्शनात् टाप्, अत्रैव पाठात् नलोपाभावश्च ष्ट्रनि, दशेति नलोपनिर्देशस्तु करणे ल्युडर्थः, दशनइति, दंष्ट्री । "व्रीह्यादिभ्यश्च" इति मत्वर्थीय इनिः । मूलकोपदंशं भुङ्क्ते, मूलकेन उपदंशमिति वा । "उपदंशस्तृतीयायाम्" इति णमुल् । "तृतीयाप्रभृतीनि" इति समासविकल्पः । वासरूपविधिना क्त्वापि भवति । मूलकेनोपदश्यते । उक्तं च सर्वत्रैवात्र प्रकरणे क्रियाभेदे सति वासरूपविधिना क्त्वापि भवतीति । मूलकोपदंशमित्यत्र मूलकस्य भुजिनैवान्वयो न दंशिना । न ह्यत्र मूलकेन करणेनान्य उपदश्य भुङ्क्त इत्यर्थः । ननु तेन तृतीयान्तस्योपदशिना सामर्थ्याभावात् उपपदत्वं नेति कथं प्रत्ययः, वचनं दशनोपदंशं भुङ्क्तइत्यत्र सावकाशमुच्यते । यद्यत्रैव स्यात् करणइत्येव ब्रूयात् । तृतीयायामिति वचनात्तु सर्वत्र भविष्यति । तद्धि तृतीयान्तस्योपदशिना आर्थेऽप्यन्वये यथा स्यादिति, अस्ति चात्रार्थोऽन्वयः, कर्मापेक्षस्योपदंशेः सन्निहितेन मूलकेन संबन्धात् ॥ ९६९ ॥

कृष विलेखने ॥ विलेखनमिहाकर्षणं, तथा च पुरुषकारे कर्षतिश्चाकर्षणे प्रसिद्ध इति द्विकर्मकोऽयं, कर्षति शाखां ग्रामम् । (चकर्ष । चकृषतुः । चकर्षिथ । चकृषिव । क्रष्टा । कर्ष्टा) "अनुदात्तस्य चर्दुपधस्य" इत्यत्रास्विकल्पः ( कर्क्ष्यति । क्रक्ष्यति । कर्षतु । अकर्षत् । कृषेत् । कृष्यात् । अकृक्षत् । अकृक्षताम् ) "शल इगुपधा०" इति क्सः । यदा "स्पृशमृशकृषतृपदृपां सिज्वा" इति सिच् तदा पूर्वमेवासागमविकल्पे हलन्तलक्षणायां वृद्धौ ( आकार्क्षीत् । अक्रार्ष्टाम् । अक्राक्षीत् । अक्राष्टामित्यादि । चिकृक्षति ) । "हलन्ताच्च" इति सनः कित्त्वान्न गुणो नाप्यमागमः । ( चरिकृष्यते । चरिकर्ष्टि । चरिक्रष्टि चरिकृषीति । चरीकृष्टः । चरिक्रष्ट इत्यादि ) । लोटि हेर्धित्वष्टुत्वजश्त्वयोरमागमपक्षे ( चरीक्रड्ढि ) । लङि तिप्सिपोः हल्ङ्यादिलोपे च अचरीकर्ट् । अमागमपक्षे अचरीक्रट् । एवं वचनान्तरेषु सर्वेषु रिक्रीकोश्च उदाहार्यम् । कर्षयति शाखां ग्रामं देवदत्तं यज्ञदत्तः ( अचीकृषत् । अचकर्षत् ) "उर्ऋद्वा" । अत्र कृषेः प्रापणार्थत्वेऽपि अस्ति फलतया गतेः प्रतीतिरिति गत्यर्थत्वात् "गतिबुद्धि" इति प्रयोज्यस्य कर्मत्वम्, अत्र ग्रहणमुपसर्जनीभूतयापि गत्या तदर्थत्वे लिङ्गम्, अन्यथा ण्यन्तस्य गमनार्थ इति किं णिग्रहणेन । अत एव तत्र नीवह्योः प्रतिषेधः कृतः । कर्मणि लादयो नयत्यादिवन्नेयाः । (कृष्यम्) । "ऋदुपधाच्च" इति क्यप् । कर्षतीति कृषः । इगुपधलक्षणः कः । पाण्युपकर्षं पयः पिबति, पाणिना उपकृष्य, पाणावुपकृष्य वा पयः पिबतीत्यर्थः । "सप्तम्यां चोपपीडरुधकर्षः" इति सप्तम्यन्ते चशब्दात् तृतीयान्ते च उपपदे उपपूर्वात् अस्मात् णमुल् । तृतीयाप्रभृतित्वात् समासविकल्पनात् पाणावुपकर्षम्, पाणिनोपकर्षमित्यपि भवति । क्रियाभेदेन वासरूपेण क्त्वापि भवतीति प्रागेवोक्तम् । अत्र णमुल्विधावुपसर्गग्रहणं पीडेरेव विशेषणमिति भाववृत्तौ, भट्टिकारस्त्वतन्त्रं मन्यते । यदाह धनु ररिभिरसह्यमुष्टिपीडं दधान इति । इदं तावत् साहसमात्रं, यदाचार्येण प्रयुक्तस्यातन्त्रत्वाङ्गीकरणं, यदपि पीडिनैव संन्बधकथनं तदपि न न्याय्यं, बह्वच्कस्यास्य पूर्वनिपातायोगात्, अत एव वृत्तिन्यासपदमञ्जर्यादिषु संबन्धोऽङ्गीकृतः । कर्ष्टा शाखां, क्रष्टा शाखाम् । अत्र तृनि "ञ्नित्यादेर्नित्यम्" इति प्रकृतेराद्युदात्तत्वेऽप्युपदेशावस्थायां कृषेरनुदात्तत्वात् अमागमविधौ चोपदेशग्रहणानुवर्त्तनात् पक्षे ऽमागमो भवत्येव । अयं तुदादावपि ॥ ९७० ॥

दह भस्मीकरणे ॥ ( दहति । ददाह । देहतुः । देहिथ । ददग्ध ) थलि भारद्वाजनियमा-

दिह्विकल्पः । तत्रानिट्पक्षे "दादेर्धातोर्घः" "झषस्तथोर्धोऽधः," "झलां जश् झशि" इति घत्वधत्वजश्त्वानि (दग्धा । धक्ष्यति ) हकारस्य घत्वे "एकाचः" इति भष्भावेन दकारस्य धकारे धकारस्य "खरि च" इति चर्त्वं ( दहतु । अदहत् । दहेत् । दह्यात् । अधाक्षीत् ) घत्वादि पूर्ववत् । अदाग्धाम् , झलि सिज्लोपः ( दंदह्यते ) "लुपसद" इत्यादिना यङः "जप-जभ" इति नुक्, ( दंदग्धि । दाहयति । अदीदहत् । परिदाही ) विनुण् । ( निदाघः । अव-दाघः । परिदाघः ) संज्ञायां मघमेघनिदाघावदाघा इति न्यङ्क्वादिपाठात् कुत्वं, दहनः ॥९७१॥

मिह सेचने ( मेहति । मिमेह । मिमेहिथ । मिमिहिव ) क्रादिनियमादिट् ( मेढा ) ढत्व-धत्वष्टुत्वढलोपगुणाः ( मेक्ष्यति ) षत्वकत्वे, ( मेहतु । अमेहत् । मेहेत् । मिह्यात् । अमि-क्षत् ) शलइगुपधात्" इति क्सः । ( मिमिक्षति ) "हलन्ताच्च" इति सनः कित्त्वान्न गुणः । ( मेमिह्यते । मेमेढि । मेमीढः ) ढलोपौ, दीर्घः ( मेहयति । अमीमिहत् । मेढ्रम् ) "दाम्नी" इत्यादिना ष्ट्रन् । (मेघः) अचि,संज्ञायां मेघेति न्यङ्क्वादिषु पाठात् कुत्वं, (मीढ्वान् ) सा-ह्वान्मीढ्वांश्चेति क्वसावद्वित्वानिट्त्वोपधादीर्घत्वढत्वानि निपात्यन्ते ( मिहिरः ) इषिमि-हीत्यादिना किरच् । स्कन्दादय एतदन्ता अनुदात्ता उदात्तेतः ॥ ९७२ ॥

कित निवासे रोगापनयने च ॥ अयमुदात्तेत् । गुपिवदयमपि नित्यसन्नन्तः ( चिकि-त्सति ) "गुप्तिज्" सन् । अस्य सनो ऽनार्द्धधातुकत्वान्नेटःप्रसङ्गो नापि गुणस्य । अत्र वृत्तौ व्याधिप्रतीकारे सनिति यदुक्तं तदुपलक्षणं, यतः स्वयमेव "क्षेत्रियच् परक्षेत्रे चिकित्स्यः" इत्यत्र निग्रहापयननाशनाद्यर्थान् वक्ष्यति, तथा च य एवं विद्वान्विचिकित्सतीत्यादौ संशयेऽपि प्रयुज्यते, निघण्टुरपि–'विचिकित्सा तु संशय' इति ( चिकित्सिपति । इच्छासनन्तादेव सन्-प्रतिषेधः, केतयतीति चौरादिकस्य । अत्राभरणकारो गुपादिसूत्रे गुप्तिज्किद्भ्य इत्यनुक्रम्य गुपादिष्वनुबन्धकरणमात्मनेपदार्थमिति भाष्ये वार्त्तिके चोक्तत्वात्कित् परस्मैपदिषु पठितोऽपि आत्मनेपदी । न च गुपादिष्विति बहुवचनं वक्ष्यमाणमर्थापेक्षमिति वक्तुं युक्तं, यतस्तु खलु तत्र गुप्तिज्किदित्यनुक्रम्य गुपादिष्वित्युक्तमित्याह । कैयटे तु क्रमदर्शनाय कितिः पठितो न त्वयमनुदात्तेदिति । हरदत्तोऽपि गुपादिष्विति बहुवचनं मान्वधसूत्राभिप्रायं कितिस्तु परस्मै-पदीत्याह । इन्दुरपि गुप्तिजावनुदात्तेतौ न कितिः, तस्य चिकित्सतीत्येव प्रयोग इति, एवं स्वामिकाश्यपादयोऽपि । एवं बहुवचनं मान्वधसूत्राभिप्रायम् , एवं बहुभिर्महाग्रन्थैर्विरोधा-त्परस्मैपदिषु पाठाच्चाभरणाद्युक्तं यत्किंचित्(१) ॥ ९७३ ॥

दान खण्डने ॥

शान तेजने ॥ इमावपि नित्यसनन्तौ स्वरितेतौ ( दीदांसति । दीदांसते । शीशांसति । शीशांसते ) "मान्बध" इत्यादिना सनीत्वे च कृतेऽभ्यासस्य दीर्घः, अयं नार्द्धधातुक इति नेट्प्रसङ्ग इत्युक्तम् । दानेरार्जवे, शानेर्निशान, इति वृत्तावर्थविशेषे गायं सनुक्तः ( दानयति । शानयतीत्यादि चौरादिकस्य ॥ ९७९ ॥

डुपचष् पाके ॥ इतो वहत्यन्ता अनुदात्ताः स्वरितेतः (पचति । पपाच । पेचतुः । पपक्थ । पेचिथ । पक्ता, पक्ष्यति । पचतु । अपचत् । पचेत् । पच्यात् । अपाक्षीत् । पचते । पेचे । पक्ता । पक्ष्यते । पचताम् । अपचत । पचेत । पक्षीष्ट । अपक्त । अपक्षाताम् , ) झलि सिज्लोपः । स्वामिदासौ पचत इत्यत्र दासधर्मस्य स्वामिन्यारोपात् परस्मैपदम् । पचेते इत्यत्र स्वामिधर्मस्य दासे समारोपात्तङिति कैयटादौ ( पिपक्षति । पिपक्षते । पापच्यते । पापक्ति । पापक्तः ) कृष्टे स्वयमेव पच्यन्त इति कृष्टपच्याः । राजसूयादौ क्यपि निपात्यते, कर्मकर्त्तरि निपातनमिति वृत्तिः । ( पचः ) । अच् । श्वानं पचतीति श्वपचः । पचादिपा-ठसामर्थ्यात्कर्मोपपदादप्यच् । उक्तं च—

( १ ) चिन्त्यमिति २ पु० पा० ।

अज्विधिः सर्वधातुभ्यः पच्यन्ते च पचादयः।
अणूबाधनार्थमेव स्यात् सिध्यन्ति श्वपचादयः॥

इति (श्वपाकः। मांसपाकः। पिण्डपाकः। कपोतपाकः) अत्र न्यङ्क्वादिपाठात्कर्मण्यणि कुत्वम् (दूरेपाकः। फलेपाकः) न्यङ्क्वादिपाठादचि वृद्धिकुत्वे। "तत्पुरुषे कृति" इत्यलुक्। न्यङ्क्वादिपाठादेव चेमौ कर्मकर्त्तरीति वृत्तौ। क्षणेपाकइति केचित्पठन्ति, दूरेपाका फलेपाकेति टाबन्तावन्ये। उकारान्तावपरे (दूरेपाकुः) फलेपाकुरिति उप्रत्ययो निपातनादिति वृत्तौ (प्रस्थंपचः। मितंपचः। नखंपचः) "परिमाणे पचः" इति "मितनखे च" इति परिमाणवाचिनि कर्मण्युपपदे मितनखयोश्च खच्। उत्पचिष्णुः। "अलंकृञ्" इत्यादिनेष्णुच् (पचेलिमाः शालयः) [केलिमर उपसंख्यानम्] इति केलिमर्। अयं कर्मकर्त्तरीति वृत्तिः। रेफ "उपोत्तमं रिति" इति स्वरे विशेषणार्थः। पक्त्रिमम्। "ड्वितः क्त्रिः" इति क्त्रिप्रत्यये "क्त्रेर्मम्नित्यम्" इति मप् (पाकेन निर्वृत्तं पाकिमम्) ['भावप्रत्ययान्तादिमप् वक्तव्यः'] इति इमप् (पक्तिः) "स्थागापापचः" इति क्तिन्। षित्वादङि पचा। (पक्वः। पक्ववान्) इति "पचो वः" इति निष्ठातकारस्य वकारः। तस्य पूर्वत्रासिद्धत्वाज् झल्परत्वात्" चोः कुः" इति कुत्वम्। प्रपक्वानि फलानीत्यत्र "कुमति च" इति कवर्गवत्युत्तरपदे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य प्राप्तं णत्वं [युवादीनां प्रतिषेधः] इति न भवति (पाकः। पचनम्) मांसस्य पाको मांस्पाकः। मांसपाकः। एवं मांसस्य पचनं (मांस्पचनम्। मांसपचनम्।) मांसस्य पचि युड्घञोरिति पक्षेऽन्तलोपः। (पचनः) "भूशीग्त्यादिना युच्। अयं द्विकर्म्मक इति नाथतावुक्तं, तेन तण्डुलानोदनं पचतीति भवति। अत्र कैयटकारः। अत्र विक्लेदनोपसर्जननिवर्तनार्थो धातुरिति तण्डुलानां विक्लेदनापेक्षं कर्मत्वम्। ओदनस्य तु प्रधानभूतनिवर्त्तनापेक्षमिति तण्डुलानोदनं पचतीतिप्रयोगः। प्रकृतिविकाराभावविवक्षायां तण्डुलैरोदनं पचतीति साधकतमत्वविवक्षायाम्। उदुम्बरः फलं पच्यते। [दुहिपच्योर्बहुलं सकर्म्मकयोः] इति कर्त्तुः कर्मवद्भावः। अत्र कैयटो वृक्षस्य कर्तृत्वविवक्षायामन्यतमप्राप्ते वचनम्। अन्ये त्वाहुः। पचिरत्र विषये द्विकर्म्मकः। वृक्षस्य पाकमन्तरेण फलपाकासम्भवात् वृक्षोऽकथितं कर्म्म। तस्यैव च यदा कर्तृत्वविवक्षा तदाऽयं कर्म्मवद्भावः। एवंविधे विषये कर्म्मवद्भाव इष्यते। न पुनरोदनं पचतीत्यादाविति। व्यक्तीकरणे पच्चत इत्यादि गतम्॥ ९७६॥

षच समवाये॥ केचिदमुं न पठन्ति ते ष्टुविशासिगुणेन च यत्सचत इति भाष्यप्रयोगं नतूदरेण संख्या सचयइत्यादिप्रयोगं षच सेचनइत्यस्यानुदात्तेतो धातूनामनेकार्थत्वात्समवायार्थस्य सम्बध्यमानकर्तृके व्यापारे वर्त्तमानस्य समर्थयन्ते। अन्ये तु षच समवाये पच व्यक्तायां वाचीति परस्मैपदिषु गतस्य चकारान्तस्य स्थानेऽमुं पठन्ति। यदाह "अकथितं च" इत्यत्र हरदत्तः। सचतिः सर्वतः सम्बध्यतइति वृत्तिमुपादाय षच समवाये स्वरितेत्। केचित् परस्मैपदिषु धातुमेनं पठन्ति। षच समवाये रपलप व्यक्तायां वाचीति, तथाहुः सच सेवनइत्यस्यानुदात्तेतोऽनेकार्थत्वाद्धातूनां समवाये वृत्तिरिति। पुरुषकारे तु हरदत्तोक्तमनुक्रम्य सचतइति भाष्यानौचित्यात्परस्मैपदिषु पाठोऽयुक्त इत्युक्तम्। एवं षच सेचनइत्यस्यानुदात्तेतोऽनेकार्थत्वाद्धातूनां समवाये वृत्तिरिति हरदत्तोक्तं प्रौढिवादमात्रम्। न्यासे तु सचतइत्यस्य समवायइत्येव धातुरुक्तः, एवञ्च षचेत्येव परस्मैपदिषु पाठः। चान्तकाण्डं चैवमनुसृतं भवति। एवमेव मैत्रेयरक्षितादयः। शाकटायनक्षीरस्वामिनौ तु सप्तसप्तीश्चोदाहृत्य सचेति कश्चित्पठतीत्याहतुः (सचति) सचतइत्यप्याहेत्युक्तम्। एवं च न्यासकारादीनां बहूनामभिमतत्वादयं धातुरस्माभिः पठितः। अयं च पचिं पचिमित्यादौ व्याघ्रभूतिकारिकायां चकारान्तानामनिटां परिगणनात्सेट्। अनिटां मध्ये पाठस्तु स्वरितेत्त्वसाम्यात्। (सचति। ससाच। सेचतुः। सेचिथ। सेचिव। सचिता। सचिष्यति। असचत्। सचेत्।

आशिषि सच्यात् । असचीत् । असाचीत् ) "अतो हलादेः" इति वा वृद्धिः । (सिसचिषति) "स्तौतिण्योरेव" इत्यषत्वम् ( सासच्यते । सासक्ति । साचयति । असीषचत् ) सिषाचयिषतीत्यत्र णेः सनि षत्वम् । सचतइत्यादि सेचनार्थवत् ॥ ९७८ ॥

भज सेवायाम् ( भजति । बभाज । भेजतुः । भेजिथ । बभक्थ । भेजिव ) "तृफलभजत्रपश्च" इति किति लिटि सेटि थलि च परत्वादेत्वाभ्यासलोपौ ( भक्ता । भक्ष्यति । भजतु । अभजत् । भजेत् । भज्यात् । अभाक्षीत् । बिभक्षति । बाभज्यते । बाभक्ति । भाजयति । अबीभजत् । भजते । भेजे । भक्तासे । भक्ष्यते । भजताम् । अभजत । भजेत । भक्षीष्ट । अभक्त । अभक्षाताम् । बिभक्षते ) ( विभक्तव्यो विभज्यः ) "द्विवचनविभज्योपपदे" इति निपातनाद्यत् ( जन्मभाक् ) "भजो ण्विः" इति कर्म्मोपपदादस्माण्ण्विः ( भागी ) संपृचादित्वाद्धिनुण् । ( भागः ) "खनो घ च" इति चशब्दात् घञ् कुत्वम् । सुभगस्य भावकर्म्मणी सौभाग्यम् । ब्राह्मणादिपाठात् ष्यञ् । "हृद्भग" इत्युभयपदवृद्धिः । एवं दौर्भाग्यमपि । सुभगाया अपत्यं सौभागिनेयः । "कल्याण्यादीनामिनङ्" इतीनङादेशोऽन्त्यस्य पूर्ववदुभयपदवृद्धिः । एवं ( दौर्भागिनेयः । भागः ) घञ् । भागोऽस्मिन् वृद्धिरायो लाभः शुल्क उपदा वा दीयते भाग्यं शतम्, भागिकं शतम् । "भागाच्च"इति दीयमानवृद्ध्याद्यादीनामन्यतमोपाधिकात्प्रथमान्तादस्मिन्निति सप्तम्यर्थे यत् । चकाराट्ठञ् । भाग एव भागधेयम् । "भागरूपनामभ्यो धेयः" इति स्वार्थे धेयः । (भ्राता) "नप्तृनेष्टृ" इत्यादिना तृनि आदेशो निपात्यते, भ्रातरावित्यादौ सर्वनामस्थाने "अप्तृन्"इति दीर्घो न भवति, तृन्नन्तत्वादेव नप्त्रादीनां दीर्घे सिद्धे तेषां पुनर्ग्रहणादौणादिकानां संज्ञाशब्दानामेषामेवेति नियमार्थत्वात् । "भ्रातृपुत्रौ" इत्यत्र तु भाष्ये विभक्तीति भ्रातेति व्युदपादि ( भ्रातुरपत्यं भ्रातृव्यः । भ्रात्रीयः ) "भ्रातुर्व्यच्च" इति व्यच्छौ ( भ्रातृव्यः सपत्नः ) "व्यन्सपत्ने" इतिव्यन् ( सौभ्रात्रम् । दौर्भ्रात्रम् ) युवादिपाठाद्भावकर्म्मणोरण् । भ्राता च स्वसा च भ्रातरौ । "भ्रातृपुत्रौ स्वसृदुहितृभ्याम्" इति भ्रातुः शेषः । कल्याणी भक्तिरस्य कल्याणीभक्तिः । प्रियादिषु भक्तिशब्दस्य पाठात् "स्त्रियाः पुंवत्" इति पुंवद्भावो न भवति । दृढभक्तिरित्यत्र कुक्कुटाण्डादिवत्स्त्रीपूर्वपदस्याविवक्षितत्वात्सिद्धम् । प्रतिपादितं चैतद् भाष्यादौ । भञ्जो आमर्दनइति रुधादौ, भज विश्राणने, भाज पृथक्कर्मणीति द्वयं चुरादौ । तथात्रैव भजेति भाषार्थो दण्डके ॥ ९७७ ॥

रञ्ज रागे ( रजति ) "रञ्जेश्च" इति शप्यनुनासिकलोपः ( ररञ्ज । ररञ्जतुः । ररङ्क्थ । ररञ्जिथ ( क्रादिनियमादिट् । थलि भारद्वाजनियमादिड्विकल्पः ( रङ्क्ता । रङ्क्ष्यति । रजतु । अरजत् । रजेत् ) आशिषि रज्यात् "किदाशिषि"इति कित्त्वादनुनासिकलोपः ( अराङ्क्षीत् । अराङ्क्ताम् । अराङ्क्षुः । रजते । ररञ्जे । ररञ्जिषे । रङ्क्तासे । रङ्क्ष्यते । रजताम् । अरजत । रजेत रङ्क्षीष्ट । अरङ्क्त । अरङ्क्षाताम् । रिरङ्क्षति । रिरङ्क्षते । रारज्यते । रारङ्क्ति । रारक्तः) तसौ ङित्त्वादनुनासिकलोपः । रजयति मृगान् । अरीरजत् । "रञ्जेर्णौ मृगरमणे" इति नलोपः । "जनीजॄष्क्नसुरञ्जोऽमन्ताश्च" इति मित्त्वाद्ध्रस्वः । मृगादन्यत्र रञ्जयति पक्षिणः । तथा रमणादन्यत्रापि रञ्जयति मृगान् तृणादिदानेन वशयतीत्यर्थः । कर्मकर्त्तरि "कुषिरञ्जोः प्राचां श्यन्परस्मैपदं च"इति पक्षे श्यन्परस्मैपदयोः रज्यति वस्त्रं स्वयमेव ( रज्यतु । अरज्यत् ) रज्येदिति भवति, अन्यदा यगात्मनेपदयोः रज्यतइत्यादि । श्यनो ङित्त्वाद्यकः कित्त्वाच्च नलोपः, श्यन्विधौ रज्यन्तीत्यत्र "शप्श्यनोर्नित्यम्"इति नित्यनुमर्थः, एते च श्यन्परस्मैपदे प्राचांग्रहणस्य व्यवस्थितविभाषात्वाद्यविषये । तथा च वार्त्तिकम् । [कुषिरञ्जोःश्यन्विधाने लसार्वधातुकवचनमवचने हि लिङ्लिटोः प्रतिषेधः स्यादिविषये च] इति । अत्र लिङाशीर्विषयः, स हि सार्वधातुकप्रतियोगी, तेन रङ्क्षीष्ट वस्त्रं स्वयमेव ( ररञ्जे । रङ्क्तासे । रङ्क्ष्यते । अरञ्जि ) अरङ्क्षातामित्यत्र श्यन्परस्मैपदं न भवति ( रजकः ) । "शिल्पिनि ष्वुन्"

[ रजकरजनरजः सूपसंख्यानम् ] इति नलोपः । रजकस्य वस्त्रं ददातीति भाष्ये प्रयोगादिति । न्यासे त्वक्ङित्यपि रञ्जेर्मित्त्वविधानाल्लिङ्गान्नलोप इति तरङ्गिणीपदमञ्जर्योः । इदं प्रौढिवादमात्रम्, यतो मित्त्वं रञ्जेर्णाविति नलोपे रजयति मृगानित्यत्र ह्रस्वार्थं स्यात् । तथा नलोपाभावे ( अरञ्जि । अराञ्जि ) रञ्जरञ्ज, राञ्जराञ्जमित्यत्र "चिण्णमुलोः"इति दीर्घविकल्पार्थं स्यात् । "दंशसञ्जस्वञ्जां शपि" इत्यत्र भाष्ये तु रजकरजनरजः सुपसंख्यानमिति नलोपं प्रेरयित्वा कित एवैते त्वौणादिका इति परिहृतम् । अत्र कैयटेन रजक इति "क्वुन् शिल्पिसंज्ञयोः"इति क्वुन्प्रत्ययः । रजकीति तु "पुंयोगादाख्यायाम्" इति ङीषि । अपुंयोगे तु ङीषा न भाव्यमिति भाष्यकाराभिप्रायः । रजनमित्यत्र "रञ्जेः क्युन्" इति क्युन्प्रत्ययः, स च बाहुलकादिति द्रष्टव्यः । तेन रजनीति ङीप् भवति । रज इत्यत्र "भूरञ्जिभ्यां कित्" इत्यसुन्प्रत्ययः किद्भवतीत्युक्तम् । एवमेतत्पदमञ्जर्यामपि ( रागी ) संपृचादित्वात् घिनुण् । अत्रैव रजेति निर्देशान्नलोपः ( रजनं रागः ) रज्यतेऽनेनेति वा । "घञि च भावकरणयोः" इति नलोपः ( अन्यत्र स्वयमेव रज्यन्ति प्रेक्षकाणां मनांसि यत्रेति रङ्गः । "हलश्च"इति घञ् । विरागमर्हति वैरागिकः । "छेदादिभ्यो नित्यम्" इति तदर्हतीति विषये ठक् । अत्र "विरागो विरङ्गं च" इति पाठाद्विरङ्गादेशः । ( रजः । असुन् ) विरजीकरोति । "अरुर्मनः" इत्यादिना च्विसलोपौ । "अस्य च्वौ" इत्यकारस्येकारः ( सरजसम् ) "अव्ययं विभक्ति" इत्यादिना साकल्येऽव्ययीभावः । "अव्ययीभावे चाकाले" इति सहस्य सः । "अचतुर" इत्यादिपाठादच् । अयमव्ययीभाव इति वृत्त्यादौ । तेनान्यत्र सरजस्कं पङ्कजमित्येव भवति । यस्तु बहुव्रीहौ सरजसमिति भारविप्रयोगः स वामनालङ्कारे दूषितः, सरजसमित्यव्ययीभाव इति । रजोऽस्यास्तीति रजस्वला । "रजः कृष्यासुती"इत्यादीना मत्वर्थे वलच् । "तसौ मत्वर्थे" इति भसंज्ञया पदसंज्ञाया वाधनात्सकारस्य न रुत्वम् ( रजतम् ) पृषीरञ्जिकिदित्यतच् । तस्य विकारो राजतम् । "प्राणिरजतादिभ्योऽञ्" इति षष्ठ्यन्ताद्विकारेऽञ्प्रत्ययः । अत्र"अनुदात्तादेः"इत्येवाञि सिद्धे पुनरञ्विधानं "मयड्वैतयोः" इति विकारमयटो बाधनार्थमयं दिवादावपि ॥ ९७९ ॥

शप आक्रोशे ॥ इहाक्रोशो विरुद्धानुध्यानम् । ( शपति । शशाप । शेपतुः । शशप्थ । शेपिथ ) क्रादिनियमादिट् । थलि भारद्वाजनियमादिड्विकल्पः ( शप्ता । शप्स्यति । अशपत् । शपेत् । शप्यात् । अशाप्सीत् । अशपाम् । शपते । शेपे । शशासे । शपताम् । अशपत शपेत । शप्सीष्ट । अशप्त । अशप्साताम् । शिशप्सति । शाशप्यते । शाशप्ति । शापयति अशीशपत् ) देवदत्ताय शपते । देवदत्तं शपथेन किं चित्प्रापयतीत्यर्थः । "शप उपालम्भने"इति अकर्त्रभिप्राये तङ्, "श्लाघह्नुङ्" इत्यादिना ज्ञीप्स्यमानस्य संप्रदानत्वाच्चतुर्थी, वाचा शरीरस्य स्पर्शनमुपलम्भनमिति वृत्तिः । अत्र हरदत्तः । त्वत्पादौ स्पृशामि नैतन्मयाकृतमित्येतद्रूपः शपथविशेष इति । भागवृत्तिकारस्य तूपलभनं प्रकाशनं, देवदत्ताय शपते किंचित्प्रकाशयतीत्यर्थः । त्वचा शरीरस्य स्पर्शनमित्यदः कस्य चित्काव्यमिति । कैयटे चोपलम्भनं प्रकाशनमिति । शाकटायनस्तूपलम्भनं प्रकाशनं देवदत्ताय शपतइत्येवं भूतोऽसाविति देवदत्तमाचष्ट इत्यर्थः । अथ वा स्वाभिप्रायस्य परत्राविष्करणमुपलम्भनं शपथः । देवदत्ताय शपते । वाचा मात्रादिशरीरस्पर्शनेन देवदत्ते स्वाभिप्रायं प्रकाशयतीत्यर्थं इति । चन्द्रभोजकौमारास्तु प्रोषितस्य भावयोरुपलब्धव्ययोः किं चिदासेवनमुपलम्भनम्, देवदत्ताय शपतइति प्रोषितस्य देवदत्तस्य भावाभावायोरुपलब्धयोः किं चिदासेवतइत्यर्थः । भोजादयस्तु शपः शपथइति । "शीङ्शपिगमिवञ्चिविजिप्राणिभ्योऽथः" इत्यथः प्रत्ययः ( शबलः ) "शपेर्बश्च"इति कलप्रत्यये बकारश्चान्तादेशः ( शब्दः ) "शाशपिभ्यान्ददनौ" इति दन्, "शब्दवैर०"इति निपातनात् बत्वं, शब्दं करोति शब्दायते । "शब्दवैर०" इति क्यङ् । शब्दं करोति शाब्दिकः । "शब्ददर्दुरं करोति" इति द्वितीयान्तात्करोतीत्यर्थे ठक् ।

माशब्द इत्याह माशब्दिकः । [ तदाहेति माशब्दादिभ्य उपसंख्यानम् ] इति ठक् । एवं नैत्यशब्दिक इत्यादि । अयं दिवादावपि ॥ ९८० ॥

त्विष दीप्तौ ॥ ( त्वेषति । तित्वेष । तित्विषतुः । तित्वेषिथ । तित्विषिव ) क्रादिनियमादिट् । ( त्वेष्टा । त्वेक्ष्यति । त्वेषतु । अत्वेषत् । आशिषि त्विष्यात् । अत्विक्षत् । अत्विक्षाताम् ) "शल इगुपधादनिटः क्सः" । ( त्वेषते । तित्विषे । त्वेष्टासे । त्वेक्ष्यते । त्वेषताम् । अत्वेषत । त्वेषेत । त्विक्षीष्ट । अत्विक्षत । अत्विक्षाताम्, अत्विक्षन्त ) "क्सस्याचि" इत्यलोपः ( तित्विक्षति । तित्विक्षते । तेत्वेष्टि । तेत्विष्टः । ( त्वेषयति ) अतित्विषत् । त्वष्टा ) "त्विषेर्देवतायामकारश्चोपधाया" इति तृन् उपधाया अत्वं, त्वष्टारौ । "ऋतोऽङि" इति गुणे "अप्तृन्" इत्यादिना दीर्घोऽसंबुद्धौ सर्वनामस्थाने । तृन्नन्तत्वादेव सिद्धे नप्त्रादीनां ग्रहणं व्युत्पत्तिपक्ष नियमार्थं संज्ञाशब्दानामेषामेवेति वृत्तौ । त्वष्टुरिदं (त्वाष्ट्रम्) अचामादेरचो वृद्धिरन्त्यलक्षणां वृद्धिं बाधतइति वृत्तौ । (त्विट्) संपदादित्वात् क्विप् । अवपूर्वोऽयं दाननिरसनयोरिति मैत्रेयादयः ॥ ९८१ ॥

यज देवपूजासङ्गतिकरणदानेषु ॥ ( यजति । इयाज । ईजतुः । इयजिथ । इयष्ठ । ईजिव ) क्रादिनियमादिट् । थलि भारद्वाजनियमादिड्विकल्पः । इडभावे झलपरत्वात् "व्रश्च" इत्यादिना षत्वम् । किति "वचिस्वपियजादीनां किति" इति सम्प्रसारणे पुनः प्रसङ्गविज्ञानाद् द्विर्वचनमकिति *लिट्यभ्यासस्योभयेषाम्* इति वच्यादीनां ग्रह्यादीनां चाभ्यासस्य सम्प्रसारणम् । अत्राधिकारादेवाभयेषामिति सिद्धे पुनस्तत्करणम् विध्यत्यादौ परमपि हलादिशेषं बाधित्वा सम्प्रसारणं यथा स्यादिति । ( यष्टा । यक्ष्यति । यजतु । अयजत् । यजेत् ) आशिषि कित्त्वात्सम्प्रसारणे (इज्यात् । अयाक्षीत् अयाष्टाम् । यजते । ईजे । यष्टासे । यक्ष्यते । यजताम् । अयजत । यजेत । यक्षीष्ट । अयष्ट । अयक्षाताम् । यियक्षति । यियक्षते । यायज्यते । यायष्टि । याजयति । अयीयजत् । इज्यते) यकि संप्रसारणे ऐज्यतेत्यत्र लङ्गमङ्गं वापेक्षमाणादडागमादन्तरङ्गत्वात्पूर्वं लादेशः । कृते च लादेशे नित्यत्वादटः पूर्वं यगटोरुभयोरपि । कृताकृतप्रसङ्गित्वाविशेषेण यकि कृते तदन्तस्याङ्गस्य अकृते तु केवलस्येति शब्दान्तरप्राप्त्या अटोऽनित्यत्वं, कृते च यकि नित्यत्वात्सम्प्रसारणे पश्चादजादित्वादाडागमः । नन्वत्राटः प्राप्तिराटा बाध्यते न तु संप्रसारणेनैवेति 'यस्य च लक्षणान्तरेण निमित्तं व्याहन्यते न तदनित्यम्'इति अट्कथमनित्यः । अत्र हरदत्तः–'यस्य च लक्षणान्तरेण' इति न्यायोऽनित्यत्वादिह नाश्रीयत इति, यद्वा सम्प्रसारणं सम्प्रसारणाश्रयं च बलवदिति अटः पूर्वमेव सम्प्रसारणं भविष्यति, अथ वा 'परित्यज्यापवादविषयमुत्सर्गोऽभिनिविशत'इत्याद् पश्चाद्भविष्यतीत्यडागमो नैवात्र प्रसजति । (याज्यं) ण्यति "यजयाच"इति कुत्वनिषेधः । (यागः) ।घञि "चजोः कुघिण्ण्यतोः" इति कुत्वं, सोमेनेष्टवान् (सोमयाजी) "करणे यजः" इति करणवाचिन्युपपदे भूते णिनिः । (यज्वा)। "सुयजोर्ङ्वनिप्"इति भूते ङ्वनिप्, (यजमानः)। "पूङ्यजोः शानन्" इति शानन्, यजमानकर्म्म याजमानं, युवादित्वादण् (यायजूकः) "यजजपदशां यङः" इति यङन्तादूकः प्रत्ययः । अल्लापयलापौ च । ( इष्टिः ) । "श्रुयजिस्तुभ्यः करणे" इति क्तिन् । ( इज्या ) "व्रजयजोर्भावे क्यप्" इति क्यप् (यज्ञः) । "यजयाच०" इति नङ्प्रत्ययः, कुत्वनिषेधः। यज्ञविद्यामधीते वेद वा (याज्ञविद्यिकः)। "क्रतूक्थादिसूत्रान्ताट्ठक्" इति उक्थादिपाठाट्ठक् । याज्ञिकानां धर्म्मं आम्नायो वा (याज्ञिक्यम् )"छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः" इति षष्ठ्यन्ताद्धर्म्माम्नाययोर्ञ्यः । यज्ञमर्हति यज्ञियो (यजमानः)"यज्ञर्त्विग्भ्यां घखञौ" इति द्वियीयान्तादर्हतीत्यर्थे घः । यज्ञकर्मार्हति यज्ञिय ऋत्विक् । [ यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानम् ] इति घः। (ऋत्विक्) ऋतौ यजति ऋतुं यजति ऋतुप्रयुक्तो वा यजतीति "ऋत्विक्" आदिना क्विनि निपातितः ।। नवयज्ञोऽस्मिन्वर्त्तते (नावयज्ञिकः) [ तदस्मिन्वर्त्तत इति नवयज्ञादिभ्य उपसंख्यानम् ] इति ठक् । एवं पाकयज्ञिकः । इष्टम-

नेन (इष्टी) "इष्टादिभ्यश्च" इति प्रथमान्तात्तृतीयार्थे इनिः ( यजुः ) "अर्तिपृवपि"इत्यादिनोसिप्रत्ययः । (ऋग्यजुषम् ) "अचतुर" इत्यादिना द्वन्द्वेऽजन्तो निपात्यते । ( यद् ) । "यजियमितनिभ्यो डित्" इत्यदिप्रत्यये डित्त्वाट्टिलोपः । त्यच्छब्दवत्सर्वनामकार्यं त्यदादिकार्यं च । यस्मिन्काले ( यदा ) । "सर्वैकान्य०" इत्यादिना दाप्रत्ययः । "प्राग्दिशो विभक्तिः"इति विभक्तित्वात्त्यदाद्यत्वम् । यस्मिन्काले ( यर्हि ) "अनद्यतने र्हिल्" । पूर्ववद्विभक्तित्वात्त्यदाद्यत्वम् । यत्परिमाणमस्य ( यावान् ) । "यत्तदेतेभ्यः परिमाणे वतुप्" इतिपरिमाणोपाधिकात्प्रथमान्तादस्येत्यर्थे वतुप् । अर्थादिह षष्ठ्यर्थः परिमाणी । "आ सर्वनाम्नः" इति दृग्दृशवतुपु परेष्वित्याकारः । सौ "अत्वसन्तस्य" इति दीर्घः । "उगिदचाम्" इति नुम् । हल्ङ्यादिसंयोगान्तलोपौ । "उगितश्च" इति ङीपि यावती । "बहुगणवतुडति संख्या" इति संख्यात्वात् यावतां पूरणइति विगृह्य "तस्य पूरणे डट्" इति षष्ठ्यन्तात्संख्याशब्दात्पूरणे डटि कृते "वतोरिथुक्" इति इथुगागमः । यावतिथः । यतरो भवतो देवदत्तः स समागच्छतु । "किंयत्तदो निर्द्धारणे द्वयोरेकस्य डतरच्" इति द्वयोर्मध्ये जातिक्रियासञ्ज्ञाभिरेकस्य निर्द्धारणे पृथक्करणे गम्यमाने स्वार्थे डतरच् । महाविभाषया विकल्पनाद्यो भवतोरित्यपि भवति । यतमो भवतां ब्राह्मणः स आगच्छतु । "वा बहूनां जातिपरिप्रश्ने डतमच्" । जातिश्च परिप्रश्नश्च जातिपरिप्रश्नं समाहारद्वन्द्वस्तद्विषयेभ्यः "किंयत्तद्भ्यो बहूनामेकस्य निर्द्धारणे वा डतमच्"इति डतमच् । अत्र जातिग्रहणं सर्वैरपि सम्बध्यते । परिप्रश्नग्रहणं तु यत्तदोरसम्भवात्किम एव । वाग्रहणमकजर्थम् । यको भवतां ब्राह्मण इति वाक्यं तु महाविभाषया भविष्यति । डतरडतमेति सर्वादौ पाठादेतदन्तयोस्सर्वनामकार्यं पूर्ववत् । नपुंसकाभ्यामनुपसर्जनाभ्यां डतरडतमाभ्यां परयोः स्वमोरमादेशापवादः "अड्डतरादिभ्यः पञ्चभ्य"इत्यदडादेशे डित्त्वाट्टिलोपे च यतरत् । यतमत् इति भवति, यद्ययं डिन्नस्यात्सोरदादेशे कृते"अतो गुणे"इति पररूपत्वं बाधित्वा प्रथमयोः पूर्वसवर्णदीर्घः स्यात्, अमादेशे तु स्थानिवद्भावेन"अमि पूर्वो"भविष्यतीति न दोषः। एवं तर्हि पूर्वसूत्रादमनुवर्त्य सोरप्यमं कृत्वा 'अड्डतरादिभ्य'इति पञ्चम्याः षष्ठीं प्रकल्प्य द्वयोरमोः स्थानेऽदादेशः कार्यः किं डकारेण, किं चैवमकारेणापि नार्थः, दकार एव तु विधेयः, स च "आदेः परस्य"इत्यमोऽकारस्य भविष्यति । मकारस्य च संयोगान्तलोपे कतरत् कतमदितीष्टं सेत्स्यति । सत्यं सिध्यति । हे कतरदित्यादौ हे कुण्डेत्यादिवत् "एङ्ह्रस्वात्" इति सम्बुद्धिसम्बन्धिनो हलो विधीयमानो लोपः स्यात्तस्माड्डकारोकारवांश्च कर्त्तव्यः (यका) "प्रत्ययस्थात्" इतीत्वं "न यासयोः"इति निषिध्यते । (यथा) । यः प्रकारः, "प्रकारवचने थाल्"इति थाल् प्रत्ययः यथायथम् । यो य आत्मा यत्तदात्मीयमिति वाक्यार्थः । "यथास्वे यथायथम्" इति यथाशब्दस्य द्विर्वचनं नपुंसकत्वं चोक्तेऽर्थे निपात्यते । (आयथातथ्यम् । अयाथायथ्यम् । आयथापुर्यम् । अयाथापुर्यम् ) यथातथातथापुरयोः शब्दयोरव्ययीभावे नञा समासे ब्राह्मणादिपाठात् ष्यञि "यथातथयथापुरयोः पर्यायेण" इति पूर्वोत्तरपदयोः पर्यायेण वृद्धिः । भाष्ये तु अयथातथाभाव अयथापुराभाव इति विगृह्यते तत्र "सुप्सुपा"इति समासो द्रष्टव्यः॥९८२॥

टुवप् बीजसन्ताने ॥ ( वपति । उवाप । उवप्थ । उवपिथ ) उवपिवेत्यादि यजिवत् । प्रणिवपति । "नेर्गद०"इति णत्वम् । ( प्रण्यवपत् ) 'अड्व्यवायेऽपीष्यत' इति णत्वम् । (प्रवपाणि ) "आनि लोट्" इति उपसर्गस्थान्निमित्तात्परस्य लोट्सम्बन्धिन आनेर्नकारस्य णत्वम् । ( वाप्यम्, ) "आसुयुवपि" इति ण्यत् । ( वापो ) ऋदस्त्रपीनामिति ग्रहादिपाठादिनिः । (उप्त्रिमम्) "ड्वितः क्त्रिः" सम्प्रसारणं, "क्त्रेर्मम्नित्यम्" इति मप् ( वापिः ) इञ् "स्वपिवपिभ्य"इति इतीञ् (वापी) "कृदिकारादक्तिनः"इति ङष् (वप्रः) "वृधिवपिभ्यां च रन्"इति रन्प्रत्ययः । बीजसन्तानं क्षेत्रे बीजविकिरणम् ,अयं गर्भाधानेऽपि दृश्यते, यथा मा वः क्षेत्रे परबीजान्यवाप्सुः । छेदनेऽपि दृश्यते केशान्वपतीति ॥ ९८३ ॥

वह प्रापणे ॥ ( वहति । उवाह । ऊहतुः । उवहिथ । उवोढ । ऊहिव ) क्रादिनियमादिट्, थलि भारद्वाजनियमादिड्भावे धत्वढत्वष्टुत्वढलोपेषु "सहिवहोरोदवर्णस्य" इत्योत्वे उवोढेति भवति । एवमन्यत्रापि तवर्गादौ ढत्वादि । यजिवत्सम्प्रसारणम् ( वोढा । वक्ष्यति ) "षढोः कः सि" इति कत्वे षत्वम् । ( वहतु । अवहत् । वहेत ) आशिषि कित्त्वात्संप्रसारणे (उह्यात् । अवाक्षीत् । अवोढाम् ) अत्र ढत्वादीनामसिद्धत्वात्पूर्वमेव हलन्तलक्षणायां वृद्धौ पश्चाड्ढत्वादीति । अवोढामित्यत्राकारस्य "सहिवहोः" इत्योत्वे पुनर्वृद्धिः प्रागेव कृतत्वान्न भवति । (वहते । वोढा । वक्ष्यते । ऊहे । ऊहिषे । वहताम् । अवहत । वहेत । वक्षीष्ट । अवोढ । अवक्षाताम् । अवक्षत । अवोढाः । अवोढम् । अवक्षि । प्रवहति ) "प्राद्वहः" इति कर्त्रभिप्राये क्रियाफलेऽपि परस्मपदम् । केचित् "परेर्मृषः" इत्यत्र वहिमनुवर्त्य परिपूर्वादपि नित्यं परस्मैपदमेवाहुः । ( परिवहतीति । प्रणिवहति ) । "नेर्गद" इत्यादिना णत्वम् । इदमड्व्यवायेऽपि प्रण्यवहदित्यत्रापि भवति । ( प्रवहाणि ) "आनि लोट्" इति णत्वम् । कर्मणि । ( उह्यते । औह्यत, ) अत्र यजिवह्यादेशे यकि संप्रसारणे आडागमः । ( विवक्षते । वावह्यते । वावोढः । वावहीतीत्यादि ) वाहयति भारं देवदत्तेन । ( अवीवहत् ) अत्र प्रयोज्यस्य [नीवह्योः प्रतिषेध] इति कर्म्मत्वनिषेधः। गत्यादिसूत्रे तु फलतया प्रतीयमानगतयोऽपि गत्यर्थत्वेन गृह्यन्ते इत्ययं प्रतिषेधः। अयं च [वहेर्नियन्तृकर्तृकस्य]इति वचनान्नियन्तृकर्तृकस्य न भवतीति वाहयति यवान्बलीवर्दानित्यत्र प्रयोज्यः कर्मैव । नियन्ता सारथिः । वहत्यनेनेति वह्यं शकटादि । "वह्यं करणम्" इति यति निपात्यते, अन्यत्र ण्यति वाह्यः । (कूलमुद्वहः) । "उदि कूले रुजिवहोः" इत्युत्पूर्वाद्वहेः कूलशब्दउपपदे खः । वहत्यनेनेति (वहः) । "गोचर०" इत्यादिना करणे घः। (पुरुषवाहं वहति) पुरुषप्रेष्यो भूत्वा वहतीत्यर्थः । "कर्त्रोर्जीवपुरुषयोर्नशिवहोः" इति यथासंख्यात् कर्तृवाचिनि पुरुषउपपदे णमुल्, कषादित्वात्तस्यैवधातोरनुप्रयोगः । ( ऊढः । ऊढिः ) निष्ठाक्तिनोः संप्रसारणे ढत्वादि । कल्पनाया अपोढः (कल्पनापोढः) । "अपेतापोढमुक्तपतितापत्रस्तैरल्पशः" इत्यनेन पञ्चमीसमासः (प्रौढः, प्रौढिः ) [ प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या ] इति वृद्धिः । ( प्रवाहणः ) ण्यन्तानां नन्द्यादिपाठाल्ल्युः । "कृत्यचः" । "णेर्विभाषा" इति णत्वं "पूर्वपदात् संज्ञायाम्" इति वा, प्रवाहणस्यापत्यम्, ( प्रावाहणेयः । प्रवाहणेयः ) "शुभ्रादिभ्यश्च" इति ढकि "प्रवाहणस्य ढे" इति पूर्वपदस्य वा वृद्धिः । उत्तरपदस्य तु नित्या, स्वत एवोत्तरपदस्य वृद्धिमत्त्वेऽपि पुनर्वृद्धिविधानं पूर्वपदवृद्ध्यभावपक्षेऽपि प्रवाहणेयीभार्य इत्यत्र *वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे* इति पुंवद्भावनिषेधो यथा स्यादिति "स्त्रियाः पुंवत्" इति पुंवत्त्वं रक्तविकारव्यतिरिक्तार्थवृद्धिनिमित्ततद्धितान्तस्य स्त्रीप्रत्ययान्तस्य नेति सूत्रार्थः । ननु प्रवाहणेयीशब्दस्य गोत्राभिधायित्वाद् "गोत्रं च चरणैः सह" इति जातित्वात् "जातेश्च" इति पुंवद्भावनिषेधस्य सिद्धत्वात्किं तदर्थेन, वृद्धिविधानेन, एवं तर्हि "जातेश्च" इत्यस्यानित्यत्वमनेन ज्ञाप्यते, तेन हस्तिनीनां समूहो हास्तिकमित्यत्र लिङ्गविशिष्टपरिभाषया "अचित्तहस्तिधेनोष्ठक्" इति ठकि "भस्याढे तद्धिते" इति पुंवद्भावो भवति । प्रवाहणेयस्यापत्यं प्रावाहणेयः । "तत्प्रत्ययान्तस्य" इति ढान्तस्य प्रवाहणेयशब्दस्य ञिति णिति किति वा तद्धिते परतः पूर्वपदस्य वा वृद्धिरुत्तरपदस्य तु नित्या, अत्र बाह्यतद्धितनिमित्ता नित्या वृद्धिः पक्षे बाध्यते । (इक्षुवाहनम् ) उपरिनिपतितेक्षुकं वाहनमित्यर्थः । इक्षुशब्द आहितेष्विक्षुषु वर्त्तते, *वाहनमाहितात्* इति णत्वं, वाहने यदारोपितं तदाहितमित्युच्यते, तादृक्पूर्वपदस्थान्निमित्तात् परस्य वाहनशब्दस्थनकारस्य णकार इति सूत्रार्थः । आहितादन्यत्र दाक्षिवाहनम् । (वह्निः) "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" इति निप्रत्ययः । नित्वादाद्युदात्तः । (वधूः ) "वहेर्धश्च" इति ऊकारप्रत्ययो धश्चान्तादेशः । वध्वा भावकर्म्मणी वाधवम् । युवादित्वादण् । ( अनड्वान् ) अनसि वहो क्विप्, "डश्चा-

नसि" इति उणादिसूत्रेण अनस्युपपदे वहेः क्विप् अनसोऽन्त्यस्य डकारश्च संप्रसारणपूर्वत्वे सौ "सावनडुह" इति नुम्, अयं च आदित्यधिकारेणावर्णान्ताद् विधानात् "चतुरनडुहोः" इत्याम न बाधते, अन्यथा सर्वनामस्थानान्तरे सावकाशमाम्त्वं सौ विशेषविहिते नुम् बाधेत्, हकारस्य संयोगान्तलोपः, "वसुस्रंसु" इत्यादिना दत्वे पूर्वत्रासिद्धत्वात् न भवति । हे अनड्वन्नित्यत्र आमम्बाधित्वा "अम् सम्बुद्धौ" इति असागमः । अनेनापि नुमो न बाधः । अदित्यधिकारादेव, अनडुद्भ्यामित्यादौ पदत्वे "वसुस्रंसु" इत्यादिना दत्वम् । ( अनुड्ही । अनड्वाही ) गौरादिपाठात् ङीप्यपि पक्षे आमागमः । प्रियोऽनड्वान् यस्य प्रियानडुत्कः । उरःप्रभृतिषु अनड्वानिति पाठात् कप् । अस्मिन् स्वादौ पदत्वात् दत्वम् । चत्वम् । अत्रैकवचनान्तस्य तस्य पाठात् वचनान्तरेण विग्रहे "शेषाद् विभाषा" इति कपो विकल्पनात् प्रियानड्वानित्यपि भवति । अङ्गाधिकारे तस्य तदन्तस्येत्युक्तत्वादत्रापि नुमादि भवति । धेनुश्च अनड्वांश्च धेन्वनडुहम् । "अचतुर" इत्यादिना द्वन्द्वेऽजन्तो निपातितः । पचादयोऽनुदात्ताः स्वरितेतः ॥ ९८४ ॥

वस निवासे ॥ अनुदात्त उदात्तेत् ( वसति । ग्राममुपवसति )ग्रामे वसतीत्यर्थः, "उपान्वध्याड्वसः" इति उपाद्युपसृष्टात् वसेराधारस्य कर्मत्वात् द्वितीया । एवं ग्राममनुवसतीति, ग्रामे उपवसति । अशननिवृत्तिं करोतीत्यर्थः । अत्र [ वसेरश्यर्थस्य प्रतिषेधः ] इति कर्मत्वनिषेधः। अत्र अशिशब्देन अशननिवृत्तिरुच्यते, यद्वार्धशब्दो निवृत्तिवचनो यथा श्लेष्मणोऽर्थे कटुकौषधीः प्रयुञ्जीतेति, तेन निवृत्तेः सम्बन्धिनो वसेरित्यर्थो भवति (उवास, ऊषतुः, उवसिथ । उवक्थ । ऊषिव । संप्रसारणं यजिवत् (वस्ता । वत्स्यति ) "सः स्यार्द्धधातुके" इति सकारे तत्वम् । ( वसतु । अवसत् । उष्यात् । अवात्सीत् । अवात्ताम् । अवात्सुः ) । तकारादौ "झलो झलि" इति सिज्लोपस्य पूर्वत्रासिद्धत्वात् "सः स्यार्द्धधातुके" इति सकारे तत्वे पश्चात् सलोपः । क भवानुषितः, अहमत्रावात्सम् । वसेर्लुङ्, "रात्रिशेषे जागरणसंततौ"इति लुङ् । यदि कश्चित् केन चित् रात्रिशेषे तुर्ये यामे पृष्टो यामत्रयवासं प्रतिवक्ति तदा लुङित्यर्थः । यामत्रयस्याद्यतनत्वाल्लुङि प्राप्ते वचनम् । भूतसामान्यविवक्षयैव लुङि सिद्धे वचनमिदं लङ्निवृत्त्यर्थं, जागरणसंतताविति वचनात् सुप्त्वा प्रतिबुद्धय प्रतिवचने नायं नियमः । ( विवत्सति । वावस्यते । वावस्ति ) । लङि "तिप्यनस्तेः" इति सकारस्य पदान्तत्वाद्दत्वे (अवावत् ) सिपि तु "सिपि धातोरुर्वा" इति (अवाव) इत्यपि भवति । (वासयति । अवीवसत् )।अत्र "अणावकर्म्मकात्"इति परस्मैपदस्य "न पादमि" इत्यादिना निषेधात् वासयते इत्यपि भवति । (उषितवान् ) । "भाषायां सदवस" इति भूतसामान्ये लिटो नित्यं क्वसुः । अस्मादेवादेशविधानात् भूतसामान्ये पक्षे लिडनुमीयते । परस्मादनुवृत्तेर्लुङ्विषयेऽप्ययं लिङिति सीदतावुपपादितम् । ( वास्तव्यः ) । "वसेस्तव्यत्कर्त्तरि णिच्च" इति वक्तव्यात् णिद्भावात् वृद्धिः । अमा सह वसतः सूर्याचन्द्रमसावत्रेत्यमावास्या, "अमावस्यदन्यतरस्याम्" इति ण्यति पक्षे वृद्ध्यभावो निपात्यते, अन्यदा वृद्धिः। अमावस्यायां जात (अमावस्यकम् । अमावस्यम् ) । "अमावस्याया वा" "अच" इति सप्तम्यन्ताज्जातार्थे कनकारौ च, वाग्रहणात् "संधिवेला" इत्यादिना शैषिकेऽणि आमावस्यमिति,भवति । एकदेशविकृतमिति न्यायेन त्रय एते प्रत्यया अमावस्याशब्दादपि, ( अमावास्यकम् । अमावास्यम् । आमावास्यमिति । आवासी ) । यावव्याहूसंव्याहूव्रजवदवसां प्रतिषिद्धानामिति ग्रहादिपाठाण्णिनिः । प्रतिषिद्धानां नञ्पूर्वाणामित्यर्थः । ( प्रवासी ) । "प्रे लप०" इत्यादिना घिनुण् । अनुषितो गुरुं शिष्यः । अनुषितो गुरुः शिष्येण । "गत्यर्थाकर्म्मक०" इत्यादिना कर्तृकर्म्मणोः क्तः । अत्र वसिग्रहणं सकर्मकार्थम् । अकर्म्मकत्वे तु "क्तोऽधिकरणे च" इति कर्तृभावाधिकरणेषु क्तो भवति ) ( उषितः । उषितमनेन,इदमेषामुषितमिति । (उषित्वा । उषितः । उषितवान्) "वसतिक्षुधोरिट्"इति क्त्वानिष्ठयोरिट् ।"न क्त्वासेट्"इति नि-

पेधं बाधित्वा "मृडमृद०" इत्यादिना सेटः कित्त्वविधानात् सम्प्रसारणम्। उपवस्था प्रासाऽस्य औपवस्थ्यम्। [ उपवस्थ्यादिभ्य उपसंख्यानम् ] इति तदस्य प्राप्तमिति विषये ण्यप्रत्ययः। प्रवासाय प्रभवति प्रावासिकः। एवमौपवासिकः। "तस्मै प्रभवति सन्तापादिभ्य" इति चतुर्थ्यन्तात्प्रभवत्यर्थे ठक्। (वत्सरः। संवत्सरः। परिवत्सरः)। "वसेश्च" इति सम्प्रतिपूर्वात्सरप्रत्ययः। चकारादनुवत्सरादयः। संवत्सरे जातं फलं पर्व वा सांवत्सरम्। सन्धिवेलादिषु "संवत्सरात् फलपर्वणोः" इति पाठाच्छैषिकोऽण्प्रत्ययः। कालाट्ठञोऽपवादः। संवत्सरे देयमृणं सांवत्सरिकम्। सांवत्सरकम् "संवत्सराग्रहायणीभ्यां ठञ् च" इति सप्तम्यन्ताद्देये ऋणे ठञ्वुञौ। अत्र संवत्सराग्रहायणीभ्यां चेत्युच्यमानेऽनुवृत्त्या ठञ् भविष्यति तद्विकल्पनात् कालाट्ठञपि, एवं सिद्धे ठञ्चेति प्रतिपदमनयोर्विधानं यदा देयमृणं फलं भवति तदा "संवत्सरात् फलपर्वणोः" इति प्राप्तस्याणो बाधनार्थम्। (द्विसंवत्सरीणः। द्विसांवत्सरिकः)। "रात्र्यहःसंवत्सराच्च" इति रात्राद्यन्तात् द्विगोः "तेन निर्वृत्तम्" "तमधीष्टो भृतो भूतो भावी" इति विषये खप्रत्ययः। "संख्यायाः संवत्सरसंख्यस्य च" इति उत्तरपदवृद्धिः। अधीष्टस्सत्कृत्य व्यापारितः। भृतो वेतनेन क्रीतः। भूतभाविनौ प्रसिद्धौ। अनुसंवत्सरं दीयते कार्यं वाऽऽनुसांवत्सरिकम्। "तत्र च दीयते कार्यं भववत्" इत्यतिदेशेन कार्यदीयमानयोर्भवलक्षणः कालाट्ठञ्। "अनुशतिकादीनां च" इति उभयपदवृद्धिः। (आवसथः)। उपसर्गे वसेरित्यर्थः। आवसथे वसति आवसथिकः। "आवसथात् ष्ठल्" इति ष्ठल्। षित्वात् स्त्रियामावसथिकी। ( वसतिः )। "सहिवस्यतिभ्यः कित्" इत्यतिप्रत्ययः। वसतौ साधु वासतेयम्। "पथ्यतिथिवसति०" इति ठञ् वस्नं मूल्यम्। "सुमूल्यादायवस्यतिभ्यो नः" इति नः। वस्नं हरत्यावहति वा वस्निकः। "वस्नक्रयविक्रयाभ्यां कन्ठनौ" इति द्वितीयान्ताद्वस्नाद्धरत्यादिष्वर्थेषु यथासंख्यात् कन्। (वास्निकः)। "वस्नक्रयविक्रयाट्ठन्" इति तृतीयान्तात् जीवत्यर्थे ठन्, (वसन्तः)। "तृभूवहिवसि" इति अन्तच्। वसन्तसहचरितोऽपि ग्रन्थो वसन्तः। तमधीते वेद वा वासन्तिकः। "वसन्तादिभ्यष्ठक्" इति अध्येतृवेदित्रोष्ठक्। वसन्ते पुष्प्यन्ति वासन्त्यः कुन्दलताः। "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्" इति सप्तम्यन्ताच्छैषिकोऽण्। एवं साधुपच्यमानयोरपि। वसन्ते उप्तं (वासन्तम्। वासन्तकम्)। "ग्रीष्मवसन्तादन्यतरस्याम्" इति तत्रोप्तमित्येतस्मिन्विषये वुञणौ ( वस्तिः )। "वसेस्तिः" इति तिः। ( वस्तिरिव वास्तेयम् ) "वस्तेर्ढञ्" इतीवार्थे ढञ्। वस्तौ भवमपि वास्तेयमिति। "दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्" इति सप्तम्यन्ताद् भवार्थे ढञ्। "वसेस्तुन्" इति तुनि (वास्तु)। "अगारे णिच्" इति णित्त्वाद् वृद्धिः। ( वस्त्रम् ) ष्ट्रन्। वस्त्रैः समाच्छादयति संवस्त्रयति। "मुण्डमिश्र" इत्यादिना णिच्। वस्त्रात्समाच्छादनइति वृत्तिः। ( वासिः )। "वशिवर्पियजिराजिव्रजिसदिहनिवाशिवादिवारिभ्य इञ्" इतीञ् प्रत्ययः (वसु) "शृस्वृस्निहि" इत्यादिना उप्रत्ययः। वसुमत्तमो वसिष्ठः। वसुमत्तरो वसीयान्। मतुबन्तादिष्ठन्नीयसुनोः "विन्मतोर्लुक्" इति मतुपो लुगिष्ठेमेयःस्विति वर्त्तमाने "टेः" इति टिलोपः। अस्मादेव लुग्विधानाद् गुणवचनादपि मत्वन्तादिष्ठन्नीयसुनावनुमीयेते। ( वासिष्ठः। वासिष्ठौ। वसिष्ठाः )। "ऋष्यन्धकवृष्णिकुरुभ्यश्च" इत्यपत्यार्थेऽण्। तस्य "अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च" इति बहुषु लुक्। ( श्वोवसीयः। श्वोवसीयसम् )। "श्वसो वसीयः श्रेयसः" इति समासान्तोऽच्। आच्छादनेऽयमदादिः। स्तम्भने दिवादिः। स्नेहनादौ कथादिश्चुरादिश्च। वस उपसेवायामाच्छादन इति च कथादिः॥९८९॥

वेञ् तन्तुसन्ताने॥ (वयति। वयते। उवाय। ऊयतुः। ऊयुः। उवयिथ। ऊयथुः। ऊय। उवाय। उवय। ऊयिव। ऊयिम) "वेञो वयिः" इति वा वयादेशः। तस्य "ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च" इति संप्रसारणम्। चकारात् किदनुकृष्यते। अकिति तु "लिट्यभ्यासस्योभयेषाम्" इति अभ्यासस्य संप्रसारणम्। सर्वस्य यकारस्य "लिटि वयो यः" इति निषेधान्न संप्रसारणम्। सर्वत्र क्रादिनियमादिट्। थलि "अचस्ता-

स्वत्" इति निषेधो न भवति। वयेस्तासावसत्त्वात्। अत एव भारद्वाजविकल्पोऽपि न भवति। किति लिटि "वश्चास्यान्यतरस्यां किति" इति पक्षे यकारस्य वकारे (ऊवतुः। ऊवुरित्यादि)। वयादेशस्य स्थानिवद्भावेन ञित्त्वात्तङि (ऊये। ऊयाते। ऊयिढ्वे। ऊयिध्वे। ऊयिवहे) ध्वमि "विभाषेटः" इति मूर्द्धन्यविकल्पः। अत्रापि वकारादेशपक्षे (ऊवे। ऊवाते) इत्यादि। वयादेशाभावपक्षे "आदेचः" इत्यात्वे (ववौ। ववतुः। ववाथ। ववित्थ। ववथुः। वव। ववौ। ववित्र। क्रादिनियमादिट्। थलि भारद्वाजनियमाद्विकल्पः। "आत औ णलः" इति णल औत्वमन्यत्र "आतो लोप इटि च" इत्याल्लोपः। "वचिस्वपियजादीनां किति" इति "लिट्यभ्यासस्योभयेषाम्" इति च प्राप्ते सम्प्रसारणं 'वेञः' इति लिटि निषिध्यते। (ववे। ववाते) इत्यादि। (वाता। वास्यति। वास्यते। वयतु। वयताम्। अवयत्। अवयत। वयेत्। वयेत) आशिषि (ऊयात। वासीष्ट)। यासुटि "किदाशिषि" इति कित्त्वे सम्प्रसारणे परपूर्वत्वे वा "अकृत्सार्वधातुकयोः" इति दीर्घः। (अवासीत्। अवासिष्टाम्। अवास्त। अवासातामित्यादि)। परस्मैपदे "यमरमनमातामू" इति सगिटौ। (विवासति। विवासते। वावायते। वावाति। वावेति। वावीतः) "ई हल्यघोः" इतीत्वम्। (वावति)। "श्नाभ्यस्तयोः" इत्याल्लोपः। लोटि हावीत्वे (वावीहि। वाययति। अवीवयत्)। "शाच्छा०" इति युक्। (प्रवाय)। "न ल्यपि" इति वेञः सम्प्रसारणनिषेधः। (तन्तुवायः)। "ह्वावामश्च" इति कर्म्मण्युपपदेऽण् "आतोऽनुपसर्गे कः" इति कस्यापवादः। (उता) उतः सम्प्रसारणपूर्वत्वे। (निष्प्रवाणिः)। नवं वासः प्रोयतेऽस्यामिति प्रवाणी तन्तुवायशलाका भण्यते। निर्गताः प्रवाण्यो यस्मादिति बहुव्रीहौ "निष्प्रवाणिश्च" इति निपातनात्कबभावः। "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वः॥ ९८६॥

व्येञ् संवरणे। (व्ययति। व्ययते। विव्याय। विव्यतुः। विव्युः। विव्ययिथ। विव्याय) "न व्यो लिटि" इत्यात्वनिषेधः। णिति वृद्धावायादेशे तस्य "द्विर्वचनेऽचि" इति स्थानिवत्त्वाद् व्येशब्दस्य द्विर्वचने "लिट्यभ्यासस्योभयेषाम्" इत्याभ्यासयकारस्य सम्प्रसारणे पररूपत्वम्। सम्प्रसारणे चोभयेषांग्रहणाद्धलादिशेषं बाधित्वा भवति, "न सम्प्रसारणे सम्प्रसारणम्" इति वकारस्य सम्प्रसारणं न भवति, किति "वचिस्वपि" इत्यादिना सम्प्रसारणे पूर्वरूपत्वे द्विर्वचने "एरनेकाचः" इति यण्। थलि "इडत्यर्त्तिव्ययतीनाम्" इतीट् नित्यमन्यत्र क्रादिनियमादिट्। (विव्ये। विव्याते। विव्यिषे। विव्यिध्वे। विव्यिढ्वे। विव्यिवहे)। सर्वत्र "वचिस्वपि" इत्यादिना सम्प्रसारणे पररूपत्वे द्वित्वम्। (व्याता। व्यास्यति। व्यास्यते। व्ययतु। व्ययताम्। अव्ययत्। अव्ययत। व्ययेत्। व्ययेत। आशिषि। वीयात्। व्यासीष्ट)। यासुटः कित्त्वात्संप्रसारणपूर्वरूपयोः "हलः" इति दीर्घः। (अव्यासीत्। अव्यास्तम्)। परस्मैपदे सगिटौ। (विव्यासति। विव्यासते। वेवीयते)। "स्वपिस्यमिव्येञां यङि" इति संप्रसारणे परपूर्वत्वे "हलः" इति दीर्घः। द्विर्वचनम्। (वाव्येति। वाव्याति। वाव्यीतः। वाव्यति)। ङ्कितोः "श्नाभ्यस्तयोः" इत्याकारलोपः। हलादौ "ई हल्यघोः" इतीत्वम्। (व्याययति)। "शाच्छासः" इत्यादिना युक्। (संव्याय)। "व्यश्च" इति ल्यपि संप्रसारणनिषेधः, परिपूर्वत्वे तु "विभाषा परेः" इति प्रसारणविकल्पनात्परिवीय परिव्यायेत्युभयं भवति। (नीविः)। नौ व्यो यलोपः पूर्वपदस्य च दीर्घ इति इकारप्रत्यये ङित्त्वाट्टिलोपयलोपयोः पूर्वपददीर्घः। (नीवी)। "कृदिकारादक्तिनः" इति वा ङीष्॥९८७॥

ह्वेञ् स्पर्धायां शब्दे च। (ह्वयति। ह्वयते। जुहाव। जुहुवतुः। जुहुविथ। जुहोथ)। अत्र च "अभ्यस्तस्य च" इत्यभ्यस्तीभविष्यतो ह्वेञः प्रागेव द्विर्वचनात्संप्रसारणेऽन्तरङ्गत्वात्परपूर्वत्वे श्रश्चादू द्विर्वचनम्। पूर्वं तु द्विर्वचने "न संप्रसारणे संप्रसारणम्" इत्यभ्यासस्य संप्रसारणं न स्यात्। व्यवधानान्नायं निषेधः स्यादिति न वाच्यम्। तत्र समानाङ्गग्रहणस्य चोदितत्वात्। तत्र णलि वृद्ध्यवादेशयोः स्थानिवत्त्वाद्हुशब्दस्य द्विर्वचनम्, अत्र परपूर्व-

त्वाभावे "आत औ णलः" इति स्यात्। जुहुवतुरित्यादौ "अचि श्नुधातु" इत्यादिनेयङा-देशः। तत्रापि संप्रसारणेऽन्तरङ्गत्वात्परपूर्वत्वमवश्यमेष्टव्यम्। अन्यथा "अतो लोपः" इत्या-ल्लोपे तस्य स्थानिवत्त्वाद् द्विर्वचने "असिद्धवदत्र" इत्यसिद्धत्वाद्व्यवधानादुवङ् न स्यात्। थलि गुणः। भारद्वाजनियमाद्दिङ्किल्पः। उत्तमे णलि णित्त्वाभावपक्षे गुणेऽवादेशः। ( जुहुवे। जुहुवाते। जुहुविषे। जुहुविध्वे। जुहुविढ्वे। ह्वाता। ह्वातासे। ह्वास्यति। ह्वास्यते। ह्वय-तु। ह्वयताम्। अह्वयत्। ह्वयेत्। आशिषि हूयात्। ह्वासीष्ट )। यासुटि कित्त्वात्संप्रसारणे "हलः" इति दीर्घः। ( अह्वत्। अह्वताम् )। "लिपिसिचिह्वश्च" इति परस्मैपदे सिजपवा-दोऽङ्। "आत्मनेपदेष्वन्यतरस्याम्" इत्यङो विकल्पनात्। (अह्वत। अह्वताम्। अह्वत। अह्वा-स्त। अह्वासाताम्। अह्वासत) इत्युभयं भवति, अङि सर्व्वत्र "आतो लोप इटि च" इत्याल्लो-पः। इदमङ्विकल्पन कर्त्तरीति कर्म्मणि (अह्वायि। अह्वासाताम्) इत्यादौ चिण्सिचावेव भव-तः। चिण्वदिटि अह्वायिषातामित्यादि। एवं स्यसिच्सीयुट्तासिषु (ह्वायिष्यते। ह्वायिषीष्ट। ह्वायित) इत्यादि द्रष्टव्यम्। कर्मकर्त्तरि तु शब्दे "अचः कर्म्मकर्त्तरि" इति चिणो विकल्पनात्त-दभावे "आत्मनेपदेष्वन्यतरस्याम्" इति पक्षेऽङ्। तदभावे सिच्। तस्य च पक्षे चिण्वदिटि ( अह्वायि। अह्वत। अह्वास्त )। अह्वायिष्टेति चातूरूप्यम्भवति। (निह्वयते। संह्वयते। उपह्वयते। विह्वयते। आह्वयते) "निसमुपविभ्यो ह्वः" "स्पर्द्धायामाङः" इत्यत्र कर्त्रभिप्राये तङ्। अत्र स्पर्द्धा धात्वर्थस्य शब्दनस्य हेतुतया विषय इति वृत्त्यादौ स्थितम्। स्पर्द्धमान आह्वानं करोतीत्यर्थः। अत्र च ह्व इति न प्रयोगस्थस्याकारान्तस्या-नुकरणं किन्तु धातोरेवैजन्तस्य, आत्वन्तु लक्षणवशादिति निह्वयतइत्यादौ तङ् भवति। एकदेशविकृतस्यानन्यत्वान्निह्वास्यतइत्यादिष्वपि ( जुहूषति। जुहूषते ) "अभ्य-स्तस्य च" इति संप्रसारणे परपूर्वत्वे "हलः" इति दीर्घे धातोरिगन्तत्वात् "इको झल्" इति सनः कित्त्वाद्गुणो न भवति। ( जोहूयते। जोहोति। जोहूतः। जोहुवति ) "हुश्नुवोः सार्वधातुके" इति यण् हुशब्दस्य लाक्षणिकत्वादनर्थकत्वाच्च न भवति। (ह्वाययति। जुह्वा-वयिषति। अजूहवत्। अजूहवताम्। अजूहवन्)। अत्र "ह्वः संप्रसारणम्" इति सन्परे चङ्परे णौ संप्रसारणे परपूर्वत्वे वृद्ध्यावादेशयोर्णौ कृतं स्थानिवदिति स्थानिवत्त्वाद्ध्वशब्दस्य हौशब्दस्य वा द्विर्वचनं "णौ चङ्युपधाया ह्रस्वः" इदं च 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति वा "णौ च संश्चङोः" इति विषयसप्तमीत्वात् "आतो युक्" इति युकः प्राक् प्रवर्त्तते। कृते चान्तरङ्गत्वात्परपूर्वत्वमिति युक्तं भवति। नन्वत्र "अभ्यस्तस्य च" इति अभ्यस्तका-रणस्य ह्वयतेः संप्रसारणविधानात्सिद्धमेव तदिति किं "ह्वः संप्रसारणम्" इत्यनेनेति ज्ञापनार्थ-मभ्यासनिमित्तप्रत्ययेन व्यवधाने यदि भवति णावेवेति। तेन ह्वायकमिच्छति जिह्वायकिषति, ह्वायकीयतेः सन् जिह्वायकीयिषतीत्यादौ संप्रसारणं न भवति। एवञ्च सन्परे चङ्परे णौ "अ-भ्यस्तस्य च" इत्येव सम्प्रसारणं तच्चाभ्यस्तीभविष्यत इति जुहावयिषति, अजूहवदित्यत्रापि णिजुत्पत्तेः प्रागेव प्रसारणेऽन्तरङ्गत्वात्परपूर्वत्वे च नैव युक्तः प्रसङ्गः। (आह्वः) "आतोऽनुपसर्गे कः" इत्यत्र भाष्ये सर्वत्र प्रसारणिभ्यो डो वक्तव्य इति डप्रत्यये टिलोपमुक्त्वा "आतोऽनुप-सर्गे कः" इति कप्रत्यये वा परत्वादाल्लोपे संप्रसारणे यणि आह्व इति सिद्धमित्युक्तम्। उवङ् तु आल्लोपस्य "असिद्धवदत्रा" इत्यसिद्धत्वाद्व्यवधानान्न भवति। (निहवः। अभिह-वः। उपहवः। विहवः)। "ह्वः संप्रसारणं च न्यभ्युपविषु" "आङि युद्धे" "भावेऽनुपसर्गस्य" इत्यप्प्रत्यये (१) प्रसारणम्। (आहावः)। "निपानमाहावः" इति प्रसारणे वृद्धौ निपात्यते। निपानमुपकूपं जलाशये। यत्र गावः पानार्थमाहूयन्ते। ( आह्वा )। "आतश्चोपसर्गे" इति

---

( १ ) मूलपुस्तकानुरोधेन प्रसारणं इति पाठः स्थापितः। तत्र तत्र सम्प्रसारणं इति पाठेन भाव्यमिति प्रतिभाति।

स्त्रियामङ्घ्याल्लोपः । (आहूतिः संहूतिः) इति बाहुलकात् क्तिन् । वेञादयस्त्रयोऽनुदात्ता उभयतो भाषाः ॥ ९८८ ॥

वद व्यक्तायां वाचि ॥ ( वदति । उवाद । ऊदतुः । ऊदुः । उवदिथ । उवाद । उवद । ऊदिव ) यजादित्वात्किति संप्रसारणम् । पिति "लिट्यभ्यासस्य" इत्यभ्यासस्य ( वदिता । वदिष्यति । वदतु । अवदत् । वदेत् ) अशिषि । ( उद्यात् । अवादीत् ) "वदव्रज०" इति वृद्धिः ( विवदिषति । वावद्यते । वावदीति । वावत्ति । वादयति । अवीवदत् । वादयते । अवीवदत ) । वदेः कर्म्माविवक्षायाम् "अणावकर्मकात्" इति प्राप्तं परस्मैपदं "न पादम्" इत्यादिना निषिध्यते । अभिवदति गुरुं देवदत्तः। अभिवादयते गुरुं देवदत्तं देवदत्तेन वा, [ अभिवादिदृशोरात्मनेपदे उपसंख्यानम् ] इति पक्षे प्रयोज्यस्य कर्म्मत्वं परस्मैपदे तु कर्त्तृत्वात्तृतीयैव । वदते व्याकरणे यज्ञनारायणः । भासमानस्तत्र सूत्रार्थं वक्तीत्यर्थः । कर्म्मकरानुपवदते । उपसान्त्वयतीत्यर्थः । वदते यज्ञनारायणाचार्यः । जानाति वदितुमित्यर्थः । गेहे वदते, तद्विषयमुत्साहमाविष्करोतीत्यर्थः । (गेहे विवदन्ते)। विमतिपतिता विचित्रं भाषन्तइत्यर्थः । कुलभार्यामुपवदते । उपच्छन्दयतीत्यर्थः । "भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः" इति तङ् । भासनं दीप्तिः, उपसम्भाषणमुपसान्त्वनं, ज्ञानं सम्यगवबोधः । यत्न उत्स हः, विमतिर्नानामतिः । उपमन्त्रणं रहस्युपच्छन्दनम् । उपसान्त्वनमुपच्छन्दनं च धातोरर्थतया विशेषणम्, अन्यत्र धात्वर्थस्य, संप्रवदन्ते राजानः । सम्भूयोच्चारयन्तीत्यर्थः । *व्यक्तवाचां समुच्चारणे* इति तङ् । व्यक्तवाचो मनुष्याः । समुच्चारणं सम्भूयोच्चारणम्, अर्थस्वभावादुपसर्गयोगः । अव्यक्तवाक्षु पर्यायोच्चारणे च परस्मैपदमेव । संप्रवदन्ति कुक्कुटाः । ब्राह्मणो वदति, क्षत्रियो वदति । अनुवदते कठः कलापकस्य अनुः सादृश्ये, यथा कालापोऽधीयानो वदति तथा कठ इत्यर्थः । "अनोरकर्म्मकात्" इति अनुवदतेस्तङ् । अत्रानुः सादृश्ये इति सादृश्यप्रतिपादनपरत्वादकर्म्मकत्वम् । अयमपि योगो व्यक्तवाग्विषये एव । अनुवदति वीणा गायकस्येत्यत्र न तङ्, अकर्म्मकादित्युक्तेः पूर्वोक्तमनुवदतीत्यत्र च न भवती । विप्रवदन्ते मौहूर्त्तिकाः । युगपद्विरुद्धं भाषन्त इत्यर्थः । "विभाषा विप्रलापे" इति तङ्विकल्पः । विप्रलापो विरुद्धभाषणम् । "व्यक्तवाचां समुच्चारणे" इति प्राप्ते इयं विभाषेत्यव्यक्तवाक्कर्तृके विरुद्धभाषणे तङ् न भवति । विप्रवदन्ति शकुनीयाः । तथा व्यक्तवाक्कर्तृके विरुद्धभाषणे क्रमिकेऽपि न तङ्, मौहूर्त्तिकाः क्रमेण विप्रवदन्तीति । धनकामो न्यायमपवदते । धनार्थी न्यायं नाद्रियतइत्यर्थः । "अपाद्वदः" इति कर्त्रभिप्राये तङ् । अवद्यं पापम् । "अवद्यपण्य०" इत्यादिना यति गर्ह्ये निपात्यते । ब्रह्मोद्यं, ब्रह्मणो वदनमित्यर्थः । "वदः सुपि क्यप् च०" इत्यनुपसर्गे सुप्युपपदे क्यपि प्रसारणं चकाराद्यति ब्रह्मवद्यम्। अनुपसर्गादुपसृष्टाच्च णेर्यति वाद्यं प्रवाद्यमिति । (सृषोद्यम् )।"राजसूय०"इत्यादिना भावकर्मणोः क्यपि निपात्यते। (अवादी) ग्रहादिषु "यावव्याहू"इत्यादिसूत्रेण नञ्पूर्वाण्णिनिः । ( वदः । वदावदः )। पचाद्यचि "चलिपतिवदि" इत्यादिना द्विर्वचनमभ्यासस्य त्वागागमः । (प्रियंवदः । वशंवदः)। "प्रियवशे वदः खच्" इति खच् । ( परिवादी ) सम्पृचादित्वाद् घिनुण् । ( प्रवादी ) "प्रे लप" इत्यादिना घिनुण् । (परिवादकः) "निन्दहिंस" इत्यादिना ण्यन्ताद्वुञ्। वावदूकस्यापत्यं वावदूक्यः । "कुर्वादिभ्यो ण्यः" इति ण्यः । कुर्वादिपाठादेव यङन्ताद्वदेरूकप्रत्ययः । प्रवादूकादयः प्रयोगाश्चिन्त्याः, उदित्त्वात् "मृडमृद०" इत्यादिना सेटः क्त्वः कित्वात्प्रसारणम् । (अच्छोद्य)। "अच्छ गत्यर्थवदेषु" इति अच्छशब्दस्य गतित्वात्समासे सत्यपि प्रसारणम् (वादिः ) । "वदिवपि"इत्यादिना इञ्प्रत्ययः । ( वत्सः )। "वृतृवदि"इत्यादिना सप्रत्ययः। (वत्सलः कामवान् ) । "वत्सांसाभ्यां कामबले"इति लच्प्रत्ययो मत्वर्थीयः । कामबलशब्दावर्शआद्यजन्तौ तद्वति वर्तते वृत्तौ कामबलार्थौ । (वत्सतरः) प्रथमवयोऽतिक्रान्त इत्यर्थः । "वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे" इति प्रवृत्तिनिमित्ततनुत्वोपाधिकार्थादस्माद्वत्सादेः स्वार्थे ष्टरच् । वत्सशब्दस्य

प्रवृत्तिनिमित्तं प्रथमवयः सम्बन्धः । पित्वान् ङीप् स्त्रियां वत्सतरी । वत्सानां समूहो वात्सकम् । "गोत्रोक्ष" इत्यादिना वुञ् । (वादित्रम्) "अशित्रादिभ्य इत्रोत्रौ" इति ण्यन्तादित्रः। अण्यन्ताद्वाहुलकाद्वृद्धिः। (वदान्यः)। "वदेरान्य" इत्यान्यप्रत्ययः। अयमाघृषीयश्च ॥९८९॥

टुओश्वि गतिवृद्ध्योः ॥ अयं वदतिश्च परस्मैभाषावुदात्तेतौ । ( श्वयति । शुशाव । शुशुवतुः । शुशुवुः । शुशविथ । शुशुवथुः । शुशुव । शुशाव । शुशुविव । शुशुविम ) "विभाषा श्वेः" इति लिड्यङोः संप्रसारणविकल्पः। अत्र 'संप्रसारणं संप्रसारणाश्रयकार्यं च बलीय' इति "लिड्यङोश्च" इति विषयसप्तमीत्वाद्वा संप्रसारणमुभयेषांग्रहणाद् हलादिशेषं बाधित्वाऽत्र भवति । किति "वचिस्वपि" इत्यादिना संप्रसारणे पररूपत्वे द्विर्वचने ( शुशुवतुः, शुशुवुः ) पिद्वचनेषु गुणवृद्धिभ्यामन्यत्र यणश्च पूर्वं संप्रसारणेऽन्तरङ्गत्वात् पररूपत्वे च यथायोगं वृद्धिगुणयोराववादेशौ । कित्सु तुवङादेशः। "द्विर्वचनेऽचि"इति स्थानिवत्त्वाच्छुशब्दस्य द्विर्वचनं, प्रसारणाभावे (शिश्वाय । शिश्वियतुः । शिश्वियुः । शिश्वयिथ । शिश्वियथुः । शिश्वाय । शिश्वय । शिश्वियिव । शिश्वियिम ) यथायोगं वृद्धिगुणयोरायवौ । कितीयङ् पूर्ववत्, स्थानिवत्त्वाच्छ्विशब्दस्य द्विर्वचनं, पिति "लिड्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य संप्रसारणं, [ श्वयतेर्लिड्यभ्यासलक्षणप्रतिषेधः] इति निषेधान्न भवति ( श्वयिता । श्वयिष्यति । श्वयतु । अश्वयत् । श्वयेत् । आशिषि । शूयात् ) कित्त्वात् "वचिस्वपि" इत्यादिना प्रसारणे "हलः" इति दीर्घः । (अश्वत् ।) "जृस्तम्भु" इत्यङ्, वा तत्र परे "श्वयतेरः" इतीकारस्याकारे अतो लोपः । पररूपं च अङोऽत्रात्र "विभाषा धेट्श्व्योः" इति पक्षे चङि द्विर्वचने इयङि ( अशिश्वियत्, अशिश्वियताम्, अशिश्वियन् । अशिश्वियः । अशिश्वियम्। अशिश्वियम्। अशिश्वियाव ) चङ्ङोरभावे सिचि । ( अश्वयीत्। अश्वयिष्टामित्यादि ) "ह्म्यन्तक्षण" इति वृद्धिनिषेधः । ( शिश्वयिषति । शेश्वीयते । शोशूयते ) "लिड्यङोः" इति वा संप्रसारणं, ( शेश्वयीति । शेश्वेति । शेश्वितः । शेश्वियति ) लुङि प्रकृतिग्रहणादङ्चङौ । अशिश्वियदित्यादि । अङि "श्वयतेरः" इत्यत्वं श्तिपा निर्देशान्न भवति इति तदेव रूपम् । यङ्लुकि "लिड्यङोः" इति संप्रसारणं लुका विषयत्वापहारान्न भवति, सिचपक्षे ।( अशिश्वायीत्। श्वापयति । अशिश्वपत् । अशूशवत् । शिश्वापयिषति । शुशावयिषति ) अत्र "विभाषा श्वेः" "णौ च संश्चङोः" इति सन्परे चङ्परे णौ भाविनि पक्षे संप्रसारणे अन्तरङ्गत्वात्परपूर्वत्वे वृद्ध्यावौ । तयोः स्थानिवत्त्वात् शुशब्दस्य श्विशब्दस्य वा द्विर्वचनम् । (श्वयथुः) "ट्वितोऽथुच" । ( शूनवान् । शूनः ) "श्वीदितो निष्ठायाम्" इत्यनिट्त्वम् । अत्र पदमर्यादो "ओदितश्च" इति ओदितोनन्तरस्य निष्ठातकारस्य नत्वविधानादेवेडभावस्य सिद्धे श्वयतिग्रहणं शक्यमकर्त्तुम् इति । उदकेन श्वयतइति उदश्वित् । "क्विप् च" इति क्विप् । उदश्वित इति निर्देशात् प्रसारणाभावः । "उदकस्योदः संज्ञायाम्" इति उदकस्योदभावः । उदश्विति संस्कृतमौदश्वित्कम् । "उदश्वितोऽन्यतरस्याम्" इति सप्तम्यन्तात् संस्कृतमित्यर्थे ठक् । ठस्य "इसुसुक्तान्तात्कः" इति कादेशः। ठगभावे प्राग्दीव्यतीयेऽणि औदश्वितम् । (श्वा) "श्वन्नुक्षन्"इति निपात्यते । शुनः पश्येत्यादौ "श्वयुवमघोनामतद्धिते" इति तद्धितवर्जिते भसंज्ञानिमित्ते प्रत्यये प्रसारणे परपूर्वत्वम् । अतद्धित इति वचनात् "प्राणिरजतादिभ्योऽञ्" इति विकारावयवयोः प्राणिलक्षणेऽणि "नस्तद्धिते" इति टिलोपे "द्वारादीनां च" इत्यैजागमे शौवं मांसमिति भवति । (शौवः सङ्कोचः) । अत्र प्राग्दीव्यतीयेऽणि [शुनः सङ्कोचे उपसंख्यानम्] इति "अन्"इति प्रकृतिभावं बाधित्वा टिलोपः । सङ्कोचादन्यत्र शौवनम् । शुने हितं शून्यम् । 'शुनः सम्प्रसारणं वा च दीर्घत्वम्'इति गवादिपाठाद्यति प्रसारणे वा दीर्घः । अत्र "नस्तद्धिते" इति टिलोपः कस्मान्न भवति । न च प्रसारणस्य सामर्थ्यादिति वाच्यम्। यतः कृते परपूर्वत्वे टिलोपार्थमेव तत् स्याद्, अन्यथा "ये चाभावकर्म्मणोः" इति प्रकृतिभावः स्यात् । दीर्घविधानसामर्थ्यान्न भवति। अस्तु चैवम्, अदीर्घपक्षे कस्मान्न भवति । तदुच्यते, द्वौ चकारौ क्रियेते वा च

दीर्घत्वं चेति, तत्रान्त्यः संनियोगार्थः, आद्यो भिन्नक्रमः सम्प्रसारणमित्यनेन सम्बध्यते प्रसारणं चेति। तत्रान्यस्य समुच्चयितव्यस्याभावात् पुनरपि प्रसारणं समुच्चीयते। तच्चावस्थापनार्थं सट्टिलोपं बाधिष्यते। (शुनी) गौरादिपाठान् ङीष्। शुन इव शेपमस्य शुनःशेपः। एवं (शुनःपुच्छः। शुनोलाङ्गूलः) [शेपपुच्छालाङ्गूलेषु शुन उपसंख्यानम्] इति अलुक्। अकारान्तोऽप्यस्ति शेपशब्दो न केवलं सकारान्त इति कैयटपदमञ्जर्यादिषु।(शुनोदन्तः श्वादन्तः)। "शुनो दन्तदंष्ट्राकर्णवराहपुच्छपदेषु" इति पूर्वपदस्य दीर्घः। एवं दंष्ट्रादिषूदाहार्यम्। श्वादंष्ट्रस्यापत्यं श्वादंष्ट्रिः। श्वभस्त्रस्यापत्यं श्वाभस्त्रिः। अत्र "श्वादेरिञि" इति द्वारादिलक्षण ऐजागमो वृद्धिप्रतिषेधाश्च निषिध्यते। अयमेव निषेधो द्वारादौ तदादिविधिज्ञापकः। श्वन्शब्दोऽपि तत्र पठ्यते"श्वादे रिञि"इत्यत्र वार्त्तिके इकारादिग्रहणं च गणिकाद्यर्थमिति।श्वगणेन चरति (श्वागणिकः) "श्वगणाट्ठञ् च०" इति चरत्यर्थे तृतीयान्ताट्ठक्ठञौ। आदिशब्देन श्वायूथिकादिर्गृह्यते। अत्र च"प्राग्वतेः" इति ठक् इञाद्यन्ताद्यदान्यस्तद्धित उत्पद्यते तदापि "श्वादेरिञि"इति प्रतिषेधो भवत्येव। तथाच तत्र वृत्तिः। ।तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यतइति। तेन श्वाभस्त्रेरिदमिति विगृह्य "इञश्च" इत्यणि कृते ऐजागमवृद्धिनिषेधयोरभावात् श्वाभस्त्रमिति भवति। यदा पुनरिकारादेरन्यस्तद्धितो भवति तदा श्वदंष्ट्रायां भवो मणिः शौवादंष्ट्र इति वृद्धिप्रतिषेध ऐजागमश्च भवति। श्वापदे भवः (शौवापदः। श्वापदः)"पदान्तस्यान्यतरस्याम्" इति श्वादेः पदशब्दान्तस्य द्वारादिलक्षण एजागमो वृद्धिप्रतिषेधश्च पक्षे निषिध्यते। शुनः समीपमुपशुनम्। "अव्ययं विभक्तिसमीप०" इत्यव्ययीभावेऽचतुरादिषु निपातनादच् टिलोपाभावश्च संप्रसारणं च, गोष्ठे श्वेव गोष्ठश्वः, अयमप्यचतुरादिषु निपातितः। श्वानमतिक्रान्तोतिश्वः। "अतेः शुनः" इति टच् अतेरितिवचनान्निश्वा लोष्ट इत्यादौ न भवति। श्वेव पाषाणः पाषाणश्वः। "उपमितं व्याघ्रादिभिः" इति समासः। *उपमानादप्राणिषु* उपमानवाचो यः श्वन्शब्दोऽप्राणिषु वर्त्तते तदन्तादटजिति टचि "नस्तद्धिते" इति टिलोपः। अत्र श्वशब्दः सादृश्यात्पाषाणवृत्तिरित्यप्राणिवचनः, अप्राणिष्विति वचनात् श्वेव वानरः वानरश्वेत्यादौ टञ् न भवति। मातरि सर्वस्य परिच्छेत्तर्याकाशे वर्द्धतइति मातरिश्वा वायुः। "श्वन्नुक्षन्" इत्यादिना मातरि पूर्वपदे श्वयतेः कनिनि इकारलोपो लुक्च निपात्यते, "तत्पुरुषे कृति बहुलम्" इति चालुक्सिद्धिः॥ ९९० ॥

वृत्॥ यजादयो वृत्ता इत्यर्थः। भूवादिस्त्वत्रशिष्यतइति व्याख्यातारः। तेन चुलुम्पतीत्येवमादीनामाप्तप्रयोगसिद्धानां संग्रहः सिद्धो भवति॥

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगमराजमहामन्त्रिणा मायणपुत्रेण माधवसहोदरेण सायणेन विरचितायां माधवीयायां धातुवृत्तौ शब्विकरणा भ्वादयः॥

शुभं भूयात्॥

## अदादिः ।

अद भक्षणे ( अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ। अद्मि । अद्वः । अद्मः) "अदिप्रभृतिभ्यः शपः" इति शपो लुक् । "खरि च" इति चर्त्वं, (जघास । जक्षतुः । जक्षुः । जघसिथ । जक्षथुः। जक्ष । जघास । जघस । जक्षिव, जक्षिम) "लिट्यन्यतरस्याम्" इत्यदेः पक्षे घस्लादेशः । णिति वृद्धिः । उत्तमे तु णिद्विकल्पः । अपित्सु "असंयोगाल्लिट् कित्" इति कित्त्वे "गमहन०" इत्युपधालोपः, तस्य "द्विर्वचनेऽचि" इति स्थानिवत्त्वाद् द्विर्वचनं, "शासिवसिघसीनां (१)च" इति षत्वम् , अत्रोपधालोपस्य पूर्वत्रस्मादपि विधाविति स्थानिवत्त्वं षत्वविधानवैयर्थ्यप्रसङ्गात् [पूर्वत्रासिद्धे न स्थानिवत्] इति वा न भवति। घकारस्य "खरि च" इति चर्त्वात्ककारः, अ(२)त्राप्युपधालोपस्य न स्थानिवत्त्वं "न पदान्त" इत्यादिना वा [पूर्वत्रासिद्धे न स्थानिवत्] (३)इत्येव वा तन्निषेधात्, "अचस्तास्वत्" इति थल् इण्निषेध स्तासौ सत इत्युक्तं,तेन घस्लादेशस्य तासावसत्त्वान्नात्र(४)स निषेधः।अत एव तद्विषयो भारद्वाजनियमोऽपि न भवति, यद्वा स्थानिवद्भावात् "इडत्यर्ति०" इति नित्यमिड् भविष्यति नन्वस्ति प्रकृत्यन्तरघसिस्तसौ नित्यानिट् च.तस्मात्थलि(५) जघस्थेति दुर्वारम् ,मैवम्। प्रकृत्यन्तरस्य घसेर्यत्र लिङ्गं वचनं वास्ति तत्रैव प्रयोजनं न सर्वत्रेति तत्रैव धातावुपपादितत्त्वात् , अतो नास्ति लिटि प्रयोगः । घस्लादेशाभावे, ( आद, आदतुः । आदुः । आदिथ । आदिव ) क्रादिनियमादिट् । थलि भारद्वाजनियम "इडत्यर्तिव्ययतीनाम्" इति बाध्यते । "अत आदेः"इत्यभ्यासादेर्दीर्घः (अत्ता, अत्तासि, अत्तास्मि,अत्स्यति, अत्स्यसि,अत्स्यामि, अत्तु,अत्तात् । अद्धि । अदानि। आदत् । आदः । आदम् ) "अदः सर्वेषाम्" इत्यदाऽङ्गात्परस्य सार्वधातुकापृक्तस्याडागमः ( अद्यात् । अद्याः । अद्याम् )। आशिषि(६) ( अद्यात् ) अन्यत्र तु सलोपाभावो विशेषः। अद्यास्तामित्यादि । (अघसत् । अघसताम्। अघसन् ,अघसः। अघसतम् , अघसत, अघसम् । अघसाव । अघसाम ) "लुङ्सनोर्घस्लृ" इति घस्लादेशे लृदित्त्वादङ् , (जिघत्सति)। घस्लादेशे "सस्यार्द्धधातुके" इति तत्वम्। आद्यते ऽन्नं देवदत्तेनादयतीति वा ( आदिदत । आदिदत् ) णिलोपस्य स्थानिवत्त्वाद्दिशब्दस्य द्विर्वचनं,"निगरणचलन०" इति कर्त्रभिप्राये प्राप्तस्य परस्मैपदस्य [अदेः प्रतिषेधः]इति निषेधः। [आदिखाद्योः प्रतिषेधः] इति प्रयोज्यस्य कर्तुः(७)कर्मत्वनिषेधः। (व्यत्यत्ते। व्यत्यदाते । व्यत्यदते) "कर्त्तरि कर्मव्यतिहारे" इति तङ्, "आत्मनेपदेष्वनतः" इति झस्यादादेशो ऽनकारान्तादङ्गात्परत्वात्, व्यत्यदन्ति वृका मेषानिति हिंसायां द्रष्टव्यं, तत्र हि "न गतिहिंसा०" इतितङ् निषिध्यते (व्यतिजक्षे । व्यत्यादे । व्यत्यत्ता । व्यत्यत्स्यते, व्यत्यत्ताम् , व्यत्यात्त । व्यत्यदीत । आशिषि

---

(१) इण्कोः परत्वे इति ३।४। पुस्तकेऽधिकम् ।

(२) इहापीति २ पु. पाठः ।

(३) इत्येवेति नास्ति २ पु. ।

(४) न भवतीति ४ पु० नात्र प्रतिषेधः इति २ पु० । नास्ति निषेधः इति ३ पु० पाठः।

(५) थलीति नास्ति २ पु० ।

(६) आशिषि सलोपाभावो विशेष इति ४ पु० पाठः ।

(७) कर्तुरिति ४ पु० नास्ति ।

व्यत्यत्सीष्ट । व्यत्यघत्त । (व्यत्यात्) "सस्यार्द्धधातुके" इति तत्त्वे "झलो झलि" इति सिचो लोपः (कर्म्मण्यद्यते अदती) शत्रन्तात् "उगितश्च" इति ङीप् । नित्यत्वादन्तरङ्गत्वाच्च नुमः पूर्वं शपो लुगिति "शप्श्यनो०" इति नुमत्र न भवति । न च प्रत्ययलक्षणमस्ति । तत्रादित्यधिकाराद्वणाश्रये च तन्निषेधात् ( जग्धः । प्रजग्ध्य ) "अदो जग्धिर्ल्यप्ति किति" इति जग्ध्यादेशः । पुत्रो जग्धो यया सा पुत्रजग्धी, "राजदन्तादिषु परम्" इति निष्ठान्तस्य परनिपातः । "अस्वाङ्गपूर्वपदाद्वा" इत्यस्वाङ्गवाचिपूर्वपदन्तोदात्तात्क्तान्तादन्तादात्ताद्बहुव्रीहेर्वा ङीप्,[वा हतजग्धपर] इति पुत्रतकारस्य वा द्वित्वम् , अन्नं लब्धा आन्नः,"अन्नाण्णः" इति द्वितीयान्ताद्(१)लब्धेत्यर्थे णप्रत्ययः।अत एवान्नादिति निर्देशात्संज्ञायां न जग्ध्यादेशः(२),सर्वप्रकारमन्नं भक्षयति सर्वान्नीना भिक्षुः। "अनुपद्सर्वान्नायानयं बद्धाभक्षयतिनेयेषु" इति द्वितीयान्तादस्माद्यथासंख्याद् भक्षयतीत्यर्थे खः ( काकादनी, गवादनी, ) ल्युटि गौरादित्वान् ङीष् प्राप्तोति ( प्रघसः ) अच् [अच्युपसंख्यानम्]इति घस्लादेशः । सस्यमत्तीति (सस्यात्) "अदोऽनन्ने" इत्यन्नादन्यस्मिन्कर्म्मण्युपपदे विट् । अन्नेऽपपदे कर्म्मण्यणिन्नादः, (सस्याद) इति वासरूपेण ( क्रव्यात् ) "क्रव्ये च" इति विट् । "अदोऽनन्ने" इत्येव सिद्धे पुनर्विधानं वासरूपबाधनार्थमिति भाष्यादौ स्थितम् । क्रव्यादशब्दस्तु कृत्तविकृत्तपक्वमांसशब्दे उपपदेऽण पृषोदरादित्वादुपपदस्य क्रव्यभावइति वृत्त्यादौ,"व्यालं गुहाशयैः क्रूरैः क्रव्यादैः सनिशाचरैरित्यममांसभक्ष्ये व्याघ्रादौ भट्टिप्रयोगश्चिन्त्यः । राक्षसः कोणपः क्रव्यात् क्रव्याद इत्यादौ कृत्तविकृत्तपक्वमांसस्यापि भक्षणं सम्भवतीति क्रव्यादव्यवहारः (पुत्रादिनी) "सुप्यजातौ" इति णिनिः। अत्र पुत्रतकारस्य प्राप्तं "अनचि च" इति द्वित्वं "नादिन्याक्रोशे पुत्रस्य" इत्यादिनीशब्दे उत्तरपदे आक्रोशे गम्यमाने नेति निषिध्यते । [तत्परे च] इतिवचनात्पुत्रपुत्रादिनीत्यत्रापि द्वित्वं न भवति । (अद्मरः) "सृघस्यदः क्मरच्" इति क्मरच् " (घासः) "अकर्तरि च कारके०" इति घञि "घञपोश्च" इत्यदेर्घस्लादेशः । महत्या घासो महाघासः [महदात्त्वे घासकरविशिष्टेषूपसंख्यानम्] इति पुंवद्भाव आत्त्वञ्च, ( विघसः ) "उपसर्गेऽदः" इत्यप् नौ तूपपदे "नौ ण च" इत्यबणौ भवतः । (न्यादो निघसः)। "घञपोश्च" इत्यपि घस्लादेशः । (अन्धोऽन्नम्) "अदेर्नुम् धश्च" इत्यसुनि नुमागमो दकारस्य धकारः, अत्री अत्ता राक्षसादिरुच्यते । अत्रिऋषिः,(३)"अदेस्त्रिनि च"इति त्रिनिप्रत्ययः चकारात् त्रिप् च। त्रिनेरिकारो नकारपरित्राणार्थः। अत्रेरपत्यमात्रेयः । "इतश्चानिञः" इति ढक् । अस्य बहुत्वे "अत्रिभृगुकुत्स०" इति लुकि (अत्रय) इति भवति। अद्यते फलमूलादिकमस्येति(अद्रिः)।"अदिसधिभूशुभिभ्यः क्रिन्"इति क्रिन् प्रत्ययः । (अध्वा) "अदेर्द्धच" इति क्वनिप् । दकारस्य च धकारः, अध्वानमलङ्गच्छतीति (अध्वन्यः । अध्वनीनः )। *अध्वनो यत्खौ* इति द्वितीयान्तादलङ्गामीत्यर्थे यत्खौ,यति "ये चाभावकर्म्मणोः" इति खे तु "आत्माध्वानौ खे" इति प्रकृतिभावः । विहीनो ध्वा व्यध्वः, एवं दुरध्वः "उपसर्गादध्वनः" इत्यच् समासान्तः । उपसर्गग्रहणं प्रादुपलक्षणम् । प्राध्वंशब्दो मान्तो ऽव्ययमानुकूल्ये वर्तते ॥ १ ॥

हन हिंसागत्योः (हन्ति । हतः, घ्नन्ति । हंसि । हथः । हथ । हन्मि, हन्वः । हन्मः) झलादौ क्ङित्यनुदात्तोपदेशेत्यनुनासिकलोपः । झावन्तरङ्गत्वादन्तादेशेऽजादित्वात् "गमहन" इत्युपधालोपे "हो हन्तेर्ञ्णिन्नेषु" इति ञ्णिति णिति प्रत्यये नकारे च परे कुत्वविधानात्सोष्मणो घोषवतो नादवतो महाप्राणस्य हकारस्य तादृशो घकारः । अत्रोपधालोपस्य स्थानिवत्त्वं नकारे परतः कुत्वविधानसामर्थ्यान्न भवति, सत्यपि वा स्थानिवत्त्वे वचनसामर्थ्याद्दीहर्स

---

(१) द्वितीयासमर्थादिति ३ पु० पाठः ।

(२) जग्ध्यादेशाभाव इति ३ पु० पाठः ।

(३) त्रिबित्यनुवर्तमाने अदेस्त्रिनि चेति त्रिनित्रिपौ प्रत्ययौ ।

व्यवधानमाश्रयिष्यते ( जघान, जघ्नतुः । जघ्निथ । जघन्थ । जघ्न, जघान, जघन । जघ्निव ) क्रादिनियमादिट् । थलि भारद्वाजनियमाद्विकल्पः, यत्रोपधालोपस्तत्र "द्विर्वचनेऽचि" इति स्थानिवत्त्वाद् द्विर्वचनं, (जघ्निवान्, जघन्वान् ) "विभाषा गमहनविदविशाम्" इति क्वसो-रिड्विकल्पः, इटि "गमहन०" इत्युपधालोपे "हो हन्तेः०" इति कुत्वम्, अनिटि तु "अभ्या-साच्च" इत्यभ्यासादुत्तरस्य हन्तिहकारस्य कुत्वम्। चान्द्रास्तु भाषायामस्य प्रयोगमिच्छन्ति, (हन्ता, हनिष्यति) "ऋद्धनोः स्ये" इतीट् ( हन्तु हतात् । हताम्, घ्नन्तु । जहि, हतं, हनानि) तातङि तस्य ङित्त्वादनुनासिकलोपः । हौ 'हन्तेर्जः' इति जादेशः । अस्य "असिद्धवदत्राभा-त्" इत्यसिद्धत्वात् "अतो हेः" इति लुङ् न भवति। हतात्त्वमित्यत्र जादेशात्परत्वात्तातङि तस्य स्थानिवद्भावेन हित्वात्प्राप्तो(१) जादेशः सकृद्गतिपरिभाषया न भवति। (अहन्। अहताम्। अघ्नन्, अहन् । अहतम् । अहत । अहनम् । अहन्व ) हल्ङ्याब्भ्यादिना तिस्योर्लोपः ( हन्यात् । हन्याताम् । हन्युः । हन्याम् । हन्याव । आशिषि वध्यात् । वध्यास्ताम् । वध्यासुः वध्यासम् ) "हनो वध लिङि" "आर्द्धधातुके" इति वधादेशे "अतो लोपः" इत्यादिना "अकृत्सार्वधातुकयोः" इति दीर्घ(२)मतो लोपो बाधते ( अवधीत् । अवधिष्टाम् । अवधिषुः । अवधीः । अवधिषम् । अवधिष्ट । "लुङि च" इति वधादेशः । अल्लोपस्य स्थानिवत्त्वाद्धलन्तलक्षणा वृद्धिर्न भवति, वधादेशस्यानेकाच्त्वादुपदेशत्वनिगतनादनुदात्तत्वाभावात्सिचो वलादिलक्षण इड् भवति । यङ्लुगन्तस्यापि हन्तेर्लङ्लुङोः प्रकृतग्रहणन्यायेन वधादेशे वध्यादवधीदित्येव रूपम् । अ-त्रादेशस्य स्थानिवत्त्वेन यङन्तत्वाद् द्विर्वचनं स्यादिति न वाच्यम् । एवं हि प्रकृतगतं साभ्या-सत्वमप्यतिदिश्येत, ततश्चानभ्यासस्येति निषेधः स्यात् (आहते। आघ्नाते, आघ्नते । आहसे । आघ्नाथे । अहध्वे । आघ्ने । आहन्वहे आहन्महे । ) पूर्ववज्झलादा(३)वनुनासिकलोपः । अजादौ तूपधालोपः । "आङो यमहनः" इत्यकर्म्मकात् [ स्वाङ्गकर्म्मकाच्च ] इति तङ् ( आजघ्ने । आजघ्नाते । आजघ्निषे, आहन्तासे, आहनिष्यते । आहताम् । आघ्नाताम् । आहन्व । आहनै )। आटि पित्त्वान्नोपधालोपः (आहत, आघ्नाताम्, आहथाः आघ्नि । आहन्वहि । आघ्नीत । आघ्नीयाताम् । आघ्नीथाः । आघ्नीय ) लिङ्स्सलोपः । आशिषि ( आवधिषीष्ट, आवधिषीयास्ताम् । ) "हनो वध लिङि" इति वधादेश इडा-गमः ॥ ( आवधिष्ट, । आवधिषाताम् । आवधिष्ठाः । आवधिषिढ्वम् । आवधिषि ) "आत्मनेपदेष्वन्यतरस्याम्" इति पक्षे वधादेशः (अन्यदा आहत । आहसाताम् । आह-सत । आहथाः आहध्वम् । आहसि । आहन्वहि ।) अत्र "हनः सिच्" इति झलादेरात्मने-पदपरस्य 'सिचः' कित्त्वादनुनासिकलोपे "ह्रस्वादङ्गात्" इति झलि सिचो लोपः । "आङो यम-हनः" इति तङ् अकर्म्मकात्स्वाङ्गकर्म्मकाच्चेत्युक्तम् । अथ कथमाजघ्ने विषमविलोचनस्य वक्ष इति । अत्र केचिदाज इति पदं छित्त्वा घ्ने इति भावे क्विपि चतुर्थ्येकवचनान्तमुक्त्वा घ्ने हन्तुमाज आजगामेत्यर्थं इति समर्थयन्ते । तदयुक्तम् । "अजेर्व्यघञपोः" इति लिड्या-र्द्धधातुके वीभावेन (४)भाव्यत्वात् । अन्येतु विषमविलोचनस्य समीपमेत्य स्वं वक्ष आस्फा-लितवानित्यर्थं इति । मल्लो ह्युत्साहाविष्करणाय स्वं वक्ष आस्फालयतीति । भागवृत्तौ तु नैवायं साधुरित्या(५)योध इति पाठान्तरमुक्तम्, एवं च आहध्वं मा रघूत्तममिति भट्टिप्र-योगोऽपि चिन्त्यः । तथा मद्धर्थंरीन् विजघ्निथेति च । अत्र क्विः क्वित्वात् "असंयोगा-ल्लिट्कित्" इत्यत्र चापिदित्यधिकारात् क्वित्वाभावादुपधालोपोऽपि दुर्लभः । अपिद्विकारश्च

(१) पुनरिति पुस्तकान्तरे पाठः । (२) दीर्घोऽतो लोपेन बाध्यते इति पुस्तकान्तरे पाठः।

(३) क्ङिङ्त्यधिकं क्वचित् । (४) भवितव्यमिति कुत्रचित् ।

(५) आयोधं युद्धं, आपदे इति पुस्तकान्तरे पाठः ।

"इन्धिभवतिभ्यां च" इत्यत्र भवतिग्रहणाज्ज्ञायते। तथाच तत्र वार्त्तिकमिन्धेः संयोगार्थं वचनं भवतेः पिदर्थमिति। "आङो यमहनः" इति तङ् प्रकृतिग्रहणन्यायेन यङ्लुगन्तादपि भवति (आजङ्घते। आजङ्घाञ्चक्रे इत्यादि ) भवति। अत्रापि लिङ्लुङोर्वधादेशे प्रकृतिवदेव रूपम् (आवधिषीष्ट। आवधिष्ट ) इति लुङि वधादेशाभावे आ-जङ्घनिष्टेत्यादि, "हनः सिच्" इत्यत्र झलीत्यधिकारा(१)दिडागमे कित्वाभावादुपधालोपाभावः । ( जिघांसति )। "अज्झनगमा०" इति दीर्घः। "अभ्यासाच्च" इति कुत्वं, (जङ्घन्यते )। "नुगतोऽनुनासिकान्तस्य" इति नुक्। इदं चानुस्वारोपलक्षणार्थं पदान्तवदिति च प्रागेवोक्तम्। तेन "वा पदान्तस्य" इति परसवर्णो विकल्पेनोदाहार्यः॥ [ यङि हन्तेर्हिंसायां घ्नीभावो वक्तव्यः ] इति घ्नीभावविधानाद् हिंसायां (जेघ्नीयते) इति भवति। (जङ्घनीति, जङ्घन्ति। जङ्घतः। जङ्घ्नति।) अत्र सुधाकरः। के पुनरनुदात्तोपदेशा यस्यादय इति व्याख्यातृभिर्गणत्वेन निर्देशान्निर्दिष्टं यद्गणेन चेति यङ्लुकि अनुनासिकलोपाभावादनुनासिकस्येति दीर्घे जङ्घात इत्युक्त्वा न क्वचिदाचार्येणानुदात्तोपदेशानां गणेन निर्देशः कृत इति भवितव्यमेवानुनासिकलोपेनेत्याह। "हन्तेर्जः" इत्यत्र च न्यासे हन्तेरिति तिपा निर्देशाद् यङ्लुकि जभावाभावाज्जङ्घहीति भवतीति कृतानुनासिकलोपः प्रत्युदाहृतः, अत्र "असिद्धवदत्रा०" इत्यनुनासिकलोपस्यासिद्धत्वाद्धि लुङ् न भवति। अत्रात्रेयः-न्यासे प्रत्युदाहरणं जङ्घनीहि इति पठन् भाषायां हेरपित्त्वार्दाडभावाच्छान्दसमुदाहरणमित्याह (घातयति)। (अजीघतत्) "हनस्तो चिण्णलोः" इति हन्तेर्ञिति णिति प्रत्यये चिण्णल्वर्जिते परे नकारस्य तकारः। प्रकृतिग्रहणन्यायेन यङ्लुगन्तेऽपि तत्त्वे (जङ्घातयति।) कर्म्मणि (हन्यते जघ्ने, हन्ता। घानिता। हनिष्यते। घानिष्यते। हन्यताम्। अहन्यत। हन्येत।) आशिषि (घानिषीष्ट, वधिषीष्ट। अवधि। अघानि। अवधिषाताम्। अहसाताम्। अघानिषातामित्यादि) स्यादिषु चिण्वद्भावपक्षे वृद्धिकुत्वे। नन्ववधीत्यत्र चिणि वधभावो दृश्यतइति चिण्वद्भावेन स कस्मान्नातिदिश्यते। उच्यते। नात्र चिणि दृष्टमात्रमतिदिश्यते किन्त्वाङ्गं चिणि दृष्टमिति वधादेशो न भवति। लिङ्लुङोः कर्तृवद्वधादेशतद्विकल्पौ, लिङि चिण्वत्पक्षे वधादेशो न भवति, यतश्चिण्वदिट्परत्वेन पूर्वं वधादेशं बाधते, कृते तु सकृद्गतिपरिभाषया न भवति, ननु द्वितीयाध्याये "आर्द्धधातुके" इति विषयसप्तमी, तेन प्रागेव प्रत्ययोत्पत्तेर्वधभावेन भाव्यं, चिण्वद्भावस्तु भावकर्म्मविषयेषु स्यादिषु परतो विधियत इति कथमन्तरङ्गबहिरङ्गयोर्विप्रतिषेधः। नैष दोषः। यत्रार्द्धधातुकसामान्यं निमित्तत्वेनोपादीयते "अस्तेर्भूः" इत्यादौ तत्रैव विषयसप्तम्याश्रयणात्, न पुनर्यत्र विशेष उपादीयते "हनो वध लिङि" इत्यादौ तत्रापीति। उक्तं चैवं चिण्वत्सूत्रे व्याख्यातृभिः। वार्त्तिकं च [वधभावात्सीयुटि चिण्वद्भावो विप्रतिषेधेन] इति। कैयटेन तु विषयसप्तम्याश्रयणेनापि परिहार उक्तः। यथा "एकाच उपदेशेऽनुदात्तात्" इत्यत्र वक्ष्यति भाष्यकारः। वधिषीष्टेत्यत्र निपातनस्वरं प्रत्ययस्वरो बाधिष्यते आर्धधातुकीयाः सामान्येन भवन्त्यनव(२)स्थितेषु प्रत्ययेष्वित्येवं ब्रुवता लिङीति विषयसप्तम्येवाभ्युपगता, ततश्चान्तरङ्गत्वाद्वधभावः प्राप्नोति, प्रतिपदविधेर्बलीयस्त्वाच्चिण्वद्भावो भवतीति, कर्म्मकर्त्तरि आहते माणवकः स्वयमेव, आवधिष्ट माणवकः स्वयमेवेत्यत्र (यक्चिणोः प्रतिषेध) इत्यादिना यक्चिणोर्निषेधात् शप्सिचौ भवतः। अत्र हरदत्तेनात्मनेपदविधावकर्मका ये धातवो निर्दिष्टास्ते यदान्तर्भावितण्यर्थाः सकर्म्मका भवन्ति त आत्मनेपदाकर्म्मका आहन्ति माणवकमिति तदा सकर्म्मकत्वादनुदाहरणमिति केचित्। अन्ये त्वात्मनेपदाकर्म्मकेति धातूपलक्षणत्वात्कर्म्माविवक्षा-

---

( १ ) इडादेरकित्वादिति पुस्तकान्तरे।

( २ ) अनवस्थितेषु प्रत्ययेष्विति बहुषु पुस्तकेषु नास्ति।

त्मात्मनेपदस्य निमित्तत्वात्सकर्म्मकेऽप्यविरुद्धमुदाहरणमित्याहुः। इत्ये(१)तन्नाविगीतमुदाहरणम् । "वेः शब्दकर्म्मणः" "अकर्म्मकाच्च" विकुर्व्वते सैन्धवाः, वल्गन्तीत्यर्थः, तान्यदाऽन्यो वल्गयति तदा तेषां कर्म्मकत्वं, पुनः सौकर्यातिशयाय कर्त्तृत्वविवक्षायां विकुर्व्वते सैन्धवाः स्वयमेव वल्गतीत्युक्तं, चोरस्य निप्रहन्ति, चोरस्य निहन्ति, चोरस्य प्रहन्ति, चोरस्य प्रणिहन्ति, अत्र "नेर्गद०" इति णत्वं, "जासिनिप्रहण०" इति । कर्म्मणि शेषषष्ठी, तत्र निप्रग्रहणं संघातविगृहीतविपर्यस्तार्थमित्युक्तं, ( प्रहण्मि । प्रहन्मि । प्रहन्वः । प्रहण्वः । प्रहन्मः, प्रहण्मः ) अत्र "हन्तेरत्पूर्व्वस्य" इत्युपसर्गस्थान्निमित्तात्परस्यात्पूर्वस्य हन्तिनकारस्य विधीयमानं णत्वं प्रहण्यते प्रहणानीत्यादाविव नित्यप्राप्तं "वमोर्वा" इति नकारवकारयोः परयोर्विकल्प्यते । प्राघानीत्यत्र "अत्पूर्वस्य" इति तपरकरणाण्णत्वस्य न प्रसङ्गः, प्राहन्नित्यत्र तु "पदान्तस्य" इति निषेधः, प्रहन्तीत्यत्रानुस्वारे कर्त्तव्ये णत्वं पूर्व्वत्रासिद्धमिति न भवति, कृते तु परसवर्णे तस्यासिद्धत्वात्पुनर्णत्वं न भवति, [ अन्तः शब्दस्याङ्किविधिणत्वेषूपसंख्यानम् ] इत्युपसर्गसंज्ञोपसंख्यानात्तत्पूर्व्वस्यापि सर्व्वमिदं णत्वं द्रष्टव्यम्, अन्तर्णिहन्तीत्यादि, एवं च "अन्तरदेशे" इति हनो नकारस्य णत्वव्वचनं तथाऽदेशे णत्वनिषेधार्थं भवति अन्तर्हननो नाम वाहीकेषु ग्रामेषु देशविशेषः, अन्यत्रान्तर्हणनमिति णत्वं भवति, मध्ये हननमित्यर्थः सर्वमिदं णत्वं तिपा निर्द्देशाद्यङ्लुकि न भवति प्रणिजङ्घनीत्यादि, "जासिनिप्रहण०" इति षष्ठी तु भवत्येव । चोरस्य प्रणिजंघतीत्यादि । अन्तर्हत्य मध्ये हत्वेत्यर्थः, "अन्तरपरिग्रह" इत्यन्तरो गतित्वात् "कुगतिप्रादयः" इति तत्पुरुषे ल्यपि "वा ल्यपि" इत्यनुनासिकलोपे तुक् । वाग्रहणस्य व्यवस्थितविभाषात्वान्मान्तेषु विकल्पितो ऽनुनासिकलोपो ऽन्यत्र नित्यमित्युक्तम् । परिग्रहेऽगतित्वादन्तर्हत्वा मूषिकां श्येनो गत इति भवति, परिगृह्येत्यर्थः । अत्र न्यासोद्योते अन्तश्शब्दो धातोः परिग्रहे वृत्तिं करोतीति, एवं चान्तरपि परिग्रहस्यैव द्योतक इत्युक्तं भवति, कणेहत्य पयः पिबति, मनोहत्य पयः पिबति । *कणेमनसी श्रद्धाप्रतीघाते* इति कणेमनःशब्दयोर्गतित्वे समासादिपूर्ववत्, अत्र कणेशब्दः सप्तमीप्रतिरूपको निपातो ऽभिलाषातिशये वर्त्तते, मनश्शब्दोऽपि साहचर्यादभिलाषा वृत्तिरेवेति न्यासपदमञ्जर्योः, हन्तिरत्रावधीकरणाङ्गे निवृत्तौ वर्त्तते, सा च सन्निधानात्कणेमनश्शब्दार्थयोस्तौ च निवर्त्यमानतया ऽवधीति तयोश्च प्रतिघातो विषयतया विशेषणं, तदयमर्थः । अभिलाषनिवृत्ति(२)पर्यन्तं पयः पिबतीति । उक्तञ्च न्यासोद्योते, प्रतीघाते हन्तिरवधिकरणाङ्गे निवृत्तौ वर्त्तत इति । अभिलाषनिवृत्तिमवधीकृत्य पयः पिबतीति, हरदत्तोऽपि अतिशयेन अभिलष्य तन्निवृत्तिपर्यन्तं पयः पिबतीत्यर्थः । एवं चात्राभिलाषनिवृत्तेरवधीकरणस्य पयः पानात्पूर्वत्वात् क्त्वोपपत्तिः, श्रद्धाप्रतीघातादन्यत्र कणे हत्वा मनो हत्वा, कणशब्दः सूक्ष्मे तन्दुलावयवे वर्त्तते, मनःशब्दस्तु चेतसि, योगद्वयमिदं (३)स्वभावाद्धन्तिविषयं, (वध्यः ।) "हनो वध च" इति कर्म्मणि यत्, तत्संनियोगेन वधादेशश्च, घात्य इति ण्यति । (ब्रह्महत्या, ) "हनस्त च" इत्यनुपसर्गे उपपदे क्यप् तत्संनियोगेन नकारस्य तकारः । सोपसर्गादनुपपदाच्च नायं विधिरिति (४)घात इति घञ् भवति । तयोरेवेति भावलक्षणो ण्यदत्रानभिधानान्न भवतीत्यात्रेयः । असिहत्यायां भवमासिहात्यम्, "अनुशतिकादीनां च" इत्युभयपदवृद्धिः । अत्र केचिदश्वहत्येति पठन्ति । ततो विमुक्तादित्वादश्वहत्याशब्दो ऽस्मिन्नध्यायेस्तीत्यण्याश्वहात्यमिति भवति, हत्याशतं पानसहस्रमित्यादाव-

---

( १ ) इदमत्राविगीतमुदाहरणमिति पुस्तकान्तरे पाठः ।

( २ ) मवधीकृत्येति क्वचित् ।　　( ३ ) अर्थस्वभावादिति क्वचित् ।

( ४ ) संघात इति अधिकम् ।

नुपपदे क्यबार्षः । घनाघनः [हन्तेर्घत्वं च] इत्यचि द्विर्वचनमभ्यासस्यागमो हकारस्य घकारः, परस्य "अभ्यासाच्च" इति कुत्वम्, आको दीर्घोच्चारणसामर्थ्यान्न हलादिशेषः, यदि स्यादकमात्रं विदध्यात्सवर्णदीर्घेणाकारो भविष्यति, पररूपं त्वनिष्ट्वान(१)वंयथ्यान्न भविष्यति । शत्रुहः शत्रुं वध्यादित्यर्थः । "आशिषि हन" इत्याशिषि गम्यमानायां कर्म्मण्युपपदे डप्रत्ययः । डित्त्वसामर्थ्याट्टिलोपः । दार्वाहन्तीति दार्वाघाटः, [ दारावाहनो ण्यन्तस्य च टः संज्ञायाम् ] इत्याङ्पूर्वाद्धन्तेः कर्त्तर्यण्, नकारस्य च टकारः चार्वाहन्तीति चार्वाघाटः चार्वाघातो वा । [ चारौ वा ] चारौ कर्म्मण्युपपदेऽण्प्रत्यये नकारस्य वा टकारः । तदभावे "हनस्तोऽचिण्णलोः" इति तत्वं, क्रियाविशेषणत्वाच्चारोः कर्म्मत्वं, वर्णान्सङ्घन्तीति वर्णसंघाटो वर्णसंघातो वा, [ कर्म्मणि समि च ] इति कर्म्मणि समि चोपपदेऽण् वाऽन्त्यस्य च टकारः । क्लेशापहः, तमोपहः । "अपेः क्लेशतमसोः" इति क्लेशतमसोः कर्म्मणोरुपपदयोरपपूर्वाद्धन्तेर्डः, 'स्त्रांगर्यदि जीवितापहा' इति प्रयोगस्तु "क्विप् च" इति सार्व्वकालिके क्विपि, "ऋन्नेभ्य०" इति ङीब् न भवति, वह्वादिषु ङीब्विकल्पार्थं हन्निति पाठात् । यदि हि ङीपभावे ङीप्स्याद् गौरादिष्वेव हन्निति पठित्वा नित्यं ङीपमेव विदध्यात्, अथवा तदपि न कुर्यात्, ङीपैव सिद्धत्वात् । नात्र ङीब्ङीपो रूपे विशेषोऽस्ति, नापि स्वरे जीवितापहशब्दस्य "गतिकारकोपपदात् कृत्" इत्युत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वेऽन्तोदात्तस्य ङीपो "अल्लोपोऽनः" इत्युदात्तलोपनिमित्तस्य "अनुदात्तस्य च यत्रोदात्तलोपः" इत्युदात्तत्वात्, तस्माद्बह्वादिषु हन्निति ङीब्विकल्पसामर्थ्यात्तदभावे ङीब् न भवति, ज्वरापहादिवत् "अन्येष्वपि दृश्यते" इति डो वा । कुमारघाती शीर्षघाती, "कुमारशीर्षयोर्णिनिः" इत्यनयोः कर्म्मणोरुपपदयोर्हन्तेः कर्त्तरि णिनिः । अस्मादेव निर्द्देशात्प्रत्ययसंनियोगे शिरसः शीर्षभावः । जायाघ्नो ब्राह्मणो, जायाहननहेतुलक्षणयुक्त इत्यर्थः । एवं पतिघ्नी वृषली । "लक्षणे जायापत्योष्टक्" इत्यनयोः कर्म्मणोरुपपदयोर्हन्तेर्हननलक्षणवति कर्त्तरि टक्, लक्षणमात्रे उत्तरसूत्रेण सिद्धत्वात्तद्वान्निह लक्षणशब्देनोच्यते । कित्त्वात् "गमहन०" इत्युपधालोपः, टित्त्वान्ङीप् (जायघ्नः) तिलकालकः । पतिघ्नो पाणिरेखा । श्लेष्मघ्नं मधु । "अमनुष्यकर्तृके च" इति कर्म्मण्युपपदे मनुष्यादन्यकर्तृके हन्त्यर्थे टक् । मनुष्ये त्वणेव, आखुघातः शूद्रः । कृतघ्नो ब्राह्मणो गोघ्नो(२) ब्राह्मण इत्यादिषु "कृत्यल्युटो बहुलम्" इति बहुलवचनाट्टक्, मूलविभुजादित्वात्क इत्येके । अनयोः स्त्रियां विशेषो ङीप्टाब्भ्यां चोरघाती हस्तीत्यत्रामनुष्ये कर्तर्यप्यस्मादेव बहुलवचनादण् भवति, हस्तिघ्नो भटः, हस्तिहनने शक्त इत्यर्थः । एवं कपाटघ्नश्चोरः "शक्तौ हस्तिकपाटयोः" इत्यनयोः कर्म्मणोरुपपदयोश्शक्तौ गम्यमानायां हन्तेष्टक् । अशक्तौ विषेण हस्तिनं हन्ति हस्तिघात इत्यण् भवति, पाणिघस्ताडघः, शिल्पिविशेषौ । "पाणिघताडघौ शिल्पिनि" इति पाणिताडयोः कर्म्मणोरुपपदयोर्हन्तेष्टकि टिलोपघत्वे च निपात्येते, शिल्पिनोऽन्यत्र पाणिघातः । सूत्रद्वयमिदं मनुष्यकर्त्रर्थं(३), राजानं हन्तीति राजघ्नस्तीक्ष्ण उच्यते । [ राजघ उपसंख्यानम् ] इति पूर्व्ववन्निपात्यते । पितृव्यं हतवान् पितृव्यघाती । "कर्म्मणि हनः" इति कर्म्मण्युपपदे कुत्सिते कर्त्तरि भूते णिनिः । अकुत्सिते चौरघात इत्यणेव, ब्रह्माणं हतवान् ब्रह्महा, एवं भ्रूणहा वृत्रहा, "ब्रह्मभ्रूणवृत्रेषु क्विप्" इति हन्तेर्ब्रह्मादिषूपपदेषु भूते क्विप् । "क्विप् च" इति सामान्येन

---

( १ ) सामर्थ्यादिति पुस्तकान्तरे पाठः ।

( २ ) शत्रुघ्न इत्यधिकं कुत्रचित् ब्रह्मघ्न इति पुस्तकान्तरे अधिक ब्राह्मण इति च नास्ति ।

( ३ ) कर्तृकार्यमिति क्वचित् पाठः ।

क्विपि सिद्धे नियमार्थं सूत्रं, चतुर्विधश्चात्र नियमः। धातूपपदप्रत्ययकालविषयः, तेन हि प्रदे- त्यादौ 'क्विप् च' इति क्विप् सार्वकालिकः। "सौ च" इति दीर्घः। ब्रह्महणावित्यादिषु "इन्हन्पूषार्यम्णां शौ" इति शावेव प्रत्ययउपधालक्षणमात्रो दीर्घो नान्यत्रेति नियमात्सर्व्व- नामस्थाने दीर्घो न भवति, नापि क्विपमाश्रित्यानुनासिकस्य क्विझलोरिति। ननु सर्व्वना- मस्थानदीर्घनिषेधसामर्थ्यादेव क्विबाश्रयोऽपि दीर्घो न भविष्यति, सत्यमिह वृत्रहणा ब्राह्मण- कुले इति वृत्रहणि ब्राह्मणइति नपुंसकद्विवचनप्रथमैकवचनान्तयोश्च "अल्लोपोऽनः" इत्यन- न्तस्य भस्य विधीयमाने लोपे "विभाषा ङिश्योः" इति विकल्पिते क्विपमाश्रित्यानुनासि- कस्य क्वि०" इति दीर्घः स्यात्। अयं दीर्घनियम उपधालक्षणस्यैव नान्यस्येति वृत्रहेवाचरति वृत्रहायत इत्यत्र "अकृत् सार्वधातुकयो०" इति दीर्घो भवति, वृत्रहणावित्यादौ *एकाजुत्तरपदे णः* इति णत्वम्, एकाजुत्तरपदं यस्य तत्र समासे उत्तरपदप्रातिपदिकान्तनुम्विभक्तिस्थनका- रस्य पूर्व्वपदस्थान्निमित्तात्परस्य नित्यं ण इति सूत्रार्थः। भसंज्ञायामल्लोपउत्तरपदस्यानचक- त्वात् स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदत्वाभावादिति "प्रातिपदिकान्तनुम्विभक्तिषु च" इति विकल्पो भवति वृत्रहणो वृत्रघ्न इति। अत्राधिकृतस्य पूर्व्वपदस्य सम्बन्धिशब्द- त्वात्तेनाक्षिप्तेनोत्तरपदेन प्रातिपदिकस्य विशेषणादुत्तरपदप्रातिपदिकान्ते नुमि विभक्तौ च स्थितस्य नकारस्य पूर्वपदस्थान्निमित्तादुत्तरस्य वा ण इति सूत्रार्थः। तेन गर्गाणां भगिनी गर्गभगिनीत्यत्र यदुत्तरपदं भगिनीशब्दो न तत्प्रातिपदिकं नापि नान्तम्। यन्नान्तं भगि- न्निति प्रातिपदिकं न तदुत्तरपदमिति णत्वं न भवति। गर्गभगिणीश०दस्तु गर्गाणां भगो गर्गभगः सोऽस्यास्तीतीनिप्रत्यये "रषाभ्याम्०" इति णत्वे। नन्वस्य, पूर्व्वपदात्संज्ञाया- मगः" इति पूर्व्वपदस्थान्निमित्तादुत्तर यदि भवति संज्ञायामेवेति नियमात्कुतो णत्वप्रसङ्गः। नैष दोषो, यतो ऽत्र पूर्वपदग्रहणेन,सम्बन्धिन उत्तरपदस्याक्षेपात्तत्स्थस्यैवायं नियम इति अत्र च नकारो नोत्तरपदस्थः किन्तु समासप्रातिपदिकाद्विहितेनिप्रत्ययस्थः, एवं च मातृभोगीण इत्यादौ भोगोत्तरपदलक्षणे खे नित्यं णत्वं भवति। माषानभीक्ष्णं वपति माषवापिणी माष- वापिनीत्यत्र "बहुलमाभीक्ष्ण्ये"इति सुप्युपपदे आभीक्ष्ण्ये गम्यमाने णिनौ "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति कृदन्तावस्थायामेव समासे पश्चात्ततो ङीबिति णिनेर्नकार उत्तरपदप्रातिपदिकान्तस्थ इति णत्वविकल्पः। (अभ्याघाती) "सम्पृच" आदिना घिणुन्। (घातुकः)। "लषपत०" इत्यादिनोकञ्। (विघ्नः) [ घञर्थे कविधानम् ] इति कः। (वध ।) *हनश्च वध* इत्यनुवर्तमानाद्धनो भावेऽप्प्रत्ययस्तत्सन्नियोगेन वधादेशश्च, "हनश्च" इति चकारो भिन्नक्रमानुवृत्तस्यापोनन्तर इति घञपि भवति घात इति, भावादन्यत्रोत्सर्गात् भावे च घञेव, हन्यत इति घातः आहन्यते आहननमिति वा अघातः,ननु वधिः प्रकृत्यन्तरमस्ति तस्मात्सिद्धं घञि "जनिवध्योश्च" इति ञिति णिति कृति यदुक्तं तन्नेति वृद्धिनिषेधाद्वध इति भविष्यति हन्तेश्च घात इति किं "हनश्च वधः" इत्यनेन, उक्तं च जनिवध्योरित्यत्र वृत्तौ, वधिः प्रकृत्यन्तरं व्यञ्जनान्तमप्यस्ति तस्यायं प्रतिषेधो विधीयतइति, तथा च हरदत्तोऽपि वध हिंसायामिति भ्वादौ पाठादिति, सत्यमेवं, वध इति रूपं सिध्यति स्वरस्तु न(१) सिध्यति। अयं ह्यादेशो ऽकारान्तोदात्तः, तत्रापमाश्रित्याता लो- पउदात्तनिवृत्तिस्वरेणाप उदात्तत्वादन्तोदात्तो वधशब्दः, घञि त्वाद्युदात्तः, एवं च कर्म्मण्यु- पसर्गेऽपि हनो वधादेशाभावस्य प्रयोजनमन्तोदात्तवधशब्दनिवृत्तिर्भवति। प्रकृत्यन्तरेणाद्यु- दात्तो भवत्येव।(अभ्रघनः) अभ्रस्य काठिन्यमित्यर्थः "मूर्त्तौ घनः" इति हनोऽप्प्रत्ययेऽपि घ- नादेशः, मूर्त्तिरिह काठिन्यं, घनं दधीत्यादौ धर्म्मशब्देन धर्मी भण्यते। अन्तर्घणो वाहीकदेश- विशेषः। "अन्तघनो देशे" इत्यन्तःपूर्वस्य हनोऽपि घनादेशो निपात्यते, केचिदन्तर्घणइति

(१) भिद्यते इति पुस्तकान्तरे पाठः।

णकारं पठन्ति तदपि ग्राह्यमेवेति वृत्तितद्व्याख्यानेषु। देशादन्यत्रान्तर्घातः, प्रघणः प्रघाणः *अगारैकदेशे प्रघणप्रघाणश्चः* इति प्रपूर्व्वस्य हनोऽपि घनादेशो वा वृद्धिश्च निपात्यते। अत्रागारैकदेशशब्दो निपातनस्य रूढ्यर्थत्वाद्बाह्ये द्वारप्रकोष्ठके वर्त्तते, प्रघाण इत्यत्र णत्वमपि निपात्यते, "हन्तेरत्पूर्व्वस्य" इति तपरकरणान्न प्राप्नोति। अगारैकदेशादन्यत्र प्रघातः। (उद्घनः) *उद्घनोत्याधानम्* इति निपात्यते। तदुपरि यस्य निधायान्यत्काष्ठं तक्ष्यते तदिहात्याधानम्, अपघनः पाणिः पादश्च,* अपघनोऽङ्गम्* इत्यपपूर्व्वस्य हनोपि घनादेशो निपात्यते। अयो हन्यते येन सोऽयोघनः। विहन्यते येन स विघनः समीकरणसाधनम्। द्रुर्हन्यते येन स द्रुघनः, *करणेयोविद्रुषु* इत्ययोविद्रुपूपपदेषु हनोऽपि घनादेशः अत्र वृत्तौ द्रुघण इति केचिदुदाहरन्ति तत्र कथं णत्वमरीहणादिपाठात् "पूर्व्वपदात्सञ्ज्ञायाम्०" इति वेति। अन्यत्रायोघात इत्यादि भवति, स्तम्बघ्नः स्तम्बघनः। दात्रादिः *स्तम्बे कच* इति स्तम्बशब्दउपपदे करणे हनः कः प्रत्ययः, चकारादप्, तत्संनियोगेन घनादेशश्च। अत्र स्त्रियां विप्रतिषेधेन क्तिन् प्राप्नोति तं बाधित्वा "करणाधिकरणयोः" इति ल्युड् भवति, अत्र भाष्यम्, अथ यया इषीकया स्तम्बो हन्यते कथं तत्र भवितव्यं, के चिदाहुः। स्तम्बघ्नेति भवितव्यम्। अपरे आहुः। स्तम्बहेतिरिति, "ऊतियूतिजूतिसातिहेतिकीर्तयश्च" इति निपातनादिति। अपर आहुः। स्तम्बहननीति भवितव्यं वक्ष्यत्येतत् "अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेन" इति, अत्र कैयटे स्तम्बघ्नेति कप्रत्यये रूपं, तस्य सर्वापवादत्त्वादिति भावः, स्तम्बहेतिरिति निपातनस्य सर्व्वापवादत्त्वादिति भाव इति, अत्र हरदत्तः कापोः सर्वापवादत्वात् "कृत्यल्युटो बहुलम्" इति बहुलवचनाद्वेति स्त्रियां स्तम्बघ्ना स्तम्बहनेति भवत इति। (परिघः) *परौ घः* इति परावुपपदे करणे हनोपूप्रत्ययो घश्चादेशः। *परेश्च घाङ्कयोः* इति परे रेफस्य वा लत्वं, (पलिघः। प्रतिघः) इति बाहुलकादित्यात्रेयः। उपघ्नः प्रत्यासन्नः *उपघ्न आश्रये* इत्युपपूर्वाद्धनोऽप्युपधालोपो निपात्यते, इहाश्रयशब्दः प्रत्यासन्नवचनः, संघः प्राणिसमुदायः, उद्घः प्रशस्तः,* संघोद्घौ गणप्रशंसयोः *इति समुद्भ्यां हनोपि टिलोपो घत्त्वं च गणेऽभिधेये प्रशंसायां च गम्यमानायां, हनो गत्यर्थत्त्वाद्गत्यर्था बुद्ध्यर्था इत्युक्तम्, उद्धन्यते(१) उत्कर्षेण ज्ञायते इति व्युत्पत्त्या प्रशंसावगतिः, इह गणशब्देन प्राणिनां गण उच्यते। संघशब्दस्य तत्रैव प्रसिद्धत्वात्तेनान्यत्र समूहे सङ्घात इति भवति। ब्राह्मणसङ्घात इत्यादौ प्राणिविषयत्वं पदान्तरकृतं न तु स्वाभाविकमित्यदोषः। आत्रेयस्तु हन्त्यर्थाश्चेति चुरादिपाठाद् णावेव सङ्घातशब्दमाह। सङ्घस्य पूरणः सङ्घतिथः "तस्य पूरणे" इति डटि 'बहुपूगगणसंघस्य तिथुक्" इति तिथुगागमः। (निघः) समारोहपरिणाहः, आरोह उच्छ्रायः, परिणाहो विस्तरः। "निघो निमित्तम्" इत्यपि निपात्यते, निमित्तं समन्तान्मितम् आरोहपरिणाहाभ्यां तुल्यत्वेन ज्ञातमिति व्युत्पत्तिः, पूर्व्ववद्धनो ज्ञानार्थत्वं, हेतिः, "ऊतियूति" इत्यादिना क्तिनि नलोप एत्वं च निपात्यते, "हिनोतेर्वा" गुण एतन्निपातनं, केचिदनुशतिकादिष्वस्य हेतिरिति पठन्ति, ततः प्रयोजनमिति ठकि आस्यहैतिक इति भवति। अत्रैव पाठाद्वाक्यादपि प्रत्ययः। समूलघातं हन्ति "समूलाकृतजीवेषु हन्कृञ्ग्रहः", इति समूलादिषु कर्म्मसूपपदेषु यथासङ्ख्यं हनादिभ्यो णमुल् प्रत्ययो भवति कषादित्वाद्यथाविध्यनुप्रयोगः। पाणिघातं वेदिं हन्ति पाणिना हन्तीत्यर्थः, *करणे हनः* इति णमुल्, पूर्व्ववदनुप्रयोगः, आहिंसार्थोऽयमारम्भो हिंसायां तु पाण्युपघातः। अत्रापि हिंसार्थानामिति णमुलं बाधित्वा पूर्व्वविप्रतिषेधेनानेनैव णमुलिष्यते। अन्यथाऽसिघातं हन्तीत्यादौ "तृतीयाप्रभृतीन्यन्यतरस्याम्" इति समासविकल्पः स्यात्, कथं तर्हि हिंसार्थानामित्यत्र वृत्तौ दण्डोपघातं गाः शात(२)यति, दण्डेनोपघातमिति चेत्युदा-

(१) उत्कटमिति क्वचित् पाठः। (२) कालयतीति क्वचित् पाठः।

हतम् । उच्यते, हिंसार्थानां चेति चकारेण पुनर्विधानार्थन पूर्व्वविप्रतिषेधेन प्राप्तस्य "करणे हनः" इति णमुलो बाधात्, एवं च पूर्वविप्रतिषेधवचनं तस्यैवानुप्रयोगे नित्यसमासार्थं भवति, गौर्यस्मै दातुं हन्यते स गोघ्नो अतिथिः "दाशगोघ्नौ सम्प्रदाने" इत्युपधालोपो निपात्यते, केचित् टकि निपातयन्ति तन्मते स्त्रियां गोघ्नीत्यात्रेयः, (जङ्घा) यङ्लुगन्तात्पचाद्यचि "नासिकोदरौष्ठज०" इति निपातनाट्टिलोप इत्यात्रेयः । कण्ठपृष्ठकटिग्रीवेत्यत्र न्यासे तु यङ्लुगन्तादेवाचि टिलोपमुक्त्वा "हन्तेर्जङ्घ च" इत्यचि जङ्घादेशे व्युत्पादितं, जङ्घाभ्यां स्वाहेत्यादावाद्युदात्तत्वं व्यत्ययेनात एवाद्युदात्तत्वदर्शनात् घञि निपातनमस्त्वित्ति न वाच्यं, कण्ठपृष्ठग्रीवाजङ्घं चेति बहुव्रीहौ संज्ञायां जङ्घाशब्दस्योत्तरपदाद्युदात्तत्ववचनात् । घञि ह्युत्तरपदप्रकृतिस्वरमेव विदध्यात्, विस्तीर्णजङ्घा विस्तीर्णजङ्घी । "नासिकोदरौष्ठ" इत्यादिना वा ङीप् । वधमर्हति ( वध्यः ) "दण्डादिभ्य" इति यत्, अत्र केचित् य इत्यतकारान्तं पठन्ति । तत् 'अचो यत्' इत्यत्र [ हनो वध च तद्धितो वा ] इति वार्त्तिकविरोधादुपेक्ष्यं, तदिदं(१) किमर्थं "कर्तृकरणे कृता बहुलम्" इति समासेऽसिवध्य इति यथा स्यादिति । दण्डादियता तु न सिध्यति । तत्र केवलस्य वधशब्दस्य पाठात्तदन्तविध्यभावाच्च, अयं तर्हि किमर्थः, न वध्यः अवध्य इत्यत्र "ययतोश्चातदर्थे" इति नञः परस्यातदर्थयत्तद्धितान्तस्योत्तरपदस्य विधीयमानमाद्युदात्तत्वं यथा स्यादिति, कृदन्तेन तु समासे "तत्पुरुषे तुल्य" इति पूर्वपदाद्युदात्तत्वं स्यात् । ( पुत्रहतः ) वा हतजग्धपरेष्विति पुत्रतकारस्य वा द्वित्वं, कुमारिहता, "कुत्सितानि कुत्सनैः" इति कर्मधारये "घरूप" इत्यादिना ह्रस्वः । कुमार्या हतेत्यत्र तु वैयधिकरण्यान्न ह्रस्वः । तेन कुमारीहतेति भवति, ( स्त्रीहता स्त्रिहता, ब्रह्मबन्धूहता ब्रह्मबन्धुहता ) "नद्याश्शेषस्य" इति वा ह्रस्वः । लक्ष्मीहतेत्यत्र तु [ कृन्नद्याः प्रतिषेधः ] इति प्रतिषेधान्न ह्रस्वः । ( विदुषीहता विदुषिहता, श्रेयसीहता श्रेयसिहता, ) "उगितश्च" इति वा ह्रस्वः, विद्वच्छ्रेयसोः पुंवद्भावश्च वृत्तावुक्तं ( विद्वद्धता, श्रेयोहता ) । आत्रेये तु महच्छब्दस्य पुंवद्भाव उच्यते महद्धतेति । पादाभ्यां हन्यते इति ( पद्धतिः ), "हिमकाषिहतिषु च" इति पादस्य पद्भावः । ( पद्धती ) बाह्वादित्वाद्वा ङीप् ( वार्त्रघ्नः ) "तस्येदम्" इत्यादिनाणि "षपूर्वहन्धृतराज्ञामणि" इत्यल्लोपः 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्' "हनस्त" इति तत्वं न भवति, ( भ्रौणहत्यं ) "दाण्डिनायनहास्तिनायनाथर्व्वणिक जैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि" इति नकारस्य तत्वं ष्यञि निपात्यते । (हथो) विषण्णः । "हनिकुषि" इत्यादिना क्थनि "अनुदात्तोपदेश" इत्यनुनासिकलोपः । (हिमम्) । "हन्तेर्हि च" इति मकि हि भावः, हिमं न सहते ( हिमेलुः ) [ हिमाच्चेलुर्वक्तव्यः ] इति तन्न सहते इति विषये चेलुः । (महद्धिमं हिमानी) "इन्द्रवरुण" इत्यादिना ङीषानुकौ । तत्र [ हिमारण्ययोर्महत्त्वे ] इति पठ्यते । ( हेमन्तः ) "हन्तेर्मुट् हि च" इति झच्प्रत्यये मुडागमः, धातोर्हिभावे गुणः, झस्य चान्तादेशः । हेमन्ते भवं ( हैमन्तिकं ) "हेमन्ताच्च" इति शैषिकष्ठञ् । यद्यप्यत्र सूत्रे छन्दोग्रहणमनुवर्त्तितं वृत्तौ तथाप्युत्तरसूत्रे सर्वत्र ग्रहणादयं भाषाविषयोऽपीति वृत्तावेवोक्तं, ( हैमनं ) "सर्वत्राण् च तलोपश्च" इत्यणि तलोपः, अत्र चकारेण ऋत्वणोभ्यनुज्ञानाद्धैमन्तमित्यपि भवति, तलोपोऽत्र न भवति, सर्वत्राणिति विधीयमानाण्संनियोगशिष्टत्वात्तस्य, (हनुः) "श्रृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" इत्युप्रत्ययः । ( परिहनुभवं पारिहनव्यम् ) । "अव्ययीभावाच्च" इति भवार्थं ञ्यः । तत्र [ परिमुखादिभ्य उपसंख्यानम् ] इति परिमुखादिरेवाव्ययीभावः परिगण्यते । ( हनुलः ) "सिध्मादिभ्यश्च" इति मत्वर्थं लच् । ( हनूमान् ) "शरादीनाञ्च" इति संज्ञायां मतौ दीर्घः । अत्रव पाठान्मतुपः "संज्ञायाम्" इति वत्वं यवादेराकृतिगणत्वान्न भवति । ( हंसः )

( १ ) तदिदानीमिति क्वचित् ।

वृतॄवदि" इत्यादिना सः । आगत्य हन्तीति ( अहिः ) "आङि श्रिहनिभ्यां ह्रस्वश्च" इतीण् प्रत्ययः । स च डित् पूर्वपदस्य च ह्रस्वः, डित्वाट्टिलोपः, आङो ह्रस्वः । अहौ भवमाहेयं, "दृतिकुक्षि" इत्यादिना ढञ् । ( अहीवती ) शरादित्वाद्दीर्घः, "संज्ञायाम्" इति वत्वम् । ( उपहत्नुः ) "कृहनिभ्यां क्त्नुः" इति क्त्नुः । कित्वादनुनासिकलोपः, ( अनेहा अनेहसौ ) "नञि हन एह च" इति नञ्युपपदे असुन् एहादेशश्च । हनः, "नलोपो नञः" इति उत्तरपदे नञो नलोप., "तस्मान्नुडचि" इति लुप्तनकारान्नञः परस्याजादेरुत्तरपदस्य नुडागमः। "ऋदुशन" इत्यादिनाऽनङादेशः, सावसम्बुद्धौ "सर्वनामस्थाने च" इति दीर्घः, सम्बुद्धौ तु हे अनेहः, (जघनं) "हन्तेर्द्वंच"(१) इत्यलचोरन्यतरस्मिन् द्वित्वम्, "अभ्यासाच्च" इति कुत्वं, जघने भवं, तस्मै हितं वा जघन्यं,"दिगादिभ्यो यत्" "शरीरावयवाच्च" इति योगाभ्यां यत् । दिगादावस्य पाठोऽशरीरावयवार्थः। (प्लीहा) "श्वन्नुक्षन्" इत्यादिना कनिनन्तो निपातितः । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' इति व्युत्पत्तिकार्याभावात् "इन्हन्पूषा" इति नियमाभावात्सर्व्वत्र सर्व्वनामस्थाने दीर्घो भवति । ( प्लीहा प्लीहानौ ) इत्यादि । अदिहनी अनुदात्तावुदात्तेतौ ॥ २ ॥

द्विष अप्रीतौ ॥ लिङ्घन्ता अनुदात्ताः स्वरितेतः ॥ (द्वेष्टि, द्विष्टः, द्विषन्ति । द्वेक्षि, द्विष्ठः, द्विष्ठ, द्वेष्मि, द्विष्वः द्विष्मः । द्विष्टे । द्विषाते । द्विषते,द्विक्षे, द्विड्ढ्वे । द्विषे । द्विष्वहे ।) ष्टुत्वं तवर्गादौ, सकारादौ ष्टुत्वस्य पूर्व्वत्रासिद्धत्वात् "षढोः कः सि" इति कत्वे षत्वं, ( दिद्वेष, दिद्विषतुः । दिद्वेषिथ । दिद्विष । दिद्वेष । दिद्विषिव । दिद्विषे । दिद्विषिषे, दिद्विषिवहे । क्रादिनियमादिट् । द्वेष्टा । द्वेष्टासे । द्वेक्ष्यति । द्वेक्ष्यते । द्वेष्टु, द्विष्टात् । द्विष्टाम् । द्विषन्तु । द्विड्ढि । द्वेषाणि । द्वेषाव । द्विष्टाम् । द्विक्ष्व । द्विड्ढ्वम् । द्वेषै ) "द्विषश्च" इति लङि विधीयमानो जुस्भावो "लोटो लङ्वत्" इत्यतिदेशान्न भवति, "लङः शाकटायनस्यैव" इत्यत्र लङ्ग्रहणं मुख्यलङ्ग्रहणार्थमिति स्थितत्वात्, हौ हेर्धित्वे ष्टुत्वे च षकारस्य जश्त्वेन डकारः । उत्तमआट पित्त्वादङित्त्वाद्गुणः, ( अद्वेट्, अद्विष्टाम् । अद्विषुः । अद्विषन् । अद्वेट् । अद्वेषम्, अद्विष्व । अद्विष्ट । अद्विषाताम् । अद्विषत, अद्विड्ढ्वाः । अद्विषि ) तिप्सिपाहल्ङ्यादिलोपे गुण जश्त्वचर्त्वे "द्विषश्च" इति झेर्वा जुस्भावः । ( द्विष्यात् । द्विष्यताम्, द्विष्याः, द्विष्याम् । द्विषीत । द्विषीयाः । द्विषीय । द्विषीवहि ) अपित्सार्वधातुकत्वान्न गुणः । आशिषि सलोपाभावो विशेषः, [illegible] द्विष्ट, गुणाभावो "लिङ्सिचौ" इति कित्वात् ( अद्विक्षत् । अद्विक्षताम् । अद्विक्षन् । अद्विक्षुः अद्विक्षम् । अद्विक्षाव । अद्विक्षत । अद्विक्षाताम् । अद्विक्षन्त । अद्विक्षथाः, अद्विक्षि । अद्विक्षावहि ।) "शल इगुपधादनिटः क्सः" अचि "क्सस्याचि" इत्यल्लोपः, ( दिद्विक्षति । दिद्विक्षते ) "हलन्ताच्च" इति सनः कित्वान्न गुणः, देद्विष्यते। देद्विषीति । देद्वेष्टि । ईटि "नाभ्यस्तस्याचि पिति" इति गुणाभावः । लङि "सिजभ्यस्त" इति नित्यं झेर्जुस्भावे परत्वात् प्रकृतिग्रहणन्यायेन "द्विषश्च" इति विकल्पे अदेद्विषुः, अदेद्विषन्नित्युभयं भवति, यङ्लुगन्तस्य सेट्त्वाल्लुङि क्साभावाददेद्वेषीदिति सिजेव । तथा क्त्वासनोरपि सेट्त्वे "रलो व्युपधात्" इति कित्त्वविकल्पेनाद्व ( देद्वेषिषति, देद्विषिषति, देद्वेषित्वा, देद्विषित्वा ) इति भवति, (द्वेषयति । अदिद्विषत् ।) कर्म्मणि द्विष्यत इत्यादि । विप्रद्विट्, प्रद्विट्, । "सत्सूद्विष" इति सोपपदात्सोपसर्गाच्च क्विप् । द्विट्शब्दस्तु "अन्येभ्योऽपि दृश्यते" इति ताच्छीलिके क्विपि । द्वेषी, संपृचादिना घिनुण । शत्रुं द्विषन् शत्रोर्वा द्विषन् । "द्विषोऽमित्रे" इति शता । अयमलादेशः । "द्विषः शतुर्वा" इति कर्मणि षष्ठी विकल्पः, द्वेषण इति बाहुलकात्कर्तरि ल्युडित्यात्रेयः, ( द्विष्ट्वा, द्विष्टः, द्विष्टवान् ) ॥ ३ ॥

दुह प्रपूरणे ॥ ( दोग्धि । दुग्धः ॥ दुहन्ति । धोक्षि । दुग्धः । दुग्ध, दोह्मि । दुह्वः

( १ ) हन्तेर्द्वित्वचेति क्वाचत्पाठः ।

दुह्यः(१) । दुग्धे । दुहाते । दुहते । धुक्षे । धुग्ध्वे । दुहे । दुह्वहे ।) झलि पदान्ते च "दादेः" इति हकारस्य घकारः, "झषस्तथोः" इति तकारथकारयोर्धकारः । "झलां जश् झशि" इति घकारस्य गकारः सकारादौ ध्वे पदान्ते च "एकाचो बशो भष्" इति भष्भावेन दकारस्य धकारः, तत्र सकारादौ "इण्कोः" इति षत्वे "खरि च" इति चर्त्वम्, दुहन्ति दुहते इत्यत्र पूर्वत्रासिद्धत्वादन्तरङ्गत्वाद्वा प्रागेवान्त्यादेशयोर्झलपरत्वाभावान्न घत्वप्रसङ्गः ( दुदोह । दुदुहतुः । दुदोहिथ । दुदुहथुः । दुदुह । दुदोह । ( दुदुहिव । दुदुहे । दुदुहिषे, दुदुहिढ्वे । दुदुहिध्वे । दुदुहिवहे, ) क्रादिनियमादिट् । ध्वमि "विभाषेटः" इति मूर्द्धन्यविकल्पः । (दोग्धा । दोग्धासे, धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात्, दुग्धाम् । दुग्धि । दोहानि, दोहाव, दुग्धां, दुहातां, धुक्ष्व । धुग्ध्वं, दोहै ) हेरपित्त्वान्न गुणः । आटि तु पित्त्वाद्गुणः । ( अधोक् । अदुग्धाम् । अदुहन् । अधोक् । अदुग्धम् । अदुग्ध । अदोहम्, अदुह्व, अदुग्ध । अदुहाताम् । अदुग्धाः, अदुग्ध्वम् । अदुहि । अदुह्वहि, ) तिप्सिपोर्हल्ङ्यादिलोपः(२) । पदान्तत्वात् "दादेः" इति हकारस्य घकारः, "एकाचो बशः" इति दकारस्य धकारः, जश्त्वचर्त्वे, प्रत्ययलक्षणेन लघूपधगुणः ( दुह्यात् । दुह्याताम् । दुह्याम् । दुहीत । दुहीथाः । दुहीय । ) अपित्सार्वधातुकत्वान्न गुणः । आशिषि सलोपाभावो विशेषः, ( दुह्यात्, दुह्यास्ताम्, धुक्षीष्ट) इत्यादि । तङि "लिङ्सिचौ" इति कित्वान्न गुणः । घत्वभष्भावौ । धुक्षीष्टमित्यत्र इणः षीध्वम्० इति मूर्द्धन्या न भवति, । घत्वे (३)षत्वस्य पूर्वत्रासिद्धत्वात्सीध्वमोऽभावात्, कृते तु घत्वादौ षीध्वमिणः परो न भवति । (अधुक्षत् । अधुक्षताम् । अधुक्षन् । अधुक्षः । अधुक्षम् । अधुक्षाव । अधुक्षत । अधुक्षाताम् । अधुक्षन्त, अधुक्षथाः । अधुक्षि । अधुक्षावहि ।) "शल इगुपधादनिटः(४) क्सः" क्सस्याचि इत्यल्लोपः । अत्र केचित् क्सस्य भाविनीमनकारान्ततामाश्रित्य झस्यादादेशे "क्सस्याचि" इत्यल्लोपेऽधुक्षतेतीच्छन्ति । तदसत् । तत्राचीत्यस्य परसप्तमीत्वात् । तत्र दन्त्यादौ तङि "लुग्वा दुहदिह" इत्यादिना क्सस्य वा लुक्, ( अदुग्ध, अदुग्धम्, अदुह्वहि ) इति भवति । अत्रात्मनेपदे ताविति वक्तव्ये दन्त्यग्रहणाद्दन्त्योष्ठ्योऽपि वकारो दन्त्यग्रहणेन गृह्यते । दुधुक्षति, दुधुक्षते । दोदुह्यते । दोदुहीति, दोदोग्धि ) इत्यादि द्विपिवत् । (दोहयति । अदूदुहत् ।) अयं द्विकर्म्मकः, गां दोग्धि पय इति । तत्र पुरुषप्रवृत्तेः पयोर्थत्वात्पयः प्रधानं कर्म्मान्यदप्रधानम् । तत्राप्रधाने दुहादीनामिति वचनात् कर्म्मणि लादयोऽप्रधाने भवन्ति । दुह्यते गौः पयो देवदत्तेन, अदोहि गौः, दोग्धव्या, सुदोहा, दुग्धेति कृद्योगऽषष्ठी द्वितीयावदुभयोरपि कर्म्मणोर्भवति दोग्धा गोः पयस इति । "उभयथापि गाणिकापुत्र" इति भाष्ये उक्तत्वादप्रधाने द्वितीयादि भवति । दोग्धा गां पयस इति । दोग्धव्या गौः पयो देवदत्तेनेत्यत्राभिहिते कर्म्मणि कर्त्तरि च "कर्तृकर्म्मणोः" इति षष्ठी न भवति, उभयप्राप्तौ कृत्ये षष्ठीनिषेधस्योक्तत्वात् । उपपादितं चैतद्दरतौ, कर्म्मकर्तरि "न दुहस्नुनमाम्" इति निषेधाद्यगस्य न भवति । दुग्धे गौः पयः स्वयमेव । ( अदुग्धम् । अदुग्ध, दुहीत ) इति, पयो मुञ्चतीत्यर्थः । चिण् तु "दुहश्च" इति विकल्पनात्पक्षे भवत्येव, अदोहीति । अन्यदा कर्त्तृवत् । क्से तस्य च वा लुक् अधुक्षत, अदुग्धेति भवति । एवं च "न दुह" इति चिण्निषेधो दुहिव्यतिरिक्तार्थो भवति । अस्ति च दुहेः सकर्मकस्यापि कर्म्मवद्भावो [ दुहिपच्योर्बहुल सकर्मकयोः ] इति, "न दुह" इति निषेधो "दुहश्च" इति चिण्विकल्पश्च प्रकृतिग्रहणन्यायेन यङ्लुगन्तेऽपि भवति । ( दोदुग्धे गौः पयः । अदोदोहि । अदोदोहिष्ट) इति । यङ्लुगन्तस्य सेट्कत्वाद् न क्सोऽस्तीति "च्लेः सिच्"

---

( १ ) इति क्वचित्रिपाठः । ( २ ) लोप इति क्वचित् पाठः ।
( ३ ) घिल्वस्येति पाठः । ( ४ ) इति क्सः इति पाठः ।

इति सिजेव (दुह्यं, दोह्यम् ) [शसिदुहिगुहिभ्यो वा] इति वक्तव्यमिति क्यब्ण्यतौ, (गोधुक्, प्रधुक् ) "सत्सूद्विष" इत्यादिना सोपपदात्सोपसर्गाच्च क्विप् । (कामदुघा) "दुहः कब् घश्च" इति कप्प्रत्ययो हस्य च घः । दोही, "संपृच" इत्यादिना घिनुण्,(दुहिता) "नप्तृनेष्टृ" इत्यादिना तृचीटि गुणाभावो निपात्यते । "ऋन्नेभ्य" इति ङीप् स्वस्रादिपाठाच्च भवति, दुहितरावित्यादौ सर्वनामस्थाने "अप्तृन्" इति दीर्घो न भवति तत्र नप्त्रादीनां ग्रहणं ।संज्ञाशब्दानामौणादिकानामेषामेव दीर्घ इति नियमार्थमित्युक्तत्वात् । सौ तु "ऋदुशन" इत्यनङि नान्तत्वात् "सर्वनामस्थाने च" इति दीर्घः । दुहितुरपत्यं दौहित्रः । बिदादित्वादञ् । स्त्रियां दौहित्री,"शार्ङ्गरवाद्यञो०" इति ङीन्। सूतपुत्री सूतदुहिता । [सूतोग्रभोजराजमेरुभ्यो दुहितुः पुत्रड्वा वक्तव्यः ] इति पुत्रडादेशः, टित्त्वान् ङीप् । एवमुग्रपुत्रीत्याद्यपि भवति, वाचंयम इत्यत्र वृत्तौ पुत्रडादेशमुक्त्वा केचित्तु शार्ङ्गरवादिषु पुत्रशब्दं पठन्ति तस्य पुत्रीति भवति, अन्यत्रापि हि दृश्यते शैलपुत्रीत्युक्तम् । कथं तर्हि "वा सूतकापुत्रिकावृन्दारकाणाम्" इतीत्वविकल्प उक्तः । अत्र हरदत्तः, पुत्रिके शार्ङ्गरवादिपाठान् ङीनि स्वार्थे कन्, "केऽणः" इति ह्रस्वः इकारस्तस्य पक्षेऽत्वं विधीयतइति । इरिदयमर्दनार्थः शपि गतः ॥ ४ ॥

दिह उपचये ॥ ( देग्धि । दिग्धः ) इत्यादि पूर्ववत् । प्रणिदेग्धि, "नेर्गद" इति णत्वम्, अत्र देग्धीति स्तिपा निर्देशात् प्रनिदेदेग्धीत्यत्र णत्वन्न भवति । ( देहः ) "अकर्तरि च कारके" इति कर्म्मणि घञ्, देहोस्यास्तीति देही । *अत इनिठनौ* इतीनिः, यद्यपि 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इतीनिठनौ कृदन्तान्निषिध्येते तथापि "तदस्यास्त्यस्मिन्" इत्यत इतिकरणस्यानुवर्त्तनात् तस्य च विषयनियमार्थत्वात्कार्योत्पादिवदत्रेनिर्भविष्यति । उक्तं च—वृत्तौ इतिकरणो विषयनियमार्थः सर्वत्र सम्बध्यत इति । दिह्यते उपलिप्यते इति देहनी । बाहुलकात् कर्म्मणि ल्युट्, गौरादित्वान् ङीप् ॥ ५ ॥

लिह आस्वादने ॥ ( लेढि, लीढः, लिहन्ति । लेक्षि, लीढः, लेह्मि । लीढे । लिहाते । लिहते । लिक्षे, लिहाथे । लीढे । लिहे, लिह्वहे । ) झलि "हो ढः" "झषस्तथोः" इति तथोर्धत्वे "ष्टुना ष्टुः" इति ष्टुत्वे तस्य चाश्रयासिद्धत्वाड् ढो ढलोपे "ढ्रलोपे पूर्वस्य दीर्घ" इति दीर्घः । सकारादौ "षढोः" इति कत्वं, तिपि ढत्वस्य पूर्वत्रासिद्धत्वात्पूर्वमेव गुणे ढत्वादि । ( लिहन्ति ) लिहतइत्यत्राप्यसिद्धत्वादिना पूर्वमेवान्त्यदादेशयोर्झल्परत्वाभावाड् ढत्वं न भवति । (लिलेह । लिलिहतुः लिलिहुः,(१) लिलेहिथ । लिलिहिव । लिलिहे, लिलिहिषे । लिलिहिढ्वे, लिलिहिध्वे, लिलिहिवहे । ) क्रादिनियमादिट् । ( लेढा । लेढासे(२) । लेक्ष्यति, लेक्ष्यते । लेढु, लीढात्, लीढाम्, लिहन्तु, लीढि, । लेहानि । लीढां, लिहाताम् । लिक्ष्व, लीढ्वं, लेहै ) हौ धित्वे ष्टुत्वादि । ( अलेट् अलीढाम्, अलिहन्, अलेट्, अलीढम्, अलीढ । अलेहम्, अलिह्व, अलीढ, अलीहत, अलीढाः अलीढ्वम्, अलिहि, अलिह्वहि । लिह्यात् । लिह्याः, लिह्यां, लिहीत । लिहीथाः । लिहीय ) अत्र अपित्सार्वधातुकत्वान्न गुणः, आशिषि ( लिह्यात्, लिह्यास्तां, लिक्षीष्ट ) इत्यादि । "लिङ् सिचौ" इति तङि कित्वान्न गुणः, लिक्षीध्वमित्यत्र ढत्वे षत्वस्यासिद्धत्वान्न षीध्वमस्ति, कृते ढत्वे कत्वषत्वयोश्च नेणः परः षीध्वमिति नास्ति मूर्द्धन्यप्रसङ्गः । ( अलिक्षत् । अलिक्षताम् । अलिक्षन् । अलिक्षः अलिक्षम् । अलिक्षाव । अलिक्षत । अलिक्षाताम् । अलिक्षथाः, अलिक्षि, ) "लुग्वा दुह" इत्यादिना दुहिवत् क्सस्य वा लुकि ( अलीढ, अलीढाः, अलीढ्वम्, अलिह्वहि ) इत्यपि भवति । ( लिलिक्षति, लिलिक्षते, लेलिहीति, लेलेढि । लेलिहान ) इति चानशि, (लेहयति । अलीलिहत् । लेहः ) "श्याद्व्यध" इतीगुपधलक्षणस्य कस्यापवादो णः । ( वर्हंलिहः । अभ्रंलिहः । ) "वहाभ्रे लिह" इति वहाभ्रयोः कर्म्मणोरुपपदयोः खश् । "अरुर्द्विषदजन्तस्य"

(१) कुत्रचिन्नास्ति । (२) क्वचिन्नास्ति ।

इति पूर्व्वपदस्य मुम्, खशः शित्त्वे नापित्सार्व्वधातुकत्वेन न गुणः। शपस्तु लुका लुप्तत्वान्न तदपेक्षोऽपि। अत्रात्रेयः । गणकार्यस्यानित्यत्वात् सृक्किण्योर्लिहति जिह्वया कदाचिदिति 'संज्ञापूर्वको विधिरनित्य' इति गुणाभावोऽपि, एवं वैद्यके अलिहदित्यादय इति, अलिड्ढौक-त इत्यत्र हो ढे पदान्तरनिरपेक्षत्वेनान्तरङ्गत्वाज्जश्त्वमिति ढलोपो न भवति, (लिक्षा) बाहुल-कात् क्सः। यूकालिक्षं "क्षुद्रजन्तवः" इति नित्यं समाहारद्वन्द्वे नपुंसकत्वम्। द्विपादयोऽनु-दात्ताः स्वरितेतः ॥ ६ ॥

अथात्मनेपदिनः ॥ चक्षिङ् व्यक्तायां वाचि ॥ अनुदात्तोनुदात्तेत्। अयं दर्शनकर्म्मा च, यथा-'विश्वारूपाभिचष्टे शचीभिः' इति । प्रायेणायमाङ्पूर्वः। (चष्टे) "स्कोः" इति कलो-पः। ( आचक्षाते । आचक्षते ) कलोपे "षढोः कः सि" इति कत्वं, चड्ढ्वे। कलोपष्टुत्वयो-र्जश्त्वं, (पोढः) ( चचक्षे चचक्षाते । चचक्षिरे, चचक्षिषे चचक्षिध्वे । चचक्षे, चचक्षिवहे । चख्ये । चख्याते, चख्यिरे । चख्यिषे । चक्षिध्वे, चख्ये । चख्यिवहे । चख्यिमहे ) "वा लिटि" इति ख्याञादेशो वा, उभयत्र क्रादिनियमादिट्। "आतो लोप इटि च" इत्याल्लो-पोऽजादौ क्ङिति इटि च, ध्वम्याल्लोपे इणन्तादङ्गात्परइडिति "विभाषेटः" इति मूर्द्धन्यवि-कल्पाभावः परस्तादुपपादयिष्यते। ख्याञो ञित्त्वात्पक्षे परस्मैपदमपि भवति, ( चख्यौ ) "आत औ णलः," ( चख्यतुः। चख्युः, चख्यिथ चख्याथ। चख्यथुः। चख्य। चख्यौ। चख्यिव) थलि "अचस्तास्वत्, 'ऋतो भारद्वाजस्य" इतीड्विकल्पः, क्शादिरप्ययादेश इष्यते इति वृत्तौ, तेन ( चक्शे। चक्शाते। चक्शिध्वे। चक्शिवहे। चक्शतुः चक्शुः, चक्शिथ। चक्शाथ, चक्श। चक्शौ। चक्शिव ) इति भवति। भाष्ये तु ख्याञ्क्शाञावुक्त्वोभयोः संग्राहकमादेशान्तरमुक्तं, यथा, क्शादिर्वा अथ ख्शादिर्भविष्यति। केनेदानीं क्शादिर्भविष्यति चर्त्वेन, अथ ख्यादिः कथम्, [ असिद्धे शस्य यवचनं विभाषा ] इति असिद्धे शस्येत्यस्य कैयटः, "पूर्वत्रासिद्धम्"इत्यधिकारे णत्वविधानानन्तरं [शस्य यत्वं विभाषा वक्तव्यम्]इति, हरदत्तोऽप्येवम्। सुधाकरस्तु वाशब्दोपजीवनाय "यरोऽनुनासिकेऽनुनासिको वा" इत्यस्यान-न्तरमिति। अस्याश्च कल्पनायाः प्रयोजनानि सुप्रख्यस्य भावः सौप्रख्यमित्यत्र "योपधाद्-गुरूपोत्तमाद्वुञ्" इति योपधलक्षणे वुञि, यत्वस्य पूर्वत्रासिद्धत्वेनायोपधत्वाद्वुञभावात् "गुणवचनब्राह्मणादिभ्यः कर्मणि च" इति ष्यञ्, तथा सुप्रख्येन निर्वृत्तो देशस्सौप्रख्यस्तत्र भवः सौप्रख्यीय इत्यत्र "धन्वयोपधाद्वुञ्" इति वुञ् न भवति, यत्वस्यासिद्धत्वा-त्तदभावाद्वृद्धाच्छः। पुंसः ख्यानं पुंख्यानमित्यत्र च संयोगान्तत्वेन सलोपे [ सम्पुंकानां सो वक्तव्य] इत्यम्परे खयि मकारस्य विधीयमानः सकारो यत्वस्यासिद्धत्वादम्परत्वाभावान्न भवति, (चख्यिध्वे) इत्यत्र ध्वमि इट्याल्लोप "इणः षीध्वं" "विभाषेटः" इति मुर्द्धन्यो यत्व-स्यासिद्धत्वाद् न भवति, [नमः ख्यात्रे] इत्यत्रापि यत्वस्य "शर्परे खरि विसर्जनीय"इति वि-सर्जनीये कर्त्तव्येऽसिद्धत्वादस्ति शर्परतेति विसर्जनीयः, अन्यथा "कुप्वोः ≍क≍पौ च" इति विसर्जनीयजिह्वामूलीयौ द्वौ स्यातां, किं च ख्यातमित्यत्र "संयोगादेरातो धातोर्यण्वत" इति निष्ठानत्वे कर्त्तव्ये यत्वस्यासिद्धत्वान्नत्वाभावः, तथा पर्याख्यानमित्यत्र "कृत्यचः" इति नत्वे यत्वस्यासिद्धत्त्वादनटा शकारेण व्यवधानाद् णत्वाभावः। ननु ख्यात इत्यत्र "न ध्या-ख्या"इति नत्वप्रतिषेधस्य सिद्धत्वात्कथमिदं भाष्ये प्रयोजनमुक्तम्। अत्र कैयटः-"न ध्याख्या" इति तु प्रतिषेधः ख्या प्रकथन इत्यस्यैव प्रतिपदोक्तत्वादस्य तु शस्य यत्वेन लाक्षणिकत्वा-दिति मन्यत इति। ननु [ नमः ख्यात्रे ] इत्यत्र जिह्वामूलीयस्याभावः कथं प्रयोजनमुक्तं, यस्मात्स दुर्वारः। तथाहि "ख्या प्रकथन" इत्यस्मादपि तृचि ख्यातृशब्दस्य सद्भावात्त-त्स्थस्य यकारस्यानादेशत्वादसिद्धत्वाभावात् "शर्परे खरि विसर्जनीय" इत्यस्याप्रसङ्गात् "कुप्वोः" इति प्राप्तस्य जीह्वामूलीयस्य बाधकाभावात्। नैष दोषः। ख्यातिरप्यार्द्धधातुके क्शादिः, असिद्धे शस्य यवचनं विभाषेत्येतदपि तस्यापि साधारणमिति । अत्र च प्रमाणं

[ सस्थानत्वं नमः ख्यात्रे ] इत्यत्र सस्थानत्वं न भवतीति भाष्यवार्त्तिकयोः सस्थानाभास्य प्रयोजनकत्वेन कथनं, सस्थानमिति जिह्वामूलीयस्य संज्ञा, तथा चाह पदमञ्जर्यां हरदत्तः, ख्या प्रकथने इति वक्ष्यते सोऽपि ख्शादिः । असिद्धे शस्य यवचनं विभाषेत्यादि तस्यापि साधारणं द्रष्टव्यमिति आत्रेयोऽपि सर्वत्रार्द्धधातुके चक्षिङ इवास्य रूपमिति । एवं चक्षिङिव ख्यातिरपि निष्ठायां ख्शादिः । शकारस्य चासिद्धे शस्य यवचनं विभाषेति वा यत्वं, तच्च "संयोगादेरात" इति निष्ठानत्वेऽसिद्धमिति यण्वत्त्वाभावान्नत्वस्य नैव प्रसङ्ग इति । 'न ध्याख्या' इति प्रतिषेधः ख्यात्यर्थोऽपि न कर्त्तव्यो भवति । अत्रेदं विचार्यते । आचक्शावित्यादौ यत्वाभावे चर्त्वं (खयो द्वितीयाः शरि पौष्करसादेः) इति खकारा भवति वा नेति, नेत्याह । अस्मिन्कर्त्तव्ये चर्त्वस्य पूर्वत्रासिद्धत्वाद् द्वितीयभाविनः खयोऽभावात् । खयो द्वितीया इत्येतत् "नादिन्याक्रोशे पुत्रस्य" इत्यत्र हि पठ्यते । न चैवं असिद्धं क्शादिरप्ययमादेश ष्यते इति वृत्तौ ककारादिरयमादेश उच्यत इति द्वितीयभाविनः खयः सम्भवादस्ति 'खयो द्वितीया' इत्यस्य प्राप्तिरिति, यतो वृत्तिकारनिर्देशो भाविचर्त्वापेक्षः अन्यथाऽथ वा ख्शादिर्भविष्यति केनेदानीं क्शादिर्भविष्यति चर्त्वेनेत्यादि भाष्यविरोधप्रसङ्गः । (ख्याता, ख्यातासे, ख्याताहे, क्शाता, क्शाताहे, ख्याता, ख्यातासि, ख्यातास्मि । क्शाता, क्शातासि, क्शातास्मि,) "चक्षिङः ख्याञ्" इत्यार्द्धधातुके ख्याञादेशः, लिड्वत् क्शादित्वमनुसन्धेयं, (ख्यास्यते । ख्यास्यसे, ख्यास्ये, ख्यास्यतीत्यादि क्शादिपक्ष उदाहार्यः ।) चष्टां, चक्षातां, चक्षताम्, चक्ष्व, चक्षाथाम्, चड्ढ्वं, ) कलापादि लड्वत् । ( चक्षै, अचष्ट अचक्षाताम् । अचक्षत । अचष्ठाः, अचड्ढ्वम् । अचक्षि, अचक्ष्वहि । चक्षीत, चक्षीयातां, चक्षीरन्, चक्षीथाः, चक्षीयाथां, चक्षीध्वं, चक्षीय ) आशिषि ( ख्यासीष्ट, ख्यासीयास्तां, ख्यासीष्ठाः, ख्यासीध्वं, ख्यासीय, ख्येयात् । ख्येयास्तां, ख्येयासुः, ख्येयाः, ख्येयास्तं, ख्येयासम् ) "एलिङि" "वान्यस्य संयोगादेः" इति वा लिङ्यार्द्धधातुके एत्वम् । एत्वाभावे ( ख्यायात्, ख्यायास्तां, ख्यायाः, ख्यायासं, क्शासीष्ट, क्शायात् क्शेयात् ) इत्यादि चोदाहार्यम्, ( अख्यत । अख्येताम् । अख्यन्त । अख्यथाः । अख्यध्वम्, अख्ये । अख्यावहि । अख्यत् । अख्यताम्, अख्यन्, अख्यः, अख्यम्, अख्याव, ) "अस्यतिवक्तिख्यातिभ्योऽङ्" इति च्लेरङादेशः कर्त्तरि, ख्या इति प्रकथनार्थस्य चादेशस्य च ग्रहणमिति वृत्तिः । "आतो लोप इटि च" इत्याल्लोपो ऽङि अख्येतामित्यादौ "आतो ङित" इतीयादेशः । यजादावतो दीर्घः, अङ्विधौ ख्यातीति कृतयत्वायाः विकृतेर्निर्देशादकृतयत्वायाः प्रकृतेर्नग्रह इति यदा क्शादित्वं तदा सिजेव ( अक्शास्त अक्शासाताम्, अक्शासत । अक्शास्थाः, अक्शासि । अक्शास्वहि । अक्शासीत् । अक्शासिष्टाम्, अक्शासिषुः । अक्शासीः । अक्शासिषम् ) "यमरमनमातम्" इति सगिटौ । ननु "निसमुपविभ्यो ह्वः" इति कृतात्वस्यानुकरणेन विधीयमानस्तङ् निह्वास्यते इत्यादावाकारान्ते एव स्यान्न तु प्रकृतेरेदन्तस्य ह्वेञ्इत्यस्य । (निह्वयते) इत्यादि सिद्ध्यर्थं विकृतिरपि प्रकृतिं गृह्णात्येव, कथं विज्ञायते यदयं "नव्यो लिटि" इत्यात्वभूतस्य वेञो निर्देशेनात्वप्रतिषेधं शास्ति ततो ज्ञायत इत्युक्तं न्यासे । तद्वदिहापि विकृत्या प्रकृतेर्ग्रहणादङ् स्यात् । नैवम् । न तत्र विकृत्या प्रकृतिग्रहणात्तङ् किं तु एजन्तैव प्रकृतिरनुक्रियते इत्यनुकरणस्यात्वं तु लक्षणवशात् । "न व्यो लिटि" इत्यत्राप्यनुकार्यमेजन्तमेव लक्षणवशादनुकरणमात्वभूतमिति न विकृत्या प्रकृतिग्रहणस्येदं ज्ञापकं, सर्वमेतत्प्रपञ्चितं ह्वयतौ, [ अख्यास्यत, अख्यास्यत् । अक्शास्यत । अक्शास्यत् ) कर्म्मणि ख्यायते क्शायते इत्यादि । स्यादिषु वा चिण्वदिटि ख्यायिष्यते, अख्यायिष्यत, अख्यायिषीष्ट, ख्यायितेत्यादि । इडभावे ( ख्यास्यते । अख्यास्यत, ख्यासीष्ट, ख्याता ) इत्यादि, क्शादिरप्युदाहार्यः, एवं कर्म्मकर्त्तर्यपि । लुङि त शब्दे कर्म्मणि नित्यश्चिण, कर्म्मकर्त्तरि तु 'अचः कर्म्मकर्त्तरि" इति पाक्षिकः । तदभावे द्विवचनादौ च "अस्यतिवक्तिख्याति-

ख्योऽङ्" इत्यङ् । (अख्यायि । अख्यत । अख्येताम्) इत्यादि । क्शादित्वे त्वङ् नास्तीत्युक्तं, तेन ( अक्शायि ) इति चिणि तदभावे सिचि चिण्वदिटो भावाभावाभ्याम् ( अक्शायिष्ट अक्शास्त । अक्शायिषाताम् अक्शासाताम् ) इत्यादि, तदेवं क्शादि पक्षे तशब्दे त्रैरूप्यम् । सनि ( चिख्यासते, चिख्यासति, चिक्शासते, चिक्शासति । चाख्यायते । चाक्शायते) यङ्लुकि न लुमता(१) तस्मिन्निति लुमता लुप्तप्रत्ययनिमित्ते आङ्गे चानाङ्गे च कार्ये प्रत्ययलक्षणनिषेधाद्यङ्परत्वाभावान्न ख्याञादेशः । नन्वार्धधातुक इति विषयसप्तमीति प्रागेव तदुपत्तेः ख्याञादेशेन भाव्यं, मैवं, लुका तद्विषयत्वमेवापह्नियते तथा च *न लुमताङ्गस्य* इत्यत्र कैयटे न लुमता तस्मिन्निति चेद्धनि णिङादेशा न सिद्ध्यन्तीति भाष्यवार्त्तिकयोरुक्तेः "लुङि च" इत्यादौ विषयसप्तम्याश्रयणेनादेशाः सेत्स्यन्तीत्याशङ्क्य लुका लुङो विषयापहारात् विषयसप्तम्याश्रयणेऽप्यसिद्धिरित्युक्तम्, एवं चाङ्विधौ ख्यातीति श्तिपानिर्देशः प्रकथनार्थस्य यङ्लुक्यङ्निवृत्त्यर्थो भवति, यदुक्तं वर्द्धमानेन, ख्यातीति श्तिपा निर्देशाद् यङ्लुकि अचाख्यासीदिति तदपि प्रकथनार्थपरं व्याख्येयं, (ख्यापयति, क्शापयति, अचिख्यपत्, अचिक्शपत्, आख्येयम्, आक्शेयम् ) आर्द्धधातुके इत्यस्य विषयसप्तमीत्वात् प्रागेव प्रत्ययोत्पत्तेः ख्याञादेश इति अजन्तलक्षणो यद्भवति "ईद्यति" इतीत्वे गुणः, ( संचक्ष्यः ) वर्ज्जनीय इत्यर्थः । [ वर्जने प्रतिषेधः ] इति ख्याञभावे'हलन्तलक्षणो ण्यत्, शोभनं प्रचष्टे सुप्रख्यः, उपसृष्टादकर्म्मोपपदात् "आतश्चोपसर्गे" इति कः । उपसृष्टात्कर्म्मोपपदात्तु कर्म्मण्यणि युकि गोप्रख्याय इति । गां संचष्टे गोसंख्य इत्यत्र तु "समि ख्य" इति कर्म्मणि समि चोपपदेऽणोपवादः कः । तथा स्त्रियमाचष्टे स्त्र्याख्य इत्यत्र "मूलविभुजादिभ्य" इति कोऽपि भवति । तथानुपसृष्टात् कर्म्मोपपदात् "आतोऽनुपसर्गे कः" इति के गोख्यः, अनुपसृष्टादनुपपदात्तु "श्याद्व्यध" इत्याकारान्तलक्षणे णे युकि ख्याय इति, (गोख्यायो व्रजति गोसंख्यायो व्रजति प्रिया(२)ख्येयो व्रजति ) इत्यत्र "अण् कर्म्मणि च" इति कर्म्मणि क्रियायां चोपपदे विधीयमानोऽण् "आतोनुपसर्गे कः" "समि ख्यः" [मूलविभुजादिभ्य उपसंख्यानम्] इति च विधीयमानं कं परत्वाद् बाधते । तथाच वृत्तिः, कर्म्मणि सामान्यविहितोऽपि वासरूपविधेरभावाद् ण्वुला बाधितः पुनरण् विधीयते सोपवादत्वाद् ण्वुलं बाधते परत्वाच्च कादीन्, तेनापवादविषयेऽपि भवत्येवेति, वासरूपाभावश्च [ क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिप्रतिषेध] इति । (ईषदाख्यानम् ) *आतो युच्* इति युच् इषदादिषु कृच्छ्राकृच्छ्रार्थेषु उपपदेषु, (आख्या) "आतश्चोपसर्गे" इत्यङ्, सर्वेष्वपि कृत्सु क्शादिरप्युदाहार्यः । अत्रैकारे विप्रतिपद्यन्ते । अयमनुदात्तः, प्रयोजनं विचक्षण इत्यत्र "अनुदात्तेतश्च" इति युजिति कैयटपदमञ्जरीकारादयः । अत्र [आसनयोः प्रतिषेधः] इति ख्याञभावः । "इदितो नुम्" इति नुमिह न भवति अन्तग्रहणानुवृत्तेरन्तेदित एव तद्विधानात्, अयं चासनयोश्चेति ख्याञ्प्रतिषेधः संज्ञायां, यदाह भाष्यकारः,-"बहुलं तणीति वक्तव्यम् अन्नवधकगात्रविचक्षणाजिराद्यर्थं, किमिदं तणीति संज्ञाच्छन्दसोर्ग्रहणमिति, तेनासंज्ञायां भावादौ ल्युड्व्याख्यानमिति भवति, अत्रानुदात्तेत्वादेव तङि सिद्धे ङकारोऽन्तेदित्त्वविघातायेति के चित् । एवं हि चक्ष इत्यकारमेवानुदात्तमितमासजेत् । तस्मादन्तेदित्त्वाभावार्थः सन्ननुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थोऽयं ङकारः, तेन 'तालैः शिञ्जद्वलयसुभगैः' 'तृष्णे जृम्भसि, 'प्रार्थयन्ति शयनोत्थितं प्रिया' इत्यादयः प्रयोगा उपपद्यन्ते । नन्वु शिङ्क्ते इति शिञ्जः जृम्भत इति जृम्भः, तद्वदाचरतीति क्वौ शतरि सिपि च शिञ्जन् जृम्भसीति सिध्यतः । तथा प्रार्थनं प्रार्थः, तत्करोतीति णौ प्रार्थयन्तीति; तत् किमनेन ज्ञापनेन, सत्यं, शब्दाः सिद्ध्यन्ति अर्थास्तु सहृदयहृदयङ्गमा न भवन्ति । अत्रात्रेयः, ङित्करणमेकानुबन्धस्यात्मनेपदस्यानित्यत्वज्ञापनार्थ-

---

( १ ) अङ्गस्येत्येत्रेति पुस्तकान्तरेऽधिकम् । ( २ ) क्वचिन्नास्ति ।

मिति नेहार्जवं पश्यामः । यस्मादवश्यं युजर्थमनुदात्तेत्त्वं कर्त्तव्यन्तेनैव च तङि सिद्धे पुनस्तदर्थः क्रियमाणो ङकारोऽनुदात्तेत्त्वप्रयुक्तस्य तङो ऽनित्यत्वज्ञापनार्थैव भवति, तथा 'गणकृतमात्मनेपदमनित्यम्, इति ज्ञापनार्थमिति तरङ्गीणीग्रन्थोऽप्येतेनैव प्रत्युक्तः, संमताकारस्त्विकार उच्चारणार्थ इति तन्मते विचक्षण इत्यत्र युज् न स्यात् । ल्युट्येव ख्याञभावोऽस्त्विति न शक्यते वक्तुं, 'सूर्या उभा चन्द्रमासा विचक्षण' इत्यन्तोदात्तावेक्षणात्, ल्युटि हि मध्योदात्तेन भाव्यं, न चान्नवधकगात्रविचक्षणेति निर्देशो युचमपि कल्पयेत्, यस्मादयमार्द्धधातुके ख्याञभावमात्रपर इति ल्युट्येव ख्याञभावेऽपि चरितार्थः । 'अन्नवधक' इत्यत्र विचक्षण इति ल्युटीति वदन् न्यासकारोऽपि स्वरविरोधेनैव प्रत्युक्तः । ( नृचक्षाः राक्षसः, ) असुन्नित्यसुन्प्रत्ययः, "असनयोश्च" इति ख्याञभावः । (चक्षुः । चक्षेः) "शिच्च" इत्युसुप्रत्ययः, तस्य शित्त्वात्सार्व्वधातुकत्वात् ख्याञभावः । ( अचक्षुः चक्षुः करोति चक्षूकरोति ) । "अरुर्मनः" इत्यादिना च्वौ सलोपे "च्वौ च" इति दीर्घः, ॥

शब्दतन्त्रस्वतन्त्रेण प्रक्रियेयं प्रपञ्चिता ।
तस्या निःशेषतो मन्ये बोद्धारो भाष्यपारगाः ॥ ७ ॥

ईर गतौ कम्पने च ॥ इतः पृचिपर्यन्ता उदात्ता अनुदात्तेतः ॥ ( ईर्त्ते, ईराते, ईरते, । ईर्षे, ईराथे । ईरे, ईरांचक्रे ) "इजादेश्च गुरुमत" इत्याम् । अत्र केचित् "इन्धिभवतिभ्यां च" इति इन्धेः परस्य लिटः कित्त्वविधानाज्ज्ञापकादामः पाक्षिकत्वं ज्ञापयन्तो 'रथचरणादिभिरीरिरे नु वीरा' इति प्रयोगं समर्थयन्ते, न च 'समीधे दस्यु हन्तमम्' इत्यादौ मन्त्रे तदामो निषेधे श्रूयमाणस्य लिटः कित्त्वार्थं सूत्रं स्यात्, यस्मादत्र "छन्दस्युभयथा" इति सार्व्वधातुकत्वात् "सार्व्वधातुकमपित्" इति ङित्त्वादेव कित्कार्यमनिदितामित्युपधालोपः सिद्ध्यति, तस्माज् ज्ञापकमेवेति । सत्यमेवं शक्यते कल्पयितुं भाष्यकारवार्त्तिककारयोस्तु नेष्टं, यत्सूत्रमेवैतत्प्रत्याचख्यतुः । इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति । ( ईरिता । ईरितासे । ईरिताहे । ईरिष्यते । ईरिष्यसे । ईरिषे । ईर्त्ताम् । ईर्ष्व । ईर्ध्वम् । ईरै । ऐर्त्त । ऐराताम् । ऐरत । ऐर्थाः । ऐरि, ऐर्वहि । ईरीत । ईरीयाताम् । ईरीथाः । ईरीय । आशिषि ईरिषीष्ट । ईरिषीष्ठाः । ईरिषीध्वम् । ईरिषिढ्वं ) 'विभाषेटः' । ऐरिष्ट । ऐरिषाताम् । ऐरिष्ठाः । ऐरिध्वम् । ऐरिढ्वम्, ) "धि च" इति सलोपे "विभाषेटः," ( ऐरिषि । ऐरिष्वहि । ) कर्म्मणि ( ईर्य्यते ) इत्यादि । ( ईरिरिषते, ईरयति, मा भवानीरिरत्, समीरणः ) "अनुदात्तेत" इति युच्, ण्यन्तान्नन्द्यादित्वेन ल्युरित्यात्रेयः, निम्नमीर्त्तइति ( नीरं, ) निःशब्दोऽयं वृत्तिविषये निम्नवचनः, तस्मिन्नुपपदे "कर्मण्यण्" इत्यण्, इगुपधलक्षणः क इत्यात्रेयः, अकारादनुपपदात् कर्म्मोपपदो विप्रतिषेधेनेत्युक्तत्वाच्चचिन्त्यं, स्वेनाभिप्रायेणेरितुं शीलमस्येति स्वैरी, ताच्छील्ये णिनिः, ईरणमीरः, स्वेनाभिप्रायेणेरोऽस्मिन्निति स्वैरं, स्वभावादयं क्रियाविशेषणं, नपुंसकलिङ्गश्च, उभयत्र [ स्वादीरेरिणोर्वृद्धिर्वक्तव्या"] इति वृद्धिः, (ईर्म्मं) बाहुलकान्मः, दक्षिणमीर्ममस्य (दक्षिणेर्मा) मृगः, व्याधेन दक्षिणे पार्श्वे व्रणित इत्यर्थः, ईर्मशब्दो वृत्तौ धर्म्मिणि वर्त्तते "दक्षिणेर्मा लुब्धयोगे" इत्यनिजन्तो बहुव्रीहौ निपात्यते, अन्यत्र लुब्धयोगाद्दक्षिणेर्म्मं शकटमिति भवति । ईर क्षेपे इत्याद्यपीयः ॥ ८ ॥

ईड स्तुतौ । ( ईट्टे । ) ष्टुत्वचर्त्वे ( ईडाते । ईडिषे, ईड्ढ्वे । ईडे, ईड्वहे, ) *ईडजनोर्ध्वे च* अत्र ईश इति वर्त्तते से इति च, ईशीडिजनीभ्यः सेध्वेशब्दयोः सार्व्वधातुकयोरितीट् । ( ईडांचक्रे । ईडिता, ईडितासे । ईडिताहे । ईडिष्यते, ईट्टाम् । ईडाताम् । ईडिष्व । ईडिध्वम् । ईडै । ) "सवाभ्यां वामौ" इति वासयोः कृतयोरप्येकदेशविकृतस्यानन्यत्वात् सेध्वेशब्दावेवेतीट् । ( ऐट्ट । ऐडाताम् । ऐट्ठाः । ऐड्ढ्वं, ) विकृतिग्रहणे प्रकृतिग्रहणाभावान्नेट् । (ऐडि ऐड्वहि । ईडीत । ईडीथाः। ईडिध्वम्, इडिय) आशिषि ईडिषीष्ट । ईडिषीष्ठाः

ईडिषीध्वम्, ईडिषीय । ऐडिष्ट । ऐडिध्वम् । ऐडिषि, ) कर्म्मणि ( ईड्यते) इत्यादि । (ईडिडिषते । ईडयति । माभवानीडिडत् । ईडा ) "गुरोश्च हलः" इत्यकारः । "ईडाया वा" इति निर्देशाद्ध्रस्वः । ( ईड्यः ) स्तुत्यः, ण्यत् "ईडवन्दवृशंसदुहां ण्यतः" इत्याद्युदात्तत्वम्, ( इडेन्यः ) औणादिक एन्यप्रत्ययो बाहुलकात् । अयं चुरादौ च ॥ ९ ॥

ईश ऐश्वर्ये ॥ ( धनस्येष्टे, ईशिषे । ईशिध्वे । ) व्रश्चादिना षत्वे ष्टुत्वं झलि पदान्ते च, "अधीगर्थदयेशां कर्म्मणि" इति कर्म्मणि शेषे षष्ठी, अशेषत्वविवक्षायां ( धनमीष्टे, ईशांचक्रे ) इत्यादि पूर्व्ववत् । ( ईशानः, ) लटः शानच् ताच्छीलिकश्चानश्वा । वाचामीशो ( वागीशः ) इगुपधलक्षणः कः, ननु कर्म्मणि शेषत्वेन विवक्षिते षष्ठ्यां सिद्धायां पुनस्तद्विधानं समासनिवृत्त्यर्थमिति कथमधीगर्थषष्ठ्याः समासः । सत्यं, नायमधीगर्थषष्ठ्याः (१)किंतु "कर्त्तृकर्म्मणोः कृति" इत्यशेषषष्ठ्याः । तदुक्तं [कृद्योगा च षष्ठी समस्यत] इति, ( ईश्वरः ) "स्थेशभाश"इति वरच्, "नेड्वशि कृति" इतीडभावः । ( ईश्वरा । ) टाप्, ( ईश्वरीति ) औणादिके वरटि टित्वान्ङिबित्यात्रेयादयः । धनेष्वीश्वरो धनानामीश्वरः । "स्वामीश्वर" इति षष्ठीसप्तम्यौ शेषे । कथं धनेश्वर इति यावता [प्रतिपदविधाना षष्ठी न समस्यत] इत्युक्तं, सत्यं, नात्र चकारेण षष्ठी पुनर्विधीयते । किन्त्वनया सप्तम्या मा बाधीत्यभ्यनुज्ञायते । यद्वा पूर्व्ववत् "कर्तृकर्म्मणोः कृति" इति षष्ठ्याः समासः । त्रैरूप्यं चेह साध्यं, न ईश्वरः, अनीश्वरः न विद्यते वा ईश्वरो यस्य सोऽनीश्वरः । तस्य भावोऽनैश्वर्यमानैश्वर्यं,ब्राह्मणादित्वात् ष्यञ्, "नञः शुचीश्वरक्षेत्रज्ञ" इत्यादिनोत्तरपदस्य नित्यं वृद्धिः पूर्वपदस्य तु वा । तत्पुरुषादपि "न नञ्पूर्वात्"इति निषेधं बाधित्वा ब्राह्मणादित्वात् ष्यञ्, बहुव्रीहेः सामान्येनैव सिद्धत्वात्तत्पुरुषार्थः स पाठः ॥ १० ॥

आस उपवेशने ॥ ( आस्ते ) अत्र "अनचि च" इति द्वित्वपक्षे द्वौ सकारौ, अन्यदा त्वेकः । न च द्वित्वे "स्कोः" इति सलोपप्रसङ्गः । द्वित्वस्यास्मिन्नसिद्धत्वात् । ( आस्से ) इत्यत्र द्वित्वपक्षे त्रयः सकाराः, न च "झरो झरि" इति लोपाद् द्वावेवेति मन्तव्यं, तस्यापि विकल्पितत्वात् । ( आध्वे । ) "धि च" इति सलोपे धकारस्य द्वित्वे जश्त्वम्, ( आसे, आसांचक्रे "दयायासश्च" इत्याम् । ( आसिता । आसितासे । आसिताहे । आसिष्यते । आस्ताम्, आस्स्व, आध्वम् । आसै । आस्त । आसाताम् । आस्थाः । आध्वम् । आसि । आस्वहि । आसीत् । आसीथाः । आसीय । ) आशिषि ( आसिषीष्ट । आसिषीष्ठाः । आसिषीय । आसिष्ट, आसिषाताम् । आसिष्ठाः, आसिड्ढ्वम् । ) "धि च" इति सिचो लोपे "इणः षीध्वम्" इति मूर्द्धन्यः, (आसिषि) सनि ( आसिसिषते । आसयति, मा भवानसिसत्, ग्राममध्यास्ते । ) "अधिशीङ्स्थासां कर्म्म" इति आधारस्य कर्म्मत्वं, (मासमास्ते) मासमासनेन व्याप्नोतीत्यर्थः । सकर्म्मकव्यापनरूपधात्वर्थाङ्गकासने धातोर्वृत्त्या व्यापनापेक्षं मासस्य कर्म्मत्वं, एवमस्य मासादिना सकर्म्मकत्वेऽपि तत्र तत्राकर्म्मकग्रहणेषु कालभावाध्वगन्तव्यदेशव्यतिरिक्तेन कर्म्मणा ऽकर्म्मकाणां ग्रहणमिति आसयति मासं देवदत्तमिति प्रयोज्यस्य "गतिबुद्धि" इति कर्म्मत्वं भवति । तथा "अणावकर्म्मकात्" इति नित्यं परस्मैपदं च, एवं "लः कर्म्मणि च" इत्यादिना विधीयमाना लादयोऽप्यस्य वस्तुतो मासादिना सकर्म्मकत्वादकर्म्मकग्रहणेन ग्रहणाच्च भावकर्म्मणोरुभयोरपि भवन्ति आस्यते मासं देवदत्तेन आस्यते मासो :देवदत्तेन, मासस्यासितव्यमासितव्यो मासः, स्वासं मासं स्वासो मास इति , खलेन "न लोकाव्यय" इति कर्म्मणि षष्ठ्या निषेधः । अयं च प्रकारो "अकथितं च" "कालाध्वनोः" इत्यादौ भाष्यकैयटपदमञ्जर्यादिषु सहस्रशः प्रपञ्चितः । अस्माभिरपि भवतौ प्रपञ्चितः । ननु कटे आस्ते इत्यादौ मासादिवत् व्याप्त्यपेक्षया कटादे-

( १ ) समास इत्यधिकं पुस्तकान्तरे ।

रपि कर्म्मत्वेन भाव्यम्, अत्र कैयटः। नियतत्वाच्च प्रयोगस्य कट आस्त इत्यादौ त्वासनमात्रेऽनङ्गीकृतक्रियान्तरे आसिर्वर्त्ततइत्यतिप्रसङ्गो नोद्भावनीय इति। ( आसीनः ) "ईदास" इति आसेः परस्यानस्यादेरीकारः। ( आसना ) "ण्यासश्रन्थो युच्" इति युच्, ( आस्या ), वासरूपविधिना ण्यत्, अस्त्रियामिति निषेध उभयोरपि स्त्र्यधिकारविहितत्वे, बाहुलकात् क्विन्नपि भवति उपास्तिरिति,। उपासितो गुरुं शिष्यो वा, उपासितो गुरुः शिष्येण "गत्यर्थाकर्म्मक" इत्यादिना कर्त्तृकर्म्मणोः क्तः। उपसर्गवशात् कालादिव्यतिरिक्तेनापि सकर्म्मकत्वं, ( कैलासः, ) केलिः प्रयोजनमस्य कैलः, [ चूडादिभ्य उपसंख्यानम् ] इत्यण्, आस्यतेऽस्मिन्निति-(आसः), "हलश्च" इत्यधिकरणे घञ्। कैलश्चासावासश्चेति "विशेषणं विशेष्येण" इति सञ्ज्ञात्वाल्लोहितशाल्यादिवत् समासो नित्यम्॥ ११॥

आङः शासु इच्छायाम्॥ ( आशास्ते। आशासाते। आशास्से। आशाध्वे, आशासे ) "शास इदङ् हलोः" इत्यङि हलादौ च ङ्किति विधीयमानमुपधाया इत्वमस्य न भवति संयोगस्य विशेषस्मृतिहेतुत्वाद् अङ्सम्बन्धिन एव शास्तेस्तत्र ग्रहणाद् अस्य च नास्त्यङ्सम्बन्धः "सर्तिशास्ति" इत्यत्र सत्यर्तिभ्यां परस्मैपदिभ्यां साहचर्यात्तादृश एव परस्मैपदिनः(१)शासेर्ग्रहणमिति। ( आशशासे। आशशासाते। आशशासिरे। आशशासिषे। आशशासिध्वे। आशशासे, आशशासिवहे।) आसिवदन्ये लकाराः। ( आशशासिषते। आशाशास्यते। आशाशासीति। आशाशास्ति। आशाशयति। आशीः। आशासः ) "क्वौ" इतीत्वम्, सकारस्य रुत्वे "र्वोरुपधाया" इति दीर्घः, क्विपाशीरिति निर्द्देशाद्वेत्वं, आशिषावित्यादौ "शासिवसिघसि" इत्यादिना षत्वं, तत्र हि न केवलं शासनार्थस्य ग्रहणं किं त्वस्यापि, तथा च "आशिषि लिङ्लोटौ" इति निर्दिश्यते। ( आशिषा।) आपं चैव हलन्तानामित्यात्रेयः। (अन्या आशीः अन्यदाशीः।) *"अषष्ठ्यतृतीयास्थस्यान्यस्य दुगाशीराशास्थास्थितोत्सुकोतिकारकरागच्छेषु"*। षष्ठीतृतीयाव्यतिरिक्तविभक्त्यन्तस्यान्यशब्दस्याशीरादिपूत्तरपदेषु छे च प्रत्यये दुगिति दुगागमः, षष्ठीतृतीयान्तत्वे तु अन्याशीः। अत्र "अषष्ठ्यतृतीयास्य" इति निषेधः कारकच्छव्यतिरिक्तविषयः। उक्तं च।

दुगागमोऽविशेषेण कर्तव्यः कारकच्छयोः।
षष्ठीतृतीययोर्नेष्टं आशीरादिषु सप्तसु॥

इति। आशिषं करोति आशिषयतीत्यत्र सोपसर्गात् संग्रामयतेरेवेति नियमाच्छिष् शब्दादेव णिजुत्पत्तौ "प्रकृत्यैकाच्" इति प्रकृतिभावाण्णाविष्ठवदिति टिलोपो न भवति। अत्रात्रेयमैत्रेयस्वामिकाश्यपा अमुमुदितं पठित्वा "नाग्लोपिशास्वृदिताम्" इत्यत्रास्यापि सामान्येन ग्रहणात् आशशासदित्युपधाह्रस्वनिषेधो भवतीति। आत्रेयमैत्रेयौ तु प्रयोजनान्तरं चाहतुः। "क्त्वापि छन्दसि" इति ल्यपोपवादे क्त्वादेशे आशास्त्वा आशासित्वेतीड्विकल्पः, निष्ठायां "यस्य विभाषा" इति निषेधादिड् न भवति। ( आशास्त। आशास्तवान् ) इति भवतीति, वर्द्धमानसंमताकारादयस्त्वनुदितं पठित्वा "नाग्लोपि" इत्यत्रोदितोऽनुशासनार्थस्यैव ग्रहणादस्य ह्रस्वनिषेधाभावादशीशसदिति ह्रस्वेन भाव्यमित्याहुः। वर्द्धमानोदितमते निष्ठायामाशासित इति च भवितव्यम्, अत्र हरदत्तेन।

शक्यः शासिग्रहो कर्त्तुमृदिदेवैष पठ्यते।
ऋशासु अनुशिष्टावित्येवमेके प्रचक्षते॥

इत्यनुशासनार्थस्य शासेर्मतान्तरसिद्धमृदित्पाठमाश्रित्य ऋदित्त्वादेवोपधाह्रस्वनिषेधसिद्धेः शासिग्रहणं न कर्तव्यमित्यभिधानात् तन्मतेऽप्यस्य शासेरुदित्त्वमनभिप्रेतं प्रतीयते। उदित्त्वे शास्वित्युकारानुबन्धकरणमेतदर्थं स्यादिति कथं प्रत्याख्यायेत, एवमृदित्त्ववादिनां

( १ ) परस्मैपदिन इति नास्ति पुस्तकान्तरे।

शासिग्रहणे निरर्थके यन्मतान्तरेण फलमुक्तं हरदत्तेनैवं ।

वदन्त्यन्ये तु सूत्रेऽस्मिन् शासिं निरनुबन्धकम् ।
पठन्तः प्रतिषेधोऽस्य यङ्लुक्यपि भवेदिति ॥

इति, तद्युक्तं, प्रकृतौ निरर्थकत्वे विकृत्यर्थं शासिग्रहणं स्यात्, इह त्वाशासेर्मुक्तानुबन्धकस्यानुवादत्वेन प्रकृत्यर्थत्वं शक्यते वक्तुम्। प्रायेणाङ्पूर्व्व इति 'नमो वाकं प्रशास्महे' इति भवभूतिप्रयोगोपपत्तिरित्यात्रेयः । "एतिस्तुशास्वृ" इत्यत्रोदितो निर्देशान्नास्मात् क्यपः प्रसङ्ग इत्याशास्यमिति ण्यदेव, येषामस्याप्युदित्त्वेन तत्र ग्रह इष्टस्तेषामप्याशास्यमित्येवं रूपं, यस्मात् "शास इदङ्हलोः" इतीत्वमस्य नास्तीति प्रागेवोक्तम् । (आशासा,) "गुरोश्च हलः" इत्यकारः। आशंसतइतीच्छायां शंसतीतिस्तुतौ, शंसतीति हिंसायां शपि, शास्तीत्यनुशासने ॥ १२ ॥

वस आच्छादने ॥ निवासे वसतीति गतं शपि। ( वस्ते । वस्से । वध्वे, वसे । ववसे । ववसिषे ववसिवहे ) "न शसदद्वादि" इत्येत्वाभ्यासलोपनिषेधः । वसितेत्याद्यासिवदुदाहार्य्यम्। ( विवसिषते, वावस्यते । वावसीति, वावस्ति । ) वासयति वस्त्रं देवदत्तेन वासयते इति वा। यदा तु व्यापारान्तरनिवृत्तिपरायां चोदनायामविवक्षितकर्म्मकोऽयमकर्मकस्तदा "अणावकर्म्मकात्"इति परस्मैपदमेव, "गतिबुद्धि" इत्यादिना प्रयोज्यस्य कर्म्मत्वं (१)देवदत्तमिति, "न पादम्" इत्यत्र लुग्विकरणत्वान्नास्य ग्रह इत्युक्तम्, अत एव "प्रे लपसुद्रुमथवदवस" इत्यादावपि नास्य ग्रहः। (वसित्वा, वसितं, वसित) इत्यत्र "वचिस्वपि" इति सम्प्रसारणस्य नात्र प्रसङ्गोऽयजादित्वात्, वस्यते आच्छाद्यतेऽनेनेति वसनम्, करणे ल्युट्, यद्वा वस्ति आच्छादयतीत्यनुदात्तेत इति कर्त्तरि युच्, ( वस्त्रम्, ) त्रन्, वस्त्रेण समाच्छादयति (संवस्त्रयति) "मुण्डमिश्र"इत्यादिना णिच्। 'वस्त्रात्समाच्छादन'इति वृत्तिः, (वासः, वाससी) "वसेर्णिच्च" इत्यसुनि णित्त्वाद् वृद्धिः। कृत्तिर्वासोऽस्येति (कृत्तिवासाः) । "अत्वसन्तस्य" इत्यत्वन्तस्यासम्बुद्धौ सौ दीर्घः। अकारान्तस्तु कृत्ति वस्त इति कर्म्मण्यणि, चर्मैव इत्यादि प्रयोगश्चर्म वस्त इति "क्विप् च" इति क्विपि 'क्विबन्ता धातुत्वं न जहति' इति अधातोरिति निषेधात् "अत्वसन्तस्य" इति न दीर्घः, अयमेवाधातोरिति निषेधः क्विबन्ता धातुत्वं न जहतीत्यस्य मूलं, ( वसा, ) शरीरान्तर्गतस्नेहद्रव्यं, पचाद्यचि टाप्, तद्धि व्याप्य तिष्ठति॥१३॥

कसि गतिशासनयोः। ( कंस्ते । कंसाते । कंसते । कंसे । कन्ध्वे ) "धि च" इति सलोपः, अत्रायोगवाहानामट्सु णत्वमविशेषेण संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचनस्थानिवत्प्रतिषेधा इति यत्र प्रयोजनं तत्र तत्रायोगवाहानामुपदेशस्य चोदितत्वादनुस्वारस्याच्त्वाश्रयणे धकारस्य "अनचि च" इति वा द्विर्वचने पूर्वस्य जश्त्वेऽनुस्वारस्य च परसवर्णे नकारदकारधकारवकाराः संयुज्यन्ते, द्विर्वचनाभावे तु दकारस्याभावादन्ये त्रयः। ननु द्वित्वपक्षेऽपि "झरो झरि सवर्णे" इति दकारस्य लोपात्त्रयाणामेव संयोगः स्यात्। मैवम्। अस्य विभाषितत्वात्। एवं कंस्तइत्यादावपि सकारस्य झल्परत्वे पक्षे द्विर्वचनं द्रष्टव्यं, न च "स्कोः" इति सलोपस्य विद्यमानत्वाद् द्विर्वचनमकृतसममिति मन्तव्यम्, अस्मिन् द्विर्वचनस्यासिद्धत्वात्। कंस्त्रहीत्यादौ झल्परत्वाभावाच्च न सलोपप्रसङ्गो नापि "झरो झरि" इति सलोपेन वैयर्थ्यमाशङ्कनीयं तस्य विकल्पितत्वात्। एवमुदाहरणेषु द्वौ सकारावेको वा मध्यमैकवचने द्वित्वे त्रयः सकाराः, अद्वित्वे "झरो झरि" इति यदा लोपस्तदैकः, अन्यदा तु द्वौ, ( चकंसे । चकंसिषे चकंसिवहे कंसिता, कंसिष्यते। कंस्तां, कंस्व, कन्ध्वं, कंसै । अकंस्त, अकंस्थाः, अकंसि । कंसीत, कंसीथाः। कंसीय। आशिषि–कंसिषीष्ट। अकंसिष्ट, अकंसिष्ठाः। अकंसिषि । चिकंसिषते। चाकंस्ति, चाकंस्यते। चाकंसीति । ) लङि अटि तिप्सिपोर्हल्ङ्यादिलोपे संयोगा-

( १ ) प्रयोज्यः कर्म देवदत्तमिति क्वचित्पाठः ।

न्तलोपे ( अचाकन्, कंसयति । अचकंसत्, ) सर्वत्रेदित्त्वान्नुम् । अत एव चाकंस्यतइत्यादौ लोपाभावः, अयं पाठो मैत्रेयादीनाम् । अन्ये तु व्याख्यान्तरेऽमुं तालव्यान्तमनिदितं मन्यन्ते । तथा च "प्रतिष्कशश्च कशेः" इत्यत्र वृत्तिः, "कश गतिशासनयोः" इति सूत्रे सुधाकरश्च, पारायणिकैरयमिदिद्दन्त्यान्त्य उदाहारि । अन्यैस्तु "प्रतिष्कशश्च कशेः" इति दर्शनातालव्यान्तः समान्मायि,'घृतस्य धारा अभिचाकशीमि'इत्यत्र भट्टभास्करश्च कशेर्गतिकर्मणो यङ्लुकि रूपमिति । तथा "नाभ्यस्तस्य" इत्यत्र वृत्तौ पस्पशाते चाकशीति वावसीतीत्युदाहृत्य छान्दसं ह्रस्वत्वं द्रष्टव्यम्, पस्पशातइत्यभ्यासह्रस्वत्वं च, प्रकृत्यन्तराणां वा रूपशिवशिकशीनामेतानि रूपाणीत्युक्तम् । अत्र हरदत्तादयः । रूपाशिर्वार्त्तिककारवचनादपठितोऽपि धातुरस्ति, काश्ट दीप्तौ वाशृ अदने इत्याद्युक्त्वा प्रकृत्यन्तराणामिति विवृण्वाना आहुः कश गतिशासनयोरिति । कैयटे च स्पशिवशिकशयः प्रकृत्यन्तराणीति भाष्यमुपादाय स्पश बाधनस्पर्शनयोः कश गतिशासनयोरिति केचित्पठन्ति, अन्ये तु कस गतिशासनयोरिति तन्मते कशिः सौत्रो धातुर्द्रष्टव्य इत्युक्तम् । अत्र धातौ क्षीरस्वामी कसेत्येक इति दन्त्यान्तमनिदितमपि पपाठ । प्रदेशान्तरे चाह कशि गतिशानयोरितीकारान्तः शकारान्तश्च पठ्यते इति । (कष्टे,) "व्रश्चादिना" षत्वं ष्टुत्वम् । (कशाते । कक्षे,) षत्वकत्वे । (कड्ढ्वे,) षत्वे षकारस्य ष्टुत्वे षकारस्य जश्त्वं डकारः । ( कशे, कश्वहे, चकशे, चकशिषे चकशिवहे । कशिता । कशिष्यते, कष्टाम्, कक्ष्व, कशै । अकष्ट अकक्षाः, कशीत । कशीथाः, कशीय, ) आशिषि ( कशिषीष्ट, अकशिष्ट, अकशिष्ठाः । अकशिषि । चिकशिषते । चाकश्यते । चाकशीति, चाकष्टि, काशयति, अचीकशत् । कशा । ) पचाद्यचि टाप् । कशामर्हतीति (कश्यम् ) अश्वानां मध्यं, दण्डादित्वाद्यत्, ( प्रतिष्कशः, ) वार्त्तापुरुषः सहायः पुरोयायीति वा । "प्रतिष्कशश्च कशेः" इति प्रतिपूर्व्वस्य कशेरचि सुट् सस्य षत्वञ्च निपात्यते । 'प्रतिष्कश' इत्येतावत्येव सूत्रयितव्ये कशेरिति वचनं प्रतेः कशिसम्बन्धित्वे निपातनं यथा स्यादिति, तेन कशां प्रति गतः प्रतिकशोऽश्व इत्यत्र न भवति, अत्र हि प्रतिर्गमिसम्बन्धः । अनिदित्सान्तपक्षे कस्तइत्यादि द्रष्टव्यम् ॥ १४ ॥

णिसि चुम्बने । इदिद्दन्त्यान्तः । ( निंस्ते ) इत्यादि कसिवत् । अत्रात्रेयादयः प्रणिंस्ते प्रनिंस्त इत्युदाहृत्य "वा निंस" इति णत्वविकल्पमाहुः । अस्माभिस्तु तत्कृतिपर इति निन्दतावुपपादितम् । आभरणकारस्तु तालव्यान्तं पठित्वा "वा निंश" इति सूत्रमपि स्वपाठानुगुणं पपाठ तत्तु "नुम्विसर्जनीयशर्व्यवायेऽपि" इत्यत्र वृत्तिन्यासपदमञ्जर्याद्यपर्यालोचनविजृम्भितं, तत्र हि नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते तेन निंस्से निंस्वेत्यत्र न भवतीत्युक्तम्, अस्य तालव्यान्तत्वे व्रश्चादिषत्वे "षढोः" इति कत्वे कवर्गात्परत्वेन षत्वं दुर्वारमिति कथं प्रत्युदाह्रियेत ॥ १५ ॥

णिजि शुद्धौ ॥ ( निङ्क्ते । ) कुत्वे चर्त्वं, ( निञ्जाते । निञ्जते । निङ्क्षे ) कुत्व(१)चर्त्वयोः षत्वम् । ( निनिञ्जे । निनिञ्जिषे । निञ्जिता । निञ्जिष्यते । निङ्क्ताम् । अनिङ्क्त, निञ्जीत ) आशिषि । ( निञ्जिषीष्ट । अनिञ्जिष्ट, निनिञ्जिषते । नेनिञ्ज्यते । ) इदित्त्वान्नुम् सर्व्वत्रात एव किङ्ति नलोपाभावः । ( नेनिञ्जीति, नेनिङ्क्ति । निञ्जयति । अनिनिञ्जत् ) ।

पचिं वचिं विचिरिचिरञ्जिपृच्छतीन् ।
निजिं सिचिं मुचिभजिभञ्जिभृञ्जतीन् ॥

इत्यत्र निरनुबन्धकपाठाद् णिजिर् शौचपोषणयोरिति जौहोत्यादिकस्यैव ग्रह(२)णादयं सेडेवोदाहृतः ॥ १६ ॥

---

( १ ) इत्यत्र कुत्वषत्वचर्त्वानुस्वारपरसवर्णा इत्येकस्मिन्पुस्तके ।
( २ ) ग्रहः, अयं सेडुदाहृत इति कुत्रचित् पाठः ।

र्तरि णिलुक् च" इति घञि णिलुक् । ( दरत् ) जनपदः । "दृदृभसोऽदिः" इत्यदिप्रत्ययः । ( दृषत् ) । "दृणातेः पुक् ह्रस्वश्च" इति पुगागमो धातोर्ह्रस्वोऽदिश्च प्रत्ययः । द्रियते इति तुदादौ ॥ २१ ॥

जॄ वयोहानौ ॥ श्नाविषये ( जृणाति ) इत्यादि । अन्यत्र जार्यतिवत् । यथा तु भाष्य-वार्तिकवृत्तिन्यासपदमञ्जर्यादि तथायं धातुर्नास्तीति प्रतीयतइति जीर्यतावुपपादितम् । आ-त्रेयमैत्रेयदैवपुरुषकारादिषु दर्शनादिहास्माभिर्लिखितः ॥ २२ ॥

धॄ इति त्वेके इति मैत्रेयः । ( धृणाति ) इत्यादि ॥ २३ ॥

नॄ नये ॥ ( नृणाति । नीर्णम् । नीर्णवान् । नरः ) । पचाद्यच् । ( ना ) । "नयतेर्डिच्च" इति नयतेर्ऋन्प्रत्ययः स च डित् । ( नारी ) । "नृनरयोर्वृद्धिश्च" इति शार्ङ्गरवादिपाठान्ङीन् वृद्धिश्च ॥ २४ ॥

कॄ हिंसायाम् ॥ ( कृणाति ) इत्यादि कॄञ्वत् । तेनैव सिद्धे पुनः पाठः कर्त्रभिप्राये क्रिया-फलेऽपि वृणातिवत्परस्मैपदार्थः ॥ मॄ हिंसायामित्येक इति मैत्रेयः,एवं वदतोऽस्य पूर्वं मृणातेः पाठोऽनभिमत इति प्रतीयते ॥ २५ ॥

ॠ गतौ ॥ (ऋणाति । ऋणीतः । ऋणासि । ऋणामि । अराञ्चकार) इत्यादि, "इजादेश्च गुरुमत" इत्याम् । ( अरिता । अरीता । अरिष्यति । अरीष्यति । ऋणातु । ऋणीताम् । ऋणीहि । ऋणानि । आर्णात् । आर्णीताम् । आर्णाः । आर्णाम् । आर्णीव । ऋणीयात् । ऋ-णीयाताम् ) । आशिषि ( ईर्यात् । ईर्यास्ताम् । इत्त्वरपरत्वादि । ( आरीत् । आरिष्टाम् ) "सिचि च परस्मैपदेषु" इतीटो न दीर्घः । ( अरिरिषति । अरिरीषति । ईर्षिषति ) । "इट् सनि वा" इतीड्विकल्पः, इटि गुणः, पूर्ववद्वादीर्घश्च, अनिटि सनः कित्त्वादित्त्वादि, "नन्द्राः" इति रेफवर्जितस्य द्विर्वचनम् । ( आरयति । माभवानरिरत् । ईर्वा । समीर्णः । समीर्णवा-न् ) । "उदोष्ठ्यपूर्वस्य" इत्यत्र प्रत्यासत्त्याऽङ्गावयव एवोष्ठ्यो गृह्यतइत्युत्त्वमत्र न भवति । ऋच्छतीति शपि । इयर्त्तीति श्लौ ॥ २६ ॥

गॄ शब्दे ॥ ( गृणाति । जगार ) इत्यादि पूर्ववत् । "अवादग्रः" इति तङस्य न भवति । तथा च भाष्यम् । न चावपूर्वस्य गृणातेः प्रयोगोऽस्तीति । "समः प्रतिज्ञाने" इत्यत्र पूर्वसू-त्रगृहीतस्यानुवृत्तिरिति सङ्गृणातीत्यत्र तङ् न भवति । ( होत्रेऽनुगृणाति, प्रतिगृणाति ) "अनुप्रतिगृणश्च" इत्यनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं स-म्प्रदानमिति होतुः सम्प्रदानत्वम् । होता चात्र पूर्वक्रियायां शंसने कर्ता भवति । अनुगरः प्रतिगर इति हि संशितुः प्रोत्साहनमुच्यते । तदयं वाक्यार्थः । प्रथमं शंसति होता तमन्यः प्रोत्साहयतीति । ( जेगिल्यते । जागर्त्ति । जागीर्त्तः ) । "लुपसद" इत्यादावकारविकरणैः साहचर्यात्तौदादिकस्यैव ग्रहणमिति क्रियासमभिहार एवायं यङ् । इत्त्वरपरत्वयोः "पूर्वत्रासि-द्धम्" इति पूर्वं "ग्रो यङि" इति लत्वे रेफाभावान्न "हलि च" इति दीर्घः । लत्वे हि गिरति-गृणात्योर्द्वयोर्ग्रहणमुक्तम् । गृणातिप्रभृतय उदात्ता उदात्तेतः ॥ २७ ॥

ज्या वयोहानौ ॥ एतदादयो बध्नात्यन्ता अनुदात्ता उदात्तेतः । ( जिनाति । जिनीतः । जिनासि । जिनामि । जिनीवः ) । ग्रहिज्यादिना सम्प्रसारणे पूर्वरूपत्वे "हल" इति दीर्घे प्वादित्वाद्ध्रस्वः । ( जिज्यौ । जिज्यतुः । जिज्यिथ । जिज्याथ । जिज्यिव ) । क्रादि-नियमादिट् । थलि भारद्वाजनियमाद्विकल्पः । किति परत्वात् पूर्वं सम्प्रसारणे द्विर्वचनम् । अकिति "लिट्यभ्यासस्योभयेषाम्" इत्यभ्यासस्य सम्प्रसारणम् । ( ज्याता । ज्यास्यति । जिनातु । जिनीताम् । जिनीहि । जिनानि । जिनाव । अजिनात् । अजिनीताम् । अजिनाः । अजिनाम् । अजिनिव । जिनीयात् । जिनीयाताम् । जिनीयाः । जिनीयाम् ) । आशिषि । ( जीयात् । जीयास्ताम् । अज्यासीत् । अज्यासिष्टाम् ) । "यमरमनमाताम्" इति सगिटौ । (जिज्यासति । जेजीयते । जाज्याति । ज्यापयति । अजिज्यपत् । जीत्वा । जीनः) । "ल्वा-

दिभ्यः" इति निष्ठानत्वं, "हलः" इति दीर्घः। ( प्रज्याय )। "ज्यश्च" इति ल्यपि सम्प्रसारणनिषेधः। ( ज्यानिः )। (१)"ग्लाम्लाज्याहाभ्यो निः" इति निः ॥ २८ ॥

री गतिरेषणयोः ॥ रेषणं वृकशब्दः। (रिणाति। रिणीतः। रिणासि। रिणामि। रिराय। रिर्यतुः। रिरयिथ। रिरेथ। रिरियिव, ) क्रादिनियमादिट्। थलि तु भारद्वाजनियमाद्विकल्पः। अजादौ "एरनेकाच" इति यणोऽसिद्धत्वात् "हलि च" "उपधायाश्च" इति दीर्घत्वन्न भवति। ( रिणातु। रिणीहि। रिणानि। अरिणात्। अरिणीताम्। अरिणाः। अरिणाम्। रिणीयाताम् )। आशिषि ( रीयात्। रीयास्ताम्। अरैषीत्। अरैष्टाम्। रिरीषति। रेरीयते। रेपयति। अरीरपत् )। "अर्त्तिह्नि" इत्यादिना पुक्। शेषं रीयतिवत् ॥ २९ ॥

ली श्लेषणे ॥ ( लिनाति। लिनातु। अलिनात्। लिनीयात्। ललौ। लिलाय। लिल्यतुः। ललाथ। लिलेथ। लिलयिथ। लिल्यिच)। "विभाषा लीयतेः" इत्येज्विषये ल्यपि वाऽऽत्वविकल्पः। किति लिटि एज्विषयत्वाभावान्नात्वम्। ( लाता। लेता ) इत्यादि सर्वं लीयतिवज्ज्ञेयम् ॥ ३० ॥

ब्ली वरणे ॥ ( ब्लिनाति। ब्लिनीतः। ब्लिनासि। ब्लिनामि। बिब्लाय। बिब्लियतुः। बिब्लेथ। बिब्लयिथ। बिब्लियिव। ब्लेता। ब्लेष्यति। ब्लिनातु। ब्लनीहि। ब्लिनानि। अब्लिनात्। ब्लिनीयात्। अब्लैषीत्। अब्लैष्टाम्। बिब्लीषति। बेब्लीयते। ब्लेपयति। अबिब्लिपत् )। "अर्त्तिह्नि" इत्यादिना पुक्। ( ब्लीत्वा, ब्लीनः )। ल्वादित्वान्निष्ठानत्वम्। ( प्रहीणं ब्लीनाति, नैनं दक्षिणा ब्लीनाति, )। इत्यादौ दीर्घश्छान्दसः ॥ ३१ ॥

प्ली गतौ ॥ ओष्ठ्यादिः। (प्लिनाति) इत्यादि ब्लिनातिवत्। के चिदमुं दन्त्योष्ठ्यादिं पठन्तो ब्ली वरणइत्यमुं न पेठुः, मैत्रेयस्तु वरणार्थं पठित्वाऽमुं न पपाठ ॥ ३२ ॥

वृत् ॥ ल्वादिपरिसमाप्त्यर्थोऽयम्। अन्ये तु प्वादीनामपि परिसमाप्त्यर्थमिति, तन्नानन्तर्यात्। "ज्ञाजनोर्जा" इति दीर्घनिर्देशाच्च ल्वादिपरिसमाप्त्यर्थत्वमेव युक्तं, जेति ह्रस्वान्तादेशेऽपि जायते जानातीत्यादौ "अतो दीर्घो यञि" इति दीर्घेण सिद्धे प्वादित्वाज्जानातीत्यत्र ह्रस्वा माभूदिति हि दीर्घत्वम्। उक्तं चैवं हरदत्तादिभिरपि ॥

व्री वरणे ॥ ( व्रीणाति। व्रीणीतः। व्रीणासि। व्रीणामि। विव्राय। विव्रियतुः। विव्रेथ। विव्रियिव। व्रेता। व्रेष्यति। व्रीणातु। व्रीणीतात्। व्रीणीहि। व्रीणानि। अव्रीणात्। अव्रीणीताम्। अव्रीणाः। अव्रीणाम्। व्रीणीयात् )। आशिषि ( व्रीयात्। अव्रैषीत्। अव्रैष्टाम्। विव्रीषति। वेव्रीयते। वेव्रेति। व्राययति। अविव्रयत् )। स्वामिकाश्यपादयो "अर्तिह्रीव्रि" इतिपठन्तो व्रेपयतीति पुकं प्रतिपन्नाः ॥ ३३ ॥

भ्री भये ॥ भरणइत्येके। ( भ्रीणाति ) इत्यादि व्रीवत् ॥ ३४ ॥

क्षीष हिंसायाम् ॥ ( क्षीणाति। चिक्षाय। ) इत्यादि व्रीवत्। षित्वादङ्, (क्षीयः। क्षीत्वा। क्षीतवान् )। "क्षियो दीर्घात्" इति निष्ठानत्वं ह्रस्वान्तस्य क्षियो "निष्ठायामण्यदर्थे" इति कृतदीर्घस्य। क्षये क्षयतीति शपि। क्षियतीति निवासगत्योः। क्षिणोतीति तनोत्यादौ हिंसायाम् ॥ ३५ ॥

ज्ञा अवबोधने ॥ ( जानाति। जानीतः। जानन्ति। जानासि। जानामि। जानीवः ) "ज्ञा जनोर्जा" इति शित्प्रत्यये जादेशः। दीर्घनिर्देशसामर्थ्यात् "प्वादीनाम्" इति ह्रस्वो नेति ल्पो गतावित्यत्रोक्तम्। ( जज्ञौ। जज्ञतुः। जज्ञिथ। जज्ञाथ। जज्ञिव )। क्रादिनियमादिट्। थलि भारद्वाजनियमाद्विकल्पः। ( ज्ञाता। ज्ञास्यति। जानातु। जानीहि।

( १ ) "विज्याज्वरिभ्यो निः" "वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्" इत्येताभ्यां ज्यानिः, ग्लानिरिति संसाध्य बाहुलकात् म्लानिरित्युक्तमुणादिव्याख्याने कौमुद्याम् भट्टोजीदीक्षितैः।

जानाति । अजानात्, अजानीताम् । अजानाम् । जानीयात् ) । आशिषि ( ज्ञायात् । ज्ञायास्ताम् । ज्ञेयात्, ज्ञेयास्ताम् ) । "वाऽन्यस्यसंयोगादेः" इत्येत्वविकल्पः । ( अज्ञासीत् । अज्ञासिष्टाम् ) । ( शतमपजानीते ) । अपलपतीत्यर्थः । "अपह्नवे ज्ञः" इति तङ् । सोपसर्गोऽयमपह्नुवे वर्त्तते । ( सर्पिषा जानीते ) । सर्पिषोपायेन प्रवर्त्ततइत्यर्थः । "अकर्म्मकाच्च" इति तङ् । "ज्ञोऽविदर्थस्य करणे" इति शेषत्वेन विवक्षिते षष्ठी । ( मात्रा सञ्जानीते । मातरं सञ्जानीते । शतं प्रतिजानीते ) "सम्प्रतिभ्यामनाध्याने" इति तङ् । सम्पूर्वत्वे "संज्ञोऽन्यतरस्यां कर्म्मणि" इति पक्षे तृतीया । आध्यानमुत्कण्ठापूर्वकं स्मरणं, तदोऽन्यदनाध्यानम् । आध्याने तु ( मातुः सञ्जानाति ) । "अधीगर्थ" इति कर्म्मणि शेषे षष्ठी । अशेषे तु "संज्ञा" इति द्वितीयातृतीये भवतः । ( मातरं सञ्जानाति । मात्रा सञ्जानाति ) । कृद्योगे तु मातुः सञ्ज्ञानम् । कृद्योगलक्षणा षष्ठी परत्वाद्भवति, ( धर्म्मंजानीते ) । "अनुपसर्गाज्ज्ञः" इति कर्त्रभिप्राये तङ् । ( स्वयं जानाति जानीतइति वा, ) "विभाषोपपदेन प्रतीयमाने" इति कर्त्रभिप्रायत्वे उपपदेन द्योत्यमाने तद्विकल्पः । ( धर्म्मंजिज्ञासते ) । "ज्ञाश्रुस्मृदृशां सनः" इति तङ् । सकर्मकार्थमिदमकर्मकात्तु "पूर्ववत्सन" तङ् सिद्धः । ( अनुजिज्ञासति पुत्रम् ) "नानोर्ज्ञः" इति तङ्निषेधः । अयं च मध्येपवादन्यायेन "ज्ञाश्रुस्मृदृशाम्" इत्यस्यापवादः तेनौषधस्यानुजिज्ञासते इत्यत्र "पूर्ववत्सन" इत्यकर्मकत्वनिबन्धनस्तङ् भवति । औषधेन प्रवर्तितुमिच्छतीत्यर्थः । ( जाज्ञायते, जाज्ञाति । ज्ञपयति । अजिज्ञपत् ) मारणादौ ज्ञपयति घटादित्वान्मित्वं प्रपञ्चो घटादावेवाव गन्तव्यः । जानातीति (ज्ञः) "इगुपध"इति "श्याद्व्यध" इति णापवादे के आल्लोपः । पन्थानं प्रजानातीति (पथिप्रज्ञः) । "प्रेदाज्ञ" इति अणोऽपवादः कः, ( प्राज्ञः ) । "आतश्चोपसर्गे" इत्यङ् । पाणिन्युपज्ञमकालकं व्याकरणम्, उपज्ञायत इत्युपज्ञा । प्रथमज्ञानं, पूर्ववदङ् । कालपरिभाषाशून्यं व्याकरणं पाणिनिना प्रथमं ज्ञातमित्यर्थः । "उपज्ञोपक्रमन्तदाद्याचिख्यासायाम्" इत्युक्तोपक्रमान्तस्य तत्पुरुषस्य नपुंसकत्वं, तच्छब्देनोपज्ञोपक्रमयोरर्थः परामृश्यते । तेन यदुपज्ञेयस्यापक्रमस्य च आदिराख्यातुमिष्यतइत्यर्थः । अत्र च कालपरिभाषाशून्यस्य व्याकरणस्य पाणिनिरादिराख्यातुमिष्यते । ( ज्ञप्तः । ज्ञापितः ) "वा दान्त" इति पक्षे णेर्लुक्यनिट्त्वम् ॥ ३६ ॥

बन्ध बन्धने ॥ (बध्नाति । बध्नीतः । बध्नासि । बध्नामि) क्ङिति "अनिदिताम्"इति नलोपः । (बबन्ध । बबन्धतुः । बबन्धिथ । बबन्ध । बबन्धिव) । क्रादिनियमादिट् । थलि तु विकल्पः । संयोगान्तत्वाल्लिटः कित्त्वाभावान्नलोपो न भवति । (बन्द्धा) "झषस्तथोः" इति धत्वम्, "झलां जश् झशि" इति पूर्वस्य दत्वम्, तस्य "झरो झरि" इति पक्षे लोपः । ( भन्त्स्यति ) । "एकाच" इति भष्भावः । "खरि च" इति चर्त्वं तकारः । ( बध्नातु । बध्नीताम् । बधान ) । "हलः श्नः शानज्झौ" इति श्नः शानजादेशे हेर्लुक् । ( बध्नात । अबध्नात् । अबध्नीताम् । अबध्नाः । अबध्नीतम् । अबन्धीत । अबध्नीव । बध्नीयात् ) आशिषि । बध्यात् । अभान्त्सीत् । अबान्द्धाम् । अभान्त्सुः ) "वदव्रज" इति वृद्धिः । "पूर्वत्रासिद्धम्" इति भष्भावात्पूर्वं "झलो झलि" इति सिचो लोपः । कृते तस्मिन् प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न भवति, प्रत्ययलक्षणे सिज्लोपस्यासिद्धत्वात् । ( बिभन्त्सति । बाबध्यते । बाबन्धि । बन्धयति अबबन्धत् । चक्रबन्धं बद्धः ) । चक्रे बद्ध इत्यर्थः । अट्टालिकाबन्धं बद्धः । बन्धविशेषस्यैषा संज्ञा । "अधिकरणे बन्धः" "संज्ञायाम्" इति च सूत्राभ्यां णमुल् । कषादित्वात् यथाविध्यनुप्रयोगः । चक्रे बद्धः । ( चक्रबद्धः ) । दृषदि बद्धः । ( दृषद्बद्धः ) "सप्तमी" इति योगविभागात्समासः । "तत्पुरुषे कृति बहुलम्" इत्यलुको "नेन्सिद्धबध्नातिषु च" इति निषेधः । ( चक्रे बन्धः । चक्रबधः । दृषदि बन्धः । दृषद्बन्धः ) "सिद्धशुष्कपक्वबन्धैश्च" इति सप्तमीतत्पुरुषः । "बन्धे

च विभाषा" इति हलदन्ता(१)त्सप्तम्या घञन्ते बन्धशब्दे उत्तरपदे विभाषा ऽलुक्। पचाद्यजन्ते तु बन्धशब्दे उत्तरपदे "नेन्सिद्ध" इति निषेधो भवति चक्रबन्ध इति। इयं च विभाषा येन नाप्राप्तिन्यायेन "नेन्सिद्ध" इति प्रतिषेधं बाधते परत्वात् "अमूर्द्धमस्तकात्" इत्येतं, तेन स्वाङ्गपूर्वबन्धशब्दान्ते बहुव्रीहावपि लुग्विकल्पो भवति। हस्ते बन्धोऽस्य ( हस्तबन्धः, हस्तेबन्धः) इति। (बधिरः)। "इषिमदिमुदिखिदिच्छिदिभिदिसन्दिचन्दितिमिमिहिसुहिमुचिरुचिरुधिशुषिबन्धिभ्यः किरच्" इति किरच् प्रत्ययः। (बुध्नः) आदित्यः (बुध्नः) मुलम्, "बन्धेर्ब्रधबुधौ च" इति बध्नातेर्नक्प्रत्ययो ब्रधबुधावादेशौ च भवतः। ( बन्धुः )। "शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च" इत्युप्रत्ययः। ( कौमुदगन्धोबन्धुः )। 'बन्धुनिबहुव्रीहौ" इति ष्यङः सम्प्रसारणे "हल" इति दीर्घः। ( बन्धुरः )। "मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच्" इति बाहुलकादस्याप्युरच्। अस्याजन्तमध्ये पाठो नित्यपरस्मैपदानुरोधात्, ज्यादयोऽनुदात्ताः परस्मैभाषाः॥ ३७॥

वृङ् सम्भक्तौ॥ उदात्त आत्मनेपदी। ( वृणीते। वृणाते। वृणीषे। वृणे। वृणीवहे। वव्रे। वव्रृषे। ववृढ्वे। वव्रे। ववृवहे। वरिता। वरीता। वरिष्यते। वरीष्यते। वृणीताम्। वृणाताम्। वृणीष्व। वृणै। अवृणीत। अवृणाताम्। अवृणीथाः। अवृणि। वृणीत। वृणीयाताम् ) इत्यादि वृणोतिवत्प्रक्रिया, प्रपञ्चस्तत एवावगन्तव्यः। ( वर्या )। "अवद्यपण्यवर्या" इति स्त्रियां यति निपात्यते। पुंसि ण्यति ( वार्या ) ऋत्विज इति भवति। वर्येति निपातनमस्येति स्थितम्। ( वरेण्यः ) "वृङ एण्य" इत्येण्यः॥ ३८॥

श्रन्थ विमोचनप्रतिहर्षयोः॥ एतदादयः खच्यन्ता उदात्ता उदात्तेतः, विष्णातिस्त्वनिट्। क्लिश्नातिस्तु विकल्पितेट्। इष्णातिरपि वार्त्तिककारमतेन तादौ। (श्रथ्नाति। श्रथ्नासि। श्रथ्नीमः। श्रथ्नीवः)। "अनिदिताम्"इति नलोपः क्ङिति। (शश्रन्थ। श्रेथतुः। श्रेथुः। शश्रन्थिथ। श्रेथथुः। श्रेथ। शश्रन्थ। श्रेथिव। श्रेथिम)। "श्रन्थिग्रन्थिदम्भि" इत्यादिनालिटः कित्त्वात् "अनिदिताम्" इति नलोपः क्ङिति। अत्र हरदत्तः 'एत्वाभ्यासलोपावत्र वक्तव्यौ' इति। अन्यथा "असिद्धवदत्र" इति नलोपस्यासिद्धत्वादत एकहल्मध्यस्थत्वाभावान्न तौ स्याताम्। ये तु श्रन्थ्यादीनां कित्त्वविकल्पमिच्छन्ति तेषां शश्रन्थतुरित्याद्यपि। इदं च कित्त्वं पिद्वचनेष्वपीति सुधाकरः। तन्मते (शश्राथ। श्रेथिथ। शश्रथ। शश्राथ ) इति ( श्रन्थिता। श्रन्थिष्यति। श्रथ्नातु। श्रथ्नीताम्। श्रथान ) "हलः श्नःशानच्" इति शानचि हेर्लुक्। ( श्रथ्नानि। अश्रथ्नात्। अश्रथ्नीताम्। अश्रथ्नाः। अश्रथ्नीव। श्रथ्नीयात्। श्रथ्नीयाताम् )। आशिषि ( श्रथ्यात्। श्रथ्यास्ताम् )। कित्त्वादनुनासिकलोपः, ( अश्रन्थीत्। अश्रन्थिष्टाम्। अश्रन्थिषुः )। शिश्रन्थिषति। शाश्रथ्यते। शाश्रन्थीति। शाश्रन्ति ) "झरो झरि" इति थलोपो विकल्पेन, लोपाभावे "खरि च" इति चर्त्वेन थकारस्य तकारः। ( श्रन्थयति। अशश्रन्थत् )। कर्मकर्तरि "णिश्रन्थि" इत्यादिना यक्चिणोर्निषेधात्। श्रथ्नीते मेखला स्वयमेव, अश्रन्थिष्ट मेखला स्वयमेवेति भवति। ( श्रन्थना )। "ण्यासश्रन्थो युच्" इति युच्प्रत्ययः। ( प्रश्रथः। हिमश्रथः )। "अवोदधौद्मप्रश्रथहिमश्रथा" इति निपातनाद्घञि नलोपो वृद्ध्यभावश्च ( श्रन्थित्वा। श्रथित्वा ) "नोपधात्थफान्ताद्वा" इति कित्त्वविकल्पः। श्रन्थत इति शैथिल्ये शपि॥ ३९॥

मन्थ विलोडने॥ अयं द्विकर्मकः। ( मथ्नाति। ममन्थ। ममन्थतुः ) इत्यादि श्रथ्नातिवत्। अस्य लिटः कित्त्वं नास्ति। कर्मकर्तरि यक्चिणौ स्तः। (मथ्यते। अमन्थि) इति। ( ममन्थीति ) विलोडने मन्थति, हिंसासंक्लेशनयोः शपि॥ ४०॥

ग्रन्थ सन्दर्भे॥ (ग्रथ्नाति)। इत्यादि सर्वं श्रन्थिवत्। अत्रापि केचित् ग्रन्थि पठन्ति।

---

(१) परस्या इत्यधिकम्।

पुनः पाठोऽर्थभेदात् । तथा च "णिश्रन्थि" इत्यत्र न्यासे ग्रन्थ सन्दर्भ इति चुरादावित्युक्त्वा क्र्यादावपीत्युक्तम् । "अवोदैधौद्मप्रश्रथ" इत्यत्र तु श्रन्थ विमोचनप्रतिहर्षयोरिति । एवमुभयत्र पदमञ्जर्यामपि । पुरुषकारेऽपि श्रन्थ विमोचनप्रतिहर्षयोः, अन्ये तु श्रन्थ ग्रन्थ सन्दर्भे इति क्र्यादौ पठन्ति । तथा च सन्दर्भे ग्रन्थनक्रियायां श्रन्थिग्रन्थिधातू वर्तेते इति क्षीरस्वामीत्युक्तम् । ग्रन्थिः, इन्प्रत्ययः ॥ ४१ ॥

कुन्थ संश्लेषणे ॥ संक्लेशे इत्येके । तथा च देवः ; कुन्थ संक्लेशे इति । ( कुथ्नाति । चुकुन्थ ) इत्यादि मन्थिवत् । कुथेति दुर्गः । तन्मते-( कुथ्नाति । चुकोथ । कोथिता ) इत्यादि । कुन्थतीति शपि । कुथ्यतीति पूतीभावे श्यनि ॥ ४२ ॥

मृद क्षोदे ॥ ( मृद्नाति, मृद्नीतः । मृद्नासि । मृद्नामि । ममर्द । ममृदतुः । ममृदुः । ममर्दिथ । ममृदथुः । ममृद । ममृदिव । ममृदिम । मर्दिता । मर्दिष्यति । मृद्नातु । मृदान) । "हलःश्नः" इति श्नः शानच् । (मृद्नानि । अमृद्नात् । अमृद्नाः । अमृद्नाम् । अमृद्नीत । मृद्नीयात् ) । आशिषि । ( मृद्यात् । अमर्दीत् । मिमर्दिषति । मरीमृद्यते । मर्मर्त्ति ) इत्यादि । ( मर्दयति । अममर्दत् । अमीमृदत् ) उऋद्वा । ( मृत् ) क्विप् । ( मृत्तिका ) । "मृदस्तिकन्" इति स्वार्थे तिकन् । ( मृत्स्ना । मृत्स्ना ) "सस्नौ प्रशंसायाम्" इति सस्नौ प्रत्ययौ ( मर्दनम् । मृद्यः ) । "ऋदुपधात्" इति क्यप् । (मृदित्वा) "मृडमृद" इति सेटः क्त्वः कित्त्वम् ॥ ४३ ॥

मृड च ॥ मृड सुखे चेति केचित् । मृड सुखनइत्यपरे । ( मृडित्वा ) इत्यादिर्मृदिवत् । "ष्टुना ष्टुः" इति ष्टुत्वं णकारः । मृडतीति शे ॥ ४४ ॥

गुध रोषे ॥ ( गुध्नाति । जुगोध । गुधित्वा ) इत्यादि मृदिवत् । ( गुधितः । गुधितवान् ) । "उदुपधात्" इति निष्ठायाः कित्त्वविकल्पो व्यवस्थितविभाषया शब्विकरणानामेवेत्युक्तम् । गुध्यतीति परिवेष्टने दिवादौ ॥ ४५ ॥

कुष निष्कर्षे ॥ निष्कर्षो बहिर्निःसारणम् । (कुष्णाति।कुष्णासि । कुष्णामि । कुष्णीवः)। "ष्टुना ष्टुः" इति ष्टुत्वं, "रषाभ्याम्" इति णत्वम् , ( चुकोष । चुकुषतुः । चुकोषिथ । चुकुषिव । निष्कोषिता । निष्कोष्टा । निष्कोषिष्यति । निष्कोक्ष्यति । कुष्णातु । कुषाण । अकुष्णात् । कुष्णीयात् ) । आशिषि ( कुष्यात् । निरकोषीत् । निरकुक्षत् । "निरः कुषः" इति वलाद्यार्धधातुके इड्विकल्पः । अनिष्पूर्वत्वे तु नित्यमिडेव, लुङ्यनिट्पक्षे "शलइगुपधात्" इति क्सः । ( निषूचुकोषिषति । निषचुकुक्षति ) । पूर्ववदिड्विकल्पः । इटि "रलो व्युपधात्" इति कित्त्वविकल्पः । ( कुष्यति पादः स्वयमेव । कुष्यते वा । अकुष्यत् पादः स्वयमेव । कुष्यतु कुष्यतां वा पादः स्वयमेव ) "कुषिरञ्जोः प्राचां श्यन् परस्मैपदं च" इति श्यन् परस्मैपदे सार्वधातुके । अन्यत्र कोषिष्यते पादः स्वयमेव । अकोषि पादः स्वयमेवेत्यादि। (निष्कुषितम् ) "इण् निष्ठायाम्" इति नित्यमिट् । ( कुष्टः ) । "हनिकुषि" इत्यादिना कथन् । ( कुक्षिः ) "प्लुषिकुषिशुषिभ्यः क्सिः" इति क्सिप्रत्ययः । सर्वत्र "तितुत्र" इतीण्निषेधः । ( कौक्षेयकः ) "कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु" इति असावभिधेये शैषिकष्ठक् । अन्यत्र ( कोक्षः । कोक्षेयः ) । "दृतिकुक्षि" इत्यादिना भवार्थे ढञ् ॥ ४६ ॥

क्षुभ संचलने ॥ ( क्षुभ्नाति । क्षुभ्नीतः । चुक्षोभ । चुक्षुभतुः । चुक्षोभिथ । चुक्षुभिव । क्षोभिता । क्षोभिष्यति । क्षुभ्नातु। क्षुभाण । क्षुभ्नानि । अक्षुभ्नात् । क्षुभ्नीयात् ) । आशिषि ( क्षुभ्यात् । अक्षोभीत् । अक्षोभिष्टाम् । चुक्षुभिषति ) इत्यादि क्षुभ्यतिवत् । क्षोभतइति भूवादौ । अक्षुभदिति क्षुभ्यतेः पुषादिपाठात् । "क्षुभ्नादिषु च" इति णत्वनिषेधो यत्रैतद्रूपं तत्रैवेति क्षोभणमित्यत्र रूपान्तरे न भवति । क्षुभ्नीतः, क्षुभ्नन्तीत्यादौ त्वेकदेशविकृतस्यानन्यत्वात्स्थानिवद्भावाद्भवत्येव ॥ ४७ ॥

णभ तुभ हिंसायाम् ॥ ( नभ्नाति । तुभ्नाति ) इत्यादि पूर्ववत् । लुङि ( अनभात् ।

अनाभीत्)। "अतो हलादेः" इति वृद्धिविकल्पः। (प्रणिनभ्नाति। प्रनिनभ्नाति) "शेषे विभाषा" इति णत्वविकल्पः। नभ्यति तुभ्यतीति दिवादौ। नभते तोभत इति शपि ॥ ४८-४९ ॥

क्लिशू विबाधने ॥ (क्लिश्नाति। क्लिश्नीतः। क्लिश्नासि। क्लिश्नामि)। "शात्" इति श्चुत्वनिषेधः। (चिक्लेश। चिक्लिशतुः। चिक्लिशिथ। चिक्लेष्ठ। चिक्लिशिव। चिक्लिश्व) ऊदित्त्वात् "स्वरति" इत्यादिना वलाद्यार्धधातुकइड्विकल्पः, (क्लेष्टा। क्लेशिता। क्लेशिष्यति। क्लेक्ष्यति)। अनिटि व्रश्चादिना षत्वे यथायोगं ष्टुत्वकत्वे। (क्लिश्नातु। क्लिशान। क्लिश्नानि। अक्लिश्नात्। क्लिश्नीयात्)। आशिषि (क्लिश्यात्। अक्लेशीत्। अक्लेशिष्टाम्) अनिट्पक्षे "शल इगुपधात्" इति क्सः, (अक्लिक्षत्। चिक्लेशिषति। चिक्लिशिषति। चिक्लिक्षति। चेक्लिश्यते। क्लेशयति। अचिक्लिशत्। क्लिशित्वा। क्लिष्ट्वा। क्लिष्टः। क्लिशितः)। "क्लिशः क्त्वानिष्ठयोः" इतीड्विकल्पः। क्त्वायामूदित्त्वाद्वा सेट्, क्त्वो "रलो व्युपधात्" इति विकल्पं बाधित्वा "मृडमृद" इत्यादिना नित्यं कित्त्वम्। क्लिष्टं च तदक्लिशितं च (क्लिष्टाक्लिशितं,) "क्तेन नञ्विशिष्टेन" इति कर्मधारयः, क्लिश्यते इति दिवादौ ॥ ५० ॥

अश भोजने ॥ (अश्नाति। अश्नीतः। अश्नासि। अश्नामि। आश। आशिथ। आशिव। अशिता। अशिष्यति। अश्नातु। अशान। अश्नानि। आश्नात्। आश्नाम्। अश्नाः। अश्नीयात्)। आशिषि (अश्यात्। आशीत्। आशिष्टाम्। अशिशिषति। अशाश्यते। आष्टि) "सूचिसूत्रि" इत्यादिना यङ्, (आशयति)। "निगरण" इति नित्यं परस्मैपदम्, (माभवानशिषत्। अनाश्वान्)। "उपेयिवाननाश्वान्" इति नञ्पूर्वादश्नातेर्भाषायां भूतसामान्ये लिट्, क्वसुरनिट् निपात्यते। इदमेवादेशवचनं भूतसामान्ये लिटः कल्पकं, स चादेशविषयः। इदं च निपातनमुत्तरत्रानुवृत्तेर्लङ्लिङ्विषयं भवति, अस्य चोपादनं सदादौ कृतमिति तत एवावगन्तव्यम्(१)। (अशनायति,) बुभुक्षतीत्यर्थः, "अशनायोदन्यधनाया" इत्यादिना बुभुक्षायामीत्त्वापवाद आत्वम्, अश्नीत पिवतेति यस्यां क्रियायां सातत्येनोच्यते सा (अश्नीतपिबता) मयूरव्यंसकादौ "आख्यातमाख्यातेन क्रियासातत्ये" इति पाठात्समासे टाप्। अश्नुतइति स्वादौ ॥ ५१ ॥

उध्रस उञ्छे ॥ (ध्रस्नाति। दध्रास। दध्रसिथ। ध्रसिता। ध्रसिष्यति। ध्रस्नातु। ध्रसान। अध्रस्नात्। ध्रस्नीयात्)। आशिषि (ध्रस्यात्। अध्रासीत्। अध्रसीत्। दिध्रसिषति। दाध्रस्यते। दाध्रस्ति। ध्रासयति। अदिध्रसत्। ध्रसित्वा। ध्रस्त्वा)। उदित्वादिड्विकल्पः, (ध्रस्तम्) "यस्य विभाषा" इत्यनिट्त्वम्। अयं चुरादौ। अत्र क्षीरस्वाम्युकारं धात्ववयवमाह। तन्मते-(उध्रस्नाति) इत्यादि, (उध्रसांचकार। औध्रस्नात्) इत्याद्युदाहार्यम्। अनवयवत्वे स्वादिवद् ध्रसु इति ब्रूयादिति तस्याभिप्रायः। स एव भूवादौ यदाह—

दरिद्राजागृदेधीङोऽनिकाचश्च चिरिर्जिरिः।
चकास्त्यूर्णोतिवेवीङः स्मर्यन्ते णौ तथौलडिः ॥

इति, तदुदाहरणप्रदर्शनं न तु परिगणनम् ॥ ५२ ॥

इष आभीक्ष्ण्ये ॥ पौनःपुन्यं भृशार्थो वाऽऽभीक्ष्ण्यं, तद्विषयायां क्रियायामित्यर्थः। सा च यथायोग्यं, तथा च श्रूयते 'पुर इष्णाति पुरुहूत' इति, अत्र भाष्यम्। आसुरीणां पुरो हननादिरर्थो गम्यते इति। (इष्णाति। इष्णीतः। इयेष। ईषतुः। ईषुः। इयेषिथ। इयेष।

---

(१) तत्र हि सदादौ भूतसामान्ये सावकाशस्यास्य लिटः पराभ्यां विशेषविहिताभ्यां लङलिङ्भ्यां बाधमाशङ्क्य तद्विधानेऽप्यस्यानुवर्तनादित्युत्तारितमिति ॥

ईपिव) । गुणविषये "अभ्यासस्यासवर्णे" इतीयङ् । अन्यत्र सवर्णदीर्घः, (एषिता । एषिष्यति । इष्णातु । इषाण । इष्णानि । ऐष्णात् । ऐष्णीताम् । ऐष्णाः । इष्णीयात् । आशिषि ( इष्यात् । ऐषीत् । ऐषिष्यत् । एषिषिषति ) । परत्वाद्गुणे द्वितीयस्यैकाचो द्विर्वचनम् । ( एषयति । माभवानिषिषत् । ) ऋदित्करणात्कृतह्रस्वे द्विर्वचनमिति तत्रैवोक्तम् । ( एषित्वा, इषितः ) । "तीषसह" इतीड्विकल्पस्तौदादिकस्यैव न दैवादिकक्रैयादिकयोरेतदर्थमेव तौदादिकमुदितं पठित्वा सूत्रे तमुदितं पठन्तीतिवृत्तौ स्थितम्, अनुदित्पाठिनां तौदादिकस्यैव ग्रहणे हेतुर्हरदत्तेनाकारमात्रविकरणेन सहिना साहचर्यमुक्तम् । एवं धनपालसम्मताक्षीरतरङ्गिणीकारादयश्च तौदादिकस्यैव "तीषसह" इत्यत्र ग्रहणमाहुः । काश्यपस्तु [इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधः] इतिवार्त्तिकप्रामाण्याद्श्यन्विकरणयोस्तौदादिकक्रैयादिकयोर्द्वयोरपीड्विकल्पमाह, हरदत्तोऽपि, 'यथा तु वार्त्तिकं तथा क्रैयादिकस्याप्यत्र ग्रहणमिष्यतइति, एवञ्च, तौदादित्त्वं वार्त्तिकविरुद्धम्, उक्तं च तत्र कैयटे पाठद्वयं प्रस्तुत्य 'तत्र वार्त्तिककारस्य मते त्रयोऽपीषयो निरनुबन्धकाः, इह च तीषसहेतिपाठस्तदाह, इषेरितीति'॥ ९३ ॥

विष विप्रयोगे ॥ अनिट्कारिकायां विशिग्रहणेन जौहोत्यादिकोऽयं च गृह्यते इति न्यासे, ( विष्णाति । विवेश । विवेशिथ । विविशिव ) । क्रादिनियमादिट् । ( विष्णातु । विषाण । विष्णानि । अविष्णात् । वेष्टा ) इत्यादि चेष्टिवत् ॥ ९४ ॥

प्रुष प्लुष स्नेहनसेवनपूरणेषु ॥ ( प्रुष्णाति । पुप्रोष । पुप्रोषिथ । पुप्रुषिव । प्रोषिष्यति । प्रुष्णातु । प्रुषाण । प्रुष्णानि । अप्रुष्णात् । प्रुष्णीयात् ) । आशिषि ( प्रुष्यात् । अप्रोषीत् । पुप्रुषिषति । पुप्रोषिषति । पोप्रुष्यते । पोप्रोष्टि । प्रोषयति । अपुप्रुषत् । प्रोषित्वा । प्रुषित्वा । प्रुषितः ) । एवं (प्लुष्णाति) इत्यादि, ( प्रुष्ट्वा । प्रुष्टः । प्लुष्ट्वा । प्लुष्टः) इति भौवादिकयोर्दाहार्थयोरुदितोः, प्रुषिस्तु दिवादौ पुषादौ ॥ ९५–९६ ॥

पुष पुष्टौ ॥ (पुष्णाति । पुष्णीतः । पुषाण । अपुष्णात् । पुष्णीयात् । पुपोष । पुपोषिथ । पोषिता ) । इत्यादि पोषतिवत् । पुष्यतीत्यनिट् । (पूषा) पु(१)षतीति पुष वृद्धावित्यस्य शपि ॥ ९७ ॥

मुष स्तेये ॥ ( मुष्णाति ) इत्यादि पूर्ववत्, अयं द्विकर्मक इत्युक्तं, तन्निबन्धनानि च कार्याणि तत्रतत्रोक्तानीति नेह प्रतायन्ते । ( मुषित्वा । मुमुषिषति ) । "रुदविदमुष" इति क्त्वासनोर्नित्यं कित्त्वं "रलो व्युपधात्" इति विकल्पापवादः ॥ ९८ ॥

खच भूतप्रादुर्भावे ॥ भूतप्रादुर्भावोऽतिक्रान्तोत्पत्तिः । ( खच्ञाति ) श्चुत्वेन ञकारः, ( चखाच । चखचिथ । चखचिव । खचिता । खचिष्यति । खच्ञातु । खचान । खच्ञानि । अखच्ञात् । खच्ञीयात् । खच्यात् । अखचीत् । अखाचीत् ) "अतो हलादेः" इति वा वृद्धिः । ( चिखचिषति । चाखच्यते । चाखक्ति । खाचयति । अचीखचत् । खचित्वा । खचितः । खव इत्येकइति मैत्रेयः । स्वाम्यपि खच्ञातीत्युक्त्वा खौनातिरिति सभ्या इति । ( खौनाति । खौनातु । खौनीहि ) । अनुनासिकादावूठ्, हौ च श्नः शानचः पूर्वं परत्वादूठि पश्चाद्धलन्तत्वाभावान्न शानच्, ( अखौनात् । खौनीयात् ) । आशिषि ( खव्यात् ) । शेषं खचिवत्, अत्र क्वचिद्धेट् चेति पठ्यते, तत्र हेठतीत्यादि, हेठ विबाधायामिति शपि, श्रन्थादय उदात्ता पिषिवर्जम् । क्लिशिस्तु विभाषितेड् । इषिरपि तकारादौ वार्त्तिकमतेन, सर्वे परस्मैपदिनः ॥ ९९ ॥

ग्रह उपादाने ॥ उदात्तः । स्वरितेत् । ( गृह्णाति । गृह्णीतः । गृह्णासि । गृह्णामि ) । "ग्रहिज्या" दिना सम्प्रसारणं क्ङितोः । ( गृह्णीते । गृह्णीषे । गृह्णे । गृह्णीवहे । जग्राह । जगृहतुः । जगृहुः । जग्रहिथ । जगृहथुः । जग्राह । जग्रह । जगृहिव । जगृहे । जगृहाते । जगृ-

( १ ) पोषतीति पाठो युक्तः । पुषतीति पाठे संज्ञापूर्वको विधिरनित्य इति गुणाभावः ।

हिषे । जगृहिढ्वे । जगृहिध्वे । जग्राहवहे । ग्रहीता । ग्रहीष्यति । ग्रहीष्यते ) । "ग्रहोऽलिटि दीर्घः" इत्यलिटीटो दीर्घः । ( गृह्णातु । गृहाण । गृह्णानि । गृह्णीताम् । गृह्णाताम् । गृह्णीष्व । गृह्णै । अगृह्णात् । अगृह्णीताम् । अगृह्णीत । अगृह्णाताम् । गृह्णीयात् । गृह्णीयाताम् । गृह्णीयाः । गृह्णीत । गृह्णीयाताम् । गृह्णीरन् ) । आशिषि (गृह्यात् । गृह्यास्ताम् । ग्रहीषीष्ट । ग्रहीषीयास्ताम् । अग्रहीत् । अग्रहीष्टाम् ) "ह्मयन्त" इति न वृद्धिः । (अग्रहीष्ट । अग्रहीषाताम् । जिघृक्षति । जिघृक्षते ) । "सनि ग्रहगुहोश्च" इतीण्निषेधः । "रुदविदमुषग्रहि" इति सनः कित्त्वात्संप्रसारणम् । "हो ढः" भष्भावः । "षढोः" इति कत्वे षत्वम् । (जरीगृह्यते,) यङि संप्रसारणे द्विर्वचनम् । "रीगृद्वत" इत्यभ्यासस्य रीक् । ( जाग्राढि, ) यङो लुका लुप्तत्वान्न संप्रसारणं, ढत्वघत्वष्टुत्वढलोपदीर्घाः । ( जागृढः ) ढत्वादि दीर्घवर्जं, तत्र हि पूर्वाणो ग्रहणम् । प्रसारणं त्वपित्सार्वधातुका(१)पेक्षम् । (जाग्रहीति) । झल्परत्वाभावान्न ढत्वम् । (जाग्रक्षि ) । ढत्वभष्भावकत्वषत्वादि । ( जागृहि । जागृह्वः । जाग्रहांचकार । जाग्रहीता । जाग्रहीष्यति) । "ग्रहोऽलिटि" इत्यत्र गृहेर्यद्विहितमार्धधातुकं तस्य य इडिति विहितविशेषणत्वेऽपि द्विःप्रयोगरूपत्वाद् द्विर्वचनस्य द्विरुक्तोऽपि स एव ग्रहिरिति दीर्घो भवति । विहितविशेषणाङ्गीकारस्य च प्रयोजनं जरिगृह्यशब्दाद्धलाद्यार्धधातुके इट्यल्लोपयलोपयोर्जरिगृहितेत्यादौ दीर्घनिवृत्तिः । अत्र च न ग्रहेर्विहितमार्द्धधातुकं किं तर्हि यङन्तात् । ( जाग्राढु । जागृढाम् । जागृढि ) । अत्र हेरपित्त्वात्प्रसारणादौ ढत्वादि, ( आजाग्रट् । आजागृढाम् । अजागृहुः । अजाग्रहम् । अजाग्रट् ) । तिप्सिपोर्हल्ङ्यादिलोपे पदान्तत्वाड्ढत्वभष्भावयोर्जश्त्वचर्त्वे । ( जागृह्यात् । जागृह्याताम् । जागृह्यास्ताम् । अजाग्रहीत् ) । "स्यसिच्सीयुट्" इत्यादिना चिण्वदिटि ग्राहिष्यत इत्यादि । "ग्रहोऽलिटि दीर्घः" प्रकृतस्येट इतीह न भवति । ( प्रगृह्यं पदं, ) यस्य प्रगृह्यसंज्ञा विधीयते । ( गृह्यकाः ) शकुनयः, अस्वतन्त्रा इत्यर्थः; ( ग्रामगृह्या ) चाण्डालवाटिका । ग्रामाद्बहिर्भूतेत्यर्थः । ( अर्ज्जुनगृह्यः ) अर्ज्जुनपक्षः । "पदास्वैरिबाह्यापक्षेषु च" इति गृहेः क्यप्, बाह्येति स्त्रीलिङ्गनिर्देशो लिङ्गान्तरे माभूदिति । तेन ग्रामग्राह्यश्चाण्डाल इत्यत्र ण्यदेव भवति । गृह्यका इत्यत्रानुकम्पायां कन् । ( पाणिगृहीती, ) "पाणिगृहीती" इति ङीप् । ( ग्राहः, ग्रहः ) । विभाषा ग्रह" इति कर्तरि वा णः । अन्यदा च व्यवस्थितविभाषाविज्ञानात् जलचरे ( ग्राहः ) । ज्योतिषि ( ग्रहः ) गृह्णात्युपादत्ते धान्यादिकमिति ( गृहं गेहम् ) । "गेहे कः" इति ग्रहेर्गेहे कर्तरि कः, संप्रसारणम् । यदायं तात्स्थ्यात्तद्वचनस्तदा स्वभावात्पुल्लिङ्गो बहुवचनान्तश्च । शक्तिं गृह्णातीति ( शक्तिग्रहः ) । अच्प्रकरणे [ शक्तिलाङ्गलतोमरयष्टिघटघटीधनुःषु ग्रहेरुपसंख्यानम् ] इत्यच् । अणोऽपवादः । एवं लाङ्गलग्रह इत्यादि । सूत्रं धारयतीति ( सूत्रग्रहः ) । "सूत्रे च धार्यर्थे" इति धारयत्यर्थाद् ग्रहेरच् । (फलेग्रहिः) । अवन्ध्यवृक्षादिरिति नैघण्टुकाः । "फलेग्रहिरात्मंभरिश्च" इति इन्प्रत्यय उपपदस्य चैकारान्तत्वं निपात्यते । भट्टिकाव्ये तु फलग्राहिमात्रे प्रयुज्यते । ( फलेग्रहीन् ) हंसि वनस्पतीनामिति । ( उद्ग्राहः ) । "उदि ग्रह" इति घञ् । "गृहवृदृनिश्चि" इत्यपोऽपवादः । ( संग्राहो मल्लस्य ) अङ्गुलिसंनिवेशस्य दार्ढ्यमित्यर्थः । "समि मुष्टौ" इति घञ्, अपोऽवादः पूर्ववत् । मुष्टाविति मुष्टिविषयश्चेद्धात्वर्थ इत्यर्थः । अवग्राहो हन्त ते वृषलरूपात् । एवं निग्राहः । "आक्रोशे वन्योर्ग्रह" इति घञ् । पूर्ववद् अपोऽपवादः । आक्रोशः शपनम् । अन्यत्रावग्रहः पदस्य ( निग्रहश्चोरस्य ) "ग्रहवृदृनिश्चिगमश्च" इत्यप् । (पात्रप्रग्राहेण चरति भिक्षुः) लिप्सुः पात्रं गृहीत्वा चरतीत्यर्थः । "प्रे लिप्सायाम्" इति घञ् लिप्सायां गम्यमानायाम् । (परिग्राहो वेद्याः) । "परौ यज्ञ" इति ग्रहेर्घञ्, अन्यत्र परिग्रहो धनस्य, पूर्ववदप् । ( अवग्रहो देवस्य अवग्राह इति वा ) । "अवे ग्रहो वर्षप्रतिबन्धे" इति घञपौ । वर्षस्य प्रतिबन्ध इत्यर्थः । (तुलाप्रग्राहस्तुलाप्रग्रहः)।

---

( १ ) तस्य बाहिरङ्गत्वेनासिद्धत्वान्न रागादय इति भावः ·

तुलासूत्रमित्यर्थः । "प्रे वणिजाम्" इति वा घञ् । वणिजामित्यनेन तुलासूत्रं लक्ष्यते, तेषां तेन सम्बन्धात्, न तु वणिजस्तन्त्रमिति वृत्त्यादौ स्थितम् । (प्रग्राहोऽश्वादेः प्रग्रह इति वा ) "रश्मौ च" इति वा घञ् । अश्वानां नियमनार्था रज्जुरिह रश्मिशब्देनोच्यते । ( जीवग्राहं गृह्णाति ) । "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इति जीवशब्दे कर्मण्युपपदे ग्रहेर्णमुल् । कषादित्वाद्यथाविध्यनुप्रयोगः, जीवन्तं गृह्णातीत्यर्थः । ( हस्तग्राहं गृह्णाति । पाणिग्राहं गृह्णाति ) । हस्तेन गृह्णातीत्यर्थः । "हस्ते वर्तिग्रहोः" इतिकरणवाचिनि हस्तार्थे उपपदे णमुल् । पूर्ववदनुप्रयोगः । ( नामग्राहमाह्वयति ) नाम गृहीत्वा ऽऽह्वयतीत्यर्थः । "नाम्न्यादिशिग्रहोः" इति नाम्न्युपपदे णमुल् । तृतीयाप्रभृतित्वात्समासविकल्पः । धातुसम्बन्धाधिकारादनुप्रयोगः । वासरूपेण क्त्वाप्यनुज्ञायतइति नाम गृहीत्वेति भवति । गर्हत इति गृहेर्ग्रहणे शपि । कुत्सायां गल्हत इति शपि, एवं गर्हते इति ॥ ६० ॥

इति श्रीपूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसङ्गममहाराजमहामन्त्रिणा सायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां माधवीयायां धातुवृत्तौ क्र्यादयः ।

## अथ चुरादयः ।

चुर स्तेये ॥ अकार उच्चारणार्थः प्रयोजनान्तराभावात् । न च तङर्थाऽनुदात्तेत्त्वं स्यात् । "सत्यापपाश" इत्यादिना चुरादिभ्यः स्वार्थे णिचो विधानादणिचः प्रयोगाभावात् । तथा च काश्यपः—कार्याभावादेकश्रुत्या पठ्यत इति । अत्राभरणे घुषिरविशब्दन इति ज्ञापकादक्रियमाणेऽपि वाग्रहणे चुरादिभ्यो णिज्नेत्युक्त्वा "अत एकहल्" इत्यत्र वृत्तौ (जगणतुः जगणुः) इति प्रत्युदाहरणसमर्थनार्थमनित्यण्यन्ताश्चुरादय इति न्यासकारेणाभिधानाद् इदं ज्ञापकं सामान्यापेक्षयेत्युक्त्वा "आधृषाद्वा" इति गणकारवचनं चानुवाद इत्युक्तम् । ज्ञापकस्य स्वरूपमस्माभिर्घोषतौ लिखितमिति नेह प्रदर्शितं, तस्य ज्ञापकस्य सामान्यापेक्षत्वं कैयटविरुद्धम् । यदाह "णेरणौ" इत्यत्र गणयति गणमिति भाष्यव्याख्याने नित्यत्वाण्णिचः केवलानां चुरादीनां प्रयोगाभावादिति । भाष्यविरुद्धं च । तथाहि । किमर्थमविशब्दन इत्युच्यते, न विशब्दने घुषेर्णिचा भवितव्यम् । एवं तर्हि सिद्धे सति यदविशब्दनग्रहणं करोति तज्ज्ञापयत्याचार्यो विशब्दने घुषेर्विभाषा णिज् भवतीति । किमेतस्य ज्ञापने प्रयोजनं, 'महीपालवचः श्रुत्वा जुघुषुः क्षत्रमालवा' इत्येष प्रयोग उपपन्नो भवतीति विशिष्टविषयत्वेनाभिधानात्, "ऋदुपधाच्चाक्लृपिचृतेः" इत्यत्रानित्यण्यन्ताश्चुरादय इति सामान्येन यदुक्तं पदमञ्जर्यां तदपि मतान्तरापेक्षं न तु स्वमतेन, यद्वक्ष्यति । घुषिरविशब्दन इत्यत्र घुषिविषयमेव ज्ञापकमुक्त्वा, अन्ये त्वाहुः । अनित्यण्यन्ताश्चुरादय इति सामान्येन ज्ञाप्यत इति । यापि "ऋदुपधाच्च" इत्यादावनित्यण्यन्ताश्चुरादय इति न्यासकृतः सामान्योक्तिः सापि येषां लिङ्गेन वचनेन वा णिज्विकल्पस्तन्मात्रविषयैव । तथा च "णेरणौ" इत्यत्र तेनैवोक्तं, चौरादिकानामप्यनित्यण्यन्तत्वाद्विभाषितणिचां केषां चिद्विद्यमानत्वादिति, यस्मात् णेः प्राक्कर्म कर्ता वा विद्यते न चैतस्माण्णेः प्राक्कर्म कर्ता वा विद्यते इति गणे नित्यण्यन्तत्वाभिधानं विरुध्येत । तथा जगणतुरिति प्रत्युदाहरणे पदमञ्जर्यामपि चुरादित्वादत्र णिच् प्राप्नोति, यदि नेष्यते ऽनित्यण्यन्ताश्चुरादय इति । यदिना ह्यपरितोषः सूच्यते । अपरितोषश्च पूर्वोक्तो भाष्यविरोधः । तदेवं नित्ये णिचि स्वरितेत्त्वात् ग्रहिः क्र्यादौ लक्षिश्चैकश्चुरादिष्वितिवचनाल्लक्षेः स्वरितेत्त्वाल्लिङ्गादन्येभ्यश्चुरादिभ्यो "णिचश्च" इति कर्त्रभिप्राये तङ्नेत्युक्त्वा चन्द्र-

-स्त्वनाप्युभयपदित्वमास्थत। णिज्विकल्पमाह स्वामी। एवं देवो नन्दी चाहतुः। मैत्रेयस्तु स्वरितेत्त्वमस्य नेच्छति, यदाह स्वरितेत्त्वमस्य कश्चित्प्रतिपद्यत इति। "णिचश्च" इत्यत्र हरदत्तोऽपि लक्षेः स्वरितेत्त्वं प्रस्तुत्याह। नात्रासभाषितमस्ति, पारायणेऽपि चुरादिणिच आत्मनेपदमुदाहृतमिति। एवं च लक्षञिति पठित्वा ञित्करणादन्येभ्यश्चुरादिभ्यो "णिचश्च" इति तङ् न भवतीति च श्रीभट्टवचनमपि प्रत्युक्तम्। प्रक्रियारत्ने च चितेरिदित्वात् ज्ञापकाच्चुरादिणिचो ऽनित्यत्वाच्चट स्फुट भेदन इत्यादौ चटतीत्याद्यपि यथादृष्टं द्रष्टव्यमित्येकीयमतमुक्त्वा तद्भाष्योक्तज्ञापकविरुद्धम्। एवं हि घुषिरविशब्दन इत्यस्याप्यण्यन्तस्य सम्भवाच्चद्व्यावृत्त्यर्था ऽविशब्दनोक्तिः कथं ज्ञापिका स्यादिति तन्मतं दूषितम्। तस्माद्यत्र लिङ्गं वचनं चास्ति तत्र विकल्प इति सिद्धमिति। वचनं स्पष्टं, लिङ्गमपि तत्र तत्र धातावुपदर्शयिष्यते। यत्तु जगणतुः, जगणुरिति लिङ्गवचनयोरभावेऽप्यण्यन्तस्य प्रत्युदाहरणम् "अत एकहल्" इत्यत्र वृत्तौ तदनित्यण्यन्ता इति सामान्यवादिमतापेक्षया न तु सिद्धान्तबुद्ध्या। (चोरयति। चोरयतः। चोरयन्ति। चोरयसि। चोरयथः। चोरयथ। चोरयामि। चोरयावः। चोरयामः। चोरयते। चोरयेते। चोरयन्ते। चोरयसे। चोरयेथे। चोरयध्वे। चोरये। चोरयावहे। चोरयामहे। चोरयांचकार। चोरयांचक्रे। चोरयामास। चोरयांबभूव)। प्रत्ययान्तत्वादाम्प्रत्ययः। "अयामन्त" इति णेरयादेशः। (चोरयिता। चोरयिष्यति। चोरयिष्यते। चोरयतु। चोरयताम्। अचोरयत्। अचोरयत। चोरयेत्। चोरयेत। चोर्यात्) "णेरनिटि" इति णिलोपः। (चोरयिषीष्ट। अचूचुरत्। अचूचुरत) "णिश्रि" इत्यादिना चङ्, शत्रादिकार्यं भूवज्ज्ञेयम्। (चुचोरयिषति। चुचोरयिषते)। चिण्वदिटि तस्यासिद्धत्वाण्णिलोपे (चोरिष्यते। अचोरिषाताम्)। एकवचने चिणिति सिचोऽभावः, (चोरिषीष्ट। चोरिता इति भवति। (चोरः)। पचाद्यच्। (चौरः)। प्रज्ञादित्वात्स्वार्थेऽण्। (चोरणा)। "ण्यासश्रन्थ" इति युच्, चुरेति छत्रादिपाठादकारप्रत्ययो गुणाभावश्च। चुरा शीलमस्या (चौरी)। "छत्रादिभ्योण" इति णेऽपि क्वचिदणकृतमिति ङीप्। एतच्च करोताबुपपादितम्॥ १॥

चिति स्मृत्याम्॥ इदित्वान्नुम्, (चिन्तयति) इत्यादि। (चिन्ता,) "चिन्तिपूजि" इत्यादिना ऽङ्प्रत्ययः। अत्र मैत्रेयः। अकारे विधातव्येऽङो विधानं गुणाभावार्थं, तत्सामर्थ्यात्कदाचिण्णिलोपो नास्तीति तत्र चिन्तियेतीयङुदाहर्तव्यः। चिन्त स्मृत्यामिति सानुषङ्ग एव पठितव्ये इदित्पाठान्नलोपाभावार्थादस्य णिच् पाक्षिकः। नित्ये हि णिचि तस्य स्थानिवद्भावाद्व्यवधानान्न क्वापि कित्परत्वमिति चिन्त इत्यादौ नलोपाप्रसङ्गः। तेन (चिन्तति। चिचिन्त। चिन्तिता) इत्याद्यपि भवति। एवमन्यत्रापीदित्वं णिज्विकल्पार्थं द्रष्टव्यम्। चेततीति शपि संज्ञाने। चेतयत इत्याकुस्मीयः॥ २॥

यत्रि संकोचने॥ (यन्त्रयति। यन्त्रणा। यन्त्रितः)। अत्रापि पूर्ववदिदित्करणाद्यन्त्रतीत्याद्यपि भवति। अत्राभरणे यतृ इति पठित्वा ऋकारो "नाग्लोपि" इति विशेषणार्थ इत्युक्तम्। अयं पाठश्चिरन्तनव्याख्यानेषु न दृश्यते, प्रत्युत यन्त्रणादिशब्दमस्मादेव मैत्रेयादयो व्युदपादयन्, अनेकविकरणविचारणे दैवे तद्व्याख्याने पुरुषकारे वा प्रयत्नार्थनिकारार्थवत्सङ्कोचार्थो नोपादीयत इति तस्य मूलं मृग्यम्॥ ३॥

स्फुडि परिहासे॥ (स्फुण्डयति) स्फुण्डतीत्यादि॥ ४॥

लक्ष दर्शनाङ्कनयोः॥ (लक्षयति) इत्यादि। (लक्ष्मीः) "लक्षेर्मुट् च" इतीकारप्रत्ययो मुडागमश्च। (लक्ष्मीवान्। लक्ष्मणः) "लक्ष्म्या अच्च" इति मत्वर्थीयो नकारप्रत्यय इकारस्य चाकारः। (लक्ष्यम्, लक्षणम्)। अचो यति ल्युटि च णेर्लोपः। लक्ष्यमधीते वेद वा (लाक्षियकः)। लाक्षणिकोऽप्येवम्। उञ्छादौ लक्ष्य लक्षणे इति पाठाट्टक्। शम लक्ष आलोचन इत्याकुस्मीयो भविष्यति॥ ५॥

कुद्रि अनृतभाषणे ॥ ( कुन्द्रयति । अचुकुन्द्रत् । कुन्द्रति ) इत्यादि । अत्र स्वामी ऋदिदित्येक इति । तत्र कोदयतीत्यादि । ऋदित्फलं तु अचुकोददित्यत्र ह्रस्वनिवृत्तिः ॥६॥

लड उपसेवायाम् ॥ ( लाडयति ) इत्यादि । लडतीति विलासे शपि ॥ ७ ॥

मिदि स्नेहने ॥ ( मिन्दयति । मिन्दति ) इत्यादि । अत्र क्षीरस्वाम्यनिदितं पठित्वा कैश्चिदिदित् पठ्यत इत्याह । तथा कौशिकोऽप्यनिदितं पपाठ । स्नेहने मेदते मेद्यतीति शप्श्यनोः । ऋदितोऽपि शपि मेधाहिंसनयोः, मेदते ॥ ८ ॥

ओलडि उत्क्षेपणे ॥ ( ओलण्डयति । ओलण्डति । ओलिलण्डयिषति ) । अजादित्वाद् द्वितीयस्यैकाचो द्विर्वचनम् । अत्र स्वामिकाश्यपसंमताकाराः केचिदोदितं पठन्ति तेषां मते लण्डयति । लण्डतीति । अपरे तूकारादिं पठन्ति, तदोकारं धात्ववयवमुदाहरतां मैत्रेयादीनामित्संज्ञकत्वमभिदधतामन्येषां च सर्वेषामनभिमतम् ॥ ९ ॥

जल अपवारणे ॥ ( जालयति ) इत्यादि । नन्दिसम्मताकारावाथर्तौ विपर्यस्य पठतो लज इति, तन्माभूदिति मैत्रेयो जालमित्युदाजहार ॥ १० ॥

पीड अवगाहने ॥ ( पीडयति । अपीपिडत् । अपिपीडत् ) । "भ्राजभास" इत्यादिना णौ चङ्युपधाह्रस्वविकल्पः । ( पीडा ) भिदादिपाठादङ् । ( पाणावुपपीडं धारयति, पाण्युपपीडं धारयति ) । पाणिनोपपीडमिति वा । "सप्तम्यां चोपपीड" इति सप्तमीतृतीयान्तयोर्णमुल् । तृतीयाप्रभृतित्वात् समासविकल्पः । 'धनुरभिरसङ्गं मुष्टिपीडं दधानः' इति वदन् भट्टिकार उपोपसर्गग्रहणमतन्त्रं मन्यते ॥ ॥ ११ ॥

नट अवस्यन्दने ॥ अवस्यन्दनं नाट्यम् । नाट्यइत्येव चन्द्रः । ( चौरस्योज्जासनम् ) "जासिनिप्रहण" इति कर्मणि शेषे षष्ठी । अनेकार्थत्वाद्धिंसार्थत्वमुत्पूर्वस्य, जास्यादीनां विकृतनिर्देशाण्णौ चङि ह्रस्वेनायं विधिरित्युक्तं न्यासे । तत्फलं चोरमनीनटदित्यत्र पष्ठ्यभावः । अयं पक्षो सत्राद्यौ दूषितः ।। १२ ।।

श्रथ प्रयत्ने ॥ प्रस्थान इति मैत्रेयः । अतिहर्ष इति बहवः । ( श्राथयति ) । क्रथिमपि केचिदत्र पठन्ति । स मैत्रेयादौ न दृश्यते । तथा क्रथश्रथौ हिंसायाम् , ( क्राथयेत्, क्रथते, क्रथेत ) इति घटादि(१) च पठता देवेनापि न पठितः ।। १३ ।।

बध संयमने ।। ( बाधयति ) । बन्धेति चान्द्रः । बध्नातीति बन्ध बन्धन इति क्र्यादिकस्य बीभत्सते इति भौवादिकस्य नित्यसन्नन्तस्य बधेर्वैरूप्ये ।। १४ ।।

पॄ पूरणे ।। ( पारयति ) । अत्र श्रीभद्रादयो दीर्घोच्चारणसामर्थ्यात्पक्षे णिज् नेति । तथाहि—दीर्घोच्चारणं परितेत्यादावदन्तमृदन्तामिति इट्सिद्धये, तण्णिचो विकल्पस्य कल्पकं भवति । ननु परितेत्यादि पृणातिपिपर्त्योरन्यतरेणापि सिद्ध्यति किं विकल्पकल्पनया । सत्यम् । परितेत्यादि सिध्यति, परतीत्यादिसिद्धिस्तु प्रयोजनं भविष्यति ।।१५ ।।

ऊर्ज बलप्राणनयोः ।। प्राणनं जीवनम् । ( ऊर्जयति । और्जिजत् । ऊर्जिजयिषति ) "न न्द्राः" इति रेफवर्जस्य द्वितीयस्यैकाचो द्विर्वचनम् । ( ऊर्क् ) । "भ्राजभास" इत्यादिना क्विप् । "चोः कुः" इति कुत्वं, णिलोपस्य [ पूर्वत्रासिद्धये न स्थानिवत् ] इति स्थानिवत्त्वनिषेधात्पदान्तता, संयोगान्तलोपस्तु "रात्सस्य" इति नियमान्न भवति ।। १६ ।।

पक्ष परिग्रहे ।। ( पक्षयति । अपपक्षत् ) ।। १७ ।।

वर्ण चूर्ण प्रेरणे ॥ एवं मैत्रेयः । अन्ये तु वर्ण वर्णने । चूर्ण प्रेरण इति वर्णयन्ति । (चूर्णयति) । वर्णं गृह्णाति (वर्णयति) चूर्णैरवध्वंसयति (अवचूर्णयति) । "सत्यापपाश" इत्यादिना वर्णचूर्णाभ्यां प्रातिपदिकाभ्यां ग्रहणावध्वंसनयोर्णिच् ॥ १८-१९ ॥

प्रथ प्रख्याने ॥ ( प्राथयति । अपप्रथत् ) "अत्स्मृदृत्वरप्रथ" इत्यभ्यासस्याकारः,

---

( १ ) युजादीमिति पुस्तकान्तरे अधिकम् ।

"नान्ये मितोऽहेतौ" इति सम्भवद्धेतुमण्णिचां चुरादिणिचि मित्त्वाभावात्प्रथ प्रख्याने इति घटादिकं मित्त्वमस्य न भवति ॥ २० ॥

पृथ प्रक्षेपे ॥ (पार्थयति । अपपर्थत् । अपीपृथत् ) । उर्ऋद्वा । पथ इत्येक इति स्वामी, पाथयति । अपीपथत् ॥ २१ ॥

षम्ब सम्बन्धने ॥ ( सम्बयति । अससम्बत् ) । शम्ब चेति मैत्रेयः । शम्बेत्येक इति स्वामी । ( शम्बयति । अशशम्बत् । शम्बरम् ) । वाहुलकादरः । साम्ब इति केचिद्दन्त्यादिं दीर्घवन्तं च पठन्ति ॥ २२ ॥

भक्ष अदने ॥ ( भक्षयति पिण्डीं देवदत्तः ) । अतो हेतुमण्णिचि भक्षयति पिण्डीं देवदत्तेनेति "गतिबुद्धिप्रत्यवसानार्थ" इति प्रयोज्यस्य कर्मत्वम् [भक्षेरहिंसार्थस्य] इति वार्तिकेन निषिध्यते । अत्र च [ आदिखाद्योः प्रतिषेधः ] इत्यतः प्रतिषेधग्रहोऽनुवर्तते । "गतिबुद्धिः" इत्यादौ चाणिग्रहणेन हेतुमण्णिचो निषेधः । हिंसायां तु भक्षयति यवान् बलीवर्दानिति भवति । अत्र भक्षयतिर्हिंसाङ्गे भक्षणे वर्तते, हिंसा च सर्वे भावाः सचेतना इति दर्शनेन यवानां सचेतनत्वादस्ति । दर्शनान्तरे यवानां भक्षणे स्वामिनो हिंसा भवतीति तदपेक्षं भक्षणस्य हिंसाङ्गत्वम् ॥ २३ ॥

कुट्ट छेदनभर्त्सनयोः ॥ एवं बहवः । छेदनपूरणयोरिति स्वामी, छेदनइत्येवं जिनेन्द्रदुर्गौ । (कुट्टयति । अचुकुट्टत् । कुट्टाकः) । "जल्पभिक्षकुट्ट" इति षाकन् । षित्त्वात् स्त्रियाम् ( कुट्टाकी, कुट्टनं, कुट्टः) । "एरच्" । कुट्टेन निर्वृत्तं (कुट्टिमम् ,) [ भावप्रत्ययान्तादिमब्वक्तव्यः ] इति "तेन निर्वृत्तम्" इति विषये इमप् ॥ २४ ॥

पुट्ट चुट्ट अल्पीभावे ॥ ( पुट्टयति । अपुपुट्टत् । चुट्टयति । अचुचुट्टत् ) ॥ २५-२६ ॥

अट्ट षुट्ट अनादरे ॥(अट्टयति, आट्टिटत् ) । अयन्दोपधो लक्षणवशेन टकार इति "नन्द्राः" इति दकारवर्जस्य द्वितीयस्यैकाचो द्विर्वचने पश्चात् ष्टुत्त्वम् । (सुट्टयति । असुसुट्टत् ) २७-२८॥

लुण्ठ स्तेये ॥ ( लुण्ठयति । अलुलुण्ठत् ) । लुण्ठतीति लुठि स्तेये इत्यस्य शपि । ननु लुण्ठेरिदित्पाठेनापि लुण्ठयति लुण्ठतीति रूपद्वयं भविष्यति, किं भ्वादीदित्पाठेन । सत्यम् । सिध्यतीदं रूपद्वयं, लुण्ठितेति ताच्छीलिकस्तृ(१)न्न स्यात् । "जल्पभिक्षकुट्टलुण्ठ" इति षाकना बाधात् । लुठि पाठे तु प्रतिपदोक्तत्वादस्यैव तत्र ग्रहणमिति भौवादिकात्तृनि लुण्ठितेति भवतीत्युभयत्र पाठः कर्तव्यः । अत एव न्यासे कुट्ट छेदे, लुण्ठ स्तेये चौरादिकावेतावित्युक्तम् । (लुण्ठाकः) "जल्पभिक्ष" इत्यादिना षाकन् , षित्त्वान्ङीष् ( लुण्ठाकी ) २९

शठ श्वठ असंस्कारगत्योः ॥ ( शाठयति । श्वाठयति । अशीशठत् । अशीश्वठत् ) । इदिद् द्वितीय इति दुर्गः । मैत्रेयोऽपि श्वठीत्येक इति । ( श्वण्ठयति । अशश्वठत् ) श्लाघायां शाठयतइत्याकुल्मीयः । शठयति श्वठयतीति कथादौ, कैतवे शठतीति शपि गतम् ॥ ३०-३१ ॥

तुजि पिजि हिंसाबलादाननिकेतनेषु ॥ ( तुञ्जयति । अतुतुञ्जत् । पिञ्जयति । अपिपिञ्जत् ) । इदित्करणात्तुञ्जति पिञ्जतीत्यपि भवतः । तुजि हिंसायां तुजि पालने चेति भूवादिपाठादेव हिंसायां तुञ्जतीति सिद्धाविदित्त्वेन णिजनित्यत्वं बलादाननिकेतनयोरपि तुञ्जतीति रूपसिद्धये, एवं तर्ह्यनेनैव सिद्धे भूवादिपाठः किमर्थं इति चेत्, पालने तुञ्जतीत्यर्थः । तुञ्जयति पिञ्जयतीति भाषार्थावग्रे भविष्यतः । शाकटायनस्तुज पिजेति पपाठ । पिज वर्णइत्यदादौ । इह लजि लुजि इत्यपि क्वचिद् दृश्येते । तौ मैत्रेयादिभिर्न पठ्येते ॥ ३२-३३ ॥

पिस गतौ ॥ ( पेसयति । अपीपिसत् ) । पेसतीति शपि ॥ ३४ ॥

षान्त्व सामप्रयोगे ॥ ( सान्त्वयति । अससान्त्वत् । सिषान्त्वयिषति ) ॥ ३५ ॥

श्वल्क वल्क परिभाषणे ॥ ( श्वल्कयति । वल्कयति । अशश्वल्कत् । अववल्कत् ) ३६-३७

---

( १ ) लुण्ठीति ताच्छीलिको णिनिर्न स्यादिति पुस्तकान्तरे पाठः ।

ष्णिह स्नेहने ॥ षापदेशः । ( स्नेहयति । असिष्णिहत् ) स्निह्यतीति प्रोता दिवादिः । अत्र स्फिट स्नेहनइति क्वचित्कोशे दृश्यते । तद्धनपालशाकटायनमैत्रेयदेवादिभिश्चिरन्तनैर्व्याख्यातृभिर्न लिख्यते ॥ ३८ ॥

स्मिट अनादरे ॥ ( स्मेटयति । असिस्मिटत् ) स्मिङ् इत्येकइति मैत्रेयः । ( स्माययते ) । अवयवे कृतं लिङ्गमिति न्यायेन ण्यन्तस्य ङित्वादात्मनेपदम् । आत्वं स्मायतेरिति निर्देशाद्धेतुमण्णौ विधानाच्च नास्य भवति । शाकटायनस्त्वट स्मिट गताविति टान्तप्रकरणे पपाठ । स्मयतइतीषद्धासे शपि ॥ ३९ ॥

श्लिष श्लेषणे ॥ ( श्लेषयति । अशिश्लिषत् ) । श्लेषतीति दाहे शपि । श्लिष्यतीत्यालिङ्गने श्यनि ४० ॥

पथि गतौ ॥ ( पन्थयति । अपपन्थत्, । पन्थति । अपन्थीत्, ) इदित्त्वाण्णिज्विकल्पः । पथेतीति पथे गतावित्यस्य शपि ॥ ४१ ॥

पिच्छ कुट्टने ॥ ( पिच्छयति । अपिपिच्छत् ) ४२ ॥

छदि संवरणे ॥ ( छन्दयति । अचछन्दत् । छन्दति ) । शाकटायनस्त्वात्मनेपदिष्वप्ययमुं पपाठ स्त्राम्यादयश्छदेत्यनिदितं पठित्वा छादयतीत्युदाजह्रुः । तथा छादयतीति रूपस्य छद अपवारणइत्यात्रपोयेणैव सिद्धत्वादिह पाठो व्यर्थः स्यात् । इदित्वाभावे छन्दःशब्दोऽपि न स्यादिति मैत्रेयाद्युक्त इदित्पाठ एव न्याय्यः । अत एव न्यासपदमञ्जर्यादौ छादेयमित्यत्रोरश्छदादि छद अपवारण इत्यस्मादेव व्युत्पादितम् ॥ ४३ ॥

श्रणु दाने ॥ प्रायेणायं विपूर्वः । ( विश्राणयति । व्यशिश्रणत् ) । घटादिपाठात् श्रणयति ॥ ४४ ॥

तड आघाते ॥ ( ताडयति । अतीतडत् ) ॥ ४५ ॥

खड खडि कडि भेदने ॥ ( खाडयति । अचीखडत् । खण्डयति । अचखण्डत् । खण्डति । अखण्डीत् । कण्डयति । अचकण्डत् । कण्डति । अकण्डीत् ) । खण्डतीति मन्थने शपि । तथा कण्डतइति भेदे । क्षीरस्वामी तु भूवादौ परस्मैभाषं कडतिमनिदितमपि कडीतीदितं पठित्वा कडेति दुर्गं इत्याह । अस्य निर्णयस्तत्र कृतः ॥ ४६-४७-४८ ॥

कुडि रक्षणे ॥ (कुण्डयति । कुण्डति) । कुण्डतइति वैकल्यदाहयोः शपि गतम् । वैकल्यार्थेष्वान्त इति शाकटायनः । टान्तमेकइति स्वामी । इमावपि पाठभेदौ तत्रापि दर्शितौ ॥४९॥

गुडि वेष्टने ॥ ( गुण्डयति । गुण्डति ) । रक्षणइत्येके । प्रथमादिं द्वितीयान्तमेके पठन्ति । ( अवकुण्ठयति । अवकुण्ठति ) ॥५० ॥

खुडि खण्डने ॥ ( खुण्डयति । खुण्डति ) ॥ ५१ ॥

वटि विभाजने ॥ वडीति शाकटायनः । ( वण्डयति ) । अत्र मैत्रेयो भौवादिकस्य विभाजनार्थस्य वटेर्हेतुमण्णौ वण्टयतीति सिद्धे चुरादौ पाठः कर्त्रभिप्रायेऽपि परस्मैपदार्थ इति । असौ "णिचश्च" इति तङ् चुरादिण्यन्तस्य नेति मन्यते । अन्ये तु "णिचश्च" इति तत्रापीष्यत इति नेदं प्रयोजनं किन्तु चिन्तीत्यादिवदिदित्त्वबलाण्णिचो विकल्पो नेति, विभाजने तु तेनैव वण्टतीति सिद्धमिति । ये तु भूवादावपि विभाजनइति पठन्ति तेषां तु नैवास्य चौरस्यावतारः ॥ ५२ ॥

मडि भूषायां हर्ष च ॥ ( मण्डयति ) । मण्डतइति वेष्टने शपि । मडि भूषायामिति भूवादौ पाठादेवं मण्डतीति सिद्धेरस्येदित्वं नुम्मात्रार्थं न तु णिज्विकल्पार्थमपि, तेन हर्षे मण्डतीति न भवति ॥ ५३ ॥

भडि कल्याणे ॥ ( भण्डयति । भण्डति ) । परिभाषणे भण्डतइति शपि । परिहासइत्येके तत्र ॥ ५४ ॥

छर्द वमने ॥ ( छर्दयति । अचच्छर्दत् ) ॥ ५५ ॥

पुस्त बुस्त आदरानादरयोः ॥ ( पुस्तयति पुस्तकम् । बुस्तयति बुस्तम् ) ॥ ५६–५७ ॥

चुद सञ्चोदने ॥ सञ्चोदनं प्रश्नः, प्रेरणा च । तत्र प्रश्ने द्विकर्मकत्वं, देवदत्तमर्थम् (चोदयति ) । ( चूडा ) । भिदादिपाठादङ् । उत्वं दीर्घत्वं च । ( चूडालः ) । "प्राणिस्थादातो लजन्यतरस्याम्" इति मत्वर्थे लच् । चूडा नाम काचित्, तस्या अपत्यं ( चौडिः ) "बाह्वादिभ्यश्च" इतीञ् "द्व्यचः" इति ठकोऽपवादः ॥ ५८ ॥

नक्क धक्क नाशने ॥ अयं तवर्गीयादिः । णोपदेशपर्युदासे नृतिनन्दीत्यादावुपादानात् । ( नक्कयति ) ॥ ५९–६० ॥

चक्क चुक्क व्यथने ॥ ( चक्कयति । चुक्कयति ) चिक्क इत्यपि क्वचित्पठ्यते ६१–६२

क्षल शौचकर्मणि ॥ ( क्षालयति । अचक्षलत् ) ॥ ६३ ॥

तल प्रतिष्ठायाम् ॥ ( तालयति । अतीतलत् । तालं । तलम् ) । अच् । "संज्ञापूर्वको विधिरनित्य" इति वृद्ध्यभावः । मैत्रेयस्तु 'घुषिरविशब्दने, इति ज्ञापकं सामान्यमित्युक्त्वा णिजभावे तलशब्दमाह ॥ ६४ ॥

तुल उन्माने ॥ ( तोलयति । अतूतुलत् । तुला ) इति णिचोऽनित्यत्वादिति मैत्रेयः । अन्ये तु णिजभावे प्रमाणाभावात् "तुल्यार्थै" इत्यादौ तुलेति निपातनादङि णिलुकि तुलेति । ( तुलयति । अतुतुलत् ) इति तुलाशब्दात् "प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" इति णिचि, "दीर्घो लघोः" इति णौ चङ्यभ्यासस्य दीर्घत्वमग्लोपित्वान्न भवति । तुला कृष्णस्य नास्ति । "तुल्यार्थैः" इति विधीयमाना तृतीया तत्रैवातुलोपमाभ्यामितिवचनान्न भवति । तुलया सम्मितं ( तुल्यम् ) । "नौवयोधर्म" इति यत् । तुलया सम्मितमिति व्युत्पत्तिमात्रं रूढशब्दस्त्वयं सदृशपर्यायः । ( तुल्यश्वेतः ) । "कृत्यतुल्याख्या अजात्या" इति समानाधिकरणसमासः । अयं च पूर्वनिपातनियमबाधनार्थः । तथा तुल्यमहानित्यत्र "सन्महत्" इति महच्छब्दस्य प्राप्तपूर्वनिपातबाधार्थः । ( कृष्णस्य तुल्यः, कृष्णेन वा ) । "तुल्यार्थैः" इति षष्ठीतृतीये ॥ ६५ ॥

दुल उत्क्षेपे ॥ ( दोलयति । अदूदुलत् । दोला ) । भिदादेराकृतिगणत्वादङ् । ( दुलिः ) कर्मठः । "अच इः" इतीप्रत्ययः । "बहुलमन्यत्रापि संज्ञाच्छन्दसोः" इति णिलुक् ॥ ६६ ॥

पुल महत्त्वे ॥ ( पोलयति । पोलति ) इति शपीति भूवादौ स्वामी ॥ ६७ ॥

चुल समुच्छ्राये ॥ ( चोलयति । चोलः ) । चोलस्यापत्यमपि ( चोलः ) । "द्व्यञ्मगध" इत्यण् । तस्य "कम्बोजादिभ्यो लुग्वचनञ्चोलाद्यर्थम्" इति लुक् ॥ ६८ ॥

मूल रोहणे ॥ ( मूलयति ) । मूलतीति प्रतिष्ठायां शपि ॥ ६९ ॥

कल विल क्षेपे ॥ ( कालयति । वेलयति । वेला ) । कलयतीति गतिसंख्यानयोः कथादौ भविष्यति । कलतइति शब्दसंख्यानयोः शपि । वेलते इति वेलेरपि चलने, विलतीति संवरणे शे । क्वचित् किलेत्यप्यत्र पठ्यते, मैत्रेयादिभिस्तु न पठ्यते, श्वैत्यक्रीडनयोः किलतीति शे ॥ ७०–७१ ॥

बिल भेदने ॥ ( बेलयति । बेलति ) इति शपीत्यात्रेय इत्युक्तम् ॥ ७२ ॥

तिल स्नेहने ॥ ( तेलयति ) । तिलतीति शे । तेलतीति गतौ शपि ॥ ७३ ॥

चल भृतौ ॥ ( चालयति ) । चलतीति विलसनकम्पनयोः शशपोः ॥ ७४ ॥

पाल रक्षणे ॥ ( पालयति । अपीपलत् ) । पातेरपि हेतुमण्णौ [ पातेर्लुग्वक्तव्यः ] इति लुगागमे पालयति ॥ ७५ ॥

लूष हिंसायाम् ॥ ( लूषयति । अलूलुषत् ) ॥ ७६ ॥

शुल्व माने ॥ ( शुल्वयति । अशुशुल्वत् ) । शूर्प मानइति श्रीभद्रमैत्रेयादयः । ( शूर्पयति । शूर्पा,) एरचि पचाद्यचि वा णिलोपः । शूर्पेण क्रीतं (शौर्पं, शौर्पिकम् ।) "शूर्पादञन्यतरस्याम्" इत्यार्हीयेष्वर्थेष्वञ्ठञौ । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पमित्यत्र "अध्यर्धपूर्व

इति ठञ्जोर्वा लुक् ॥ ७७ ॥

चुट छेदने ॥ ( चोटयति )। चुट्तीति शे गतम् ॥ ७८ ॥

मुट संचूर्णने ॥ ( मोटयति )। मोटतीति मर्दने शपि। मुटतीति प्रमर्दनाक्षेपयोः शे ॥७९॥

पडि पसि नाशने ॥ ( पण्डयति। पण्डति। पंसयति। पंसति। पांसुः )। "अर्जिदृशि" इत्यादिनोप्रत्ययो दीर्घश्च। पण्डतइति गतौ शपि ॥ ८०-८१ ॥

व्रज मार्गसंस्कारगत्योः। ( व्राजयति )। व्रजि मार्गसंस्कारयोर्गतौ चेति मैत्रेयादयः। अत्र धनपालो मार्गे चेति पठति। स्वामी तु व्रजस्थाने वर्जि पठित्वा मार्गेति द्वितीयं धातुमाह। तन्त्रान्तरे तु वजिव्रजी द्वौ पठित्वा मार्गसंस्कारगती अर्थौ उक्तौ। ( व्राजयति। मार्गयति )। व्रजति व्रजतीति शपि। वाजयतीति वातेर्णौ "वो विधूनने जुक्" इति जुगागमे। मृग अन्वेषणे कथादौ। मार्ग अन्वेषणे इति युजादौ ॥ ८२-८३ ॥

शुक्ल अतिस्पर्शने ॥ ( शुक्लयति ) ॥ ८४ ॥

चपि गत्याम् ॥ ( चम्पयति। चम्पति ) ॥ ८५ ॥

क्षपि क्षान्त्याम् ॥ ( क्षम्पयति। क्षम्पति ) क्षपयतीति प्रेरणार्थस्य कथादित्वेन ॥८६॥

क्षजि कृच्छ्रजीवने ॥ ( क्षञ्जयति। क्षञ्जति ) क्षञ्जतइति गतिदानयोर्घटादौ ॥ ८७ ॥

श्वर्त गत्याम् ॥ ( श्वर्तयति ) ॥ ८८ ॥

श्वभ्र च ॥ ( श्वभ्रयति ) ॥ ८९ ॥

ज्ञप मिच्च ॥ ज्ञापने मारणादिषु चाभिधानमस्यैवेति मैत्रेयादयः। अन्ये तु शाकटायनानुसारिणो ज्ञप मारणतोषणनिशामनेषु मिच्चेति पठन्ति, तथा "इको झल्" इत्यत्र न्यासे "ज्ञप मिच्च" इति (१)पठित्वा अन्येतु ज्ञपमारणतोषणनिशामनेष्विति पठन्तीति। घटादिवदत्रापि केचिन्निशामनस्थाने निशानशब्दं पठन्ति। घटादिषु मारणादिसूत्रस्य पाठादेव मित्त्वे सिद्धे पुनर्मारणादिषु मित्त्ववचनं ज्ञपयमादिवर्जमन्ये स्वार्थण्यन्ता न मित इति ज्ञापनार्थमिति पुनः पाठफलं चाहुः काश्यपादयः। ज्ञपादोननुक्रम्य "नान्ये मितोऽहेतौ" इति ज्ञपादिव्यतिरिक्तानामेवाहेतुमण्णौ मित्त्वाभावस्य वक्ष्यमाणत्वान्नेदं फलम्। किं चार्थविशेषपरिगणनमप्ययुक्तं, प्रच्छ ज्ञीप्सायां, (ज्ञप्सिः) "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान" इत्यत्र ज्ञीप्स्यमानो ज्ञपयतुमिष्यमाणो बोधयितुमभिप्रेत इत्यादौ ज्ञानमात्रे ज्ञापने च प्रयोगदर्शनात्। न चैदं शक्यते वक्तुं निशामनं ज्ञानमात्रं तदर्थादस्मादहेतुमण्णौ चुरादित्वेन प्रच्छ ज्ञीप्सायां ज्ञप्सिरति भविष्यति, "स्थाशपां ज्ञीप्स्यमान" इत्यादिस्तु हेतुमण्णौ घटादित्वेनेति। एवं तर्हि घटादिर्ज्ञापनविषयो ऽयं तु ज्ञानविषय इत्यर्थभेदस्य विद्यमानत्वात् घटादित्वादेव मित्त्वे सिद्धे पुनर्मारणादिषु मित्त्ववचनं ज्ञापनार्थमिति स्वोक्तेन विरोधः स्यात्। अथ मतं घटादित्वादेव मित्वे सिद्धे पुनर्मारणादिषु मित्त्ववचनंज्ञापनार्थमिति स्वोक्तेन विरोधः स्यात्। अथमतं घटादित्वादेव मित्वे सिद्धे पुनर्मारणादिषु मित्त्ववचनं ज्ञापनार्थं, निशामनस्य ग्रहणं विध्यर्थमितरयोस्तु नियमार्थमिति। एवमपि मारणादिष्वितिवचनमयुक्तं, मारणतोषणयोरिति तु वक्तव्यम्। किं चास्य ज्ञानमात्रार्थत्वे "श्लाघह्नुङ्" इत्यत्र न्यासकारहरदत्तादिमिश्रैरादिकाद् व्युत्पादनं विरुद्ध्येत। सर्वथा तज्ज्ञापयत्याचार्यः, 'विज्ञापना भर्तृषु सिद्धिमेति' ज्ञापकं स्यात्तदन्तत्व, इत्यादिस्तु न सिध्यति। अथ मारणतोषणनिशामनेष्विति घटादाविह च पाठाज्ज्ञापयत्यादि सिध्यति, ज्ञीप्स्यमानो ज्ञप्सिरिति न सिध्यति। यदि तु मतं घटादौ निशामनमिति पाठ, इहं तु निशानमिति घटादेर्ज्ञापयति, अस्माज्ज्ञपयतीति भविष्यतीति, एवमपि "स्थाशपां ज्ञीप्स्यमान" इत्यादि न सङ्गच्छते। अत्र हि बोधनार्थो धातुस्तत्र तु बोधनं निशामनशब्दार्थो न तु बोधनेति। अथ तत्रापि बोधनार्थः, प्रच्छ ज्ञीप्सायां, ज्ञीप्स्यमानः

---

( १ ) ज्ञपश्चेति पाठान्तरम् पुस्तकान्तरे।

ज्ञप्तिर्न सिध्यति। तस्माज्ज्ञप मिच्चेत्येव युक्तः पाठः। अत एव "इको झल्" इत्यादौ "ज्ञप मिच्च" इति न्यासकारहरदत्तादयः पठन्ति। तेनास्य यथाप्रयोगमर्थं इति ज्ञापने ज्ञानमात्रे च वृत्तिरिति प्रच्छ ज्ञीप्सायां, ज्ञीप्स्यमानः, ज्ञपयितुमिष्यमाण, इत्यादि सर्वमुपपद्यते। ज्ञापयत्यादिप्रयोगस्तु ज्ञानमात्रवचनाज्जानातेः। घटादिमित्वं तु चाक्षुषज्ञानार्थकनिशामनार्थस्य चेर्ताह न भवति, निशामनं चाक्षुषज्ञानमित्यवोचाम। पुरुषकारेऽप्यस्मदुक्तरीत्या "ज्ञप मिच्च" इत्येव पाठो युक्त इति सिद्धान्तितम्। एवं च चुरादिणिचो "णिचश्च" इति कर्त्रभिप्राये तङ् नास्तीति दर्शनाश्रयणेनोक्तस्योक्तिः, "णिचश्च" इत्युदितं विहितं यदिति कर्त्रभिप्रायेऽपि मारणादौ परस्मैपदसिद्धिः पुनः पाठफलमिति यद्दैवेनोक्तं तदपि मतं, जानातीति ज्ञःसिध्येत्, ज्ञपयति तु पुनर्मारणादौ घटादेश्च मित्त्वेऽपीदमेव ज्ञपमिदिति पदं ज्ञापने मारणादौ, तेनार्थात् ज्ञापनार्थे ज्ञपयतिपदवत् ज्ञापयेदित्यपि स्यादिति स्वेनैव ज्ञपमिदित्यर्थविशेषोपादानरहितं पाठमङ्गीकृत्य तस्य च प्रयोजनं मारणादिव्यतिरिक्ते ज्ञपयत्यर्थे ज्ञपयतीति सिद्धिरित्युक्तत्वादुक्तस्योक्त्यसंभावान्निराकृतम्। (ज्ञपयति। संज्ञपयति। निज्ञपयति, प्रज्ञपयति)। स्वभावान्मारणादावप्यस्य वृत्तिरित्युक्तं, तत्र कौमारमतेन सोपसर्गः प्रदर्शितः। (जिज्ञपयिषति। ज्ञीप्सति)। "सनीवन्त" इत्यादिना पक्षे इडभावः। "आप्ज्ञप्यृधामू" इति झलादौ सन्यच ईकारः। "अत्र लोप" इत्यभ्यासलोपः। "णेरनिटि" इति णिलोपः। "वा दान्त" इत्यत्र ज्ञप्त इति निपातनं ज्ञोरिति "निष्ठायां सेटि" इत्यत्र कैयटपदमञ्जर्योरुक्तत्वादिह ज्ञप्तः ज्ञपित इति मैत्रेयेणोदाहरणस्य प्रदर्शनमयुक्तम्॥ ९०॥

यम च परिवेषणे॥ चकारेण मिदित्यपेक्ष्यत इति मैत्रेयादयः। इह परिवेषणं परिवेष्टनं, न तु भोजना, नापि वेष्टना। तत्र हि घटादित्वात्सिद्धम्। न च वेष्टनेऽपि घटादित्वेन मित्त्वसिद्धिः। हेतुमण्ण्यन्तस्य तद्विधानात् तस्य च वेष्टना ऽर्थो न तु वेष्टनमिति। (यमयति चन्द्रम्) परिवेष्टतइत्यर्थः। अन्यत्र नियामयति। क्वचिद्यमो ऽपरिवेषण इति पठ्यते। तदनार्षम्। चकारेण मिदित्यपेक्ष्यतइति मैत्रेयादिविरोधात्। किं च घटादौ यमो ऽपरिवेषण इति परिवेषणादन्यत्र मित्त्वं निषिध्यते, अनेन तु तत्र च विधीयतइति विधिनिषेधयोर्विषयविभागो न प्रकल्पेन। येषां तु दर्शनं घटादावपरिवेषणे मित्त्वं विधीयतइति तेषान्तु तत्रैवानेनापि मित्वं विधीयत इति वैयर्थ्यमेव प्रसज्येत। इदं च घटादावपरिवेषणे मित्त्वविधानदर्शनं च तत्रैव दूषितम्॥ ९१॥

चह परिकल्कने॥ (चहयति)। मैत्रेयस्तु चपेति पठित्वा चपयतीत्युदाजहार। चहेत्यूष्मान्तमेव चन्द्रोऽपि। अयं कथादावपि पठिष्यते, तस्य फलमग्लोपित्वात् "सन्वल्लघुनि" इति इत्वस्य "दीर्घो लघोः" इति दीर्घस्य चाभावः। तेनाचचहदिति भवति। इह पाठादचीचहदितीत्वदीर्घौ भवतः। तथास्य मित्वात् (अचहि। अचाहि। चहंचहं, चाहंचाहम् इति "चिण्णमुलोः" इति दीर्घविकल्पो भवति। चहतीति भूवादिः॥ ९२॥

रह त्यागे॥ इतीह केचित्पठन्ति। (रहयति)। कथादावयं पठिष्यते, तत एव सिद्धेरिह पाठो व्यर्थ इति स्वामी। तन्न, चहिवत्कथादेरग्लोपित्वादित्वदीर्घयोरभावादररहदिति भवति, इह पाठादरीरहदिति, तथा (अरहि। अराहि। रहंरहं। राहंराहम्) इति मित्त्वात् "चिण्णमुलोः" इति दीर्घविकल्पोऽस्य भवतीति प्रयोजनसद्भावात्। रहतीति शपि। रंहतीति तत्रैव रहि गतावित्यस्य॥ ९३॥

बल प्राणने॥ ओष्ठ्यादिः। (बलयति)॥ ९४॥

चिञ् चयने। ञित्करणात्कर्त्रभिप्राये तङ्विध्यर्थाण्णिजस्य विकल्पेन भवति, णिचि "चिस्फुरोर्णौ" इत्यात्वं पक्षे भवति। तत्र पुकि मित्त्वात्तस्य ह्रस्व इति। (चपयति। चययति)। अणिचि चयति, चयते इति भवति। अत्र काश्यप इकारोच्चारणसामर्थ्यादात्वं नेति तच्चिन्त्यम्, आत्वस्य वैकल्पिकत्वात्तदभावे वृद्ध्यायह्रस्वेषु चययतीति रूपसिद्ध्यर्थत्वा-

तस्य, तथा णिजभावे गुणायोश्चयतीति रूपार्थत्वाच्च। रहत्यादयो यद्यप्यत्र मैत्रेयादिभिन पठितास्तथापि काश्यपादिप्रामाण्यादस्माभिः पठिताः। चिनोतीति स्वादेः। "नान्ये मितोऽहेतौ" ज्ञपादिव्यतिरिक्ता अहेतुमण्णौ मितो न भवन्ति। तेन ज्ञपादिव्यतिरिक्तानां चौरादिकानां शमादीनां "जनीजॄष्क्नसुरञ्जोऽमन्ताश्च" इत्यादिना सामान्यलक्षणेन प्राप्तं मित्त्वं न भवति॥ ९५॥

घट्ट चलने॥ (घट्टयति)। घट्टते इति शपि॥ ९६॥

अस्त संघाते॥ (अस्तयति)। क्वचिदयं वक्ष्यमाणस्य पुंसेरनन्तरं पठ्यते॥९७॥

खट्ट संवरणे॥ (खट्टयति)॥ ९८॥

षट्ट स्फिटट्ट चुबि हिंसायाम्॥ (सट्टयति। स्फिटट्टयति। चुम्बयति)। चुम्बतीति वक्त्रसंयोगे शपि। केचिद् द्वितीयं पुट्टेत्युकारवन्तमनोष्ठ्यं च पठन्ति। अस्माभिस्तु मैत्रेयादीनामनुसारेण पूर्वमेव पुट्टिःपठित इतीह न लिखितः, तदनुरोधादेवेह स्फिट्टिश्च पठितः। इह व्यय क्षय इति नन्दी पठति। व्ययेत्यपरे, मैत्रेयदेवादयस्तूभयमपि न पठन्ति॥९९-१००-१०१

पूल संघाते॥ (पूलयति)। पूलतीति शपि। पुरुषकारे तु पुणेति क्षीरस्वामी, पुणेति शाकटायन इत्युक्त्वा कोशशुद्धिस्त्वीदृशेऽर्थे कादृशीति न विद्म इत्युपहसितम्॥ १०२॥

पुंस अभिवर्द्धने॥ (पुंसयति)॥ १०३॥

टकि बन्धने॥ (टङ्कयति। टङ्कति। टङ्का। विटङ्कः)॥ १०४॥

धूस कान्तिकरणे॥ दन्त्योष्म्यान्त इति श्रीभद्रमैत्रेयादयः। मूर्धन्योष्म्यान्त इति स्वामी। तथा च मैत्रेयोऽपि धूष इत्येकइति। काश्यपस्तु तालव्योष्मान्तमाह। (धूसयति। धूसरः)। बाहुलकादरप्रत्ययः॥ १०५॥

कीट वर्णे॥ (कीटयति)॥ १०६॥

चूर्ण सङ्कोचने॥ (चूर्णयति)। पुनः पाठोऽर्थभेदकृतः॥ १०७॥

पूज पूजायाम्॥ (पूजयति। पूजा)। "चिन्तिपूजि" इत्यङ्, "ण्यास" इति युचोऽपवादः। (पूजितो राज्ञाम्) "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तः। सति "क्तस्य च वर्तमाने" इति कर्तरि षष्ठी। "क्तेन च पूजायाम्" इति समासनिषेधः। 'पूजितो यः सुरासुरैः' इत्यार्षः प्रयोग इत्याहुः॥ १०८॥

अर्क स्तवने॥ (अर्कयति,) तपनइत्येके। अर्चयत्यर्कमर्किण इति दर्शनात् स्तवनपाठो युक्तः॥ १०९॥

शुठ आलस्ये॥ (शोठयति)। शोठतीति गतिप्रतिघाते शपि॥ ११०॥

शुठि शोषणे॥ (शुण्ठयति। शुण्ठति)। अत्र क्षीरस्वामी। केचिदेनमकारान्तं पठन्ति, लक्ष्यतस्तदपि प्रमाणमिति, एवं तु आलस्ये इति पूर्वत्रैव शोषणमपि निर्दिशेत्। शोषणे शोठयतीति प्रयोगो दृष्टश्चेत् शोठयतेरनेकार्थत्वेन निर्वाह्यः, तस्माच्छुठि शोषणइति युक्तः पाठः। अस्येदित्त्वादेव शुण्ठतीति सिद्धे भ्वादौ शुण्ठेः पाठः प्रपञ्चार्थः॥ १११॥

जुड प्रेरणे॥ (जोडयति)। बन्धने जुडतीति शे॥ ११२॥

गज मार्ज शब्दार्थे॥ (गाजयति। गाजयते)। गजतीति शपि, गर्जति गृञ्जतीति च। (मार्जयति)। शौचालङ्कारयोः, मार्जतीति युजादौ भविष्यति। मृजूष् शुद्धावित्यस्य मार्ष्टीत्यदादौ। अत्र मर्चिमपि केचित्पठन्ति। मर्चयति। शपि मर्चति॥ ११३॥ ११४॥

घृ सम्प्रस्रवणे॥ घारयति। अत्र क्षीरस्वामी स्रावणइति पठित्वाऽभिघारयतीत्युदाजहार, घरतीति शपि। जघर्तीति श्लौ। छान्दसौ चैतावित्युक्तम्॥ ११५॥

पचि विस्तारवचने॥ (पञ्चयति)। पञ्चति, पञ्चतइति व्यक्तार्थस्य शपि॥ ११६॥

तिज् निशामने॥ (तेजयति)। तितिक्षते इति भौवादिकस्य तिजेर्नित्यसन्नन्तस्य क्षमायाम्। तेजतीति शपि पालनार्थस्य॥ ११७॥

कृत संशब्दने ॥ ( कीर्तयति )। "उपधायाश्च" इतीत्त्वरपरत्वयोः "हलि च" इति दीर्घः। ( अचिकीर्तत्। अचीकृतत्)। उऋद्वा। अन्यदा णौ कृतं स्थानिवदितीत्वस्य स्थानिवत्त्वं न भवति। यत्र द्विरुक्तौ परभागस्याद्योजवर्णस्तत्रैवेयं परिभाषेत्येवं "द्विर्वचनेऽचि" इत्यादौ भाष्यकैटयोः स्थितम्। एवमेव "उऋत्" इत्यादौ पद्मञ्जर्यादिष्वपि। यत्तु "स्तौतिण्योरेव" इत्यत्रास्य सिपेचयिषत्यादौ सिचेर्हेतुमण्णौ गुणे सनीटि गुणादेशयोरुत्तरखण्डस्यावर्णाभावेऽप्यनया परिभाषया गुणस्य स्थानिवत्त्वेन सिचशब्दस्य द्विरुक्तेर्वचनं तदस्याः परिभाषायाः सामान्यताश्रयणेन स्थानिवत्त्वेऽपि रूपसिद्धौ विशेषो नास्तीत्येतावता न तु सिद्धान्तस्थित्या। कथन्तर्हि "लोपः पिबतेः" इत्यत्र वृत्तावपीप्यदित्यत्र पिबतेर्णौ युक्चङि "लोपः पिबतेरीच्चाभ्यासस्य" इत्युपधालोपे तस्यानया परिभाषया स्थानिवत्त्वमाश्रित्य पायूशब्दस्य द्विरुक्तिरुक्ता, नह्यत्रोत्तरखण्डस्याद्यमचमवर्णं पश्यामः। यद्यपि प्रयोगे न पश्यामः स्थानिवत्त्वेन पायूशब्दे द्विरुक्ते प्रक्रियायामुत्तरखण्डेवर्णं पश्याम इति न दोषः। तस्य च "लोपः पिबतेः" इत्यस्य पुनः प्रवृत्त्या प्रयोगे दर्शनम्। एवमौजढदित्यत्राप्यूढशब्दाण्णिचि टिलोपे तस्य स्थानिवत्त्वे ढत्वादीनामसिद्धत्वे हृतशब्दस्य द्विरुक्तिः, प्रक्रियावाक्ये उत्तरखण्डस्याजवर्णं इति न क्वचिद्दोषः। एवं चौजिढदपीप्यदित्यादिसिद्ध्यर्थमस्याः परिभाषायाः सामान्यत्वमाश्रित्यात्र "लोपः पिबतेः" इत्यत्र वृत्तिकारवचनं "स्तौतिण्योरेव" इत्यत्र न्यासकारवचनं च संवादयन्नचिकीर्तदिति सिद्ध्यर्थमनित्यत्वं चास्या वदन् सीरदेवोऽपि प्रत्युक्तः। प्रकृतमनुसरामः। ( कीर्तिः )। "ऊतियूति" इत्यादिना युजपवादः क्तिन्। कालापास्तु युचमपीच्छन्ति कीर्तनेति। "ऋदुपधाच्चाक्लृपिचृतेः" इत्यत्र तपरकरणादृकारोपधकीर्तयतिव्यावृत्त्यर्थादस्माण्णिचोऽनित्यत्वं ज्ञाप्यते। नित्ये णिच्यनुपधात्वादेव ऋकारस्यात्र क्यब् न भविष्यतीति किं तपरकरणेनैतद्व्यावृत्त्यर्थेन, तेन कीर्ततीत्यादि च भवति।११८॥

वर्ध छेदनपूरणयोः॥ ( वर्धयति, अववर्धत् )॥ ११९॥

कुबि छादने॥ (कुम्बयति। कुम्बति। कुम्बा)। "चिन्तिपूजि" इत्यादिना युचोऽपवादोऽकारः। एवं स्वामिकाश्यपमैत्रेयादयो बशन्तं पठन्ति। अपरे तु भकारान्तं पठन्ति, कुम्भयतीत्यादि॥ १२०॥

लुबि तुबि अदर्शने॥ अर्दनइति मैत्रेयः। ( लुम्बयति। तुम्बयति )। अनयोरिदित्वादेव लुम्बति तुम्बतीति सिद्धेरर्दनेऽर्थे भ्वादौ पाठो व्यर्थः स्यात्। इहादर्शनेऽर्थे स्वर्थभेदात्सोपि सार्थकः॥ १२१-१२२॥

ह्लप व्यक्तायां वाचि॥ ( ह्लापयति )। क्लृपेत्येके। ( क्लापयति )॥ १२३॥

चुटि छेदने॥ ( चुण्टयति। चुण्टति )। अत्र क्वचिन्मृडि तुडीति तृतीयान्तौ पठ्येते तावाद्येषु व्याख्यानेषु न दृश्येते, अतोऽप्रामाणिकः पाठोऽनयोः॥ १२४॥

इल प्रेरणे॥ ( एलयति। ऐलिलत्)। इलतीति तुदादौ॥ १२५॥

म्रक्ष म्लेच्छने॥ म्लेच्छनमपशब्दनम्। "म्लेच्छो हवा एष यदपशब्द" इति श्रुतेः। ( म्रक्षयति )। म्रक्षतीति संघाते शपि। म्लक्ष म्रक्ष अदनइत्यपि क्वचित्पठ्येते॥ १२६॥

म्लेच्छ अव्यक्तायां वाचि॥ इहाव्यक्तवागपशब्दनम्। ( म्लेच्छयति )। म्लेच्छतीति भूवादौ॥ १२७॥

ब्रूस वर्ह हिंसायाम्॥ ब्रूसयति। बर्हयति )। बर्हतीति बृह वृद्धावित्यस्य शपि। बर्हत इति च प्राधान्ये, वृद्धये बर्हयेदिति, भाषार्थोऽग्रे भविष्यति। अत्र गर्ज गर्द शब्दे, गर्ध अभिकाङ्क्षायामिति क्वचित्पठ्यन्ते। ( गर्जयति। गर्दयति। गर्द्धयति )। शप्यपि गतावाद्यौ। गृध्यतीति श्यनि गृधेः॥ १२८-१२९॥

गुर्द पूर्व निकेतने॥ अत्र क्षीरस्वामी। पूर्वनिकेतनमासाद्याभ्यवहारः। पारायणे द्वौ धातू इति। पुरुषकारे तु पूर्वनिकेतनइति पठित्वा तच्च निवासपूर्वकमित्युक्त्वा पूर्वयती-

स्यत्र "उपधायां च" इति दीर्घ उक्तः । (गूर्दयति । पूर्वयति) । पूर्वतिस्तु शपि । गुर्दस्तु कुर्दखुर्द-स्यत्र प्रपञ्चितः । पूर्वयतीति कथादिरित्युक्तं दैवे, तच्च भूवादौ पूर्वतौ दूषितम् ॥१३०-१३१॥

जसि रक्षणे ॥ मोक्षण इति दैवः । ( जंसयति । जंसति ) जस्यतीति श्यनि मोक्षणे । इहैव हिंसायां जासयतीति भविष्यति । तथा ताडनेऽपि ॥ १३२ ॥

ईड स्तुतौ ॥ ईडयति । ऐडिडत् ) ईट्ट इत्यदादौ ॥ १३३ ॥

जसु हिंसायाम् ॥ ( जासयति चोरस्य चोरमिति वा ) । "जासिनिप्रहण" इति कर्मणि शेषे षष्ठी । जासीति निर्देशाच्चोरमजीजसदित्यत्र न षष्ठीति न्यासे । इदमपि दूषितं प्रागेव । क्त्वार्थामिड्विकल्पार्थादूदित्करणादस्य णिजनित्य इति जसतीति भवति । ( जसित्वा । जस्त्वा । जस्तम् ) ॥ १३४ ॥

पिडि संघाते ॥ ( पिण्डयति । पिण्डति ) ॥ १३५ ॥

रुष रोषे ॥ ( रोषयति ) । शपि रोषति । हिंसायां श्यनि रुष्यति । रोषे रुड् इत्येकइति मैत्रेये रक्षितः ॥ १३६ ॥

डिप क्षेपे ॥ ( डेपयति ) । डप डिप संघातइत्याकुस्मीयः । क्षेपे डेपयति; डिपयतीति गतौ ॥ १३७ ॥

ष्टूप समुच्छ्राये । ( ष्टूपयति ) ॥ १३८ ॥

आ कुस्मादात्मनेपदिनः ॥ कुस्मनाम्नो वेति वक्ष्यति । आ एतस्मादात्मनेपदिनोऽकर्त्र-भिप्रायेऽपि । आङभिविधौ, मर्यादायामसन्देहार्थं प्रागित्येव ब्रूयात् ॥

चित सञ्चेतने ॥ सञ्चेतनं संज्ञानम् । ( चेतयते । अचीचितत् । चिन्तयति । चिन्तति ) इति स्मृत्यामिह गतम् । शपि चेतति संज्ञाने ॥ १३९ ॥

दशि दंशने ॥ ( दंशयते ) । आकुस्मीयमात्मनेपदं णिच्सन्नियोगेनेति व्याख्यातारः । तेनेदित्करणसामर्थ्याण्णिजभावे दंशतीति शपि ॥ १४० ॥

दसि दर्शनदंशनयोः ॥ दंशनदर्शनयोरिति प्रायेण दृश्यतइति पुरुषकारे । ( दंसयते, दंसति ) । पूर्ववदणिचि परस्मैपदं, दंसतीति रक्षणे गतमेकीयमतेन । दस्यतीत्युपक्षये श्यनि, दासतइति दाने शपि । ( दासः, दासी ) । "दंसेष्टटनौ न आ च" इति टटनौ नकारस्य चाकारः । टित्त्वात् स्त्रियां ङीप्, टटनोः स्वरे विशेषः । अत्र दसेत्यनिदितमपि केचित्पठन्ति । यदाह, पितेव पुत्रं दसये वचोभिरित्यत्र भट्टभास्करः । दसये संदृक्षामि । दंशनदर्शनयोः चौरादिक उदात्तेत्, व्यत्ययेन वृद्ध्यभाव इति । ( दासीदासम् ) । गवाश्वप्रभृतित्वादेकवद्भाव एकशेषाभावश्च ॥ १४१ ॥

डप डिप संघाते ॥ ( डापयते । डेपयते ) । डेपयतीति क्षेपे गतः ॥ १४२-१४३ ॥

तत्रि कुटुम्बधारणे ॥ ( तन्त्रयते । तन्त्रति । तन्त्रम् ) ॥ चान्द्राः कुटुम्बेति पृथग्धातुं पठित्वा कुटुम्बयतइत्याहुः ॥ १४४ ॥

मत्रि गुप्तभाषणे ॥ ( मन्त्रयते ॥ मन्त्रयति ) ॥ १४५ ॥

स्पश ग्रहसंश्लेषणयोः ॥ (स्पाशयते । अपस्पशत) । "अत्स्मृदृत्वर" इत्यादिनाऽभ्यासस्याकार इत्त्वापवादः । स्पशति । स्पशतइति स्पश बाधनस्पर्शयोरित्यस्य हि भ्वादेः ॥१४६

तर्ज भर्त्स सन्तर्जने ॥ ( तर्जयते । भर्त्सयते ) । तर्जयन्निव केतुभिरिति भौवादिकस्य तर्जयतेर्णिचि ॥ १४७-१४८ ॥

बस्त गन्ध अर्दने ॥ ( बस्तयते, गन्धयते ) ॥ १४९-१५० ॥

विष्क हिंसायाम् ॥ क्वचित्कोशे हिष्केति पठ्यते । ( हिष्कयते ) ॥ १५१ ॥

निष्क परिमाणे ॥ ( निष्कयते । निष्कः ) अच् । निष्केण क्रीतं ( नैष्किकम् ) "असमासे निष्कादिभ्य" इति क्रीताद्यर्थे ठक्, द्वाभ्यां निष्काभ्यां क्रीतम्, (द्विनैष्किकः द्विनिष्कम्) "द्वित्रिपूर्वान्निष्कात्" इति पक्षे प्राग्वतीयस्य ठको लुक् । एवं त्रिपूर्वस्यापि । "परिमाणा-

न्तस्य" इत्युत्तरपदवृद्धिर्लुगभावे ॥ १९२ ॥

लल ईप्सायाम् ॥ ( लालयते । अलीललत् )। कुं लालयतइति ( कुलालः )। कर्मण्यण् । कुलालेन कृता ( कौलालिका )। "कुलालादिभ्यो वुञ्" इति वुञ् ॥ १९३ ॥

कूण सङ्कोचने ॥ ( कूणयते । कूणिः )। अन्ये तु कुणितिह्रस्वोपधं पठन्ति । वयन्तु कूणितादिदर्शनान्मैत्रेयाद्युक्तं दीर्घोपधत्वमेव बहुमन्यामहे । ह्रस्वोपधस्तु कथादौ भविष्यति । शब्दोपकरणयोः कुणतीति शे ॥ १९४ ॥

तूण पूरणे ॥ ( तूणयते । तूणः । तूणीरः )। बाहुलकादीरन् ॥ १९५ ॥

भ्रूण आशायाम् ॥ ( भ्रूणयते । भ्रूणः ) ॥ १९६ ॥

शठ श्लाघायाम् ॥ ( शाठयते ) ॥ १९७ ॥

यक्ष पूजायाम् ॥ ( यक्षयते ) ॥ १९८ ॥

स्यम वितर्के ॥ ( स्यामयते )। स्यमतीति शब्दार्थः शपि ॥ १९९ ॥

गूर उद्यमने ॥ ( गूरयते )। क्वचिदयं लघूपध ईदिच्चेह पठ्यते । तदात्रेयमैत्रेयविरोधादुपेक्ष्यम् । चुरादौ दीर्घोपध इति भिदादावात्रेयः, दिवादौ च तेनायमर्थः स्फोरितः । मैत्रेयस्तु चुरादौ दीर्घोपधमनीदितं पठित्वा गूरयतइत्येवोदाजहार । तथा च दैवपुरुषकारयोरयमनीदिद्दीर्घोपधः ॥ १६० ॥

शम लक्ष आलोचने ॥ ( शामयते । लक्षयते, ) दर्शनाङ्कनयोर्लक्षयति, लक्षयते इति गतम् ॥ १६१–१६२ ॥

कुत्स अवक्षेपणे ॥ ( कुत्सयते )। कुत्सेति णिदि कुत्सायामिति निर्देशादङि ॥ १६३ ॥

त्रुट छेदने ॥ ( त्रोटयते )। अयं तुदादौ च । कुटेत्येकइति स्वामी ॥ १६४ ॥

गल श्रवणे ॥ ( गालयते )। गलतीति शपि ॥ १६५ ॥

भल आभण्डने ॥ ( भालयते ) ॥ १६६ ॥

कूट आप्रदाने ॥ अवसादनइत्येके । (कूटयते)। अत्र पुरुषकारे कुट प्रतापनइत्यप्येकइति । मैत्रेयरक्षितयोः स एव तु पाठः प्रायेण दृश्यते । तदा कोटयते ॥ १६७ ॥

कुट्ट प्रतापने ॥ ( कुट्टयते ) इति क्षीरस्वामी । अयं कथादावपि । कुट्टतीति शे ॥ १६८ ॥

वञ्चु प्रलम्भने ॥ ( वञ्चयते )। क्त्वायामिड्विकल्पार्थं णिजस्यानित्य इति वञ्चतीत्यपि भवति । ( वञ्चित्वा । वचित्वा । वक्त्वा, ) "वञ्चिलुञ्च्यृतश्च" इति सेटः क्त्वः कित्त्वविकल्पनात्पक्षे नलोपः । इडभावे तु नित्यम् । अत्र सूत्रे वञ्चु गताविति भौवादिकस्य चास्य ग्रहणमाह हरदत्तः । तत्र च तेन चौरादिक ऊदित्पठितः, तन्मते वलाद्यार्धधातुकमात्रे इड्विकल्पेन भाव्यं, पाठद्वयेऽपि निष्ठायां वक्तव्यं, "गृधिवञ्च्योः प्रलम्भने" इत्यत्र भौवादिकस्यैव ग्रहो नास्यः । आकुस्मीयत्वादेवाकर्त्रभिप्रायेऽपि तङः सिद्धत्वात् । पूर्वोत्तरयोगसाहचर्याद्गृधिसाहचर्याच्च कारितण्यन्तस्यैव वञ्चेस्तत्र ग्रहणस्य युक्तत्वाच्च, अत एव तत्र वृत्तौ वञ्चु गताविति भौवादिक एवोपात्तः । यद्यप्ययं कारितण्यन्तस्तदापि प्रलम्भनार्थो न तु प्रलम्भनमिति नास्य तत्र ग्रहणप्रसङ्गः । आकुस्मीयनिबन्धनत्वं तत्र स्वार्थण्यन्तस्येति प्रागेवोक्तमिति स्वार्थण्यन्तादस्मात्कारितणौ वञ्चयति वञ्चयतइत्युभयं भवति । अत्र सुधाकरः ।

> इन्द्रनीलदृषदः प्रथीयसीराश्रिताः कथममी जिघांसतः ।
> उन्नतश्रवणबालनिस्वनाद्वञ्चयन्ति शरभान् करेणवः ॥

इति प्रयोगस्य चौरादिकोऽप्यात्मनेपदीत्युक्त्वा वञ्चयन्ति अन्यपथं गमयन्तीति प्रतीतेः प्रलम्भनाभावान्न तङिति निर्वाहात्कारितण्यन्तादस्मादपि "गृधिवञ्च्योः" इति तङ भाव्यमिति न मन्तव्यम् । यतः कारितण्यन्तस्यात्र प्रयोज्यान्तराभावादर्थो न सङ्गच्छते । स्वार्थण्यन्तस्याकुस्मीयत्वात्तङा भाव्यमित्येव तस्याभिप्रायः । ( वनीवच्यते )। "नीग्वञ्चु" इत्यादिना नीगभ्यासस्य ॥ १६९ ॥

वृष शक्तिबन्धने ॥ शक्तिबन्धनं प्रजननसामर्थ्यमिति केशवस्वामी । शक्तिसम्बन्ध इति मैत्रेयः। (वर्षयते)। वर्षतीति वृष सेचन इत्यस्य शपि, वर्षतइति वर्ष स्नेहनइत्यस्य॥१७०॥

मद तृप्तियोगे ॥ एवं मैत्रेयादयः । अन्ये तृप्तिशोधनइति पठन्ति । यदाह क्षीरस्वामी तृप्तिशोधने तर्पणशुद्धाविति। (मादयते)। हर्षे माद्यतीति श्यनि । इदितस्तुत्यादौ शपि मन्दते ॥ १७१ ॥

दिवु परिकूजने ॥ (देवयते । परिदेवकः) "देविकुशोश्चोपसर्गे" इति ताच्छीलिको वुञ्। अत्र दिव्यतेर्ण्यन्तस्यास्य ग्रह इति हरदत्तः। सम्प्रदायो नानयोः। यदाह वृत्तिकारः। परिदेविर्भ्वादिर्गृह्यतइति। अत्र हरदत्तः। क्रीडाद्यर्थस्य हेतुमण्ण्यन्तस्य दिवु परिकूजनइत्यस्य चुरादिण्यन्तस्य ग्रहणं न भवति लाक्षणिकत्वादण्यन्तैः साहचर्याच्चेति । अत्र मैत्रेयः वञ्चुप्रभृतिमुक्तिं पठति, स एवायं धातुरर्थान्तरे चुरादिरित्येतं बोधनार्थमिति, तन्मत ऊदित्वं प्रत्यभिज्ञानार्थत्वात् णिचो विकल्पाय न प्रकल्पते, प्रत्यभिज्ञामात्रएव फलेऽनुदित एव पठ्येरन् ॥ १७२ ॥

गॄ विज्ञाने ॥ (गारयते) ॥ गिरतीति निगरणार्थस्य शे। गृणातीति शब्दार्थस्य श्नि। गरतीति ह्रस्वान्तस्य सेवनार्थस्य शपि ॥ १७३ ॥

विद चेतनाख्याननिवासेषु ॥ विदु चेतनइत्येके । विद चेतनाख्यानपरिवादेष्वित्यपरे । (वेदयते) ॥

सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे ॥
विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेषु च क्रमात् ॥ १७४ ॥

मन स्तम्भे ॥ (मानयते) मन्यते ज्ञाने। अवबोधने मनुते ॥ १७५ ॥

यु जुगुप्सायाम् ॥ (यावयते)। युनाति च युनीते च बन्धने, यौतीति मिश्रणे ॥१७६॥

कुस्मनाम्नो वा ॥ कुस्ममिति दृष्टं 'कुस्मयतिरकारितमिति' कोर्नित्यसमासत्वादुपसर्गस्य च बाह्यत्वात् कारितमेव । कुत्सितस्मयनेऽस्य वृत्तिरिति मैत्रेयदुर्गादयः। (कुस्मयते)। नाम्नो वेत्यस्यायमर्थः। यद्वा कुस्मप्रातिपदिकात् तत्करोतीति णिचि कुस्मयतइति भविष्यति, कुस्मधातोरेवाभावात् कुतो नामायमनूद्यतेत्याह । कुस्ममिति दृष्टमिति । कुशब्दपूर्वात्स्मयतेः "अन्येष्वपि दृश्यत" इति डप्रत्यये "कुगतिप्रादयः" इति समासे समासत्वान्नाम प्रातिपदिकमिति लक्षणेन निर्णीतमित्यर्थः। ननु किमनेन प्रातिपदिकात्कारितात्, यतः कुपूर्वात्स्मयतेः कुस्मयतइति सिद्धमित्याह । कुस्मयतिरकारितमिति चेत्। कोर्नित्यसमासत्वादुपसर्गस्य च बाह्यत्वात् कारितमेवेति । कुपूर्वःस्मयतिरेव कुस्मयतइत्यत्र भविष्यति प्रकृतिः, तेनाकारितं कारिताभावोऽस्त्विति चेत्तन्न । कोऽत्र नित्यसमासत्वात्, यदि तिङन्तेन कोरन्वयः स्यात्, "कुगतिप्रादयः" इत्यत्राप्यतिङिति सम्बन्धात् समासो न स्यात्, ततश्च वाक्यत्वादेकपद्यं न स्यात्, पूर्वप्रयोगवत्परप्रयोगश्च स्यात्, तथा तदुपसर्गस्य बाह्यत्वात् प्रकुस्मयतइति स्मयतेः प्राक् प्रयोगः स्यात्, क्रियमाणे च कुस्मनाम्नइति कुशब्दादप्युपसर्गस्य बाह्यत्वस्येष्यमाणत्वात् न तिङन्तेन कोरन्वयः । यदि हि स्यात् "ते प्राग्धातोः" इति कुप्रस्मयतइति स्मयतेः प्राक् प्रयोगः स्यात्। क्रियमाणे च 'कुस्मनाम्नो वा' इत्यस्मिन्नेतत्करणसामार्थ्यान्न कुपदस्य स्मयतेर्नापि व्यवहितस्य प्रयोगः। उपसर्गस्य चेति चकारेणान्येऽपि दोषाः सूच्यन्ते, तत्र तावत्कुस्मयांचक्रुरिति आम् न स्यात्। चुकुस्मयिषतीत्यत्र कोर्द्वित्वं न स्यात्। अचुकुस्मयत इत्यत्र चङ् न स्यात्, अट् च कोःपरः स्यात्। कुस्मनेति युज् न स्यात्। कुस्मितिरिति च स्यात्, कुस्मयितेत्यादाविड् न स्यात्। कुस्मयित्वेत्यत्र ल्यप् स्यात्, क्विपि च णिसंयोगान्तलोपयोः सकारस्य च रुत्वे "र्वोः" इति दीर्घे कूरिति सिध्यति। तथा ण्वुलि णिलोपे कुस्मक इति सिद्धयति, अन्यदा कुस्मायक इति स्यात्। किं च कुस्मतीति न स्यात्, कुस्मायतइत्यादौ क्यङादयोऽपि न स्युः। एषां प्रातिपदिका-

दाचारे विधानादतो धात्वन्तरं प्रातिपदिकं वाऽश्रयणीयमिति। निगमयति। कारितमेवेति। ननु धातुपक्षे कथमाचारे क्विबादयः स्युः, सत्यम्। कारितान्ताद् णिचि णिज्लोपः, कुस्मप्रातिपदिकात् क्विबादयो भविष्यन्तीति न दोषः॥ १७७॥

चर्च अध्ययने॥ ( चर्चयति )। चर्चतीति हिंसादौ गतम्। ( चर्चा )। "चिन्तिपूजि" इत्यादिना युचोऽपवादोऽङ्। चिन्त्यादयः सर्वे चौरादिका गृह्यन्ते॥ १७८॥

बुक्क भाषणे॥ ( बुक्कयति )। बुक्कतीति शपि। अत्र स्वामी। शब्द उपसर्गादाविष्कारे चेति पठित्वोपसर्गपूर्वाच्छब्द इत्यस्मादाविष्कारे चकाराद्भाषणे च णिचमुक्त्वा प्रतिशब्दयतीत्युदाहृत्य प्रतिश्रुतमाविष्करोतीत्यर्थ इत्याह। पुनश्चानुपसर्गाच्चेति पठित्वा आविष्कारे शब्दयतीत्याह। मैत्रेयस्तु द्वावेवात्राऽपठत्। शब्द शब्दक्रियायामिति पठित्वा शब्दयतीत्याह। अत्र पाठे प्रातिपदिकाद्धात्वर्थइति णौ प्रतिशब्दयति शब्दयतीति वाविष्कारे सिद्धं, स्वामिपाठे तु शब्दकरणे शब्दयतीति न सिद्ध्यति, "शब्दवैर" इति क्यङा "तत्करोति" इति णिचो बाधात्। तस्मान्मैत्रेयपाठो ज्यायान्। येषां तु क्यङा न णिचो बाधस्तेषां न विशेषः। शब्दतीति शपि॥ १७९॥

कण निमीलने॥ ( काणयति। अचीकणत्। अचकाणत् )। "काण्यादीनां वा" इति ह्रस्वविकल्पो णौ चङ्युपधायाः। ( काणः )। स्वभावादयमेकनेत्रनिमीलनवचनः। कणतीति शब्दे॥ १८०॥

जभि नाशने॥ ( जम्भयति )। इदित्त्वाज्जम्भति। चन्द्रस्तु जम्भेति पठित्वा जम्भयतीत्युदाजहार। "रधिजभोरचि" इति नुमं मन्यते। अत्र मते नाशने न जम्भतीत्यस्ति। अयं चानिदित्पाठो न्यासकारहरदत्तादीनामनभिमतः। अन्यथा "रधिजभोरचि" इत्यत्र जभजृम्भीतिवदमुमप्युपाददीरन्। जम्भतइति शपि जृम्भणे॥ १८१॥

षूद क्षरणे॥ केचिदाश्रवण इति पठन्ति। ( सूदयति। असूषुदत् )। सूदत इति शपि॥ १८२॥

जसु ताडने॥ ( जासयति चोरस्य )। "जासिनिप्रहण" इति कर्मणि शेषे षष्ठी। हिंसायां पठितस्यास्य पुनः पाठोऽर्थभेदात्। नहि ताडनं हिंसा, तज्जन्यत्वात्तस्याः। उदित्वादस्यापि णिज्विकल्पितः। तेन जसतीति भवति॥ १८३॥

पश बन्धने॥ ( पाशयति )॥ १८४॥

अम रोगे॥ (चोरस्य आमयति। आमयतः) "रुजार्थानाम्" इति कर्मणि शेषे षष्ठी। "नान्ये मितोऽहेतौ" इति मित्त्वनिषेधः। ( आमः )। घञि अचि वा णिलोपः। (आमयः। ( आमक ) इति॥ १८५॥

चट स्फुट भेदने॥ ( चाटयति )। ( स्फोटयति )। विकाशे स्फोटते इति शपि। स्फुटतीति शे॥ १८६-१८७॥

घट संघाते॥ ( घाटयति ) घट चेष्टायामित्यस्य घटते घटयते घण्टयतीत्यग्रे भाषार्थे भविष्यति॥ १८८॥

हन्त्यर्थाश्च॥ नवगणग्रामुक्ता अपि हन्त्यर्थाः स्वार्थे णिचं लभन्तइत्यर्थः। ( घातयति ) "हनस्त" इति तः॥

दिवु मर्दने॥ ( देवयति)। उदित्त्वाद्देवतीत्यपि॥ १८९॥

अर्ज प्रतियत्ने॥ ( अर्जयति )। द्रव्यमर्जयतीत्यादिप्रयोगदर्शनाद्यमर्थान्तरेऽपि॥ १९०॥

घुषिर् विशब्दने॥ विशब्दनं प्रतिज्ञा। "घुषिरविशब्दने" इति सूत्रेऽविशब्दनइति निषेधाल्लिङ्गादनित्योऽस्य णिच्। "घुषिरविशब्दने" इत्यनेनाविशब्दने निष्ठाया इण्णिषिध्यते। शब्दार्थादेतस्मादनन्तरा निष्ठा नेति किं प्रतिषेधेन। इदञ्च घोषतावित्युक्तम्। मन्दबुद्ध्यनुग्रहायेह स्मारितम्। एवं चेरित्त्वमघुषदघोषीदित्यत्र पक्षेऽडर्थंस्त्वेनावयवे चरितार्थमिति( अजू-

घुपद् ) इत्यत्र "णिश्री" इति चङ् न बाध्यते । (घोपयति । घोषति) । अवघुषितमिति, इट्-प्रतिषेधो भौवादिकस्येत्युक्तम् ॥ १९१ ॥

आङः क्रन्द सातत्ये ॥ अत्र काश्यपमैत्रेयौ, आङः परः क्रन्दः सातत्ये णिचमुत्पादयतीति । इदञ्च सातत्यं कुस्मयतेरनन्तरं मैत्रेयेणागगान्तात् धातूननूद्य पुनर्द्वितीयं परस्मैपदप्रकरण-मधुनोच्यतइत्युक्तत्वादयमपि भौवादिकस्यानुवाद इति । तच्च क्रन्देर्योऽर्थ आह्वानादिस्तद-पेक्षमिति बोद्धव्यम् । ( आक्रन्दयति ) । आक्रन्दतीत्याह्वानादौ शपि गतम् । वैक्लव्ये घ-टादौ । स्वामी तु आङ्पूर्वो धुषिः क्रन्द सातत्ये चुरादिः, आघोषयतीत्युक्त्वा मैत्रेयाद्युक्तम-परमाहुरित्याह ॥ १९२ ॥

लस शिल्पयोगे ॥ अत्र स्वामी शिल्पोपयोगइति पठित्वा केचिन्मूर्धन्यान्तं पठन्ती-त्याह । ( लासयति ) श्लेषणक्रीडनयोर्लसतीति शपि ॥ १९३ ॥

तसि भूप अलङ्कारे ॥ ( अवतंसयति । भूषयति ) । भूषतीति शपि । तसेरिदित्त्वाणिचो विकल्पे (वतंसति) । 'वष्टि भागुरिरल्लोपम्' इत्यल्लोपः । दौर्गास्तु शप्यपि पेठुः, तसि भूप अलङ्कारइति । पुरुषकारे तूक्तमुभयत्रापि भूषैवेत्येव बहव इति ॥ १९४ ॥

मोक्ष असने ॥ ( मोक्षयति शरान् ) ॥ १९५ ॥

अर्ह पूजायाम् ॥ (अर्हयति अर्हान् ) ॥ १९६ ॥

ज्ञा नियोगे ॥ अत्र नियोगः प्रेरणम् । स्वभावादयमाङ्पूर्वः । (आज्ञापयति) । मारणादौ ज्ञपयतीति गतम् । बोधने तु ज्ञपयति विज्ञापयतीत्युभयम् । इदं च घटादौ "ज्ञ मिच" इत्यत्र चोपपादितम् । दिन जानातीति ॥ १९७ ॥

भज विश्राणने । ( भाजयति ) । भाज पृथक्कर्मणीति वक्ष्यमाणस्य भाजयति । भज-यतीति भाषार्थेऽग्रे । भजति, भजतइति शपि सेवायाम्, भनक्तीत्यामर्दने श्नमि ॥ १९८ ॥

श्रधु प्रसहने ॥ ( शर्धयति । अशशर्धत् । अशीशृधत् ) । उदित्त्वाच्छर्धतीत्यत्रापि भव-ति । ( श्रधित्वा । श्रद्धा ) । शर्धत इति शपि, शब्दकुत्सायां तुदादिः, उन्दने हि शपि शर्ध-तीति च ॥ १९९ ॥

यत निकारोपस्कारयोरिति मैत्रेयः ॥ क्रियानिघण्टौ तु 'यत्ने प्रैषे निराकारे पातयेद्प्युप-स्कृतौ' इति । क्षीरस्वामी तु निराकारोपसंस्कारयोरिति तु पाठो दृश्यते, निराकारः परिभव इति चाह । (यातयति) । निसश्च धान्यधनयोः प्रतिस्तदर्थत्वे सतीत्यर्थद्वयमाह । एवं च भुवो विकल्कनइति पाठस्य संवादत्वेनोक्तमत्रकल्पयतीति धनशालोदाहरणं भुवोऽवकल्कनइति पा-ठेऽप्युपपद्यते ॥ २०० ॥

रक लग आस्वादने ॥ ( राकयति । लागयति ) । रघ लग इत्येकइति मैत्रेयः । ( राघ-यति । लागयति ) अपरे त्वाद्यमपि रगेति तृतीयान्तं पठन्ति । ( रागयति ) । लगयतीति शङ्कायां संगे च घटादिः ॥ २०१-२०२ ॥

अञ्चु विशेषणे ॥ विशेषणं व्यावर्तनम् । उदित्त्वाद्विभाषितो णिच् । ( अञ्चयति । अ-ञ्चति ) । गतिपूजनयोरञ्चतीति भ्वादौ, गतियाचनयोरञ्चतइत्यपि ॥ २०३ ॥

लिगि चित्रीकरणे ॥ ( लिङ्गयति । लिङ्गति ) । गतौ च शपि लिङ्गति ॥ २०४ ॥

मुद संसर्गे ॥ ( मोदयति सक्तून् घृतेन ) । मोदते शपि हर्षणे ॥ २०५ ॥

त्रस धारणे ॥ ग्रहण इति नन्दी । अत्र धारणं वारणमिति मैत्रेयः । वारण इत्येव शाक-टायनः । ( त्रासयति मृगान् ) । त्रंसयतीति भाषणे भविष्यति । त्रस्यति त्रसतीति दिवा-दावुद्वेगे ॥ २०६ ॥

उध्रस उञ्छे ॥ क्रैयादिकस्योकार इत् । अस्य तु धातोरवयव इति काश्यपादिः । मैत्रे-यस्तु पूर्व एवायं धातुरिह पठ्यते, तेनायमुदिदिति । अन्ये तूभयत्रापि धात्ववयव उकार इति । ध्रासयतीति मैत्रेयमते । अन्येषामुध्रासयतीति ॥ २०७ ॥

मुच प्रमोचने मोदने च ॥ ( ऋणं निर्मोचयति )। प्रतिददातीत्यर्थः। मुञ्चतीति कल्कने शपि, शे तु मुञ्चतीति मोक्षणे ॥ २०८ ॥

वस स्नेहनच्छेदापहरणेषु ॥ छेदोपहरणयोरित्येके। ( वासयति )। अयं निवासे कथादिर्मूर्वादिश्च, वस्त इत्याच्छादने। वस्यतीति स्तम्भने। वास उपसेवायामिति दीर्घोपधश्च कथादौ ॥ २०९ ॥

चर संशये ॥ ( चारयति ) चरतीति गतौ शपि ॥ २१० ॥

च्यु हसने ॥ सहने चेत्येके, ( च्यावयति )। च्यवते इति गतौ शपि, च्युसेत्येक इति स्वामी। च्योसयति ॥ २११ ॥

भुवो ऽवकल्कने ॥ अवकल्कनं मिश्रीकरणमिति (१)स्वामी। पुरुषकारे अवकल्कनं चिन्तनमिति काश्यपः। क्वचित्स्वामिग्रन्थे ऽनुकल्कनमिति पठित्वा ऽनुकल्कनं मिश्रीकरणमिति दृश्यते, नन्दी तु भुवो विकल्कन इति, विकल्कनं विपाचनम्। तथा च प्रयुज्यते। तपोभावितमात्मानमिति, अवकल्कन इत्यपरे। तथा च धनपालः, कृपेस्तादर्थ्यइति पठित्वा ऽवकल्पयतीत्युदाजहार। तादर्थ्ये इति भुव इति पूर्वधातोर्योऽर्थस्तदर्थत्वे सतीत्यर्थः। (भावयति)। भावयत इति प्राप्तौ युजादिः भवतीति शपि ॥ २१२ ॥

क्लृपेश्च ॥ ( कल्पयति )। सामर्थ्ये शपि कल्पते। क्षीरस्वामी तु कृपेस्तादर्थ्ये इति पठित्वा तादर्थ्ये प्रस्तुतस्य भुवोऽर्थे मिश्रीकरणे। अथ वा तच्छब्देन कृपिः परामृश्यते, तस्य योऽर्थः सामर्थ्यलक्षणः ॥ २१३ ॥

आ स्वदः सकर्मकात् ॥ अत्रान्ये स्वाद इति दीर्घोपधं पठन्तो वक्ष्यमाणं स्वद आस्वादने इति धातुमपि दीर्घोपधं पठन्ति। आ कुस्मादितिवदभिविधावयमाकारः। तेन ग्रसिप्रभृतीभ्यः ष्वद आस्वादनइति वक्ष्यमाणपर्यन्तेभ्यः सकर्मकेभ्य एव णिज् भवति। इदं च सकर्मकत्ववचनं कर्मसापेक्षक्रियामात्रवाचित्वेनाप्रयुज्यमानेऽपि कर्मण्ययं विधिर्भवति। अत एव हि मैत्रेयः। सम्भविकर्मकाण्णिजित्याह। उक्तं च पुरुषकारे सम्भविकर्मकत्वकथनेन सत्यसति वा कर्मणः प्रयोगे तत्सम्भवमात्रेण णिज् भवतीत्युक्तं भवति। कर्मसम्भवः पुनरनेकार्थत्वेनार्थान्तरवाचितायां यथा प्रयोगं द्रष्टव्य इति च। कर्मकर्तृविषयेऽप्यर्थान्तरवृत्तित्वं समानमिति न तस्येह पृथग्विषयत्वेनेहोपादानम्। अत्र केचित्पञ्चमीप्रकरणाभ्यां सन्निहितेन णिचा ऽर्थप्राप्तमेवकारं सम्बन्धयन्तः सकर्मकाण्णिजेव भवति अकर्मकात्तु यथायोगमित्याहुः। तदसत्। एवकारस्य सकर्मकादितिश्रुतेनान्वयलाभे ऽश्रुतेनान्वयायोगात्। अनेन खल्वभिप्रायेण मैत्रेयादयः सकर्मकादेवेत्येवं व्याख्यन्। अत्र मतान्तरमप्याह मैत्रेयः। आ स्वाद एव सकर्मकादित्येक इति। तथा च क्षीरस्वामी। आङ्पूर्वात्स्वदेः सकर्मकाण्णिज् भवतीति। अयं पक्षः पुरुषकारे दूषितः। तत्र चाभिविधिपक्ष एव युक्तः प्रत्यवभासते। इहाप्याङः पूर्वापरेष्विवाभिविध्यर्थताया एवौचित्यादाकुस्मादिति हि पूर्वत्राभिविधावाङ् दृष्टः, "आ धृषाद्वा" इत्यागर्वादिति च समनन्तरमेवैवं द्रक्ष्यते, तत्रायमपि तन्मध्यपातीतच्छायश्चाङ् तदर्थ एव व्यक्तमवभासते ॥ तदत्र पक्षान्तरं व्याचक्षाणानामाशयश्चिन्त्य इति ॥

ग्रस ग्रहणे ॥ ( ग्रासयति फलम् )। ग्रसत इत्यदने शपि ॥ २१४ ॥

पुष धारणे ॥ ( पोषयति ) आभरणम्। पोषति, पुष्यति, पुष्णाति, इति शप्श्यन्श्नासु पुष्टौ ॥ २१५ ॥

दल विदारणे ॥ ( दालयति )। दलतीति विशरणे घटादौ ॥ २१६ ॥

पट पुट लुट तुजि मिजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दशि कुशि घट घटि बृहि बर्ह बल्ह गुप धूप विच्छ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः ॥ मैत्रेया-

(१) क्षीरेत्यधिकं पुस्तकान्तरे।

नुरोधेनायं पाठो दण्डकस्य । भासार्था इत्येक इति मैत्रेयः । तथा च क्षीरस्वामी । भासादिरिसर्थौ येषान्ते भासार्था इति । ( पाटयति ) । पटयतीति कथादौ ग्रन्थे । पटतीति गतौ शपि । (पोटयति) । पुटयतीति संसर्गे कथादौ । संसर्गे पुटतीति शे । (लोटयति) । शप्श्यनोर्लोटति लुट्यतीति लोटने । लोटत इति युजादौ प्रतिघाते, लुण्टतीति लुटि स्तेये शपि । लुण्टयतीतीहैव गतः । ( तुञ्जयति ) । इदित्वात्तुञ्जतीति । हिंसायामिदितोऽनिदितश्च तुजति तोजतीति शपि । ( मिञ्जयति । मिञ्जति ) । ( पिञ्जयति । पिञ्जति ) । अदादौ वर्णे पिङ्क्ते । ( लुञ्जयति । भञ्जयति ) । भजतीति भज सेवायां शपि । भनक्तीत्यामर्दने श्नमि, भाजयतीति विश्राणने गतः । पृथक्कर्मणि च भविष्यति । ( लङ्घयति ) । लङ्घति, शोषणे शपि लङ्घति, गत्यान्तु लङ्घते । (त्रंसयति । त्रंसति) । त्रासयतीति धारणे गतम् । त्रस्यति त्रसतीति उद्वेगे वा श्यनि । ( पिंसयति । पिंसति ) । पेसयतीति गतौ गतम् । पेसतीति तु शपि । ( कुंसयति । कुंसति । भ्रुकुंसः ) । स्त्रीवेशधारित्वाद् भ्रुवा कुंसयति पुरुषत्वमिति भ्रुकुंसः । ( दंशयति । दंशति ) । दशतीति दंशने शपि । ( कुंशयति । कुंशति ) । ( घाटयति, ) अयं सङ्घातेऽपि, अतः पुनः पाठो ऽर्थभेदादिति मैत्रेयः । घटत इति घटादौ चेष्टायाम् । ( घण्टयति घण्टति । घण्टा ) । ( बृंहयति । बृंहति ) । बर्हतीत्यनिदितो बृंहेः शपि वृद्धौ, इदितस्तु बृंहतीति शब्दे च । ( बर्हयति, बल्हयति ) । बर्हते बल्हत इति प्राधान्ये शपि । ( गोपयति । धूपयति ) । सन्तापे शपि, रक्षणसन्तापयोः ( गोपायति । धूपायति ) इति, गुप्यतीति व्याकुलत्वे श्यनि, सन्तापे धुपतीति शे, ( विच्छयति ) । विच्छाययतीति शे गतौ । ( चीवयति । पोथयति ) । हिंसायां पुथ्यतीति श्यनि । पुन्थतीति शपि संक्लेशे । ( लोकयति । अलुलोकत् । लोचयति । अलुलोचत्, ) ऋदित्वान्नाग्लोपीतिह्रस्वनिषेधः । लोचते । लोकते इति दर्शने शपि । ( नादयति ) । नदतीति शपि शब्दे । ( कोपयति ) । कुप्यतीति कोपे श्यनि । ( तर्कयति ) । ऊहेऽप्ययमभिधीयत इति मैत्रेयः । ( वर्तयति । वर्धयति ) । उदित्वाद्वर्तति वर्धतीति च, वर्तते वर्धते इति वर्तनवृद्ध्योः शपि । वृत्यत इति विचारणे श्यनि ॥ २४७ ॥

रुठ लजि अजि दसि भृशि रुशि रुसि शीक नट पुटि जुचि रघि अहि रहि महिइत्येते पञ्चदश स्वामिकाश्यपानुसारेण लिख्यन्ते ॥ ( रोठयति, ) स्तेये शपि रुण्ठति । प्रतिघाते द्युतादौ रोठते । (लञ्जयति । लञ्जति) । लजति । लञ्जति भर्जने शपि, लाजति लाञ्जति भर्त्सने शपि, लजते इति व्रीडे तुदादौ, प्राकाशे लञ्जयतीति कथादौ । (अञ्जयति । अञ्जति) । अनक्तीति श्नमि व्यक्त्यादौ । (दंसयति । दंसति । भृंशयति । भृंशति,) भ्रशंति भृश्यतीति शप्श्यनोरधः पतने । (रुंशयति । रुंशति । रुंसयति । रुंसति, शीकयति । शीकति) । शीकत इति सेचने शपि, ( नाटयति ) । अयमवस्यन्दने गतः । नटतीति नृत्तौ घटादिः ( पुण्टयति ) । परिवर्तने शपि पोटते । (जुञ्चयति । जुञ्चति । रंघयति) । रङ्घति, गतौ शपि च रङ्घति । (अंहयति । अंहति) । अंहत इति गतौ शपि । ( रंहयति । रंहति ) । रहयतीति त्यागे कथादौ भविष्यति । मित्प्रकरणे च गतः, रंहति रहतीति गतित्यागयोः शपि, ( मंहयति मंहति ) । महयतीति कथादौ पूजायाम्, महतीति शपि । मंहत इति वृद्धौ । महीयत इति कण्ड्वादौ ॥ भसिपिसिलडित्रहितुडिनडीत्यन्ये पठन्तीति स्वामी । तत्राद्यौ बृहिश्च मैत्रेयानुरोधेनास्माभिर्दण्डके पठिताः । ( लण्डयति । लण्डति ) । लाडयतीत्युपसेवायां गतम् । विलासे लडतीति शपि । ( तोडयति ) । तोडति तुण्डत इति शपि तोडने तुडतीति शे । (नाडयति) । नडतीति गतौ शपि ॥ २६२ ॥

पूरी आप्यायने ॥ ( पूरयति ) । ईदित्वान्निष्ठायामनिडर्थादस्यापि णिज्विकल्पितः । तेन पूरयति । पूर्यते इति श्यनि ॥ २६३ ॥

रुज हिंसायाम् ॥ ( रोजयति ) । रुजतीति शे भङ्गे ॥ २६४ ॥

स्वद आस्वादने ॥ स्वाद इत्येके। संवरण इति क्षीरस्वामिधनपालशाकटायनाः। ( स्वादयति । असिष्वदत् ) । "सः स्विदि" इति सत्वं ण्यन्तात्सनि । स्वादते स्वदते इति शपि । आस्वदीयाः ।। २६६ ।।

आ धृषाद्वा ।। धृष प्रसहन इति वक्ष्यमाणसहिता विभाषितणिचो वेदितव्याः । आकुस्मादितिवदभिविधावाङ् ॥

युज पृच संयमने ।। ( योजयति । पर्चयति ) । अन्यत्र योजति । ( पर्चति, योक्ता, अयौक्षीत् ) त्यजियुजिरुजीत्यनिट्कारिकापाठादनिट्कः । (पर्चिता । अपर्चीत् ) । युनक्ति युङ्क्ते योगार्थे श्नमि, श्यनि युज्यत इति समाधौ, पृणक्ति सम्पर्के श्नमि, पृक्ते इति लुकि ।।२६७॥

अर्च पूजायाम् ।। ( अर्चयति ) । अर्चतीति भौवादिकेन स्वरितेता ऽर्चिनैव सिद्धे णिज्विकल्पनं कर्तृगामिफले अर्चतीति यथा स्यादिति । शाकटायनस्त्वयमात्मनेपद्गीति तन्मते णिज्विकल्पस्य फलमकर्त्रभिप्रायेऽपि तङ्सिद्धिरिति बोद्धव्यम् ॥ २६८ ॥

षह मर्षणे ।। ( साहयति ) । सहति सहत इति शप्यनुदात्तेत् । अस्येह पाठो वृत्तिकारादीनामनभिमत इति दिवादावेवावोचाम ।। २६९ ।।

ईर क्षेपे ।। ( ईरयति, ईरति, ) लुकीर्ते गतिकम्पनयोः ।। २७० ।।

ली द्रवीकरणे ।। ( लाययति । लयति । लेता ) । श्विडीङिवर्णेष्वथशीङ्श्रिञावपीत्येते एवेवर्णान्तेषु सेट इति नियमान्नेट् । "विभाषा लीयतेः" इत्यात्त्वविकल्पमस्यापीच्छन्मैत्रेयो "लीलोर्नुग्लुकौ" इत्यात्त्वपक्षे लुको विकल्पनाल्लुकं चोदाजहार, अनात्त्वे तु लुक्, तदभावे वृद्ध्यायौ च । तदयुक्तम् । आत्त्वे लीनातिलीयत्योर्यका निर्देश इति भाष्ये उक्तत्वादस्यात्त्वाभावात् । पुरुषकारेऽप्युक्तं देवेनास्यात्त्वे लुगादि प्रदर्शनं मैत्रेयविस्रम्भादयुक्तंचेदं भाष्यविरोधित्वादिति । श्लेषणे श्यनि लीयते । लिनातीति श्नि ।। २७१ ॥

वृजी वर्जने ।। ( वर्जयति । वर्जिता ) । ईदित्त्वं निष्ठायामनिडर्थं, वृक्तइति वृङ्क्ते वृक्तीति लुक्श्नमोः ।। २७२ ।।

वृञ् आवरणे ।। (वारयति । वरति । वरते । वरिता । वरीता,) इटो दीर्घविकल्पः । आत्मनेपदेषु लिङ्सिचोः सनि च "लिङ्सिचोरात्मनेपदेषु" "इट् सनि वा" इतीड्विकल्पः । लिङि परस्मैपदपरे सिचि च "न लिङि" "सिचि च परस्मैपदेषु" इतीटो दीर्घाभावश्च वृञ्वन्नेयः । ञित्त्वादुभयपदित्त्वम् । वृणोति वृणुत इति श्नौ । वृणीते इति सम्भक्तौ श्नि ।। २७३ ।।

जॄ वयोहानौ ।। (जारयति । जरति । जरिता । जरीता) । "वृतो वा" इत्यादि । जीर्यते जृणातिवत् । ज्रि इति नन्दी । ज्रायचति ज्रयति । क्रैयादिकोऽप्येवमिति सः, ज्रिणाति २७४

रिच वियोजनसम्पर्चनयोः ।। ( रेचयति । रेचति । रेक्ता ) । अनिट्कारिकापाठादनिट्त्वम् । विरेचने रिङ्क्ते रिणक्तीति श्नमि ।। २७६ ।।

शिष असर्वोपयोगे ।। ( शेषयति । शेषति । शेष्टा ) । शिषिंपिषिमित्यनिट्कारिकासु पाठादनिट्त्वम् । अत एव लुङ्यशिक्षदिति क्सो भवति । लुङ्यङोऽभावादशेषीदिति देवेन यदुक्तं तदस्यानिट्त्वादयुक्तमिति पुरुषकार एव दूषितम् । शिनष्टीति विशेषणे श्नमि । विपूर्वोऽतिशये । ( विशेषयति । विशेषति ) ।। २७६ ।।

तप दाहे ।। ( तापयति । तप्ता ) । तपिं तिपिमितिवचनादनिट्त्वम् । तपतीति शपि सन्तापे । तपते तपतीत्यैश्वर्ये ।। २७७ ।।

तृप तृप्तौ ॥ संदीपन इति क्षीरस्वामी । ( तर्पयति । तर्पति । तर्पिता ) । अनिट्कारिकायां तृप्यतीति श्यना निर्देशान्नास्यानिट्त्वम् । तृपति तृम्पतीति शे । तृप्यतीति श्यनि । अस्य स्वादौ पाठो वृत्तिकारादीनामनभिमत इत्यवोचाम ॥ २७८ ॥

छृदी संदीपने ॥ (छर्दयति ॥ छर्दति । छर्दिता । छर्दिष्यति) । "सेसिच" इतीड्विकल्पः कृतादिसाहचर्याद्रौधादिकस्य, अत एवायं निष्ठायामनिडर्थमीदित्पठ्यते । (छृण्णः। छृण्णवान् )

इति। छृन्ते छृणत्तीति दीप्तिदेवनयोः श्नमि। धनपालशाकटायनौ तु छृदेत्यनिदितं पेठतुः। तत्र निष्ठायां छर्दितमिति फले भेदः। क्षीरस्वामिनस्तु पान्तोऽयं, यदाहुः, चृप छृप तृप दृप संदीपने। संदीपनक्रियायां चृपादयश्चत्वारो वर्तन्त इति। ( चर्पयति। छर्पयति। तर्पयति दर्पयति )॥ १७९॥

दृभी भये॥ ( दर्भयति। दर्भिता। दृब्धः )। ईदित्त्वादनिट्त्वम्॥ २८०॥

दृभ सन्दर्भे॥ अस्यानीदित्त्वान्निष्ठायामपि सेट्त्वं विशेषः। अमुं बहवो न पठन्तीति पुरुषकारे। अस्माभिस्तु देवमैत्रेयानुसारेण पठितः। तुदादेरीदितो ग्रन्थने दृभतीति॥२८१॥

श्रथ मोक्षणे॥ हिंसायामित्यपर इति पुरुषकारे। ( श्राथयति। श्रथति )। श्राथयतीति प्रयत्नेऽपि गतः श्रथयतीति क्रथादौ दौर्बल्ये॥ २८२॥

मी गतौ॥ माययति। मयति। मेता )। बिवडीङित्रणेष्वथ शीङ्श्रिञावपीति नियमाच्चेडागमः। "सनि मीमा" इत्यत्र चौरादिकैः साहचर्यात्तादृश एव गृह्यत इति मिमीषतीत्यत्रायमिस्भावो न भवति। मीञो मिनाति मीनीते हिंसायाम्। मीयते ङितः, मिनोति मिनुते स्वादौ ह्रस्वान्तस्य॥ २८३॥

ग्रन्थ बन्धने॥ ( ग्रन्थयति। ग्रन्थति )। अत्र देवमैत्रेयौ क्रथ हिंसायामिति स्वरितेतं पठित्वा ( क्राथयति। क्रथति। क्रथत ) इत्याहतुः। शाकटायनस्तु परस्मैपदीति, जासिनीत्यत्र क्राथेति निपातनाद्वृद्धिरित्युक्तत्वाद्वृत्तिकारादीनामनभिमतश्चुरादौ पाठ इति घटादौ क्रथतीत्यत्रावोचाम॥ २८४॥

शीक मर्षणे॥ ( शीकयति। शीकति। शीकिता )। सेचने शपि शीकते॥ २८५॥

चीक च॥ ( चीकयति। चीकति। चीकिता )॥ २८६॥

अर्ह हिंसायाम्॥ ( अर्हयति। अर्हति। अर्हते )। अयं स्वरितेदिति देवमैत्रेयौ। आत्मनेपदीति शाकटायनः। गतियाचनयोरर्हतीति शपि॥ २८७॥

हिसि हिंसायाम्॥ ( हिंसयति। हिंसति )। इदित्त्वादेव णिज्विकल्पः सिद्ध इति युजादिपाठे प्रयोजनं चिन्त्यम्। हिनस्तीति श्नमि॥ २८८॥

आङः षदः पद्यर्थे॥ पद्यर्थो गतिः। ( आसादयति। आसीदत् ) इति शपि सीदादेशः। (आसत्ता। आसात्सीत्)। 'शदिं सदिं स्विद्यतिपद्यतिखिद्यतीन्' इत्यनीट्कारिकायां पाठादनिट्त्वं, विसरणार्थकस्य ज्वलादिकस्य तौदादिकस्य च लृदित्त्वादङ्। (आसदत्) इति॥२८९॥

शुन्ध शौचकर्मणि॥ ( शुन्धयति। शुन्धति। शुन्धिता )। शुन्धतीति शपि शुद्धावकर्मकः॥ २९०॥

छद अपवारणे॥ स्वरितेदिति मैत्रेयदेवौ॥ परस्मैपदीति शाकटायनः। (छादयति। छदति। छदते ) छदयतीत्यूर्जने घटादौ। छन्दयतीतीहैव संवरणे गतः॥ २९१॥

जुष परितर्कणे॥ परितर्कणमूहो हिंसा वा, परीतर्पणे परितृप्तिक्रियायामिति क्षीरस्वामी। ( जोषयति। जोषति )। प्रीतिसेवनयोर्जुषतइति तुदादौ॥ २९२॥

धूञ् कम्पने॥ ( धूनयति। धवयति। धवते )। [धूञ्प्रीञोर्नुग्वक्तव्यः] इति नुक्। धूञ्प्रीणोरिति हरदत्तकौमारादीनां पाठः। तन्मते प्रीणातिसाहचर्यात् धूञोऽपि क्रैयादिकस्यैवा नुका भाव्यम्। अत एवात्र मैत्रेयो धावतीत्युदाजहार। एवञ्च स्वादौ दीर्घवादीनामपि धावतीति भवति। ( धुनाति धुनीते ) इति क्र्यादौ। धुनोति धुनुत इति स्वादौ। धूनोति धूनुते इति च तत्रैव विधूनने, धुवतीति कुटादिः॥ २९३॥

प्रीञ् तर्पणे॥ अत्र केचन धातुवृत्तिकाराः [धूञ्प्रीञोर्नुग्वक्तव्यः] इति पठन्तः प्रीणयतीत्युदाहरन्ति। हरदत्तस्तु धूञ्प्रीणोरिति श्नानुकरणाद्दैवादिकस्य नेत्याह। दैवादिकग्रहणे नात्र चौरादिकोऽप्युपलक्षयितव्य इति पुरुषकारे। तन्मते प्राययतीति भाव्यम्। मैत्रेयोऽप्यनेनैवाभिप्रायेण प्राययतीत्युदाजहार॥ २९४॥

श्रन्थ ग्रन्थ सन्दर्भे ॥ (श्रन्थयति । ग्रन्थयति । श्रन्थति । ग्रन्थति )। "णिश्रन्थिग्रन्थि" इति' वचनात् ग्रन्थयते स्वयमेवेति भवति । श्रथ्नाति ग्रथ्नातीति क्नि, श्रथ्नते ग्रन्थतइति शैथिल्यकौटिल्ययोः शपि ॥ २९६ ॥

आप्लृ लम्भने ॥ (आपयति) । लृदित्त्वादङि (आपत् । आप्ता) । 'तर्पितिपिम्' इतिकारिकापाठादनिट्त्वम् । मैत्रेयेणापयतइत्यात्मनेपदमपि दर्शितम् । अन्ये तु नैतन्मृष्यन्ति ।२९७

तनु श्रद्धोपकरणयोः ॥ उपसर्गाच्च दैर्घ्ये । ( तानयति । वितानयति । तनति । वितनति ) तनुतइति विस्तारे । अत्र क्वचित् चन श्रद्धोपहिंसनयोरिति पठ्यते । (चानयति । चनति । चनयति) इति घटादौ ॥ २९८ ॥

वद सन्देशवचने ॥ स्वरितेत्, शाकटायनस्य त्वात्मनेपदी । ( वादयति । वदति । वदते )। व्यक्तवाचि शपि वदति ॥ २९९ ॥

वच परिभाषणे ॥ ( वाचयति । वचति । वक्ता । अवाक्षीत् )। अङ्विधौ वक्तीति लुग्विकरणस्य निर्देशान्नास्य ग्रहः । 'पचिं वचिम्' इति पाठादनिट्त्वम् । पारायणेऽयं नाधीयते ॥ ३०० ॥

मान पूजायाम् ॥ ( मानयति । मानति । मानिता )। "मानबध" इत्यत्र नह्येतेभ्यः प्राक् सन आत्मनेपदं नापि परस्मैपदं पश्याम इति भाष्यं भौवादिकस्य विचारणार्थस्यैव नित्यसन्नन्तत्वं प्रतिपादयतीत्यस्माल्लुडाद्युत्पत्तिः । स्तम्भे मानयतइत्याकुस्मीयः । मन्यते मनुते इति दिवादौ तनादौ च ॥ ३०१ ॥

भू प्राप्तौ आत्मनेपदी वा ॥ अयं प्राप्तौ वा णिचमुत्पादयति आत्मनेपदि चेत्यर्थः । अत्र केचिदात्मनेपदं णिच्सन्नियोगेनैव तेनान्यदा नेति । मैत्रेयस्त्वाकुस्मीयप्रकरणे भूप्राप्तौ वेति लघुनैव न्यासेन णिच्यात्मनेपदे वाग्रहणाण्णिचो विकल्पे च सिद्धे पुनरिह पठित्वात्मनेपदोक्ति वचनाण्णिजभावे आत्मनेपदमित्याह । इदम्पुरुषकारे दूषितम् । आकुस्मीयकाण्डे भू प्राप्तौ वेति पठ्यमाने अनन्तरप्रकृतस्यात्मनेपदीतिवचनस्य विकल्पः स्यान्न पुनरप्रकृतस्य णिच इति ण्यभावे परस्मैपदमुदाहरन्तौ धनपालशाकटायनावप्यत्रैवानुकूलाविति चोक्तम् । तथा भूसूत्रे सुधाकरोऽपि भवत इति प्रस्तुत्य वात्मनेपदं मैत्रेयोक्तेन कारणेन समर्थनाण्णिच्सन्नियोगेनात्मनेपदित्वादसाधनम् । अत एव 'सुराष्ट्रमभवत' इत्यादि प्रयुज्यत इत्याह । अन्ये तु पुराणव्याकरणेषु "भुवो णिङ्"इति सूत्रस्य णिङो ङकारः प्रत्ययान्तादात्मनेपदार्थः, प्रकृते तु केवलादिति श्रीभद्रादिभिर्व्याख्यानात्तन्त्रान्तरवचनानुरोधेन सन्नियोगन्यायो बाध्यत इति, तथा च "वर्षाभ्वश्च" इत्यत्र कैयटेन वर्षासु भवति वर्षासु भवतइत्यात्मनेपदं दर्शितम् । (भावयते, । भवते । भविता) ॥ ३०२ ॥

गर्ह निन्दायाम् ॥ ( गर्हयति । गर्हति )। गर्हतइति शपि ॥ ३०३ ॥

मार्ग अन्वेषणे ॥ ( मार्गयति । मार्गिता । मार्गणः ) इति चानशि । मृगयत इति कथादौ ॥ ३०४ ॥

कठि शोके ॥ ( कण्ठयति । कण्ठति । कण्ठिता )। कण्ठतइति शपि । कठतीति तु कृच्छ्रजीवने । कठिः प्रायेणोत्पूर्वं उत्कण्ठायाम् ॥ ३०५ ॥

मृजू शौचालङ्करणयोः ॥ ( मार्जयति । मार्जति । मार्जिता । मार्ष्टा )। ऊदित्त्वादिड्विकल्पः । निष्ठायाम्, (मृष्टः) । वृद्ध्यादि मार्ष्टिवत् । मार्जयति शब्दे गतः ॥ ३०६ ॥

मृष तितिक्षायाम् ॥ पुरुषकारेणायं स्वरितेदित्युक्त्वा शाकटायनो यमात्मनेपदीत्युक्तम् । ( मर्षयति मर्षति )। (मर्षते । मृष्यति । मृष्यतः) इतिदिवादौ सेचने ।शपि मर्षति ॥३०७॥

धृष प्रसहने ॥ आदित् शाकटायनस्य, ( धर्षयति, धर्षिता, धृषिता )। शाकटायनस्य तु धृष्टः । धृष्णोतीति श्नौ आधृषीयः । पृषु पशबन्धनइति केचित्पठन्ति, तदुक्तं मैत्रेयेण, पशबन्धनइति युजादाविति ॥ ३०८ ॥

कथ वाक्यप्रबन्धे ॥ ( कथयति ) । एतदादयोऽदन्ताः । तत्फलञ्च कथयतीत्यादौ अल्लोपस्य स्थानिवद्भावाद्यथायोगं वृद्धिगुणयोरभावः । तथाऽचकथदित्यत्र "सन्वल्लघुनि" इत्यस्य "दीर्घो लघोः" इति दीर्घस्य चानग्लोपइति निषेधः। अन्यदपि प्रयोजनं तत्र तत्र वक्ष्यते॥३०९॥

वर ईप्सायाम् ॥ ( वरयति ) । वारयतीति वृतः ॥ ३१० ॥

गण संख्याने । ( गणयति । अजीगणत् ) । "ई च गणः" इति णौ चङि ईत्वात्वे । इह संख्यानं नाम संख्यानिमित्तं ज्ञानविशेषो भागशोऽवस्थापनं च, तत्राद्योऽर्थः कर्तृस्थो भाव इति न कर्मकर्ताऽस्ति, तत्र इतरत्र कर्मस्थभावकत्वाद्गणयते गणः स्वयमेवेति भवति, भागशोऽवस्थाप्यमानो गणस्तत्रानुकूलत्वात्स्वयमेव भागशोऽवतिष्ठत इत्यर्थः । अवस्थानं हि कर्मस्थो भावः । यक्चिणौ तु "णिश्रन्थिग्रन्थि" इति न भवतः । एवं च "णेरणौ" इत्यत्र गण्यति गणः स्वयमेवेति वृत्तिस्थस्य गणयते गणः स्वयमेवेति भाष्यस्थस्य चोदाहरणस्य विरोधोऽपि न भवति । (गणिका) । ण्वुलि "प्रत्ययस्थात्"इतीत्वम् । गणिकानां समूहो ( गाणिक्यम् ) । [ गणिकायाश्चेति वक्तव्यम् ] इति यञ् ॥ ३११ ॥

शठ श्वठ सम्यगवभाषणे ॥ अभाषणइति केचित् । ( शठयति । श्वठयति ) । शाठयति, श्वाठयतीति गत्यादौ गतं, शाटयतइति श्लाघायामाकुस्मीयः । शठतीति कैतवादौ शपि ।३१३।

पट वट ग्रन्थे ॥ वट वेष्टनइति क्षीरस्वामी । ( पटयति ) । पाटयतीति भाषार्थे गतः । पटतीति गतौ शपि । वेष्टने शपि वटति, तस्य कारिते वाटयति । वटयतीति परिभाषणे घटादिः, ओष्ठ्यादिं बहवः पठन्तीति तत्रैवोक्तम् ॥ ३१५ ॥

रह त्यागे ॥ ( रहयति । अररहत् ) । रहतीति शपि । गतौ तु रंहति ॥ ३१६ ॥

स्तन गदी देवशब्दे ॥ द्विवचननिर्देशो वैचित्र्यार्थ इति मैत्रेयः । अजदन्त्यपरा इति षोपदेशलक्षणं स्मिङ्स्विधाद्येकाच्साहचर्यादनेकाच्सु न प्रवर्तते । ( स्तनयति । अतस्तनत् ) । ( तिस्तनयिषति ) इत्यत्राषोपदेशत्वात् षत्वं न भवति । अभिनिस्तनो मेघस्येत्यत्र अभिनिष्टानवद्वायं शब्दविशेषस्य संज्ञेति "अभिनिसःस्तनः" इति षत्वं न भवति ।(गदयति। स्तनयति) । गदतीति शपि । ( स्तनयित्नुः ) । "स्तनिहृषिपुषिगदिमदिभ्योर्णेरित्नुच्" इति इत्नुच्, "अयामन्त" इत्ययादेशः ॥ ३१८ ॥

पत गतौ वा ॥ वाशब्दं केचिन्न पठन्तीति पुरुषकारे । अयं विकल्पेन णिचमुत्पादयति । (पतयति । पतति) इति । तत्र सूवादिपाठादेव पततीतिसिद्धे णिज्विकल्पस्य प्रयोजनमस्यानेकाच्त्वात्पताञ्चकारेत्याम्सिद्धिः । तथा अपतीदित्यस्य लृदित्त्वाभावेनाङभावात्सिद्धिरिति पुरुषकारादौ । अन्ये तु वाशब्दमेवं व्याचक्षन्ते । न्यायतस्त्वनन्तरत्वाददन्तत्वस्यैव विकल्पनं युक्तं, न तु परमप्रकृतस्य णिचः । तेन पतयति पातयतीत्युदाहर्तव्यम् । उक्तं च स्वेनैव पुरुषकारकृता भू प्राप्तौ वात्मनेपदीत्यत्र, आकुस्मादात्मनेपदीतिप्रकरणे भू प्राप्तौ वेति वक्तव्ये आत्मनेपदीतिवचनं केवलाण्णिजन्तादस्यात्मनेपदं यथा स्यादिति मैत्रेयग्रन्थदूषणावसरे आकुस्मीयकाण्डे भू प्राप्तौ वेत्युच्यमाने ऽनन्तरस्यात्मनेपदित्वस्यैव विकल्पः प्रतीयेत न पुनर्महाप्रकृतस्य चुरादिणिच इति । अत्र स्वामी, संहितायां धातुपाठाद्वाशब्दमुत्तरधातुशेषं वष्टि, तन्निपातस्य वाशब्दस्य चशब्दादिवत् पूर्वप्रयोगो नेति हेलाराजीयादौ समर्थनाद्युक्तम् । ( पतयालुः, ) "स्पृहिगृहिपति" इत्यादिना ऽऽलुच् ॥ ३१९ ॥

पष अनुपसर्गात् ॥ गतावित्यत्रापि सम्बध्यते, (पषयति)। सोपसर्गत्वात् (प्रपषति)इति। अत्र केचित् तालव्यान्तं पठन्तो वाग्रहणं चानुवर्त्यादन्तादेत्वं विकल्पयन्ति स्वाम्यनुसारिणः । अत्रादन्तत्वविकल्पनमनन्तरत्वाद्युक्तं तालव्यान्तत्वं तु पुरुषकारोऽपि न सहते, यदाह पषादिस्तु पष अनुपसर्गादित्यस्य भविष्यति ॥ ३२० ॥

स्वर आक्षेपे ॥ ( स्वरयति ) । स्वरतीति शब्दोपतापयोश्शपि ॥ ३२१ ॥

रच प्रतियत्ने ॥ ( रचयति ) ॥ ३२२ ॥

कल गतौ संख्याने च ॥ ( कलयति ) । कालयतीति क्षेपे गतम् । कलतीति शपि॥३२३॥

चह परिकल्कने ॥ परिकल्कनं दम्भः । ( चहयति ) । मित्प्रकरणे इह च पाठस्य तत्रैव प्रयोजनमुक्तम् । चहतीति शपि ॥ ३२४ ॥

मह पूजायाम् ॥ ( महयति ) । महतीति शपि महि वृद्धावित्यस्य । मंहत इति क्षीरस्वामी, तन्मतेन महि भाषितार्थो ऽत्रैव दण्डके गतः ॥ ४२५ ॥

सार कृप श्रथ दौर्बल्ये ॥ ( सारयति । कृपयति ) । कल्पयतीति कृपेस्तादर्थ्यइत्यस्य गतम्, कल्पतइति कृपेः शपि । ( श्रथयति ) । श्राथयतीति प्रयत्ने गतः, मोक्षणे श्राथयति, श्रथतीत्याधृषीयः ॥ ३२८ ॥

स्पृह ईप्सायाम् ॥ ( पुष्पेभ्यः स्पृहयति ) ॥ "स्पृहेरीप्सितः" इति ईप्सितस्य संप्रदानत्त्वम् । ( स्पृहयालुः ) । "स्पृहिगृहि" इत्यादिनालुच् ॥ ३२९ ॥

भाम क्रोधे ॥ ( भामयति ) । भामत इति शपि ॥ ३३० ॥

सूच पैशुन्ये ॥ ( सूचयति ) । अजन्तलक्षणस्यैकाज्विषयत्त्वादषोपदेशत्त्वात् सोसूच्यत इत्यादौ न षत्त्वं, "सूचिसूत्रि इत्यादिना यङ् ॥ ३३१ ॥

खेट भक्षणे ॥ तृतीयान्त इति दुर्गः । (खेटयति । आखेटना) । खोट इत्येके । खोटयतीति मैत्रेयः । खेटतीत्यपि शपि ॥ ३३२ ॥

क्षोट क्षेपे ॥ ( क्षोटयति ) ॥ ३३३ ॥

गोम उपलेपने ॥ ( गोमयति ) ॥ ३३५ ॥

कुमार क्रीडायाम् ॥ ( कुमारयति ) ॥ ३३५ ॥

शील उपधारणे ॥ उपधारणमभ्यासः । ( शीलयति । शीलितः ) । "मतिबुद्धि" इत्यत्र चकारस्यानुक्तसमुच्चयार्थत्वात् वर्तमाने क्तः । समाधौ शीलतीति शपि ॥ ३३६ ॥

साम सान्त्वप्रयोगे ॥ ( सामयति ) । साम सान्त्वन इति पठितस्येह पाठो ऽग्लोपित्वादससामदिति सिद्धये ॥ ३३७ ॥

वेल कालोपयोगे ॥ ( वेलयति । वेला ) । काल इत्यपि धातुरित्यात्रेयः । ( कालयति ) । वेलयतीति शपि चलने ॥ ३३८ ॥

पल्यूल लवनपवनयोः ॥ ( पल्यूलयति ) । पल्यूलनं शोधनद्रव्यमिति नास्य पल्यूलवासः, पल्यूलयेयुरित्यत्र भाष्ये ॥ ३३९ ॥

वात सुखसेवनयोः ॥ गतिसुखसेवनेष्वित्येके । ( वातयति ) ॥ ३४० ॥

गवेष मार्गणे ॥ ( गवेषयति ) ॥ ३४१ ॥

वास उपसेवायाम् ॥ ( वासयति । वासना ) । युच्, स्नेहनादौ वासयतीति गतम् । वसतीति वस निवासइत्यस्य शपि । अयं कथादावपीति दैवपुरुषकारयोः । वस्तइत्याच्छादने शब्लुकि, वस्यतीति स्तम्भने श्यनि ॥ ३४२ ॥

निवास आच्छादने ॥ निवासयति ) । अत्र केचित्पितेव पुत्रं दसये वचोभिरित्यत्र क्षुरे पितेव पुत्रं दसये निरवासयामि स्तुतिभिरिति व्याख्यानाद्दस निरवसानइति पठन्ति । भट्टभास्करेण त्वाकुल्मीयेषु दस दसि दसनदर्शनयोरिति पठित्वा धातूनामनेकार्थत्त्वेन वचोभिः स्तुतिभिःसंगृह्णामि, यथा पिता दुश्शिलंपुत्रं स्तुतिपदैरिति व्याख्यातम् । तस्मात्क्षुरे ऽन्याकुल्मीय एव निरवसानार्थः कथित इति वक्तुं शक्यत्त्वान्नैतावता कथादौ धात्वन्तरत्त्वं शक्यते कल्पयितुम् ॥ ३४३ ॥

भाज पृथक्कर्मणि ॥ ( विभाजयति ) ॥ ३४४ ॥

सभाज प्रीतिदर्शनयोः ॥ प्रीतिसेवनयोरित्यन्ये । ( सभाजयति ) ॥ ३४५ ॥

ऊन परिहाणे ॥ ( ऊनयति । माभवानुनिनत् ) । माषेणोनः ( माषोनः ) । "पूर्वसदृशसमोनार्थ" इति तृतीयासमासः ॥ ३४६ ॥

ध्वन शब्दे ॥ ( ध्वनयति ) । ध्वनतीति शपि ॥ ३४७ ॥

कूट परीतापे ॥ परिदाहइत्यन्ये । ( कूटयति, ) । कुटयतीत्यप्रसादे आकुस्मीयः । अर्थभेदाः पाठभेदाश्च तत्रैव दर्शिताः ॥ ३४८ ॥

सङ्केत ग्राम कुण गुण चामन्त्रणे ॥ चकारेण कूट इत्यपेक्षत इति मैत्रेयः । ( कूटयति । संकेतयति । ग्रामयति ) । कुणतीति शब्दोपकरणयोश्शे । (गुणयति), । अपरे तु पठन्ति । केत श्रावणे निमन्त्रणे च । ( केतयति । निकेतयति ) । कुण गुण चामन्त्रणे । चकारात्केत चेति, कूण संकोचन इति वा तत्र पठन्ति ॥ ३९२ ॥

स्तेन चौर्ये ॥ अनेकाच्त्वादषोपदेशत्वम् । (स्तेनयति । अतिस्तेनत् । स्तेनः । स्तेयम् ) "स्तेनाद्यन्नलोपश्च" इति भावकर्मणोर्यन्नलोपौ । ( स्तैन्यम् , ) "स्तैनात्" इति योगविभागात् ष्यञ् ॥ ३९३ ॥

आ गर्वादात्मनेपदिनः ॥ इतः परे गर्व माने इति वक्ष्यमाणपर्यन्ता आत्मनेपदिनः ॥

पद गतौ ॥ ( पदयते । अपपदत ) । पद्यत इति श्यनि ॥ ३९४ ॥

गृह ग्रहणे ॥ ( गृहयते । गृहयालुः ) "स्पृहिगृहि" इत्यादिना आलुच् । गर्हत इति गृहेर्गर्हेश्च शपि, तत्रान्त्यः कुत्सार्थः । गृह्णाति गृह्णीत इत्युपादानार्थस्य प्रसारिणः क्र्यादेः । गर्हतीति गर्हेराधृषीयस्य निन्दार्थस्य ॥ ३९५ ॥

मृग अन्वेषणे ॥ ( मृगयते ) । मृग्यतीति कण्ड्वादिपाठादिति मैत्रेयः । मार्गयति, मार्गतीति मार्गेराधृषीयस्य ॥ ३९६ ॥

कुह विस्मापने ॥ ( कुहयते । कुहना । कुहः ) । बाहुलकादूकारप्रत्यये कुहूशब्दमाह मैत्रेयः ॥ ३९७ ॥

शूर वीर विक्रान्तौ ॥ ( शूरयते । वीरयते ) । शूर्यत इति हिंसास्तम्भनयोः श्यनि ३९१

स्थूल परिबृंहणे ॥ (स्थूलयते । अतुस्थूलत । स्थूलः । स्थविष्ठः । स्थवीयान् ) । "स्थूलदूर" इत्यादिना यणादि लुप्यते पूर्वस्य च गुणः । पृथ्वादिष्वपाठादिमनिजस्य नास्तीति नोदाहृतम् । ( स्थावयति ) । "णाविष्ठवत्" इति यणादिलोपो गुणश्च ॥ ३९८ ॥

अर्थ उपयाच्ञायाम् ॥ ( अर्थयते । अर्थयिता । अर्थयिष्यते ) । 'प्रार्थयन्ति शयनोत्थितं प्रिया' इत्यादि कृदन्तात्तत्करोतीति णिचि नेयम् ॥ ३९९ ॥

सत्र सन्तानक्रियायाम् ॥ ( सत्रयते ) ॥ ३६० ॥

गर्व माने ॥ ( गर्वयते ) । आगर्वीयाः । गर्वतीति शपि ॥ ३६१ ॥

सूत्र वेष्टने ॥ अन्ये तु विमोचन इति पठन्तो विमोचनं मोचनाभाव इति, ग्रन्थनमित्यपरे । ( सूत्रयति । सोसूत्र्यते ) । "सूचिसूत्रि" इति यङ् ॥ ३६२ ॥

मूत्र प्रस्रवणे ॥ ( मूत्रयति । मोमूत्र्यते, ) पूर्ववद्यङ् ॥ ३६३ ॥

रूक्ष पारुष्ये ॥ ( रूक्षयति ) । रूक्षतीति शपि ॥ ३६४ ॥

पार तीर कर्मसमाप्तौ ॥ ( पारयति । तीरयति ) ॥ ३६६ ॥

पुट संसर्गे ॥ (पुटयति) । पोटयतीति भाषार्थो दण्डके गतः । पुटतीति संश्लेषे तुदादिः ३६७

कत्र शैथिल्ये ॥ ( कत्रयति । कत्रिः ) । इन्प्रत्ययः ( कात्रेयकम् ) । "कत्र्यादिभ्यो ढकञ्" इति शैषिको ढकञ् । कुत्सितास्त्रयः कत्रय इति वा कत्रिशब्दव्युत्पत्तिः । [ कद्भावे त्रावुपसंख्यानम् ] इति कुशब्दस्य कद्भावः । अत्र दुर्गः कर्तेत्यपि पठति । कर्त्तयति ॥ ३६८ ॥

"प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च" ॥ प्रातिपदिकाद्धात्वर्थे णिच् , तस्मिश्चेष्ठनीव कार्यं भवति । इदं च "तत्करोति तदाचष्टे" तेनातिक्रामतीनां वक्ष्यमाणत्वात् तद्विषयम् । ( पटुमाचष्टे पटयति । लघुमाचष्टे लघयति । अपीपटत् , अलीलघत् ) । अत्र परत्वाद्वृद्धौ "णाविष्ठवत्" इति टिलोप इत्यरलोऽयं नेति "सन्वत्" इतीत्वम् "दीर्घो लघोः" इति दीर्घश्च भवति । अत्र केचित् "नाग्लोपि" इत्यत्राग्गितिप्रत्याहारग्रहणसामर्थ्याद्वृद्धेः प्रागेव टिला

इत्यल्लोप्यङ्गमितीत्वदीर्घत्वे नेच्छन्ति। ( अपपटत्। अललवत्) इति। तदसत्। "हलि-कल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम्" इति वार्त्तिकविरोधात्। यदि हि वृद्धेः प्राक् टिलोपः स्याद् अग्लोप्येवाङ्गमिति किमदन्तत्वनिपातनक्लेशेन। प्रत्याहारग्रहणस्य तु प्रयो-जनं ( स्वामिनमाख्यत् असस्वामत्, गोमिनमाख्यत् अजुगोमत्, । वीरुधमाख्यत्, अविवी-रत्, प्रावृषमाख्यत् अपप्रावत्। यादृशमाख्यत्, अययादृद् ) इति स्यात्। एषामेपूदाहर-णेष्वनभिधानान् णिज् नेति मतं तेषामपि स्रग्विणमाख्यद् इत्यादौ "विन्मतोर्लुक्" इतीष्ठ-वद्भावेन विनो लुकि ह्रस्वाद्यभावः प्रयोजनमेवासस्रजदिति। अत्र बहुलग्रहणात् स्रजयती-त्यत्र वृद्धिर्न्न भवति, तथा कुमारीमाचष्टे कुमारयतीत्यत्राप्रातिपदिकत्वेऽपि णिजिति के-चित्। अन्ये तु "प्रकृत्यकाच्" इति प्रकृतिभावादेव स्रजयतीत्यत्र वृद्धिर्न्न भविष्यति। तथा यथाकथञ्चित्प्रातिपदिकग्रहणे लिङ्गविशिष्टपरिभाषाया "ङ्याप्प्रातिपदिकात्" इति सूत्रे भाष्ये स्थापनात् कुमारयतीत्यादौ णिजपि सिद्ध इति बहुलग्रहणं विकल्पमात्रफलमाहुः॥

"तत्करोति तदाचष्टे"॥ तदिति द्वितीयान्तोपलक्षणम्। तत्करोत्याचष्ट इत्यत्र धात्वर्थ-मात्रं णिजर्थो न कर्तापि, तथा चैवोदाहृतम्॥

"तेनातिक्रामति"॥ अत्रापि तेनेति तृतीयान्तोपलक्षणम्। अश्वेनातिक्रामति ( अश्व-यति )। हस्तिनातिक्रामति ( हस्तयति )॥

"धातुरूपञ्च"॥ णिच्प्रकृतिर्धातुरूपं प्रतिपद्यते। अनेन ["आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्" इत्येतत्सूच्यते। कंसवधमाचष्टे कंसं घात-यतीत्युदाहरणम्॥

"कर्तृकरणाद्धात्वर्थे"॥ अत्र कर्तृग्रहणं करणस्य विशेषणम्। कर्तुः करणाद्धात्वर्थे णिजिति सूत्रार्थः। करिभिरवबध्नाति ( अवकरयति )। असिना हन्ति ( असयति )। परशुना छिनत्ति ( परशयति )। दात्रेण लुनाति ( दात्रयति )। अत्र कर्त्ता करणस्य विशेषणं करण-शब्दवाच्यत्वेन लोकप्रसिद्धानां चक्षुरादीन्द्रियाणां परिग्रहो माभूद् इति॥

वष्क दर्शने॥ ( वष्कयति )॥ ३६९॥

चित्र चित्रकरणे॥ ( चित्रयति )। चित्रकरणमालेख्यकरणमित्यात्रेयः। चित्र आलेख्य-करणइत्येव दुर्गः॥ ३७०॥

"कदाचिद्दर्शने"॥ चित्र इत्ययं कदाचिद्दर्शनेऽद्भुतदर्शने णिचमुत्पादयति। ( चित्र-यति )। चित्रीयत इति चित्रप्रातिपदिकादाश्चर्य्यवृत्तेः "नमोवरिवश्चित्रङः क्यच्" इति क्यचि, तत्र हि चित्रङ् आश्चर्य्यं इत्युच्यते, प्रातिपदिकस्य ङित्त्वमवयवे ऽकृतं लिङ्गं समुदा-यस्य विशेषकमिति न्यायात् प्रत्ययान्तात्तङर्थम्॥ ३७१॥

अंस समाघाते॥ ( अंसयति। अंसः )॥ ३७२॥

वट विभाजने॥ (वटयति)॥ ३७३॥

लज प्रकाशे॥ ( लजयति )। अत्र मैत्रेयः। वटेः पुनः पाठोऽर्थभेदात्। वटि लजि इत्ये-के। ( वण्टयति। लञ्जयति )। अदन्तेषु पाठबलाददन्तत्त्वे वृद्धिरित्यपरे। ( वण्टापयति। लञ्जापयति )। तथा च शाकटायनसूत्रम्। "कथादिपाथिस्फायो णौ पुग्लुग्वत्वम्" इति। अस्यार्थः—कथादीनां पाथेश्च णौ पुग् लुग् इत्येतावागमौ स्फायोऽन्त्यस्य वत्वं क्रमेणेति। एवञ्च शाकटायनमतेन कथादीनामागमे पुकि वृद्धौ कथापयतीत्युदाहार्य्यम्॥ ३७४॥

मिश्र सम्पर्के॥ ( मिश्रयति। गुडमिश्रः )। "पूर्वसदृश" इत्यादिना तृतीयान्तस्य मि-श्रशब्देन तत्पुरुषः॥ ३७५॥

संग्राम युद्धे॥ अयमनुदात्तेत्। तथा च तृतीयादिभ्य इत्यत्र कैयटे। संग्रामयतिरनुदात्तेद् बोद्धव्य इति। पदमञ्जर्य्यां च 'अनुदात्तेदयं संग्रामयतिरिष्यत' इति। तथा च तत्र भाष्यम-पि। असंग्रामयत शूर इति, संग्रामशब्दात्तत्करोतीति णिचापि सिद्धाविह संग्रामस्य पाठः

सोपसर्गात्सङ्घातात्प्रत्ययार्थस्तेनासंग्राममयत इत्युपसर्गात्पूर्वमड् भवति। तथा संग्रामयित्वे-त्यत्राधीत्येत्यादिवल्ल्यब् न भवति। सिसंग्रामयिषतइत्यत्र समो द्वित्वं भवति। अत एव सङ्घातादुत्पत्तिरचदादन्यत्र धातूपसर्गसमुदायात्प्रत्यये विहिताउपसर्गाः पृथक् क्रियन्तइति ज्ञाप्यते। तेन परिवृढय्येत्यत्र ल्यबादि भवति। "अस्यानुदात्तेत्त्वमपाणिनीयमिति पाठस्य तदर्थतया न ज्ञापकत्वभङ्गः॥ ३७६॥

स्तोम श्लाघायाम्॥ ( स्तोमयति। स्तोमः। अग्निष्टोमः )। "अग्नेः स्तुत स्तोम" इति षत्वम्॥ ३७७॥

छिद्र कर्णं भेदने॥ करणभेदनइति गुप्तः, मैत्रेयस्तु छिद्रयति कर्मयतीति कर्णमपि पृथग्धा-तुमुक्त्वा कर्णेन भापयति कर्णयतीति व्याचक्षतेत्याह॥ ३७९॥

अन्ध दृष्ट्युपघाते॥ उपसंहारइत्येके। ( अन्धयति )॥ ३८०॥

दण्ड दण्डनिपातने॥ अयं द्विकर्मक इत्युक्तं नाथतौ। तत्र कर्मणि लादयो नाथत्यादौ प्रपञ्चितास्तद्वदिहापि नेयाः॥ ३८१॥

अङ्क पदे लक्षणे च॥ ( अङ्कयति )। अङ्कतइति शपि। तत्रैव कुटिलायां गतावक्रिति३८२

अङ्ग च॥ ( अङ्गयति )। अङ्गतीति गतौ शपि॥ ३८३॥

सुखदुःख तत्क्रियायाम्॥ तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ निर्दिश्येते। "प्रातिपदि-काद्धात्वर्थे" इति सिद्धे इहानयोः पाठस्सोपसर्गात्प्रत्ययार्थ इति मैत्रेयः। (सुखयति। दुःख-यति )। "सुखादिभ्यः कर्तृवेदनायाम्" इति क्यङि "अकृत्सार्वधातुकयोः" इति दीर्घे ( सु-खायते, दुःखायते ) सुखादिभ्यो वेदनायां क्यङ् भवति तानि च सुखादीनि संनिधानाद्वेदना-यां कर्तुस्सम्बन्धीनि चेदिति सूत्रार्थः। कर्तृ इत्यविभक्तिको निर्देशः, तेन सुखं वेदयते प्र-साधको देवदत्तस्येत्यत्र क्यङ् न भवति। सुख्यति दुःख्यतीति कण्ड्वादियगन्तस्य॥ ३८५॥

रस आस्वादनस्नेहनयोः॥ ( रसयति )। रसतीति। शपि॥ ३८६॥

व्यय वित्तसमुत्सर्गे॥ ( व्यययति )। व्ययतइति गतौ शपि॥ ३८७॥

रूप रूपक्रियायाम्॥ रूपस्य दर्शनं करणं वा रूपक्रियेति स्वामी। ( रूपयति। रूपति ) निरूपयतीत्यनेकार्थत्वाद्विचारणे॥ ३८८॥

छेद द्वैधिकरणे॥ ( छेदयति )। छिनत्तीति छिदेः श्नमि। क्वचिदिहापि छद अपवारणइति पठ्यते॥ ३८९॥

लाभ प्रेरणे॥ ( लाभयति )। प्राप्त्यर्थे लभतइति शपि॥ ३९०॥

व्रण गात्रविचूर्णने॥ ( व्रणयति )। व्रणतीति शब्दार्थ शपि॥ ३९१॥

वर्ण वर्णक्रियाविस्तारगुणवचनेषु॥ वर्णक्रिया वर्णकरणं, ( सुवर्णं वर्णयति )। ( कथां वर्णयति )। विस्तृणातीत्यर्थः। ( राजानं वर्णयति, ) स्तौतीत्यर्थः। वर्णं गृह्णाति ( वर्ण-यति )। "सत्यापपाश" इत्यादिना णिच्॥ ९२३॥

"बहुलमेतन्निदर्शनम्"॥ क्वचित्तु दर्शितमिति पठ्यते। तत्रापि भावे निष्ठेति निदर्शन-मित्येवार्थः। चुरादावदन्तधातुनिदर्शनं बहुलं वेदितव्यम्। अतोऽनुक्ता अपीह धातवो वेदितव्याः॥

पर्ण हरितभावे॥ ( पर्णयति )॥ ३९३॥

विष्क दर्शने॥ ( विष्कयति )॥ ३९४॥

क्षप प्रेरणे॥ ( क्षपयति )॥ ३९५॥

वस निवासे॥ वसयति )॥ ३९६॥

तुत्थ आवरणे॥ ( तुत्थयति )। एवं ( गडयात, आन्दोलयति, डलयति, वर्णयति, स्फुटयति, स्फुटा, स्फुटितः, अवधीरयति ) इत्यादयो यथाभिधानमात मैत्रेयादयः। अन्ये तु भूवादिष्वेतदन्तेषु दशगणेषु धातूनां पाठो निदर्शनाय, तेन स्तम्भुप्रभृतयः सौत्राः, चुलु-

म्पादयो वाक्यकारीयाः, प्रयोगसिद्धा विक्लवत्यादयश्च गृह्यन्त इति ।

विगलन्त्याशु जीमूता, विक्लवन्ते दिवि ग्रहाः ।
क्षयन्ति विद्युतः प्रावृट् क्षीयन्ते कामविग्रहाः ॥

इत्यादयः प्रयोगा उपपद्यन्तइत्याहुः ॥ ३९७ ॥

*"णिङङ्गान्निरसने"* ॥ अङ्गवाचिनः प्रातिपदिकान्निरसने णिङ्भवति । ङकार आत्मनेपदार्थः । हस्तौ निरस्यति ( हस्तयते । पादयते ) ॥

"श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च" ॥ श्वेताश्वादीनां चतुर्णां यथासंख्यमश्वतरेतक इत्येते लुप्यन्ते णिङ् च धात्वर्थे, अत्राधापि णिचो बाहुलकादिति मैत्रेयादयः । श्वेताश्वमाचष्टे तेनातिक्रामति वा श्वेतयते, एवमश्वयते, गालोड्यते, ह्वरयतइति, अत्र स्वामी । पारायणिकास्त्वर्थवद् णिचमनुवर्णयन्ति, एवं काश्यपो ऽपि व्याचक्षाणः श्वेतयतीत्युदाजहार ॥

'पुच्छादिषु धात्वर्थे' इत्येव सिद्धम् ॥ अत्र मैत्रेयः–पुच्छादिषु प्रातिपदिकेभ्यो धात्वर्थेइत्येव सिद्धम्, आत्मनेपदं णिजन्तात् बहुलवचनाद्विज्ञेयमिति "पुच्छभाण्डचीवराण्णिङ्" इति न कर्तव्यमिति । अन्ये तु पुच्छादीनां "पुच्छभाण्ड" इत्यनेन णिङ उक्तत्वादिह णिङ् नास्तीति व्याचक्षते । पुच्छमुदस्यति (उत्पुच्छयते)। भाण्डानि समाचिनोति(सम्भाण्डयते)। चीवराण्यर्जयति परिधत्ते वा ( संचीवरयते ) । सिद्धशब्दो मङ्गलार्थः ॥

इति पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगममहाराजमहामन्त्रिणा मायणसुतेन माधवसहोदरेण सायणाचार्य्येण विरचितायां माधवीयायां धातुवृत्तौ चुरादयः सम्पूर्णाः ॥

संपूर्णा चेयं माधवीया धातुवृत्तिः ॥

शुभं भवतु ॥

श्रीविश्वनाथो विजयतेतराम्

॥ श्रीगणेशाय नमः ॥

# ॥ अथ माधवीया नामधातुवृत्तिः ॥

यस्या रूपप्रभावेन न ख्यातुमपि किंचन ।
शक्यते वस्तु लोकेषु जयत्येषा सरस्वती ॥ १ ॥
धातुपाठे निविष्टानां धातूनां यः पुरा व्यधात् ।
विवृत्तिं माधवीयाख्यां भाष्यज्ञहृदयङ्गमाम् ॥ २ ॥
तेन सायणपुत्रेण व्याख्या कापि विरच्यते ।
धातूनां प्रत्ययान्तानां गणसूत्रजुषामपि ॥ ३ ॥
तत्र प्रतिपदं शिष्टा गणसूत्रगता इमे ।
गणास्तत्रापि बहवः किं च सूत्राण्यधीयते ॥
आचार्येण पुरा प्रोक्तास्तानादौ विवृणोम्यहम् ॥ ४ ॥
एतावदेव सर्वस्मादर्थये सुमनोजनात् ।
(१)नामंस्त भवता सार्थमन्यथा नु न मे क्षतिः ॥ ५ ॥

'कण्ड्वादिभ्यो यक्' एभ्यो यक् स्वार्थे । एते च धातवः प्रातिपदिकानि च । तत्र धातुत्वं यको धातुविहितत्वेन तन्निमित्तगुणनिषेधार्थेन कित्त्वेनावसीयते । प्रातिपदिकत्वं तु कण्ड्वादीनां केषां चिद्दीर्घान्तपाठात् । कण्डूयते इत्यादिरूपं तु ह्रस्वान्तादपि यकि मन्तूयतीत्यादिवत् "अकृत्सार्वधातुकयोः" इति दीर्घेण भविष्यति । तत्र धात्वधिकारात् धातुभ्यो यक् प्रत्ययः । नन्वेषां प्रातिपदिकत्वमेवास्तु मास्तु दीर्घपाठः प्रत्ययस्य कित्त्वं च । न च "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घविधौ अङ्गं धातुराश्रीयते किं त्वङ्गमात्रमेव । कण्डूरिति च कण्डूयशब्दात्सम्पदादित्वाद्भावे क्वावल्लोपे वलि लोपेन यलोपेन सिद्धं, यलोपेऽल्लोपस्य स्थानिवत्त्वं "न पदान्त" इति निषिद्धं, वलि लोपश्च "लोपो व्योः" इति विधेयस्य पश्चान्निर्देश्यस्य पूर्वनिर्देशादप्रक्तलोपात्पूर्वं भवति । यद्येवं कण्डूशब्दस्य प्रत्ययलक्षणेन यगन्तत्वेन धातुत्वादल्लोपस्य पूर्वविधौ स्थानिवत्त्वादुवङ् स्यात् । नैतदस्ति । सति स्थानिवत्त्वेऽकारस्य तदन्त एव धातुर्नोकारान्तः । एवं तर्हि यण् प्राप्नोति । अस्तु,क्विबाश्रयः "च्छ्वोः शूड्" इत्यूड् भविष्यति । न चाल्लोपस्य स्थानिवत्त्वे वकारस्य क्विप्परत्वाभावः, वकारस्यादिष्टादचः पूर्वत्वात् । न च स्थानिवत्त्वेनानादिष्टादचः पूर्वत्वं, तस्याशास्त्रीयकार्यत्वात् । अत एवादिष्टादचः पूर्वत्वादूठि पुनर्यणभावः । यद्वा [ 'क्वौ लुप्तन्न स्थानिवत्' ] इति अल्लोपस्य स्थानिवत्त्वनिषेधाद्यणभावाप्रसङ्गः, यद्येवं कण्ड्वावित्यादावुवङ् स्यात्, न च "ओः सुपि" इति यणः प्रसङ्गः, संयोगपूर्वत्वात् । अस्त्वत्रोवङ्, क्विपः प्रत्ययलक्षणेनोड् भविष्यति । एवमपि पुनरुवङ् स्यात्, पुनरुवङुवङौ पर्यायेणेति व्यवस्था न स्यात् । किं च कण्डूरित्यादिवन्मन्तूरिति च स्यात्, न च भवतीष्टं मन्तूरित्यादि । अथ "धातोः कर्मण" इत्यतो वाग्रहणमनुवर्तते, तेन यगभावपक्षे उत्पादाद्यपि सिद्धं मन्तुरिति तथापि कण्डूरितिवद्दीर्घोऽपि अल्लोपयलोपयोश्च दुर्वारं मन्तूरित्यादि, तथा यगभावपक्षे मन्तुरित्यादिवत्कण्डुरिति च स्यात्, सुखादिभ्यश्च यकि तस्याधातुविहितत्वेनानार्द्धधातुकत्वादतो लोपाभावात् "अकृत्सार्वधातुकयोः" इति दीर्घे सुखायतीत्यादि स्यात्, न चेष्टं, सुखयतीत्यादेरिष्टत्वात्, इह

( १ ) मावमस्त भवान् स्वार्थमिति पाठेऽपूर्वं स्वारस्यं प्रतिभासते ।

(१)पाठे तु न कदाचन सुखादेरकारान्तता सिध्यति, तस्माद्यथान्यासमेवास्तु । नन्वेवमपि प्रातिपदिकेभ्यः कण्डौ मन्तुरित्यादि यद्यपि सिध्यति तथापि धातुभ्यो यकि कण्डूयशब्दात् क्वावल्लोपयलोपयोरजादौ सुप्यवङि कण्डुवावित्यादि प्राप्नोत्येव, तथा मन्तूयादेर्मन्तूरित्यादि, सुखादेश्च सुगित्यादि हलन्तं, नैष दोषः । यगन्तेभ्यः क्विबेव नोत्पद्यते । उक्तं च भाष्ये नैतेभ्यः क्विब् दृश्यतइति, न तर्हि इदानीमुवङ् भवति कण्डुवाविति, भवति, यदा प्रातिपदिकात्क्विबन्ताद् क्यजन्ताद्वा क्विप्यल्लोपयलोपयोः स्वाद्युत्पत्तिः, यद्येवं कण्ड्वादयः प्रातिपदिकान्येव सन्तु, यथान्यासं दीर्घान्ताश्च तथैव भवन्तु, ककारश्च प्रत्यये मासञ्जि, चाग्रहणं चानुवर्तिष्यते, तत्र ( कण्डूयति । मन्तूयति ) इत्यादयो यकि भवन्ति, कण्डूः कण्डौ मन्तुरित्यादयश्च यगभावपक्षे प्रातिपदिकाद् स्वाद्युत्पत्तौ, यगन्तात्क्विबभावस्येदानीमेवोक्तत्वात्स एव धातुः प्रातिपदिकं च कण्डूशब्दो भवति, तस्मात्स्वाद्युत्पत्तावुवङ् प्रसज्येत, तथाऽत एव यगन्तात्क्विबभावान्मन्त्वादेर्दीर्घत्वं सुखादेर्हलन्तत्वं न भवति, किं कण्ड्वादीनां धातुत्वमाश्रित्य तेभ्यः प्रत्ययविधानेन, सत्यमेतदेवं स्यात् । सुखयतीति न सिध्येत्, प्रातिपदिका ( प्रत्यये तस्यानार्धधातुकत्वेनातो लोपाप्रसङ्गात् ।

अथोदाहरणानि कण्डूय गात्रविघर्षणे । ( कण्डूयति ) कण्डूञो ञित्करणस्य 'अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति' इति समुदायस्य ञित्वादात्मनेपदं भवति । एवमनुबन्धान्तरस्यापि समुदायार्थत्वं द्रष्टव्यम् ॥ १ ॥

मन्तु अपराधे ॥ रोष इत्यपरे । (मन्तूयति) । चन्द्रस्तु ञितं पठित्वा मन्तूयते इतिचाह॥२॥

वल्गु पूजामाधुर्ययोः ॥ ( वल्गूयति ) ॥ ३ ॥

असु मनस् एतावुपतापे ॥ ( असूयति । मनस्यति । असूयुः ) । "मृग्व्वादयश्च" इत्युप्रत्ययः । अत्र वर्धमानहरदत्तगणरत्नमहोदधिकारा आद्यनुसारेणासुशब्दमसिति सान्तं पठित्वा असूञिति दीर्घान्तमेके पठन्तीत्याहुः । तन्मते ( अस्यति असूयते ) इति भवति ॥६॥

लेट् लोट् धौर्त्ये पूर्वभावे स्वप्ने च ॥ (लेट्यति । लोट्यति । लेटिता । लोटिता) । अकारस्यातो लोपे यलोपः । अत्र देवोऽर्थनिर्देशार्थं पूर्वशब्दं प्रतिनिर्देशार्थं मत्वा पूर्वतीति तु यत्स्वप्ने तत्कण्ड्वादिषु दर्शनादित्याह । तदेतन्मोघाया शाकटायनधातुवृत्तौ अर्थनिर्देशरहिते गणपाठे पूर्वस्य पाठाभावादयुक्तमिति पुरुषकार एव दूषितम् । अन्ये तु लेट्लोटौ द्राप्त्यर्थावाहुः । अत्र लेला दीप्तावित्येके पठन्ति, पठ्यते च वातीभूतो लेलायत्सः, यदा वीतार्तिहस्तायेति ॥ ७ ॥

इरस् ईर्ष्यायाम् ॥ अत्र वर्धमानहरदत्तौ इरस् इरज् इरञ् ईर्ष्यायामिति त्रीन्पेठतुः । ।(इरस्यति । इरज्यति । ईर्यति) । अत्र "हलि च" इति दीर्घः । 'इरज्यन्नग्ने प्रथयस्व जन्तुभिः' इत्यत्र भट्टभास्करादिभिः दीप्त्यर्थोऽयमभिहितः । तथा 'इरज्यन्ता वसव्यस्य भूमेः' इत्यत्रैश्वर्यार्थः ईर्यतिर्मार्गावसानार्थोऽपि, उक्तं चेर्यतिरीर्ष्योपाधिरिति स्थितिरिति ॥ ८ ॥

इयस् ऐश्वर्ये ॥ ( इयस्यति )

असुं दुर्गो न पठतीति गणरत्नमहोदधौ ॥ ९ ॥

उषस् प्रभातीभावे ॥ (उषस्यति) रात्रिः ॥ १० ॥

वेद धौर्त्ये स्वप्ने प्रभाते च ॥ ( वेद्यति ) ॥ ११ ॥

मेधा आशुग्रहणे ॥ ( मेध्यति ) ॥ १२ ॥

कुषुभ क्षेपे ॥ (कुषुभ्नाति) । गणरत्नमहोदधौ तु आत्मनोऽन्यकर्तृकनिरसनमर्थमित्युक्तम् ।

मगध परिवेष्टने । नीचदास्ये इत्येके । ( मगध्यति ) ॥

तन्तस् पम्पस् दुःखे ॥ ( तन्तस्यति । पम्पस्यति ) ॥ १४ ॥

---

( १ ) हलन्त पाठे इति पाठान्तरम् ।

सुख दुःख तत्क्रियायाम् ॥ तच्छब्देन सुखदुःखार्थौ परामृश्येते । तेन सुखदुःखरूपायां क्रियायामित्यर्थो भवति, ( सुखयति । दुःखयति ) सुखमनुभवति दुःखमनुभवतीत्यर्थः ॥ १६ ॥

सपर पूजायाम् ॥ अकारान्तोऽयं महोदधौ, ( सपर्यति ) ॥ १७ ॥

अरर आराकर्मणि ॥ अरा प्रतोदा । ( अरर्यति ) ॥ १८ ॥

भिषज् चिकित्सायाम् ॥ ( भिषज्यति । भिषज्यते ) ॥ १९ ॥

भिष्णज् उपसेवायाम् ॥ ( भिष्णज्यति ) ॥ २० ॥

इषुध शरधारणे ॥ ( इषुध्यति ) ॥ २१ ॥

चरण गतौ ॥ ( चरण्यति ) । वरण इति भोजः । उक्तं च तत्र । तयोरुदाहरणं काव्ये—'वरणाश्चारण्यैर्वेलाम्' इति ॥ २२ ॥

चुरण चौर्ये ॥ ( चुरण्यति ) ॥ २३ ॥

तुरण त्वरायाम् ॥ ( तुरण्यति ) ॥ २४ ॥

भुरण धारणपोषणयोः ॥ पणधारणयोरित्यन्ये । ( भुरण्यति ) ॥ २५ ॥

गद्गद वाक्स्खलने ॥ ( गद्गद्यति ) ॥ २६ ॥

एला केला खेला विलासे ॥ ( एलायति । केलायति खेलायति ) । अचैलास्थाने इलेत्यपरे पठन्ति । ( इलायति ) ॥ २९ ॥

(१) लेखा स्खलने च ॥ अकारान्तइत्यन्ये । तत्रातो लोपः ( लेख्यति ) ॥ ३० ॥

लिट् अल्पार्थे कुत्सायां च ॥ ( लिट्यति ) ॥ ३१ ॥

लाट् जीवने ॥ ( लाट्यति ) ॥ ३२ ॥

हृणीङ् रोषणे लज्जायां च ॥ ( हृणीयते ) ॥ ३३ ॥

महीङ् पूजायाम् ॥ अत्र पूजा पूज्यमानकर्तृका, तेनायमकर्मकः, महीयते पूजामधिगच्छतीत्यर्थः ॥ ३४ ॥

रेखा श्लाघासादनयोः ॥ आसादनं प्राप्तिः प्रापणा वा, ( रेखायति । श्लाघामनुभवति, अनुभावयति वेत्यर्थः ॥ ३५ ॥

द्रवस् परितापपरिचरणयोः । ( द्रवस्यति ) ॥ ३६ ॥

तिरस् अन्तर्द्धौ ॥ ( तिरस्यति ) ॥ ३७ ॥

अगद नीरोगत्वे ॥ अमुं भोजः नेच्छतीति गणरत्नमहोदधौ, लेखायतिरेखायतिवदर्थः ॥ ३८ ॥

उरस् बलार्थः ॥ उरस्यति ) । बलवान्भवतीत्यर्थः ॥ ३९ ॥

तरण गतौ ॥ ( तरण्यति ) ॥ ४० ॥

पयस् प्रसृतौ ॥ ( पयस्यति ) ॥ ४१ ॥

सम्भूयस् प्रभूतभावे ॥ ( सम्भूयस्यति ) । अत्र गणरत्नमहोदधौ अम्बर सम्बर सम्भर इति वामन इति, अम्बर्यति, सम्बर्यति, अत्र गणरत्नमहोदधावेव लेट्लोटाविति पठित्वा मतान्तरेण दान्तत्वमुक्त्वा लेट्यति लोट्यतीत्युक्तम् । अस्याकृतिगणत्वाद्रैधनादिभ्यो रायति धनायतीति चोक्तं यदा कण्ड्वादिभ्यः सन्नुत्पद्यते तदा कण्ड्वादीनां तृतीयस्यैकाचो द्वे भवत इति कण्डूयियिषतीत्यादि भवति ॥ ४२ ॥

## अथ सौत्रधातवः प्रक्रियन्ते ॥

"ऋतेरीयङ्" । अयं स्वार्थे, ऋतिर्घृणायां, सा चेह घृणा जुगुप्साकृपयोरित्युक्त्वापि ऋतीयाशब्दस्य निघण्टुषु निरूढा जुगुप्सैवेति व्याख्यातारः । अत्र प्रत्ययस्य कित्त्वेनापि

( १ ) खेला सत्वचलने च इति पाठान्तरम् ॥

गुणाभावस्य सिद्धौ ङित्करणमात्मनेपदार्थमपि, (ऋतीयते । ऋतीयेते । ऋतीयांचक्रे) इत्यादि, ङिल्लकारेषु अजादित्वात् "आटश्च" इति वृद्धौ (आर्तीयत । आर्तियिष्ट । आर्तीयिषत) इति भवति, यदायमवर्णान्तादुपसर्गात्परो भवति तदा "उपसर्गादृति धातौ" इति वृद्धौ (प्रार्तीयते उपार्त्तीयत) इत्यादि भवति। अत्रोपसर्गग्रहणाद्धाताविति सिद्धे 'उपसर्गादृति' इत्येव वक्तव्ये पुनर्धातुग्रहणं योगभेदेनाधिकविधानार्थमिति "ऋत्यक" इति पाक्षिकः प्रकृतिवद्भावोऽत्र बोध्यते, उपसर्गग्रहणं प्राद्युपलक्षणमित्येतत्तु यत्र "उपसर्गाद्ध्वनः" इत्यादौ उपसर्गत्वं न सम्भवति तत्रैवेतीह तु सम्भवतीति हरदत्तादयः। तेनागता ऋतीयका असुं देशम् आर्तीयको देश इत्यादौ 'यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा' इत्याङादीनां गम्यादिक्रियापेक्षयोपसर्गत्वं न तु ऋतीयक्रियापेक्षयेति तां प्रत्युपसर्गत्वाभावात् "आद्गुणः" इति गुणः "ऋत्यक" इति शाकल्यप्रकृतिभावश्च भवतः। यदायमीयङ् "आयादय आर्धधातुके वा" इति वचनादार्धधातुके न भवति तदा (आनर्त, अर्तिता, अर्तिष्यति, आर्तीत्, आर्तिष्यत्, अर्तित्वा, ऋतित्वा) इत्यादि भवति, अत्र "वञ्चिलुञ्च्यृतश्च" इति सेटः क्त्वविकल्पनात् पक्षे गुणो न, "आयादय आर्धधातुके वा" इत्यत्रार्धधातुकेत्यस्य विषयसप्तमीत्वादार्धधातुकेषु विषयभूतेषु आयादय उत्पद्यन्तइत्यर्थो न तु भूता निवर्तन्त इति, अन्यथा ऋतीयशब्दाल्लिटि प्रत्ययान्तत्वेनामि ईयप्रत्ययस्य निवृत्तावर्तीचकारेति स्यात् आनर्तेति च न स्यात्। न चार्तितासि अर्तिष्यति ऋत्यात् आर्तीदित्यादौ परस्मैपदं न स्यात्, तथा तास्यादेरार्धधातुकत्वेयङो निवृत्तेर्निमित्तत्वात्तदपेक्षो गुणो "न धातुलोप आर्धधातुके" इति निषेधान्न स्यात्, अनेनाभिप्रायेण गुणाभावः, आर्तिष्ट ऋतिषीष्टेत्यादि स्यात्, ईयङन्तादुत्पन्नेषु तिङ्क्षु तदाश्रयेण पश्चादुत्पन्नेषु विकरणेषु आर्धधातुकेष्वीयङो निवृत्तिः क्रियते, ईयङो ङित्त्वात्तदन्ताच्चोत्पद्यमानास्तिङ आत्मनेपदान्येव, तथा क्तिनि ऋतिरिति न स्यात्, अप्रत्ययादित्यकारईयङो निवृत्तावृत्तेति च स्यात्, एवमादीनि दूषणानि। अत्र क्वचिद्वृत्तिकारश्छङित्येव सिद्धे ऋतेरीयङ्वचनं ज्ञापकं धातुविहितानां प्रत्ययानामायनादयो न भवन्तीति। तेन शमेः खः, (शङ्कुः) कमेष्ठः (कण्ठः) इति, अत्रेनिकादेशौ न भवतः। ननु ऋतेश्छङित्युच्यमाने छङ आर्धधातुकत्वेन परत्वादिडागमे कृते छकारस्य प्रत्ययादित्वं विप्रतिपन्नमिति "आयनेयि" इत्यादिना विधीयमानः कथमीयादेशः सिध्यति, नैष दोषः। यदायनादिषूपदेशिवद्वचनस्य चोदितत्वादन्तरङ्गत्वादिटः पूर्वमीयादेशो भविष्यति। अत्र हरदत्तः—"द्विवचनविभज्योपपदे" इत्यत्र तरप्छसुनाविति वक्तव्ये इयसुन्वचनादधातुविहितानामपि प्रत्ययानामायनादयो न स्युः, वचनसामर्थ्याच्चेदुभयेषामपीति ज्ञापकं भङ्क्त्वा ठादौ बाहुलकादिकार्यभावमाह ॥ १ ॥

"स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च"। एभ्यः कर्तृवाचिनि सार्वधातुके श्नुर्भवति, चकाराच्छ्ना च, तत्र पञ्चमो धातुषु पठितो व्याख्यातश्च, प्रथमतृतीयौ स्तम्भार्थौ, द्वितीयो निष्कोषणार्थः। चतुर्थो धारणार्थः, उदित्त्वं क्त्वायामिड्विकल्पार्थम्, अत एव श्नाव्यतिरिक्तविषयाश्चैते भवन्ति (स्तभ्नोति, स्तभ्नुतः, स्तुभ्नुवन्ति, स्तभ्नोषि, स्तभ्नोमि, स्तभ्नुवः, स्तभ्नुमः) "अनिदिताम्" इति नलोपः, वस्नसोः "लोपश्चास्यान्यतरस्याम्" इत्युकारलोपः संयोगपूर्वत्वान्न भवन्ति, (स्तभ्नाति, स्तभ्नीतः, स्तभ्नन्ति, स्तभ्नासि, स्तभ्नामि) हलादौ क्ङिति "ईहल्यघोः" इतीत्वम्, अजादौ तु "श्नाभ्यस्तयोः" इत्यालोपः (तस्तम्भ, तस्तम्भतुः, तस्तम्भुः, तस्तम्भिथ, तस्तम्भ, तस्तम्भिव, तस्तम्भिम, स्तम्भिता, स्तम्भिष्यति, स्तभ्नोतु, स्तभ्नुतात्, स्तभ्नुताम्, स्तभ्नुवन्तु, स्तभ्नुहि, स्तभ्नवानि) हेः "उतश्च" इति लोपः संयोगपूर्वत्वान्न भवति, (स्तभ्नातु, स्तभ्नीतात्, स्तभ्नीताम्, स्तभ्नन्तु, स्तभान) हौ "हलः श्नः शानज्झौ" इति शानजादेशे "अतो हेः" इति हेर्लुक्, (अस्तभ्नोत्, अस्तभ्नुताम्, अस्तभ्नुवन्, अस्तभ्नाः, अस्तभ्नवम्, अस्तभ्नात्, अस्तभ्नीताम्, अस्तभ्नन्, स्तभ्नुयात्,

स्तभ्नुयाताम्, स्तभ्नुयुः, स्तभ्नुयाः, स्तभ्नुयां, स्तभ्नीयात्, स्तभ्नीयातां, स्तभ्यात्, स्तभ्यास्ताम्, स्तभ्यासुः) । यासुटः कित्त्वादनुनासिकलोपः । (अस्तभत्, अस्तभताम्, अस्तभन्) "जॄस्तम्भु" इति परस्मैपदे च्लेर्वाङि "अनिदिताम्" इति नलोपः । अन्यदा सिचि ( अस्तम्भीत्" इत्यादि । ( अस्तम्भिष्यत् । तिस्तम्भिषति, तास्तभ्यते, तास्तम्भीति, तास्तम्भि, तास्तम्भति ) इत्यादि । ( स्तम्भयति । अतस्तम्भत्, अत्यष्टभ्नोत्, प्रत्यष्टभ्नोत्, प्रतिष्टभ्नाति, प्रत्यतष्टम्भत् ) इत्यादौ स्तम्भेः "प्राक् सितादड्व्यवायेऽपि" इति इणन्तादुपसर्गात्परत्वेन षत्वं, तत्राप्रतेरिति नानुवर्तते ( प्रतितिष्टम्भिषति ) "स्थादिष्वभ्यासेन" इति षत्वम् । ( अवष्टभ्नाति ) अवलम्बतइत्यर्थः । ( अवष्टब्धा सेना ) । आसन्नेत्यर्थः । अवाच्चालम्बनाविदूर्ययोः" इति षत्वं, प्रत्यवतस्तम्भेदित्यत्र "स्तम्भुसिवुसहाम्" इति निषेधात् "स्तम्भेः" इति षत्वं न भवति, सन्वदित्वं लघुपरत्वाभावान्न भवति, दीर्घत्वं त्वलघुत्वादपि न भवति । ( स्तम्भित्वा, स्तब्ध्वा ) उदित्त्वादिड्विकल्पः, इटि "न क्त्वा सेट्" इति कित्त्वप्रतिषेधान्नानुषङ्गलोपः । ( स्तब्धः ) । "यस्य विभाषा" इत्यनिट्त्वं, ( प्रतिष्टब्धः, निष्टब्धः)"प्रतिष्टब्धनिष्टब्धौ च" इति षत्वं, "स्तम्भेः" इति सानुषङ्गनिर्देशादयमेव स्तभिः सौत्रोऽत्र गृह्यते न त्वत्र भौवादिकः स्तभिनर्भाति प्रातिस्तम्भादयः प्रयोगास्तस्य द्रष्टव्याः । ( उत्तम्भः ) । "तितुत्र" इतीण्निषेधः, "उदः स्थास्तम्भोः पूर्वस्य" इति पूर्वसवर्णस्तकारः, एवमुत्तभ्नोतीत्यादावपि, एवं (स्तुभ्नोति, स्तुभ्नाति, स्कभ्नोति, स्कुभ्नाति) इत्यादि स्तभ्नोतिवत् । ( विष्कभ्नोति, विस्कभ्नाति, विष्कम्भ ) इत्यादौ "वेः स्कभ्नातेर्नित्यम्" इति षत्वं, श्नानिर्देशः स्कम्भतेर्निवृत्त्यर्थं इति विष्कम्भ इत्यादावपि भवति ॥ ५ ॥

सातिः सुखे ॥ अयं हेतुमण्यन्त इति जिनेन्द्रहरदत्तौ, तन्मते सतिरिति प्रकृत्या भवितव्यं, सातिः सौत्रो धातुरिति वृत्तिबोधिन्यासयोः, ( सातयति ) इत्यादि । (सातयः) । "अनुपसर्गाल्लिम्प" इत्यादिना शे शपि गुणायादेशौ ॥ ६ ॥

जु वेगितायां गतौ ॥ ( जवति, जोता ) इत्यादि, स्वरान्तत्वादनिट्त्वं, ( जुजूषति । अजीजवत् ) इत्यत्र णेश्रङि णौ कृतस्य स्थानिवत्त्वेनाभ्यासस्योवर्णान्तत्वात्" "ओः पुयणज्यि" इतीत्वे "दीर्घो लघोः" इति दीर्घः । (जवनः) । "जुचङ्क्रम्य" इति युच् (प्रजवी) । "प्रजोः" इति इनिः । ( जूः । जुवौ ) "भ्राजभास" इति क्विप् ताच्छीलिकः । तत्रैव सूत्रे जू इति दीर्घपाठाश्रयणात् क्विप्सन्नियोगेन दीर्घ इत्येके । अन्येतूत्तरसूत्रे दृशिग्रहणस्येहाप्यभिसम्बन्धाद् दीर्घ इत्याहुः । ( जूतिः ) । "ऊतियूतिजूति" इति क्तिनि दीर्घान्तोदात्तत्वे निपात्येते । (जवः) । "ॠदोरप्" इत्यप् । जवसवौ छन्दसीत्यज्विधानं तत्रान्तोदात्तार्थं न तु भाषायामेतद्रूपनिवृत्त्यर्थं ( विजावको ) नाम देशः, संज्ञायां ण्वुल् । ( वैजावकः ) "कच्छादिभ्यश्च" इत्यण् शैषिकः । "कोपधादण्" इत्येवाणि सिद्धे कच्छादिष्वस्य पाठो यदा भवादिर्मनुष्यस्तत्स्थो वा भवति तदा वैजायक इति, कच्छाद्यधिकारेण विधीयमानो मनुष्यतत्स्थयोर्वुञमुष्मादपि यथा स्यादिति ॥ ७ ॥

## अथ नामप्रत्ययाः धातवः प्रदर्श्यन्ते ॥

"सुप आत्मनः क्यच्" । कर्मण इच्छायां वेति वर्तते, इहात्मशब्दः परव्यावृत्तिवचनः स्वशब्दपर्यायः, न चेतनद्रव्यवचनः, तस्मिन्हि किमयं कर्तृषष्ठ्यन्तः सन् इच्छया सम्बध्यते उत शेषषष्ठ्यन्तः सुबन्तेन, तत्राद्यपक्षे इच्छायाश्चेतनकर्तृत्वाव्यभिचारादानर्थक्यमात्मशब्दस्य किं च राज्ञः पुत्रमिच्छत्यमात्य इत्यादौ परेच्छायामपि चेतनस्यैव कर्तृत्वात्क्यच् स्यात् । यत्तु भाष्ये इहासामर्थ्यात्प्रत्ययाभाववचनं तत्प्रौढिवादमात्रम्, इष्यमाणवस्तुष्वत एव नित्यमन्यदपेक्षते इति नैतावतास्य सामर्थ्यम्, अत एव वृत्तावात्मग्रहणास्येदमेव प्रत्युदाहृतं, सुबन्तसम्बन्धपक्षेऽपीह राजादिना चेतनेनैव पुत्रादेः सम्बन्धात् क्यच् प्रसज्येतैव, आनर्थक्यं चाविशिष्टमेवात्मग्रहणस्य, अचेतनस्य व्यावर्त्यस्याभावात् । अत्र हरदत्तः । ( वृक्षस्य फल-

मिच्छति, खट्वायाः पादमिच्छति) इत्यादौ यत्राचेतनार्थं किञ्चिदिष्यते तद्व्यावर्त्यमिति चेन्न, तत्रापि चेतनस्यैव परं शेषितत्वात्, सर्वमेव हि भोग्यं चेतनानामेव शेषभूतं, खट्वायाः पादमिच्छतीत्यत्रापि यस्य तत् खट्वादिकमुपभोग्यं तदर्थमेव तदिष्यते, खट्वादिकं तुद्वारमात्रम्, अतः परव्यावृत्तिवचनमात्र एवात्मशब्द इति, तत्राप्यसौ यदि कर्तृषष्ठ्यन्तः सन्निच्छया सम्बध्येत तद्धैषितारमन्तरेणेच्छाया अभावात् अनर्थकः स्यात्, तस्मात्स्वशब्दपर्यायः शेषषष्ठ्यन्तः सुबन्तेन सम्बध्यते, तेनायमर्थः सूत्रस्य । इषेः सन्निधानात्तत्कर्मण एषितुरेवात्मनः सम्बन्धिनः सुबन्तादिच्छायामर्थे वा क्यजिति । एवं चात्मनः पुत्रं परस्य दासमिच्छतीत्यादौ वस्तुतः सुबन्तस्यात्मना सम्बन्धेऽपि परार्थमिष्यमाणत्वादीपिकर्त्रवच्छेदेनात्मना सम्बन्धाभावान्न क्यचः प्रसङ्गः । ककारो "नः क्ये" इति सामान्यग्रहणार्थः । चकारस्तद्विघातार्थः । स्वरस्तु प्रत्ययस्वरेण धातुस्वरेण वा सिध्यति ॥

अथोदाहरणानि ॥

पुत्रमात्मन इच्छति ( पुत्रीयति ) । अत्र 'अकृतव्यूहाः पाणिनीयाः,' 'कृतमपि शास्त्रं निवर्तयन्ति' इति वा "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते" इति वा सन्धिकार्यरहितायाः द्वितीयस्याः "सुपो धातुप्रातिपदिकयोः" इति लुकि "क्यचि च" इत्यवर्णस्येत्वे सनाद्यन्तत्वेन धातुत्वाल्लडादि । ( अश्वस्यति, वृषस्यति, क्षीरस्यति लवणस्यति ) "अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि" इत्यसुगागमः । अत्रात्मप्रीतावित्यपनीय "अश्ववृषयोर्मैथुनेच्छायां" "क्षीरलवणयोर्लालसायाम्" इत्यर्थान्तरमुक्तं, तेनाद्ययोरुदाहरणयोरश्ववृषौ मैथुनायेच्छत इत्यर्थः । अन्ये तु परित्यक्तप्रकृत्यर्थान्मैथुनेच्छैवार्थ इत्याहुः । तथा च भट्टिः । इति रामो वृषस्यन्तीमिति । निघण्टुश्च वृषस्यन्ती तु कामुकीति । इतरयोरपि तृष्णातिरेकोऽन्यवजिहीर्षातिरेको लालसा, तेन क्षीरलवणेच्छायां लालसारूपायामित्यर्थलाभात् क्षीरलवणे अतिशयेनाभ्यवहर्तुमिच्छतीत्यर्थौ भवति । अत्र क्यच्प्रकृतीनां प्रत्ययलक्षणेन यत्पदत्वं प्राप्तं "नः क्ये" इति नियमेन नान्तविषयमिति प्रकृत्यसुगकारयोः सवर्णदीर्घत्वं बाधित्वा "अतो गुणे" इति पररूपं भवति । अकारोच्चारणफलं तु पूर्वसूत्रोदाहरणे ब्राह्मणास इत्यादौ । तथा [ सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः ] । इत्यनकारान्तादसुकि दध्यस्यतीत्यादौ च । अपरे त्वाहुः । सुग्वक्तव्य इति ( दधिस्यति मधुस्यति, ) "अश्वक्षीर" इत्यत्र भाष्ये द्वाविमावागमौ प्रस्तुत्य ( दध्यस्यति । मध्वस्यति । दधिस्यति । मधुस्यति ) इत्येवमर्थमभिधानात् दधिमधुशब्दावेवागमिनावित्येके । अन्ये तु सर्वप्रातिपदिकेभ्य इत्येकइति सर्वग्रहणात् बहुवचननिर्देशाच्च सर्वत्र भवतः । भाष्यं तूदाहरणमात्रमित्याहुः । अत्र मते दध्यस्यति मध्वस्यतीत्येवंशब्दः स्वार्थं न पुष्यति । अशनोदकधनेभ्यः क्यचि "अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु" इति क्रमेणैतेष्वर्थेषु द्योत्येष्वाद्यन्तयोरीत्वापवाद आत्वम्, उदकस्योदादेशो निपात्यते, तेन (अशनायति, उदन्यति, धनायति,) बुभुक्षाप्रभृतीनां तदात्वे भोक्तुकामोऽशनमिच्छति, पातुकाम उदकमिच्छति । सत्यपि धने भूयो धनमिच्छतीति क्रमेणार्थः । यस्त्वौत्तरकालिकमशनं, स्नानार्थमुदकं, दरिद्रः सन् धनमिच्छति तत्राशनीयति, उदकीयति, धनीयतीति भवति । अत्रान्येऽशनायतीत्यादीनां प्रकृत्यर्थमनपेक्ष्य केवलं बुभुक्षादीनेवार्थं मन्यन्ते । अत्र भारविरमुमेव पक्षं प्रतिपेदे, तदाह 'किमुधन धनायितुम्'इति, निघण्टुश्च 'उदन्या तु पिपासा तृड्'इति । गार्ग्यमिच्छति (गार्गीयति) । अत्र "क्यच्व्योश्च" इत्यपत्यप्रत्ययकारस्य हलुत्तरस्य लोपे "क्यचि च" इतीत्वम् । ( उपार्षभीयति । उपर्षभीयति । उपाल्कारीयति, उपल्कारीयति, ) अत्र "वा सुप्यापिशलेः" इति सुबन्तावयवऋकारादिधातुपरत्वात् पूर्वपरयोरेका वृद्धिर्वा भवति । ऋकारलकारयोः सावर्ण्यादियम् ऌकारादावपि भवति, तत्र "उरण् रपरः" इतिप्रत्याहारग्रहणात् लपरत्वम्, वाग्रहणं गुणस्य प्राप्त्यर्थमिति वृद्ध्यभावे स भवति, नन्वेतद्वा ग्रहणं यथा प्राप्ताभ्यनुज्ञानार्थं स्यात्, "ऋत्यक" इति प्रकृति-

भावः पक्षे कस्मान्न भवति। उच्यते। अत्राप्यनुवृत्तस्य धातुग्रहणस्य"उपसर्गादृति"इत्यत्रैवा(१)धिकविधानार्थत्वादिदं च धातुग्रहणस्य प्रकृतिभावबाधनार्थत्वमृतीयतावुपपादितम्। अत्रैव "वा सुपि"इत्यत्र वृत्तौ वाग्रहणस्य प्रयोजनं दर्शितम्। उपगता ऋषभीयका अमुं देशमित्यत्रोपर्षभीयको देश इति गुणप्रकृतिभावौ न भवतः, वृद्धिस्तु पूर्वसूत्रवत् "वा सुपि" इत्यत्रानुवृत्तस्योपसर्गग्रहणस्य प्रायुपलक्षणार्थत्वाभावान्न भवति। उपलक्षकत्वाभावश्च ऋतीयतावुक्तः। ऋषभस्य समीपमुपर्षभं, तदिच्छति उपर्षभीयतीत्यत्र संग्रामयतीतिरूपस्य संग्रामं करोतीति संग्रामशब्दात्तत्करोति णिचा सिद्धावपि चुरादौ संग्रामयुद्धइतिपाठात्सम उपसर्गात् पूर्वमडाद्यर्थादन्यत्र सोपर्गात् संघाताद्धातुसंज्ञानिमित्ते प्रत्यये चिकीर्षिते उपसर्गाः पृथक् क्रियन्त इति ज्ञापनात् सोपसर्गात् संघातात् धातुसंज्ञानिमित्तः प्रत्ययो यदि भवति संग्रामयतेरेवेति नियमाद्वा पृथक्कृतोपसर्गादेव भवतीतीहाप्यृषभशब्दादेव क्यचा भवितव्यम्, सुपस्तूपर्षभशब्दाद्विधानात् प्रत्ययग्रहणपरिभाषया तस्यैव सुबन्तत्वं न तु तदन्तावयवस्य ऋषभशब्दस्यार्पात्यृषभीयशब्दः सुबन्तावयवो धातुर्न भवतीति तत्परत्वाभावादनुपसर्गत्वाच्च "वा सुपि" इति वृद्धेरप्रसङ्गः। अत एवोपसर्गस्य पृथक्करादुपार्षभीयतीत्यत्र ऋषभीयस्यैवाङ्गत्वात्तस्यैवाड् भवति, तस्मादेव क्त्वायामुपेन प्रादिसमासेऽप्युपर्षभीय्येति भवति। तथा तस्यैव धातुत्वात् षशब्दस्य द्विर्वचने ( उपर्षिषभीयिषति ) इति। नन्वयं सङ्ग्रामशब्दः उपसर्गसदृशावयवोऽस्ति, कथमुक्तस्यार्थस्य प्रमाणं स्यादिति। उच्यते। पदान्तस्येतिकृतपरसवर्णं पठ्यते। अत्र हरदत्तः। संग्रामशब्दोऽनुदात्तेत्स्वार्थः, न च तन्मात्रार्थत्वे ग्रामयुद्धइति शक्यते पठितुम्, अध्यैष्टेत्यादौ आट इव मध्येऽटः प्रसङ्गादिति ज्ञापकमभाङ्क्षीत्। तदास्यानुदात्तेत्त्वमपाणिनीयमिति नोदेति। अत एव भ्वादौ कैयटे संग्रामयतिरनुदात्तेदूबोद्धव्य इत्युक्तम्। अयं चानुदात्तेत्संग्रामयतिरिष्यत इतिभाष्ये ज्ञापकत्वमेवोक्तम्। ऋकारमिच्छति ( ऋकारीयति, उपर्कारीयति ) इत्यत्र "वा सुपि" इति वृद्धिः ऋतीति तपरकरणान्न भवति। अत एव शाकलः प्रकृतिभावोऽपि। (मालीयति)। अत्र "अकृतव्यूहाः पाणिनीयाः" इति माल आ अम् य स्थिते सुब्लुक्यन्तरङ्गत्वेन पूर्वमेकादेशे परमपीत्वं पश्चाद्भवति। उक्तं च भाष्ये। (२)असुप्कादेश इत्वोत्वाभ्यां भवति अन्तरङ्गतर इति। ननु पूर्वमपीत्वे "यस्य" इति लोपेनेष्टसिद्धिरिति चेत् न, तस्मिन्नीत्वस्यासिद्धत्वात्। उस्रामैच्छत् ( औस्रीयत्। औङ्कारीयत् )। आ ऊढः औढः। ( औढीयत् )। अत्र "उस्यपदान्तात्" "ओमाङोश्च" "इतिपररूपम्" "आटश्च" इति पुनर्वृद्धिविधानार्थेन चशब्देन बाध्यते, तथा च वार्तिकम्, [ उस्योमाङ्क्ष्वाटः प्रतिषेधः ] इति, उसि ओमाङोश्च परयोराटः पररूपं नेत्यर्थः। औढीयदित्यत्राङ ओकारेण सहैकादेशे उपसर्गरूपत्वं पृथङ्न प्रतीयतइति सोपसर्गात्संग्रामयतेरित्यस्याप्रवृत्तेरोकारात्पूर्वमाटि तस्यान्तवद्भावेन लब्धाङ्व्यपदेशस्यौकारस्य "आटश्च" "ओमाङोश्च" इतिप्राप्तेन पररूपेण वृद्धेर्बाधः स्यादिति वार्तिके च आङ्ग्रहणम्, एवम् आ इतः एतः ऐतीयदित्यपि द्रष्टव्यम्। आ इत एतः ( एतीयति ) प्र एतीयति ( प्रेतीयति ) इत्यत्र प्राप्तमवर्णान्तोपसर्गविषयमेङि पररूपं बाधित्वा प्राप्ताम् "एत्येधति" इति वृद्धिम् "ओमाङोश्च" इति पररूपं परत्वाद्बाधते, आ ऋश्या अर्श्या, आगता ऋस्येति प्रादिसमासः। "आद्गुणः" इत्यनेनाङृकारयोर्गुणः, तमिच्छति ( अर्श्यीयति )। ( आर्श्यीयत् )। अत्र गुणस्यान्तवद्भावेनाङ "ओमाङोश्च" इति प्राप्तं पररूपं परत्वाद्बाधित्वा प्राप्तः सवर्णदीर्घश्चकारेण पुनः पररूपविधानात् बाध्यते। ( दधीयति। मधूयति )। "अकृत्सार्वधातुकयोः" इति दीर्घः। ( कुमारीयति, वधूयति )। ऋरमिच्छति। ( रीयति )। ऋकारस्य "रीङ् ऋतः" इति रीङादेशः। ऋकारलृकारयोः सा-

(१) अनुवृत्तिबाधनार्थत्वादिति प्रचुरः पाठः।

(२) यापोरेकादेश इति पाठान्तरम्।

चर्ण्येनालमिच्छतीत्यत्रापीदमेव रूपम्। अत्र तपरकरणादृकारस्य राङभावात् ऋतीयतीति भवति। ऋत इत्वम् ऋकारान्तस्य धातोरितीह न प्रसजति, हेशब्दमिच्छति (हेयति,) गामिच्छति (गव्यति। गव्यिता) इत्यादौ अतो लोपे "क्यस्य विभाषा" इति हल उत्तरस्य क्यप्रत्ययकारस्यार्धधातुके विधीयमानो लोपः सन्निपातपरिभाषया न भवति। (अगव्यीत्) इत्यत्र "वदव्रज" इत्यत्र हल्ग्रहणस्य हल्समुदायस्य प्रत्ययार्थत्वेऽपि अल्लोपस्य स्थानिवत्त्वेनाङ्गस्य हलन्तत्वाभावात् न वृद्धिः। (रैयति। नाव्यति, नाव्यिता,) गव्यतिवद्वान्तादेशो यलोपाभावश्च। (स्वलिह्यति, स्वलिह्यिता, स्वलिहिता,) अल्लोपस्य पूर्वविधौ स्थानिवत्त्वात् "न धातुलोपे" इति वा लघूपधगुणाभावः। (अस्वलिहीत्। अस्वलिहिष्यत्) अत्राल्लोपस्य स्थानिवत्त्वाद्धलन्तलक्षणायाः वृद्धेरभावः। अत्र हो ढो न भवति "नः क्ये" इति नान्तस्यैव पदत्वाद्धकारस्य पदान्तत्वाभावात्। अत एव गोदुह्यतीत्यत्र "दादेः" इति घत्वं, (मित्रद्रुह्यति) इत्यादौ "वा द्रुह" इति तद्विकल्पः, (उपानह्यति) इत्यत्र "नहो ध" इति धत्वम्। (अनुडुह्यति) इत्यत्र "वसुस्रंसु" इति दत्वं न भवति। पुरमिच्छति (पुर्यति। दिव्यति।) "हलि च" इति दीर्घो रेफवकारान्तस्य धातोर्हल्परत्वे इतीह न भवति। (चतुर्यति) अत्रापि धातुर्न रेफान्त इति दीर्घो न भवति, गिरमिच्छति (गीर्यति,) अत्र गिर ऋत इत्वे रेफान्तो धातुर्न हल्पर इति (गीर्यिता, गिरिता,) "क्यस्य विभाषा" इति यलोपपक्षे हल्परत्वाभावान्न दीर्घः, "र्वोरुपधाया" इति रेफवकारान्तस्य धातोः पदस्य विधीयमानेऽपि न भवति, "नः क्ये" इति नियमेन पदत्वाभावात्, स्वरिच्छतीत्यादावव्ययेभ्यः क्यचः [मान्ताव्ययेभ्यः प्रतिषेधः] इति क्यचः प्रतिषेधाद्वाक्यमेव। यत्तत्र गोसमानाक्षरनान्तादित्येके इति क्यचः प्रकृतिपरिगणनं तद्वाच्यतीत्याद्यसिद्धिप्रसङ्गात् न स्थितः पक्ष इति कैयटादौ स्थितम्। तमिच्छति (तद्यति। यद्यति)। इदमिच्छतीत्यत्र क्यचि मान्ताव्ययप्रतिषेधाद्वाक्यमेव, इह मान्तग्रहणेन प्रातिपदिकस्य विशेषणादिमाविच्छति काविच्छतीत्यादावपि वाक्यमेव भण्यते। प्राणितीति (प्राण्, प्राण्यति। राजीयति)। "नः क्ये" इति पदत्वात् "न लोपः प्रातिपदिक" इति नलोपे "क्यचि च" इतीत्वं, न च नलोपस्यासिद्धत्वं, "नलोपः सुप्स्वरसञ्ज्ञातुग्विधिषु कृति" इति नियमात्। (अहर्यति) "रोः सुपि" इति अह्नः रुः, पदस्य सुप्परत्वाभावात् "अहन्" इति रुत्वापवादो रेफः, नन्वसौ न लोपे पूर्वत्रासिद्धः स्यात् अस्ति वचनस्यावकाशः, हे अहरित्यत्र "स्वमोर्नपुंसकात्" इति सोर्लुका लुप्तत्वे तस्य नलोपश्च "न ङिसंबुद्ध्योः" इति निषिध्यते। नैष दोषः। अहन्नित्यत्राह्न इति स्थानेन शब्दे निर्देश्येऽहन्निति प्रथमान्तेन निर्देशादहन्नित्यावृत्त्याऽहन्नेव न तु लुप्तनकार इति स्थितं, स एवाहन्शब्द इहापि रेफविधावनुवर्तत इति। उज्झेः क्विवन्तादनुकरणाद्वा (उज्झयति। ककुद्यति। अर्घ्यति। परिव्रज्यति। विलम्ब्यति। अङ्क्यति। गृह्यति)। अर्घादिभ्यस्तत्करोतीति णौ लोपे णेश्च क्वावुदाहरणानि, परिवृढेर्णाविष्ठवदित्यतिदेशादृकारस्य "रऋतो हलादेः" इति रभावश्च, अतोऽन्यत्राङ्गादेर्धातोरनुकरणात्क्विवन्ताद्वा क्यच् द्रष्टव्यः, युध्यति भिषज्यतिप्रभृतयो गताः, प्रक्रियासाम्यादुदाहरणान्तेन प्रदर्शिताः, त्वामिच्छति, मामिच्छति, (त्वद्यति, मद्यति,) "प्रत्ययोत्तरपदयोश्च" इत्येकार्थवृत्तयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमावादेशौ भवतः। "त्वमावेकवचने" इत्यत्र एकस्य वचनमेकवचनं न तु पारिभाषिकमिति स्थिते तत्रापि तस्यैवानुवर्तनादेकार्थानुवृत्तयोरित्युक्तं, तेन युष्मदस्मच्छब्दौ यदा एकार्थे समासस्तु द्विबह्वर्थस्तदापि त्वमौ भवतः, यथा अतित्वामिच्छति अतिमामिच्छति (अतित्वद्यति, अतिमद्यति,) विग्रहवाक्ये अतित्वामतिमामितिरूपं, युष्मदस्मदोर्द्वितीयाद्विवचने तस्य "ङेप्रथमयोः" इत्यमि युष्मदस्मदोरेकार्थत्वात् "त्वमावेकवचने" इति मपर्यन्तस्य त्वमयोर्दकारस्य शेषेलोपापवादे "द्वितीयायां च" इत्यात्वे एकादेशे च "युवावौ द्विवचने" इत्यत्रापि द्वयोर्वचनं द्विवचनमिति स्थिते तत्र च युष्मदस्मदोर्युवावादेशौ न शङ्क्यौ। अतित्वा-

नतिमानिति तु "ङेप्रथमयोः" इत्यमादेशापवादे "तस्मादित्युत्तरस्य" इति परिभाषया "शसो न" इति तदादेर्नकारे पूर्ववत्त्वमात्वैकादेशेषु सकारस्य संयोगान्तलोपे च भवति। नन्वत्र युष्मदस्मदोरेकार्थो विभक्तिः परेति "त्वमावेकवचन" इत्येव त्वमयोः सिद्धेः किं पुनः प्रत्ययोत्तरपदवचनेन। भवेदेतदेव विभक्तिपरत्वे सिद्धे, तदेव तु न सिद्ध्यति। विभक्तेर्लुका लुप्तत्वेन तत्प्रत्ययलक्षणाभावात्। नन्वतरङ्गत्वाल्लुकः पूर्वं त्वमादेशौ भविष्यतः। न च लुका लुप्तत्वेनानयोर्बाधनमाशङ्क्यम्, अन्तरङ्गत्वादादेशयोर्नित्यान्तरङ्गयोरन्तरङ्गं बलीयः, तथोक्तं, परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति। एवं तर्हीदमेव "प्रत्ययोत्तरपदयोश्च" इत्यादेशविधानं ज्ञापकम् 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते' इति। नन्वेतत् परमस्त्वं, (त्वतरः,) त्वं प्रधानमस्य (त्वत्प्रधानम्) तुभ्यं हितं (तद्धितं) तवेदं (त्वदीयं,) तव पुत्रः (त्वत्पुत्रः) परमोऽहं (मत्तरः) अहं प्रधानमस्य (मत्प्रधानं,) मह्यं हितं (मद्धितं) ममेदं (मदीयम्) मम पुत्रो (मत्पुत्र) इति "त्वाहौसौ" "तुभ्यमह्यौ ङयि" "तवममौ ङसि" इति विधीयमानानन्तरङ्गानपि त्वाहादीन् बाधित्वा त्वमादेशविधानेन अर्थवद्वचनमिति कथं ज्ञापकं स्यात्, इदं तर्हि ज्ञापकम् "उत्सर्गसमानदेशा अपवादा" इति त्वाहाद्यपवादत्वेनैव त्वमयोर्मपर्यन्तावयवत्वे सिद्धे यत्पुनर्मपयन्तस्येत्यनुवृत्त्या विधानम्, अबाधे तु लुकान्तरङ्गाणामपि त्वाहादीनां तदपवादत्वेनैव त्वमयोर्मपर्यन्तविषयत्वस्य सिद्धेः किं तदर्थेनानेन मपर्यन्तस्येत्यनेन। ननु शबक्लपवाद्यपवादानां बहुजादीनां भिन्नविषयाणामपि दर्शनात् सर्वादेशनिवृत्त्यर्थमेतत् स्यादिति कथं ज्ञापकं भवति। उच्यते। इह त्वाहादयो विषयनिर्देशार्थमनुवर्तन्ते, तेन त्वाहादीनां प्रसङ्गे प्रत्ययोत्तरपदयोस्त्वमयोर्विधानादेव मपर्यन्तविषयत्वे सिद्धे यत्पुनर्मपर्यन्तस्येत्यनुवर्तनेनानयोर्विधानं त्वया कृतं त्वत्कृतं त्वामिच्छति त्वद्यतीत्याद्येवमर्थमिति ज्ञापकमेवोक्तार्थस्य। एवं च युवामिच्छति (युष्मद्यति) अतियुवामिच्छति (अतियुष्मद्यति,) आवामिच्छति (अस्मद्यति) अत्यावामिच्छति (अत्यस्मद्यति) इत्यत्र युष्मदस्मदोर्द्विवचनत्वेऽपि विभक्तेर्लुप्तत्वेन तत्परत्वाभावात् "युवावौ द्विवचने" इति युवावौ न भवतः, लुकः पूर्वत्वेनानयोरन्तरङ्गत्वेऽपि न प्रसङ्गो बहिरङ्गेणापि लुका बाधस्येदानीमेव ज्ञापितत्वात्, "प्रत्ययोत्तरपदयोः" इति त्वमौ त्वमेकार्थत्वान्न प्रसजतः। वाक्येऽतित्वामतियुवामिति रूपं युष्मदस्मद्भ्यां द्वितीयैकवचनद्विवचनयोः "ङेप्रथमयोः" इत्यमिति प्रकृत्योर्मपर्यन्तस्य युवावयोर्दकारस्य द्वितीयायां चेत्यात्वे सवर्णदीर्घेऽमि पूर्वत्वे च, अतियुवान् अत्यावानिति रूपं तु शसि तदादेरमादेशापवादे "शसो न" इति नकारे प्रकृत्योः पूर्ववत् युवावयोरात्वे सकारस्य संयोगान्तलोपे भवति। अतियुष्मानिच्छति (अतियुष्मद्यति) अत्यस्मानिच्छति (अत्यस्मद्यति) इत्यत्रापि "प्रत्ययोत्तरपदयोः" इति त्वमौ प्रकृत्योरनेकार्थत्वादेव न भवतः। अत्रापि वाक्ये अतियुष्मानित्यादिरूपमतियुवामित्यादिवन्नेयम्। (उख्यति। तृप्यति। उच्छ्यति। मव्यति। मध्यति। अर्च्यति) इत्यादिवत्प्रक्रियोन्नेया। तत्रोच्छिर्न क्विबन्तः, तत्र हि "च्छ्वोः शूडनुनासिके" इति शकारेण भवितव्यम्। (वाच्यति। आव्यति। मरुत्यति। तुक्यति। लुप्यति। दिश्यति। पष्ठ्यति, पयस्योति) अत्र पुत्रादेः कर्मणः जीवत्यादौ प्राणादिवत् क्यजन्तेऽन्तर्भावादकर्मत्वाल्लादयो भावकर्त्रोर्भवन्ति। उदाहृतं कर्त्तरि। भावे पुत्रीयते इत्यादि द्रष्टव्यम्। पुत्रीयादेः सनि यथेष्टं नामधातूनामिति पर्यायेण सर्वस्यैकाचो द्विर्वचनात् (पुपुत्रीयिषति, पुतित्रीयिषति, पुत्रीयियिषति) इत्यादि भवति। इह कस्मान्न भवति महान्तं पुत्रमिच्छति (महापुत्रीयति) इति। किमत्रात्वाभावश्चोद्यते, अथ केवलात् प्रत्ययाभावः, समुदायाद्वा, आत्वं न भवति प्रत्ययार्थेन सापेक्षत्वात् समासाभावादनुत्तरपदत्वात्, प्रत्ययाभावो महता सापेक्षत्वेन असामर्थ्यात्, समुदायास्त्वकर्मकत्वात् महत्त्वविशिष्टस्य पुत्रस्येष्यमाणत्वेनाकर्मकत्वेन परस्परं प्रत्ययार्थत्वेन च सम्बन्धे नास्ति सामर्थ्यम्। सुबग्रहणं च पदविधित्वेन समर्थपरिभाषोपस्थानार्थमेव क्रियते।

ननु धातुव्यावृत्त्यथ स्यात्, संस्तत्र बाधको भविष्यति। प्रातिपदिकादुत्पत्तावपि नान्ते नलोपस्तु सुबन्तादुत्पत्तौ यद् "नःक्ये" इति पदत्वस्य नियामकं तदेवात्र विधायकमिति भविष्यति। नन्वसति सुब्ग्रहणे विशेषाभावात् प्रातिपदिकादिव सुबन्तादपि प्रत्ययोत्पत्तेर्वाच्यतीत्यादौ कुत्वं स्यात्, एवं तर्हि "नः क्ये" इतिवचनं सुबन्तादुत्पत्तौ नियमार्थं प्रातिपदिकादुत्पत्तौ विध्यर्थं च भविष्यति। नन्वत्र कर्मग्रहणेनैव सुबन्तत्वं लप्स्यते, पञ्चकाक्षेऽप्यस्य द्योतिकया विभक्त्या भाव्यम्, अतोऽन्तरेणापि सुब्ग्रहणं वस्तुतः पदविधित्वेन समर्थपरिभाषोपस्थास्यते इति किं तद्ग्रहणेन। मैवं, यत्र हि पदस्यैवासाधारणं किञ्चिद्रूपमाश्रीयते स एव पदविधिः, न त्वीदृशमपीति, कर्मग्रहणं तु न पदस्यैवासाधारणं 'धातोः कर्मण'इत्यपि दर्शनात्। नहीदानीमिदं भवति महापुत्रीयतीति, भवति, यदेतद्वाक्यं महान्पुत्रः महापुत्रस्तमिच्छतीति॥

*"काम्यच"*॥ क्यचो विषयेऽयं भवति,"मान्ताव्ययेभ्य"इति निषेधाभावात् न तान्येवास्याप्राप्तक्यज्विषयः स्यादिति वाच्यम्,पाश्चात्यस्य कातीयवचनस्य सूत्रप्रणयनकालेऽभावात्। पुत्रमात्मन इच्छति (पुत्रकाम्यति)इत्यादि, त्वत्काम्यति,मत्काम्यति,युष्मत्काम्यत्यस्मत्काम्यति ) इत्यत्र "प्रत्ययोत्तरपदयोः" इति त्वमौ, तदभावश्च। क्यचि चित्करणं पुत्रकाम्यतीत्यादौ सति शिष्टस्वरं बाधित्वा धातुस्वरो यथा स्यादिति, ककारस्तु नेत्, प्रयोजनाभावात्। अग्निकाम्यतीत्यादावधातुविहितत्वादार्धधातुकत्वाभावान्नास्ति गुणप्रसङ्गः। कंसं परिमार्ष्टि कंसपरिमृट्, कंसपरिमृट्काम्यतीत्यत्र मृजेर्वृद्धिः प्रत्ययमात्रे विधीयमानाऽपि 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्' न प्रसजति। तत्प्रत्ययो धातुसंज्ञाब्देन विहितः प्रत्ययः, यजेः "विजुपेश्छन्दसि" इति विच्युपयट्, वचेः क्विपि ( वाक्, ) उपयट्काम्यतीति वाक्काम्यतीति। अत्र यजादिभिः क्वितो विशेषणात् "धातोः स्वरूपग्रहणे" इति वा सम्प्रसारणाप्रसङ्गः अन्तर्वर्तिन्या विभक्त्या यथायोगं पदकार्याणि द्रष्टव्यानि। ( पयस्काम्यति। यशस्काम्यति )। अन्तर्वर्तिन्या विभक्त्या पदत्वेन सोरुत्वे विसर्जनीये तस्य कुप्वोरपदाद्योः परयोर्विधीयमानं "सोपदादौ" इति सत्वं भवति, स्वःकाम्यतीत्यादौ सोपदादावनव्ययस्येति वचनात् सत्वाभावः। अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्रधानत्वादिषिणा कर्मत्वेन योगः षष्ठ्या, यथा दिवाभूता रात्रिः दोषाभूतमहरित्यादावधिकरणशक्तिप्रधानत्वेऽपि शक्तिमत्प्राधान्यादभूततद्भावयोगः। वाः काम्यतीत्यादौ रोः काम्यइति रोरेव विसर्जनीय इति काम्ये सत्वनियमात्सत्वाभावः। सर्पिष्काम्यति धनुष्काम्यतीत्यादौ सत्वं बाधित्वा "इणःष" इति षत्वं भवति सत्वस्यापवाद इति यत्र तत्प्रसङ्गस्तत्रैव भवतीत्युच्चैःकाम्यति गीःकाम्यतीत्यादौ न भवति। पुंस्काम्यतीत्यत्र पुंसः संयोगान्तलोपे "पुमः खय्यमपरे" इति रुत्वं निर्वर्त्य [ संपुंकानां सो वक्तव्यः ] इति सत्ववचनान्नास्ति विसर्जनीय इति न षत्वप्रसङ्गः।

*"उपमानादाचारे"* ॥ कर्मणः सुप इति च वर्त्तते। तत्र प्रत्ययार्थस्याचारक्रियायाः सन्निधानात्तदपेक्षया कर्मण उपमानात् सुबन्तादाचारे क्यजित्यर्थो भवति। यद्यपि काम्यजनन्तरस्तथापि पूर्वसूत्रे चकारेणेहाद्य एव क्यजनुकृष्टः स एवात्र विधीयते, पुत्रमिवाचरति छात्रम्। उदाहरणान्यवशिष्टानि प्रक्रिया चेच्छाक्यजन्तवद्द्रष्टव्यानि। अत्रोपमानेनोपमेयमाक्षिप्यते, तत्र प्रत्यासत्त्या साधारणधर्मभूताधारक्रियापेक्षया कर्मतैव, उपमानकर्मवत् प्रत्ययान्ते धातावनन्तर्भावादनभिहितमिति तत्र द्वितीया भवति। तथा पुत्रीयतइत्यादौ कर्मणि यगादयोऽपि भवन्ति। नन्वन्या पुत्रविषयाचारक्रियाऽन्या छात्रविषयेति आचारक्रियायाः वस्तुतो भेदादेककर्मधर्मसमावेशस्यात्राभावात्कथमौपम्यम्। उच्यते। आचरितुरेकत्वादाचारसमावेशादाचार एकोऽवसास्यते, अन्यथा सर्वत्रैवोपमानोपमेयगतस्य धर्मस्य वस्तुतो भेदादौपम्यव्यवहारच्छेदः स्यात्। [अधिकरणाच्चेति वक्तव्यम्] इत्युक्तत्वात् ( प्रासादीय-

ति कुड्यामत्यादौ सप्तम्यन्तादपि भवति । त्वयीवाचरति ( त्वद्यति, ) मयीवाचरति ( मद्यति, ) युष्मदस्मदोरेकार्थत्वात् "प्रत्ययोत्तरपदयोः" इति त्वमौ, युवयोरिवाचरति आवयोरिवाचरति ( युष्मद्यति, अस्मद्यति, ) अत्र नास्त्येकार्थत्वमिति त्वमौ न भवतः, द्विवचनत्वेऽपि विभक्तेर्लुका लुप्तत्वान्न युवावौ, लुकः पूर्वं तु न भवतो 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुक् बाधत' इत्युक्तत्वात् । युष्मास्विव आचरति अस्मास्विवाचरतीत्यत्रापि एकार्थत्वाभावान्न भवतस्त्वमौ, त्वामतिक्रान्ते ( अतित्वयि, ) अतिक्रान्तयोः ( अतित्वयोः, ) अतिक्रान्तेषु ( अतित्वासु, ) एवम् ( अतिमयि, अतिमयोः, अतिमासु, ) सर्वत्रात्र प्रकृत्योरेकार्थत्वात्त्वमयोरजादावनादेशे विभक्तौ "योऽचि" इति दकारस्य यकारः, हलादौ तु युष्मदस्मदोरनादेशविभक्तिपरत्वादात्त्वम् , एभ्योऽपि क्यचि त्वमयोस्त्वद्यति मद्यतीति भवतः । युवामतिक्रान्ते, ( अतियुवयि, ) अतिक्रान्तयोः, ( अतियुवयोः, ) अतिक्रान्तेषु, ( अतियुवासु, ) एवम् ( अत्यावयि, अत्यावयोः, अत्यावासु, ) अत्र प्रकृत्योर्द्विवचनत्वे युवावयोर्दकारस्य पूर्ववद्यत्वात्त्वे, एभ्यस्तु क्यचि प्रकृत्योरेकार्थत्वाभावात् न त्वमौ भवतः, युष्मद्यति अस्मद्यतीति भवतः, द्विवचनत्वेऽपि विभक्तेर्लुका लुप्तत्वेन तत्परत्वाभावात् युवावौ न भवतः, तथा लुकः पूर्वमपि न भवतीति इदानीमेवोक्तं, युष्मानतिक्रान्ते ( अतियुष्मयि, ) अतिक्रान्तयोः, ( अतियुष्मयोः, ) अतिक्रान्तेषु ( अतियुष्मासु, ) एवम् ( अत्यस्मयि, अत्यस्मयोः, अत्यस्मासु, ) पूर्ववद्दकारस्य यत्वात्त्वे, अत्रापि प्रकृत्योरेकार्थत्वाभावेन त्वमयोरभावादति· युष्मद्यति, अत्यस्मद्यति इति भवतः ।

*"कर्तुः क्यङ् सलोपश्च"* ॥ उपमानात् सुपः आचारे वेति वर्तते । अत्रापि पूर्ववत् सन्निहिताचारक्रियापेक्षया कर्तृत्वोपमानत्वे, तेनायमर्थः । उपमानादाचारक्रियायाः कर्तुः सुबन्तादाचारेऽर्थे वा क्यङिति । ककारो "नः क्ये" इति सामान्यग्रहणार्थः, ङकारस्तद्विघातार्थस्तङर्थश्च, लोपश्चेति चशब्दोऽन्वाचये, सेति लुप्तषष्ठीकं पृथक् पदं, तेन च लोपापेक्षया स्थानषष्ठ्यन्तत्वेन सम्बन्धिनो जायमानस्य कर्तुर्नित्यं तस्य विशेषणात्तदन्तविधौ सकारान्तेभ्यो क्यङ् तस्य सकारस्य लोप इत्यर्थो भवति । अत्रापि वेत्यस्य सम्बन्धात्तस्य च व्यवस्थितविभाषात्वादोजोप्सरसोर्नित्यं सलोपो भवति अन्यत्र विकल्पेन, उक्तं च । [ ओजसोऽप्सरसोर्नित्यं पयसस्तु विभाषया] इति । पयस इति ओजोऽप्सरोव्यतिरिक्तानां सकारान्तानामुपलक्षणमिति व्याख्यातारः । श्येन इवाचरति (श्येनायते । काकायते । ओजायते । अप्सरायते, पयस्यते, पयायते, यशस्यते, यशायते ) ओजःशब्दो वृत्तिविषये तद्वति वर्तते, ( अर्चिष्यते, सर्पिष्यते ) इत्यादौ प्रत्ययसकारत्वात्षत्वम् , अत्र "नः क्ये" इति नियमेन सकारस्य पदान्तत्वाभावः, पदान्तत्वे हि "अपदान्तस्य मूर्धन्यः" इति वचनात् षत्वं न स्यात् । अन्तस्य सकारस्य लोपवचनात् (हंसायते स्वरसायते) इत्यादौ अनन्तस्य लोपो न भवति । उपमानकर्तुरिव उपमेयकर्तुः प्रत्ययान्ते धातावन्तर्भावात् तत्र लादयो भवन्ति । अकर्मकत्वात् भावे च श्येनायतइति, त्वामिवाचरति ( त्वद्यते मद्यते, ) "प्रत्ययोत्तरपदयोश्च" इति युष्मदस्मदोरेकार्थयोस्त्वमौ, युवामिवाचरति (युष्मद्यते । अस्मद्यते ।) अत्रानेकार्थत्वान्न त्वमौ, अन्तर्वर्तिन्या विभक्तेर्लुप्तत्वात् , "युवावौ द्विवचने" "यूयवयौ जसि" इति युवावादयो न भवन्ति । लुकः पूर्वं तु बहिरङ्गेणापि तेन बाधस्योक्तत्वान्न भवन्ति, त्वामतिक्रान्तो ( अतित्वम् , ) अतिक्रान्तौ (अतित्वाम् ) अतिक्रान्ताः (अतियुयम्, ) मामतिक्रान्तः ( अत्यहम् , ) अतिक्रान्तौ ( अतिमाम् , ) अतिक्रान्ताः ( अतिवयं, ) सर्वत्र विभक्तेः "ङे: प्रथमयोरम्" इत्यम्भावो द्विवचनादन्यत्र शेषे लोप इति दकारलोपस्तत्र "प्रथमायाश्च द्विवचने" इत्यात्वं, तत्र सौ "त्वाहौ सौ" इति त्वाहौ, अन्यत्र "त्वमावेकवचने" इति त्वमौ, आभ्यामपराभ्यामपि त्वाहयोर्न बाधस्त्वाहादीनां तु पूर्वविप्रतिषेधेन तपवेष्यन्तइति उक्तत्वात । जसि तु न्याय्यविप्रतिषेधेन यूयवयाभ्यां त्वमोर्बाध एव, एभ्यः क्यङि ( अति-

त्वद्यतेऽतिमद्यते ) इति भवतः, युवामतिक्रान्ते ( अतित्वाम् , ) अतिक्रान्तौ, ( अतियुवाम् , ) अतिक्रान्ताः ( अतियूयम् , ) एवं मामतिक्रान्तो ( अत्यहम् , ) अतिक्रान्तौ ( अत्यावाम् ) अतिक्रान्ताः ( अतिवयं, ) सौ जसि च "त्वाहौ सौ" "यूयवयौ जसि" इत्याभ्यां पराभ्यां "युवावौ द्विवचने" इत्यस्य बाधः। द्विवचने तु युवावयोः "प्रथमायाश्च द्विवचन" इति दकारस्यात्त्वम्। इतरयोस्तु शेषे लोपः, एभ्यस्तु क्यङि युष्मदस्मदोरनेकार्थत्वास्त्वमयोरभावात् ( अतियुष्मद्यते अत्यस्मद्यते ) इति भवतः । अन्तर्वर्तिनीं विभक्तिमाश्रित्य तत्तदादेशाभावस्तत्रतत्रोक्तो, युष्मानतिक्रान्तः ( अतित्वम् ) अतिक्रान्तौ ( अतियुवाम्, ) अतिक्रान्ताः ( अतियूयम् , ) एवमस्मानतिक्रान्तो ( अत्यहम् , ) अतिक्रान्तौ ( अत्यस्मान् , ) अतिक्रान्ताः ( अतिवयम् , ) पूर्ववत् प्रथमाया द्विवचने आत्वम्, अन्यत्र शेषे लोपो यथायोगं "त्वाहौ सौ" "यूयवयौ जसि" इति त्वाहादयश्च, एभ्योऽपि क्यङि ( अतियुष्मद्यते, अत्यस्मद्यते ) इति भवतः । उदाहरणान्यवशिष्टानि प्रक्रिया चेच्छाक्यजन्तवदुन्नेयानि । अवर्णस्येत्वादिकं "क्यचि च" इतिविधीयमानमिह न भवति, कुमारीवाचरति ( कुमारीयते, ) हरिणीवाचरति ( हरितायते ) गौरीवाचरति ( गौरायत, ) गुर्वीवाचरति ( गुरूयते, ) "क्यङ्मानिनोश्च" इति स्त्रीशब्दस्य पुम्शब्दः, अत्र "स्त्रियाः पुंवद्भाषितपुंस्काद्" इति वर्तते, तत्र स्त्रीशब्देन स्त्र्यर्थशब्द उच्यते, पुंवच्छब्देन पुमर्थो, भाषितः पुमान् यस्मिन् अर्थे प्रवृत्तिनिमित्ते स भाषितपुंस्कस्तद्योगाच्छब्दोऽपि, स चेह स्त्र्यर्थः,ऊङोऽभावः अनूङ् , षष्ठ्यर्थे प्रथमा, भाषितपुंस्कात् पर ऊङोऽभावो यस्मिन् स्त्रीशब्दे स भाषितपुंस्कादनूङ् , निपातनात्पञ्चम्या अलुक् , एतदुक्तं भवति, पुंसि यत् प्रवृत्तिनिमित्तं तद्युक्तस्त्र्यर्थवाचिनः शब्दस्य पुम्शब्द आदेशो भवति ऊङन्तस्य नेति, तेन [ श्वशुरस्योकाराकारयोर्लोपश्च ] इति ऊङि श्वश्रूयते इत्यत्र पुंवत्त्वं न भवति । तथा भाषितपुंस्कत्वाभावाद् द्रोणीयत इत्यादौ न भवति । अत्र हरदत्तः । पुंसि द्रोणशब्दस्य परिमाणप्रवृत्तिनिमित्तमाह । स्त्रियां तु द्रोणीनाम जातिः । कैयटकारस्तु द्रोणशब्दस्तु परिमाणवृत्तिर्भाषितपुंस्कः स एव भेदोपचारात्सादृश्यनिबन्धनप्रत्यभिज्ञानवशात् वा स्त्रियां वर्तते इति पुंसि प्रवृत्तिनिवृत्तेनाश्रयमानत्वेन युक्तः स्त्र्यर्थयोगोऽस्तीति स्यादेव द्रोण्यादीनां भाषितपुंस्कत्वं, नैतत् । एवं हि व्यावर्त्याभावात् भाषितपुंस्कग्रहणमनर्थकं स्यात् । अतो यः शब्दो भाषितपुंस्को यत्प्रवृत्तिनिमित्तेन युक्तस्तद्युक्तं स्त्र्यर्थं तद्रूपेणाह स चेह भाषितपुंस्क आश्रीयते न तु रूपान्तरेणापि, न च द्रोण्यादिशब्दः स्वार्थमश्यमाणतयाहेति । एवमपि द्यौरिवाचरति ( दीव्यति ) इति, दिवशब्दस्य स्वर्गशब्दस्य चैकमेव प्रवृत्तिनिमित्तमस्ति च तद्युक्ततया स्वार्थभिधानमित्यर्थसाम्यात् पुंल्लिङ्गः स्वर्गशब्दः प्राप्नोति । नैष दोषः, यस्य शब्दस्य पुंवद्भावः स एव शब्दः स्त्रीकृतविकृतिरहितः पुमांसमाहेति प्रत्यासत्त्या लब्धत्वात्, न च दिवशब्दः पुमांसमाह । इदमत्र सूत्रार्थतत्त्वं, यः शब्दो येन प्रवृत्तिनिमित्तेन पुंसि प्रवृत्तस्तेनैव स्त्रियां वर्तते तस्य पुंवद्भाव, ऊङन्तस्य नेति । एवं हंसस्य स्त्री वरटा, सारसस्य लक्ष्मणा, अङ्गारकस्य मालिका, कच्छपस्य डुलीका,ऋषभस्य रोहित्,पुरुषस्य योषिदित्यादौ नियमस्त्रीवचनानां वरटादीनां पुंवत्त्वेन वरटादयो न भवन्तीति वरटायतइत्यादि भवति, शक्यन्ते च साहचर्यात्पुंशब्दैरपि स्त्रीशब्दार्थाः प्रतिपादयितुं, यद्येवं गर्भिणीवाचरति गर्भीयतइत्यत्र कथं पुंस्त्वं, यतो गर्भी व्रीहिरित्यादौ पुंस्यवयवभूतगर्भसम्बन्धः प्रवृत्तिनिमित्तं स्त्रियान्त्वनवयभूतगर्भसम्बन्ध इति प्रवृत्तिनिमित्तं भिद्यते, नैष दोषो यदुभयत्रापि गर्भसम्बन्धमात्रमेव प्रवृत्तिनिमित्तम् , एवं प्रसूताप्रजातादिशब्दानामप्यपत्यापत्यवत्सम्बन्धमात्रं प्रवृत्तिनिमित्तं न पुंसि गर्भाधानं स्त्रियां तु गर्भविमोचनमिति समानप्रवृत्तिनिमित्तत्वात् प्रसूतायतइत्यादौ पुंस्त्वं भवति, इदं च प्रसुतभार्या इत्यर्थमवश्यमेवेष्टव्यम् , समानः पतिरस्याः (सपत्नी,) "नित्यं सपत्न्यादिषु"इति नकारे ङीप्। अत एव निर्देशात्समानस्य सभावः। सप-

त्नीवाचरतीत्यत्र सपत्नीयत इति भवितव्यमिति न्यासे, यदाह नित्यं सपत्न्यादिष्वित्यत्र समुदायस्योच्चारणान्नियोगत एषां समुदाय ईकारान्त एव यथा स्यादिति। तेन सपत्नीभार्यइति स्त्रियाः पुंवद्भावो न भवतीति। तसिलादिष्वित्यत्र भाष्यकैयटयोस्तु "भस्याढे तद्धिते" इति पुंवत्त्वं प्रस्तुत्य कुण्डिनीशब्दाद्गर्गादियञि पुंवत्त्वेन कुण्डिनञ्छब्दे "नस्तद्धिते" इति टिलोपे कौण्डेय इति प्राप्नोति। तथा सपत्नीशब्दाच्छिवाद्यणि सपतिशब्दादेशे सापत इति चोदयित्वा ढग्रहणमपनीय तत्रानस्य इति न्यस्यापत्यप्रत्यये पुंवद्भावायञि ईकारस्य "यस्येति च" इति लोपे तस्य "नस्तद्धिते" इति टिलोपस्य स्थानिवत्त्वान्नान्तस्य तद्धितपरत्वाभावात्कौण्डिन्य इति सिध्यति। तथा शिवाद्यणोऽपत्यप्रत्ययत्वात्सपतिशब्दादेरेवाभाव इति परिहृत्य एवं सति गार्ग्यायण्या अपत्ये कुत्सने, "गोत्रस्त्रियाः कुत्सने ण च" इति एतस्यापत्यप्रत्ययत्वेन पुंवद्भावाभावाद्गार्ग्यायण इति स्यात्, नन्विष्टङ्गार्ग्यमिति दोषमुद्भाव्य तत्सम्परिहाराय "भस्याढे" इत्येव संस्थाप्य कौण्डिन्ये "आगस्त्यकौण्डिन्ययोः" इति निपातनात् परिहृत्य सापत्ने तु "नित्यं सपत्नी"इति समुदायनिपातनं परिहारमनभिप्राय शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिषु द्रष्टव्य इति शिवाद्यणि परिहृतम्। अत एव शिवादौ समानपतिलक्षणस्य सपत्नीशब्दस्य ग्रहणं नेत्यवसीयते ग्रहणे हि तस्मादणि पुंवत्त्वेन सापत इति रूपं दुर्वारमेव स्यात्। अत एव सापत इति प्राप्नोतीति भाष्ये "नित्यं सपत्न्यादिषु" इति निर्देशेन भवन्समानस्य सभावो ङीप्नकारायोगेऽपि भवतीत्यवसीयते। एवं च न्यासोक्तपुंवत्त्वाभावो भाष्यकृतोऽनभिमत इत्यवसीयते। समुदायनिपातनं तु रूढ्यर्थेऽपि स्यादिति न सूत्रभाष्यविरोधः। एवं सति समानपतिलक्षणात्सपत्नीशब्दाल्लिङ्गविशिष्टपरिभाषया पत्युत्तरपदलक्षणे ण्ये सापत्य इति भाष्यं, तथा भावकर्मणोरपि पत्यन्तलक्षणे यकि सापत्यमिति, युवतिरिवाचरति (युवायते)। यत्तु "दामू" सूत्रभाष्ये युवतितरेत्युदाहरणे "घरूप" इति पुंवत्त्वाभावः स तत एव षष्ठ्यनिर्देशान्न त्वभाषितपुंस्कत्वान्नापि यौवनस्य जातित्वेन जातिवाचकत्वात् "जातेश्च" इति प्रतिषेधायतः स्थानिवत्सूत्रे युवजानिरिति प्रत्युदाजहार। पट्वी च मृद्वी च पट्वीमृद्व्यौ, ते इवाचरति (पट्वीमृदूयते,) पूर्वपदस्य क्यङ्परत्वाभावान्न पुंवत्त्वं, पचेण्वुलि (पाचिका,) "मद्रवृज्योः कन्" इति शैषिके कनि (मद्रिका, पाचिकायते, मद्रिकायते,) "न कोपधायाः" इति पुंवत्त्वनिषेधः। अत्र तद्धितग्रहणात्तद्धितेन वा "युवोरनाकौ" इत्यकादेशेन वा यः कोपधस्तस्यैव ग्रहणमिति पाकायतइत्यत्र पुंवत्त्वं भवति। नन्वभाजादिपाठाट्टापा वयोलक्षणस्य ङीपो बाधात्पुंवत्त्वापुंवत्त्वयोर्न विशेषः। सत्यम्। अत्राविशेषेऽपि अस्ति पाकभार्य इत्यत्र विशेषः। (चतुर्थीयते,) "सञ्ज्ञापूरण्योश्च" इतिपुंवत्त्वनिषेधः। (स्रौघ्नीयते) "वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे" इति पुंवत्त्वनिषेधः। वृद्धेर्निमित्तं अकारो णकारो वा यस्मिन्निति बहुव्रीह्याश्रयणात्, यावतीवाचरति (यावत्यते) इत्यत्र पुंवत्त्वं भवति, अत्र "आसर्वनाम्न" इत्याकारस्य वृद्धेर्वतुरेव निमित्तमिति नासौ वृद्धिनिमित्तवान्, "तद्धितस्य" इतिवचनात्काण्डलावीवाचरति काण्डलावायते इत्यत्र पुंवत्त्वं भवति, तथारक्तविकारइतिवचनात्कषायेण रक्ता शाटी काषायी, "तेन रक्तं रागात्" इति अणि ङीप्, खदिरस्य विकारः, (खादिरी ईषा,) "पलाशादिभ्यो वा" इति विकारेऽणञोरन्यतरस्मिन् ङीप्, काषायायते खादिरायतइति, अत्र पुंवत्त्वं भवति। व्याकरणमधीते (वैयाकरणी)। "तदधीते तद्वेद" इत्यणि ङीप्। सैवाचरति (वैयाकरणीयते)। "न य्वाभ्याम्" इति, निषेधादणो नास्ति वृद्धिनिमित्तकत्वमिति भावः, निमित्तशब्दः कुर्वद्रूपवचनः, दीर्घाः केशा अस्याः (दीर्घकेशी) एवं, (मृदङ्गी) "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्" [अङ्गगात्रकण्ठेभ्यश्चेति वक्तव्यम्] इति पाक्षिको ङीप्। (दीर्घकेशीयते। मृदङ्गीयते) "स्वाङ्गाच्चेतोमानिनि"इति स्वाङ्गवचनात्परो य ईकारस्तदन्तस्य मानिनोऽन्यस्मिन्परे पुंवत्त्वं निषिध्यते। (करणीयते, इडबिड्यते,

दरद्यते, कठीयते ) "जातेश्च" इति पुंवत्त्वनिषेधः । 'गोत्रञ्चचरणैः सह' इति गोत्रचरणयोः जातिवाचित्वम् । इहापत्यं गोत्रम्, अपत्याधिकारादन्यत्र लौकिकं गोत्रं गृह्यत इति, चरणशब्दः शाखाध्यायिषु रूढः । अत्र इडविड् नाम जनपदो राजा वेति जनपदसमानशब्दत्वात् "जनपदसमानशब्दात् क्षत्रियादञ्" इत्यत्र "ते तद्राजा" इत्यापादपरिसमाप्तेः प्रत्ययानां तद्राजसञ्ज्ञकत्वात् "अतश्च" इति अकारप्रत्ययस्त्वेन स्त्रियां लुकि इडविड् स्त्री, ऐडविडः पुमान् भवति, दरदोऽपि जनपदसमानशब्दत्वात् "द्व्यञ्मगध" इत्यणः पूर्वं लुकि दरद् स्त्री दारदः पुमान्, एते गोत्रचरणाः कठशब्दात् "कलापिवैशम्पायनान्तेवासिभ्यश्च" इति प्रोक्ते छन्दसि णिनेः "कठचरकाल्लुक्" इति लुकि "छन्दोब्राह्मणानि च तद्विषयाणि", इति छन्दोब्राह्मणप्रत्ययान्तानामध्येतृवेदितृप्रत्ययविषयत्वात् "तदधीते तद्वेद" इत्यणि तस्य "प्रोक्ताल्लुक्" इति प्रोक्तप्रत्ययान्तात्परत्वेन लुकि शाखाध्ययननिवृत्तिः ॥

"*भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः*" ॥ अत्राच्वेरित्येकवचनं भृशाद्यवयवापेक्षम्, अयं च पर्युदास इति तत्सदृशप्रतिपत्त्या ऽभूततद्भावविषयेभ्यो भुवि भवत्यर्थे क्यङिति अर्थो भवति, प्रसज्यप्रतिषेधे तु भवतियोगे च्विविधानाद्भवतिनैव स्वार्थस्य भवनस्योक्तत्वान्न क्यङः प्रसङ्गः इत्यर्थे अच्वेरिति वचनमनर्थकं स्यात्, न च सत्यस्मिन् च्व्यन्तादुत्पद्यमानेन क्यङा भवतेरनुप्रयोगस्य बाधनमाशंक्यम्, यदिदमच्व्यन्ते सावकाशं भवतेरभावात् च्व्यरेण्यभावस्तद्योगे तस्य विधानात्, न च क्यषा योगे डाज्वचनप्रामाण्याद्भवतेरभावेऽपि क्यङो योगे च्वेः कल्पनं युक्तं, यत इदं वचनमच्व्यन्ते सावकाशं, 'भृशादिभ्य' इति पञ्चमी लोपविधौ स्थानषष्ठी सम्पद्यते, तत्र विशेषणेन हला तदन्तविधौ भृशादिषु हलन्तानामन्त्यस्य लोप इति अर्थो भवति, एवं चशब्दोऽन्वाचये भवति, अभृशो भृशो भवति, ( भृशायते, शीघ्रायते, चपलायते, मन्दायते, पण्डितायते, रेहायते ) रेहः शब्दो रहसि निवृत्तं तत्रे भिक्षाभिलाषस्य च निवृत्तौ वर्तत इति गणवृत्तौ, ( तृपायते ) तृपश्चन्द्रः समुद्रश्च ( वेहायते ) वेहद्गर्भोपघातिनी ( अन्धरायते ) अन्धरो मूर्खोऽपुष्करश्चेति गणवृत्तौ, अण्डार इत्यन्ये इति च; ( ओजायते ) ( वर्चायते ) ओजोवर्चसौ वृत्तिविषये तद्वति वर्तेते ( रेहायते ) रेहस् रोष इति गणवृत्तौ ( दुर्मनायते, सुमनायते, उत्सुकायते, उन्मनायते, शस्त्रायते, बृहायते ) तान्तावेतौ ( अतिमनायते ) अत्र सुदुदूरभिभ्यो मनःशब्दः पठ्यते, तत्र सोपसर्गात्संग्रामयतेरेव धातुसंज्ञानिमित्तः प्रत्यय इति ज्ञापनान्मनस एव प्रत्यय इति स्वमनायत इत्यादि भवति, "सुबामन्त्रित" इत्यत्र मनस्युपसर्गे इति मनसि परे उपसर्गस्य पराङ्गवद्भाववचनात्सुमनायतइत्यादौ "तिङ्ङतिङ" इति निघातो न भवति, देवदत्तः सुमनायत इत्यादौ सोपसर्गस्य निघातो भवति, अत्रामी भृशादयो ऽस्माभिः श्लोकगणपाठानुरोधेन पठिताः । गणवृत्तौ तु बृहच्छब्दो न दृश्यते, भद्रशब्दस्तु पठ्यते, तथा च कन्धरशब्दश्च त्वचोऽभ्यन्तरे स्थूलतत्त्वाभा असंयुक्ता स्नायुः कन्धरा तद्वान्कन्धरः, मत्वर्थे "अर्शआदिभ्योऽच्" इति व्याख्यातं च ॥

*"लोहितादिडाज्भ्यः क्यष्*" ॥ अत्र भुवीति वर्तते, अच्वेरिति च । तत्रैतड्डाचो न विशेषणमसम्भवात्, अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच् विधीयते, यत्र ध्वनौ वर्णविशेषा न व्यज्यन्ते सोऽव्यक्तस्तस्यानुकरणमव्यक्तानुकरणं, तस्मात् "डाचि बहुलं द्वे भवत" इति डाचि विषयभूते द्विरुक्ताद् द्व्यजवरार्धात् अनितिपरात् कृभ्वस्तियोगे डाज् भवतीति सूत्रार्थः । यस्य द्विरुक्तस्य समुदायस्य प्रविभज्यमान(१)मर्द्धं द्व्यजन्यूनाचकं द्व्यज् वा भवति तद् द्व्यजवरार्धम्, अवरशब्दोपकर्षे अत एव वचनात् कृभ्वस्तिभिरिव क्यषापि योगे डाज् भवतीत्यवसीयते, न च भवतियोगे डाचि कृते क्यषः प्रसङ्गो भुवौ भवतिनैवोक्तत्वात् । अलोहिते ( लोहितायति । लोहितायते ) "वा क्यषः" इति पक्षे तङ्, लिङ्गविशिष्ट-

( १ ) अवरमिति पाठः पुस्तकान्तरे ।

परिभाषया लोहिनीशब्दात्क्यषि (लोहिनीयति । लोहिनीयते) इति भवात, ( पटपटायति । पटपटायते) अत्र "डाचि बहुलम्" इति द्विरुक्ते "नित्यमाम्रेडिते डाच्" इति अव्यक्तानुकरण-स्यान्त्यस्य टेश्च पररूपे "टेः" इति टिलोपः । इदमेव पररूपवचनं ज्ञापकम्, [डाचि बहुलं द्वे] इत्यस्य विषयसप्तमीत्वे, अत्र लोहितानां तेषां नीलहरितमन्द्रफेनमुण्डानां भृशादौ पाठः कर्त्तव्यः । अत्र वार्त्तिकं "लोहितादिडाच्भ्यः क्यष्वचनं भृशादिष्वितराणि" इति । अत्र वृत्तौ न हि पठितेषु लोहितादिषु नान्तोऽस्तीति "नः क्ये" इति पदत्वसामान्यग्रहणार्थेन क्यषः ककारेणास्याकृतिगणत्वज्ञापनादन्यानि संगृह्यन्ते, तेषां भृशादौ अनुप्रवेश इति स्थितम्, यदाह यानि पठ्यन्ते तेभ्यः क्यचेव भवति, अपठितेभ्यस्तु क्यषेवेति, तेन ( निद्रायति, निद्रायते, करुणायति, करुणायते, वर्मायति, वर्मायते ) इत्यादि भवति, निद्राकरुणाशब्दौ वृत्तिविषये तद्वति वर्तेते, यद्वा ( निद्रायते ) "आतश्चोपसर्गे" इति कर्तरि कप्रत्ययान्तो निद्राशब्दो भवति । अत्र गणवृत्तौ ॥

लोहितश्यामदुःखानि हर्षगर्वसुखानि च ।
मूर्छा निद्रा कृपा धूमा करुणा नित्यवर्मणि ॥

इत्याकृतिगणसिद्धानि पठ्यन्ते ।

*"कष्टाय क्रमणे"* । क्रमणमनार्जवः । अत एव निर्देशाच्चतुर्थ्यन्तात्कष्टशब्दादनार्जवे क्यङ् भवति, कष्टं कृच्छ्रं दुःखमिह तु तत्कारणं कर्म, कष्टाय कर्मणे क्रामति ( कष्टायते ) कष्टं कर्तुं कुटिलमाचरतीत्यर्थः । अत्र वार्तिकम्-[ सत्रकष्टकक्षकृच्छ्रगहनेभ्यः कण्वचिकीर्षायाम् ] इति, कण्वस्य पापस्य चिकीर्षा कण्वचिकीर्षा सा चेह वृत्तिविषये, सत्रादयः कण्ववचनाश्चिकीर्षाया प्रत्यय इति समुदायार्थो भवति, एवं च पापवचनेभ्यो विषयान्तेभ्यः सत्रादिभ्यः चिकीर्षायां प्रत्यय इति वार्तिकार्थः सम्पद्यते ( सत्रायत ) इत्यादि ॥

*"कर्मणो रोमन्थतपोभ्यां वर्तिचरोः"* ॥ कर्मण इत्यत्रयत्रापेक्षमेकवचनं, तेन रोमन्थतपोभ्यां कर्मभ्यां यथासंख्यं वर्तिचरोर्धात्वर्थयोः क्यङ् प्रत्ययो भवतीत्यर्थो भवति । कर्मत्वं च रोमन्थतपोभ्यां श्रुतवर्तिचरिक्रियापेक्षं, वर्तिरित्यत्र एव निर्देशाण्ण्यन्तादपि क्तिन्, चरिति क्षरतेः सम्पदादित्वाद्भावे क्विप् । रोमन्थं वर्तयति ( रोमन्थायते, ) तपश्चरति ( तपस्यति, ) "तपसः परस्मैपदं च" इति परस्मैपदम्, अत्र [ हनुचलनइति वक्तव्यम् ] इत्युक्तत्वात् कीटो रोमन्थं वर्तयतीत्यत्र क्यङ् न भवति । अत्र न्यासपदमञ्जर्योरपानप्रदेशान्निसृतं द्रव्यं कीटो वर्तुलं करोतीत्यर्थोऽभिमतः, कीटस्त्वपानप्रदेशान्निसृतमश्नातीति, [ बाष्पोष्मफेनाच्चेति वक्तव्यम्, ] कर्मग्रहणमनुवर्तते, तच्च श्रुतोद्गमनक्रियापेक्षं बाष्पादिभिःसम्बध्यते बाष्पमुद्गमति ( बाष्पायते ) ॥

*"शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे"* ॥ कण्वशब्दः पापवचनः, करणं क्रिया करोत्यर्थः, न पारिभाषिकं तस्मिन्हि कर्मण इत्यनेन सम्बद्धैः शब्दादिभिः सम्बन्धे न स्यात्, शब्दादिभ्यः कर्मभ्यः करणे क्यङ् भवति, शब्दं करोति ( शब्दायते, ) एवं ( वैरायते, कलहायते, अभ्रायते, कण्वायते, मेघायते, ) अत्र न्यासे यद्यप्ययं तत्करोतीति णिचि प्राप्ते आरभ्यते तथापि न बाधतइति शब्दयतीत्याद्यपि भवतीत्युक्तम् । अत्र वार्तिकम्-[ सुदिनदुर्दिनाभ्यां च ] [ नीहाराच्च ] । [अटाट्टाशीकाकोटापोटासोटाप्रुष्टाप्लुष्टाग्रहणम् ] इति, ( पोटा, स्त्रीपुंसलक्षणा ) । अतोऽन्ये अट्टादयः क्रियावचनाः, सुदिनं करोति इति ( सुदिनायते ) इत्याद्युदाहार्यम् ॥

*"सुखादिभ्यः कर्तृवेदनायाम्"* ॥ कर्तृ इति पृथक् पदं लुप्तषष्ठीकं, वेदनाज्ञानकर्तृत्वं च श्रुतवेदनक्रियापेक्षं, तेन वेदनक्रियायाः कर्तुराधेयभावेन सम्बन्धिभ्यः सुखादिभ्यो वेदनायामर्थे क्यङ् भवतीत्यर्थो भवति, सुखं वेदयते ( सुखायते, ) सुखमनुभवतीत्यर्थः । वेदयित्रा सुखादीनां विशेषणात्सुखं वेदयते प्रसाधको देवदत्तस्येत्यत्र क्यङ् न भवति, अत्र प्रसाध्यगतं

सुखं प्रसाधकोऽक्षांनमीलनादिना जानातीत्यर्थं इति सुखं वेदयितृगतं न भवति, अत्र श्लोकगणकारः ॥

सुखदुःखगहनकृच्छ्राद्यु(१)पकप्रतीयकरुणाश्च ।
कृपणः सोढ इतीमे तृपादयो दश गणे पठिताः ॥

इति । अत्र गणरत्नमहोदधौ आस्यशब्दोऽपि पठ्यते, यदाह, आस्यमेवास्यमिति, तृप्रं, दुःखं, सोढं सहनम्, आभभवो वा ॥

*"नमोवरिवश्चित्रङः क्यच्"* ॥ अत्रानुवृत्तं करणग्रहणम् अभिधानशक्तिस्वाभाव्यात् क्रियाविशेषणं, यदाह वृत्तिकारः, नमसः पूजायां, वरिवसः परिचर्यायाम्, चित्रङ आश्चर्ये, (नमस्यति देवान्। वरिवस्यति गुरून्, चित्रीयते) आश्चर्यवान् भवतीत्यर्थः । अन्ये तु परस्याश्चर्यं करोतीत्यर्थं इति । यदाह भट्टिः—'ततश्चित्रीयमाणोऽसौ' इति । अत्रावयवे कृतं समुदायस्येति न्यायेन चित्रङो ङकारस्य समुदायार्थत्वादात्मनेपदं, (नमस्यति देवान्) इत्यत्र 'उपपदविभक्तेः कारकविभक्तिः' इति "नमः स्वस्ति" इति चतुर्थीम्बाधित्वा कर्मणि द्वितीया भवति ।

*"पुच्छभाण्डचीवराण्णिङ्"* ॥ ङकारस्तङर्थो णिग्रहणेषु सामान्याविघातार्थश्च, णकारो णिग्रहणेषु सामान्यग्रहणायैव, वृद्धिभाजः प्रकृतेरभावात्, इहाप्यनुवृत्तं करणग्रहणं पूर्ववदभिधानस्वाभाव्यात् क्रियाविशेषपरं, तदुक्तं वृत्तौ,पुच्छादुदसने पर्यसने वा, भाण्डात्समाचयने, चीवरादर्जने परिधाने चेति, उदसनमुत्क्षेपणं, पर्यसनं परितः क्षेपणं, समाचयनं राशीकरणम्, अर्जनमार्जवनं, परिदानमाच्छादनम्, (उत्पुच्छयते, सम्भाण्डयते, सञ्चीवरयते,) अत्रोदादीनां प्रयोग उदसनाभिव्यक्तये, पुच्छादेः कर्मणो धातावन्तर्भावादकर्मका एते, यक्चिणोः प्रतिषेधे"णिश्रन्थि"इत्यत्र णिग्रहणेनाप्यस्य ग्रहणात्कर्मकर्तरि पक्षे यक्चिणोरभावात् (उत्पुच्छयते गौः स्वयमेव,उदपुपुच्छत गौः स्वयमेव) इति शप्चङौ भवतः।यदोत्पुच्छयति गामिति गौः कर्म भवतीति कर्मकर्तृत्वलाभः, उत्पुच्छयतेः क्वौ णेर्लोपे सोर्हल्ङ्यादिलोपे संयोगान्तलोपे उत्पुदिति भवति। व्रश्चादिषत्वं संयोगान्तलोपे न भवति।ननु"छ्वोःशूड्"इति शत्वे तस्य व्रश्चादिषत्वे तस्य च जश्त्वे उत्पुडितिभाव्यम्, यतः शत्वविधौ सतुक्कच्छो गृह्यते, इह तु पुदं छादयतीति पुच्छशब्दव्युत्पत्तेस्तकारस्तुकः सम्बन्धी न भवति । ननु यत्र सतुक् छकारो न सम्भवति तत्र केवलो गृह्यते इत्यपि स्थितं, वाञ्छेः क्वौ वान्, वांशौ इतिवदत्रापि भवितव्यं, भवतु कामं तस्यापि संयोगान्तलोपउत्पुदिति भविष्यति, द्विवचनादौ "स्तोःश्चुः" इति दकारस्य श्चुत्वे "शः छोटि" इति शकारस्य छत्वे उत्पुच्छावित्यादि सिध्यति ॥

*"मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्"* ॥ एभ्यः करणे णिच् भवति । मुण्डं करोति (मुण्डयति माणवकं, मिश्रयत्यन्नं,श्लक्ष्णयति वस्त्रं,लक्षणयति व्यञ्जनम्,) व्रताद्भोजने तन्निवृत्तौ वा, (पयो व्रतयति,) पयो भुङ्क्ते इत्यर्थः । (वृषलान्नं व्रतयति,) परिहरतीत्यर्थः । अत्र भोजनतन्निवृत्ती व्रतशब्दार्थाविति पूर्ववत्करणे प्रत्ययः । श्रूयते भोजने व्रतशब्दः । यदस्य पयोव्रतं भवत्यात्मानमेव तद्वर्धयति, निवृत्तो मुनिरासीत्, द्विव्रतासुरा, एकव्रता देवा इति, पस्पशायां च शस्तं वानेन श्वमांसादीन्यपि व्रतयितुमिति, अयमेव व्रतशब्दो दर्शादिवद्विपरीतलक्षणया तन्निवृत्तौ वर्तते । वस्त्रात्समाच्छादने । (संवस्त्रयति प्रावरणम्,) अत्रापि पूर्ववत्समाच्छादनं प्रकृत्यर्थ इति करणं, प्रत्ययार्थे हि प्रकृत्यर्थेन वस्त्रेणैकार्थीभूतस्य प्रावरणान्वये सामर्थ्याभावान्न स्यात् । अथ मुण्डयति नापित इत्यादौ व्यपेक्षाभावे साकांक्षं मुण्डादिभ्यो णिज्वचनं,तत्करोतीत्येव सिद्धे णिच्यारभ्यमाणेऽन्यथा माणवकं मुण्डयतीत्यादौ सापेक्षत्वेऽपि भवति तथेहापि स्यात्, नैतदस्ति, तत्र हि मुण्डादयो धर्मित्र-

(१) युपकेति पुस्तकान्तरे पाठः ।

चना धर्मसमीक्षन्ते न तद्वादह वस्त्रमपेक्षते, अथवं स्यात् मुण्डादौ प्रकृतेरन्यापेक्षावदत्र प्रत्ययार्थस्यान्यापेक्षास्तीति, एवं ह्यर्थो न सङ्गच्छते, यतः संवस्त्रयति प्रावारमित्यत्र प्रावारवस्त्रं छादयतीत्यर्थः स्यात् न चैवमिष्यते, यतः प्रावारमाच्छादयतीत्येवेष्यते। अथोच्यते उभयमपीष्यतामिति, एवं हि वस्त्रसामान्ये प्रावारस्यान्तर्भावात्तत्र प्रयोगो ऽनर्थः स्यात्, न च ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति विशेषस्य प्रावारस्य प्राधान्यख्यापनाय प्रयोगः स्यात्, अत एकस्मिन्वाक्ये एकस्य प्राधान्यं प्रतिपादयितुं न शक्यते। अत्र सुधाकरः। समाच्छादनं प्रत्ययार्थमेवाह, सामान्यकर्मणोऽन्तर्भावेऽपि विशेषकर्मणोऽनभिहितत्वात् तद्विशेषप्रयोगो यथा भवति माणवकमितीति। एवं सति वस्त्रसामान्यस्य प्रावारो विशेषको भवति, हलादीनां त्रयाणां ग्रहणे प्रत्ययाः, हलं गृह्णाति ( हलयति ) एवं कलयतीत्यादि। अत्र वार्तिकं, [ हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थम् ] इति, ततो ( अजहलत्, अचकलत्, ) इत्यत्राग्लोपित्वात् "सन्वल्लघुनि" इतीत्वं न भवति, अक्रियमाणे पुनरत्वनिपातने इकारस्य णाविष्ठवदिति टिलोपात्परत्वाद्वृद्धावैकारे तस्यादेशात्पूर्वं परत्वाल्लोपे अग्लोप्यङ्गं न स्यात्, नन्वैकारस्य लोपस्य पूर्वविधावित्वे "अचः परस्मिन्पूर्वविधौ" इति स्थानिवत्त्वेनाङ्गस्य चङ्परणिपरत्वं विधानिष्यतइति किमनेनाग्लोपित्वार्थेनात्वनिपातनेन नैतदस्ति। अभ्यासस्यादिष्टादचः पूर्वत्वेन तस्येत्वे स्थानिवत्त्वाप्रसङ्गात्। एवमपि कृताकृतप्रसङ्गित्वेन नित्यत्वाद्वृद्धेः पूर्वमेवेकारो लोप्स्यतइति अग्लोपित्वसिद्धेर्नार्थोत्वनिपातनेनेति चेत्। न, यस्माद्वृद्धौ शब्दान्तरप्राप्त्या भवत्यनित्यो लोपः। तूस्ताद्विहनने, तूस्तं केश इति श्रीभद्रः। जटीभूताः केशा इति बोधिन्यासे, पापमिति वैजयन्त्याम्। तूस्तानि विहन्ति ( वितूस्तयति, ) विहननद्योतनाय वेः प्रयोगः॥

*"सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचूरादिभ्यो णिच्"*॥ अत्राप्यनुवृत्तं करणग्रहणं क्रियाविशेषोपलक्षणम्, अत्र "सत्याप्" इति निर्देशेन णिचः सन्नियोगेन सत्यस्यापुक्, टिलोपाभावश्च भवति। अत्र वार्तिकम्—[ अर्थवेदसत्यानामापुग्वक्तव्यः ] इति। अत्र भाष्यं, सत्यस्य कृञो योगइति। वृत्तौ तु सत्यमाचष्टे ( सत्यापयति ) इत्युक्तम्, अत्र हरदत्तः। भाष्ये कृत्यर्थनिर्देशः प्रयोगदर्शनवशादिहाख्यानार्थं इति, एवम् ( अर्थापयति, वेदापयति, ) पाशं विमुञ्चति, ( विपाशयति ) इत्यपि चोपपद्यते, रूपं पश्यति ( रूपयति, ) वीणया उपगायति ( उपवीणयति ) तूलैरनुकुष्णाति ( अनुतूलयति, ) श्लोकैरुपस्तौति ( उपश्लोकयति, ) सेनयाऽभियाति ( अभिषेणयति, ) "उपसर्गात्सुनोति" इत्यादिना षत्वम्, ( अभ्यषेणयत्, ) "प्राक्सितादडव्यवायेऽपि" इति षत्वम्, ( अभिषिषेणयिषति )। "स्थादिष्वभ्यासेन" इति साभ्यासस्य षत्वं, लोमान्यनुमार्ष्टि ( अनुलोमयति, ) णाविष्ठवदिति टिलोपः। त्वचं गृह्णाति ( त्वचयति ) अच्प्रत्ययान्तोऽयमकारान्तः, तेनाल्लोपस्य स्थानिवत्त्वात् "अत उपधायाः" इति वृद्धिर्न भवति, हलन्तस्य तु तत्करोतीति णौ ( त्वाचयति ) इति भवति, टिलोपस्तु "प्रकृत्यैकाच्" इतिप्रकृतिवद्भावान्न भवति, वर्मणा सन्नह्यति ( संवर्मयति ) वर्णं गृह्णाति ( वर्णयति, ) चूर्णैरवध्वंसयति ( अवचूर्णयति, ) अत्रावध्वंसनमेव करणमितीन्दुश्रीभद्रौ चुरादयो माधवीयायां धातुवृत्तौ व्याख्याताः। अत्रार्थविशेषास्तदनुरूपाः समर्थविभक्तयश्च लोकप्रसिद्धानुसारेण वृत्तिकारेण दर्शिता इत्यस्माभिरपि तथैव प्रदर्शिताः॥

## अथान्येभ्योऽपि णिच् प्रदर्श्यते॥

*"प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च"*॥ प्रातिपदिकाद्धात्वर्थे णिच् भवति, इष्ठनीव चास्मिन्बहुलं कार्यं भवति, अस्यैव धातुसूत्रस्य प्रपञ्चः। "तत्करोतितदाचष्टे"। "तेनातिक्रामति"। "कर्तृकरणाद्धात्वर्थे"। इति सूत्राणि। अत्र कर्तृग्रहणं करणस्य विशेषणं

करणत्वेन लोके प्रसिद्धानां चक्षुरादीनामेव ग्रहणं माभूदिति। अन्यथा चक्षुषा पश्यति (चक्षयति) श्रोत्रेण शृणोति (श्रोत्रयति) इत्यादावेव स्यात् न तु करिभिरवबध्नाति (अवकरयति) परशुना छिनत्ति (परशयति) इत्यादावपि। एवं च "तेनातिक्रामति" इत्येतत्कर्तृकरणादित्यस्यैव प्रपञ्चो भवति। अतस्तत्करोतीत्यादौ तदादि प्रकृतौ कर्मत्वादिमात्रप्रतिपादनार्थं न तु द्वितीयाद्यर्थमपीति कर्मत्वादिविशिष्टात्प्रातिपदिकादेव णेर्विधानात् पटुमाचष्टे इति णेर्विवक्षायां पटोः प्रातिपदिकाण्णाविष्ठवदिति टिलोपे तस्य "अत उपधायाः" इति वृद्धौ "अचः परस्मिन्" इति स्थानिवत्वात्तदभावे (पटयति) इति भवति। सुबन्तादुत्पत्तौ "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि टेश्च लोपे ऽवशिष्टस्य प्रत्ययलक्षणेन सुबन्तत्वात् पदत्वे पटयतीति जश्त्वं स्यात्, न च टिलोपस्य स्थानिवत्त्वेन टकारस्य पदान्तत्वाभावाज्जश्त्वाप्रसङ्गो यतो "न पदान्त" इत्यादिना जश्त्वे स्थानिवत्त्वं निषिध्यते, न च णौ कृतया भसञ्ज्ञया पटोः पदसंज्ञाबाधो, यदस्यां टिलोपः स्थानिवद्भवति। अयं च प्रातिपदिकाद्विधीयमानो णिः यथाकथञ्चित् 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवति' इति सिद्धान्तितत्वात् ङ्याबन्तादपि भवति, अत एव "णाविष्ठवत्" इत्यत्र भाष्ये इष्ठवदित्यतिदेशस्य पुंवद्भावटिलोपयणादिपरविन्मतोर्लुगर्थमिति पुंवद्भावादिप्रयोजनकथनं न परिगणनं किन्तूदाहरणमात्रमेव, तदुक्तं वृत्तौ। प्रादयोऽपीष्यन्त इति, तत्र पुंवद्भावो यथा, एनीमाचष्टे (एतयति) हरिणीमाचष्टे (हरितयति) लोहिनीमाचष्टे (लोहितयति) कुमारीमाचष्टे (कुमारयति) इत्यादौ [भस्याढे तद्धिते] इतीष्ठनि विहितः पुंवद्भावो णाविष्ठवदित्यतिदेशादत्रापि भवतीत्येन्यादीनामेतादयः पुंशब्दाः भवन्ति। वसिष्ठवदत्र वर्तितव्यमित्यादौ विशेषातिदेशे ब्राह्मणत्वसामान्यनिबन्धस्याप्यतिदेशादिष्ठवदित्यनिर्देशान्नात्र केवलमिष्ठनो ऽसाधारणरूपं तुरिष्ठेमेयःस्वित्यादिकमेव कार्यमतिदिश्यते किं तु भसंज्ञानिमित्तद्धितत्वादिनिबन्धनमपीति पुंवद्भावातिदेशस्य प्रयोजनमुक्तम्, अनेन चेष्ठवद्भावेन नेष्ठनि दृष्टमेवातिदिश्यते किं तर्हि सम्भावितमात्रमपीति कुमारयतीत्याद्युदाहृतम्, अवश्यं चैतदेवं विज्ञेयम्, अन्यथा राजयतीत्यादाविष्ठनोऽनुत्पादाट्टिलोपो न स्यात्, "टेः" इत्यत्र कैयटे एतयतीत्यादौ टिलोपेन ङीपि निवृत्ते तत्सन्नियोगशिष्टत्वान्नकारनिवृत्तौ सिद्धायामपि इष्ठवद्भावात् पुंवत्त्वेन रूपसिद्धेर्भाष्ये उक्तत्वात्सन्नियोगशिष्टपरिभाषाया अनित्यत्वज्ञापनात् (एनेयः श्यैनेय) इत्यत्र "यस्य" इति लोपेनेकारनिवृत्तावपि नकारो न निवर्तत इति उक्तम्। पदमञ्जर्यां त्वेवमुक्त्वोक्तम् अपर आह इडबिडमाचष्टे (ऐडबिडयति) दरदमाचष्टे (दारदयति) इत्यादौ पुंशब्दातिदेशार्थं पुंवद्वचनमिति। ननु इडबिडादीनामिष्ठनि पुंवद्भावो न दृष्ट एव, इष्ठनि तस्यासम्भवात्। नेष्ठनि दृष्टस्यातिदेशः किं तर्हि इष्ठनि सम्भावितस्य, अन्यथा अतिराजयतीत्यादौ टिलोपो न स्यात्, आदिशब्देन पृथुमाचष्टे (प्रथयति) उशिजमाचष्टे (उशिजयति) इत्यादि गृह्यते, अत्रेडबिडपृथू जनपदशब्दौ क्षत्रियजाती चेति "जनपदशब्दात् क्षत्रियादञ्" इत्येतस्य "ते तद्राजाः" इत्यत्रादीनामापादपरिसमाप्तेः प्रत्ययानां तद्राजत्वादतश्चेत्यकारप्रत्ययस्य स्त्रियां लुकीडबिड् स्त्री, ऐडबिडः पुमान्, दरदुशिजोरपि "द्व्यञ्मगध" इत्यणः पूर्ववल्लुकि दरत् स्त्री दारदः पुमान्, एवमुशिक् स्त्री औशिजः पुमान् भवति, नन्वत्रैडबिडादीनां गोत्रस्य ग्रहणात् गोत्रं च चरणैः सह' इति जातिवाचित्वात् "जातेश्च" इति पुंवद्भावनिषेधः कस्मान्न भवति, उच्यते। औपसंख्यानिकस्यायं न भवत्यनित्यत्वात्। अत एव हस्तिनीनां समूहो हास्तिकमित्यत्र लिङ्गविशिष्टपरिभाषया "अचित्तहस्ति" इति ठकि जातित्वेऽपि पुंवत्त्वं भवति, अनित्यत्वे च ज्ञापकं "प्रवाहणस्य ढे" इति प्रवाहणशब्दे पूर्वपदवृद्धि विकल्पोत्तरस्य स्वतःसवृद्धिकस्यापि नित्यं वद्वचनं, तद्धि प्रवाहणेयीभार्यं इत्यत्र पूर्वपदस्य वृद्ध्यभावेऽपि तस्योत्तरपदे वृद्धिनिमित्तत्वेन "वृद्धिनिमि-

स्य" इति पुंवत्त्वनिषेधार्थम्, नित्ये च जातिलक्षणे निषेधे प्रवाहणेयीशब्दस्य गोत्रवाचित्वेन जातित्वादनेनैव पुंवत्त्वनिषेधसिद्धेः किं तदर्थमेनोत्तरपदवृद्धिविधानेन, एवं तर्हि पुंवद्भावस्येडविडाद्यर्थत्वात्सन्नियोगशिष्टपरिभाषाया अनित्यत्वे प्रमाणाभावात् कथमैनेयः श्यैनेय इति सिद्ध्यतः, तत्रैवं वक्तव्यम्, भाष्यकारेणान्यथासिद्धमैडविडयतीत्युदाहृत्यैतयतिस्यैतयतीत्यादेरुदाहरणादनित्यत्वमेव साध्यतइति पुंवद्भावाभावः। "विन्मतोर्लुक्" इति हलादेरङ्गस्य लोपः, ऋकारस्येष्टेमेयस्सु विधीयमानो रभावो णावपि भवति, अत्र परिगण्यते ।

पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।

परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ॥

इति । पृथुमाचष्टे ( प्रथयति ) । अत्र केचिदाहुः । चङि पृथु इ अत् इति स्थिते टिलोपश्च प्राप्नोति वृद्धिश्च, तत्र पूर्वं टिलोपे वृद्धिर्न प्राप्नोतीत्यनित्या, वृद्धौ तु टिलोपः शब्दान्तरप्राप्त्याऽनित्यः, उभयोरनित्ययोः परत्वात् वृद्धावावादेशात्पूर्वं टिलोपेऽङ्गस्यानग्लोपित्वात् "सन्वल्लघुनि" इत्ये ( अपिप्रथत् ) इति भवति, अत एव हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमित्युक्तं, यदि वृद्धेः पूर्वं टिलोपः स्यात्तर्हि हलिकल्योरिकारलोपेनैवाग्लोपित्वसिद्धेः किमत्वनिपातनेनेति "णौ चङि" इत्यत्र, कथादौ ननु "नाग्लोपि" इत्यत्राल्लोपइति वक्तव्ये अग्लोपिनामित्युदाहरणसामर्थ्यात्पृथादेर्णौ वृद्धौ पूर्वं टिलोपेन भवितव्यमित्यग्लोपित्वेन सन्वदित्वाभावात् ( अपपटत् ) इत्यादि भवतीत्युक्तं, तन्मतेऽत्राप्यपप्रथदिति भवितव्यम्, तथा ह्यवर्णान्तेष्ववर्णोपधेषु च वृद्धावप्यवर्णो लुप्यते, अग्लोपिग्रहणवदल्लोपिग्रहणमपि यत्र केवलस्यावर्णस्य लोपस्तत्र तस्य स्थानिवत्त्वेनोपधात्वविधानादेव ह्रस्वाप्रसङ्गादवर्णानवर्णसमुदाये लोपार्थं विज्ञास्यते, इवर्णोवर्णान्तयोस्तु पूर्वं वृद्धावग्लोपित्वासम्भवः । ननु स्वामिनमाख्यत् ( अससस्वामत्, ) गोमन्तमाख्यत् ( अजुगोमत्, ) प्रादुराख्यत् ( अपप्रादत्, ) यादृशमाख्यत् ।( अययादत्, ) तादृशमाख्यत् ( अततादत्, ) इत्यादौ यत्र वृद्धेरप्रसङ्गादवर्णस्यैको लोपस्तत्रेत्वनिवृत्त्यर्थमनग्लोपइति वक्तव्यम् । नैतदस्ति । यदीदृशाण्णिजेत्र नोत्पद्यते, अत्र च प्रमाणं "णौ चङि" इत्यत्र भाष्ये "नाग्लोपि" इत्यत्र प्रत्याहारग्रहणेन वृद्धेः पूर्वं वा टिलोपज्ञापनस्यावस्थापनं, स्वामिन्नादेर्णौ तत्कथं सङ्गच्छेत । ननु स्रग्विणमाख्यत् ( अससृजत् ) इत्यत्र विनो लुक्युपधाया वृद्धौ तस्य ह्रस्वनिवृत्त्यर्थमग्लोपिग्रहणं स्यात्, इष्यते च विन्नन्तादिष्ठवद्भावश्च, विनो लुकः प्रयोजनत्वेनोक्तत्वात्, नैतदस्ति, यतष्टेरित्यत्र भाष्यकारेण स्रजयतीत्यादीनामुदाहृतत्वात्'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति वा वृद्धेरप्रसङ्गात् ह्रस्वभाविन्युपधैव नास्ति, कस्मिंश्चिदङ्गकार्य्ये वृत्ते पुनरन्याङ्गकार्यवृत्तौ प्राप्तावविधिस्तस्य कार्यस्य तच्चेदङ्गं प्रयोगार्हं परिनिष्ठितप्रयोगार्हं भवतीति परिभाषार्थः, अस्ति चात्र विन्मतोर्लुकाऽङ्गकार्यस्य वृद्धेः पूर्वं प्रवृत्तिः, तस्मात् ज्ञापकमेव प्रत्याहारग्रहणं वृद्धेः पूर्वं टिलोपप्रवृत्तेः, अत एव वादितवन्तं प्रयोजितवानवीवदत् वीणां परिवादकेनेत्यत्र योऽसौ णौ णेर्लोपस्तस्य स्थानिवत्त्वेनाङ्गस्याग्लोपित्वादुपधाह्रस्वत्वनिषेधे प्राप्ते [ णेर्णिच्युपसंख्यानं कर्त्तव्यम् ] इति वार्त्तिकं चारब्धम्, न च णेः पूर्वं वृद्धौ पश्चाल्लोपेऽङ्गस्यानग्लोपित्वात्तस्य स्थानिवत्त्वेनोकारस्योपधात्वविधानात् ह्रस्वो न प्राप्नोतीति वार्त्तिकारम्भः स्यादिति वाच्यम्, यतः [ चङ्परनिर्ह्रासकुत्वेषु ] इति स्थानिवत्त्वं न्यषेधत् । किं च [ ण्यल्लोपे ] इत्यादिना वृद्धेः पूर्वं णिलोपस्योक्तत्वादनग्लोपित्वशङ्कैव न भवति । अत एव भाष्यकारेणोपधाह्रस्वत्वे [ णेर्णिचि ] इति वार्त्तिकमग्लोपित्वाद्ध्रस्वत्वं न प्राप्नोतीत्यारब्धमिति व्याख्यातम्, वृत्तिकारोऽपि वृद्धेः पूर्वं टिलोपमनुमेने, यदाह वादितवन्तं प्रयोजितवानवीवदद्वीणां परिवादकेन योऽसौ णौ णिलोपस्तस्य स्थानिवद्भावादग्लोपित्वाद्धाऽङ्गस्य ह्रस्वो न प्राप्नोतीति, गतमदः । अपरे हलिकल्योरत्वनिपातनस्य भाष्यवार्त्तिकयोरित्वाभावप्रयोजनत्वेन कथनादगिति प्रत्याहारग्रहणादूवृद्धेः पूर्वं टिलोप इति भाष्ये व्यव-

स्थितत्वाच्च वृद्धेरुत्तरकालं पूर्वं वा कामचारेण टिलोप इत्यपपटत् अपीपटदित्युभयमपीति प्रतिपन्नाः। अत्र सतेऽपप्रथदपिप्रथदित्युभयं भवति, एवं अश्वयतीत्यत्रापि, (अशश्वयति, कशयति, द्रढयति,) एषां चङि सर्वथाऽग्लोपित्वात् (अबभ्रशत्, अचकशत्, अदद्रढत्) इति भवति, परिव्रढयतीत्यत्र सोपसर्गात्संग्रामयतेरेव धातुसञ्ज्ञानिमित्तप्रत्ययो नान्यस्मादिति पृथक्कृतोपसर्गाद्वृढादेरेव प्रत्यय इति "तिङ्ङतिङ" इति निघातो भवति, पर्यव्रढयदित्यत्र परेः परोऽड् भवति, परिव्रढय्येत्यत्र परेण्यन्तेन "कुगतिप्रादयः" इति समासे "समासे नञ्पूर्वे क्त्वो ल्यप्" इति ल्यब् भवति, णेः "ल्यपि लघुपूर्वात्" इत्ययादेशः, (परिविव्रढयिषति, पर्यविव्रढत्) इत्यत्र संभ्रडोर्म्रढेरेव द्विर्वचनं भवति, "सन्यत" इति सनीत्वं सन्वदित्वं चाग्लोपित्वान्न भवति। पटमाचष्टे (पटयति,) टेरिति विहितष्टिलोपो णावपि भवति, तस्य स्थानिवत्त्वादुपधावृद्धिर्न भवति, पटमाख्यत् (अपपटत्,) अग्लोपित्वात् सन्वदित्वं न भवति, न चात्रेष्ठवद्भावेनाङ्गस्य भत्वात् "यस्य" इति लोपेनापि पटयतीत्यादिसिद्धेः किं लोपवचनेन, सत्यमत्रैवं सिध्यति, पटुदृषद्राजादिभ्यो णौ पटयति दृषयति राजयतीत्याद्यर्थमवश्यं टिलोपो वाच्यः, "सन्वल्लघुनि" इत्यत्र हरदत्तः। यत्र केवलस्यातो लोपस्तत्र स्थानिवत्त्वेनाङ्गस्य चङ्परणिपरत्वाभावादेवेत्वाभावसिद्धेरग्लोपवचनमज्झल्लोपार्थमपि इत्यत्र दृषद्राजादावपीत्वाद्यभाव इत्याह, तन्न। अनादिष्टादचः पूर्वस्य कस्मिंश्चित्कार्ये विधातव्ये स्थानिवद्भावो न त्वादिष्टादचः पूर्वस्यापीत्यभ्यासेत्वे स्थानिवत्त्वाप्रसङ्गात्, अङ्गस्य चङ्परणिपरत्वं त्वनूद्यते न विधीयतइति तस्य स्थानिवत्त्वाप्रसक्तेरङ्गं चङ्परं न स्यादित्याशङ्का नोदेति, सत्यपि वा स्थानिवत्त्वे तत्सहितमेवाङ्गं भविष्यति, चङ्परणिपरं चेति न स्थानिवद्भावेनाङ्गस्य चङ्परणिपरत्वभङ्गः। ननु कथन्तदुक्तमभ्यासोऽनादिष्टादचः पूर्वो न भवतीति, यतः पटादेर्णौ चङि यष्टिलोपात् पूर्वमनादिष्टादचः पूर्वत्वेन दृष्टः यद्वाऽऽदिः स एव द्विः प्रयुज्यतइति स्यादेवाभ्यासस्यानादिष्टादचः पूर्वत्वं, सत्यमेवं किं तु यत्कार्यत्वेनाश्रीयतेऽभ्यासावस्थं न तदनादिष्टादचः पूर्वं भवति, एवं हलिकल्योरादन्तत्वनिपातनं सङ्गच्छते, अन्यथा यस्य कस्यापि अचष्टिलोपे तस्य स्थानिवद्भावेनाङ्गं चङ्परं न स्यादिति किमत्वनिपातनेन, सत्यपि वा स्थानिवत्त्वे तत्सहितमेव चङ्परणिपरमङ्गं भविष्यति, अभ्यासश्च तस्यैवेति सर्वथा "नाग्लोप" इत्येवेत्वाद्यभावो वाच्यः, (अददृषत्, अरराजत्) इत्यादावनग्लोपेऽभ्यासत्ये- त्वाभावस्त्वनग्लोपइत्यश्रीयमाणस्याको लोपाभावस्याविद्यमानत्वात्, पटुमाख्यदित्यत्र वृद्धेः पूर्वं टिलोपेऽङ्गस्याग्लोपित्वादपपटदित्येके, कृतायां वृद्धौ टिलोपादपीपटदित्येके। कृतायामकृतायां वा वृद्धौ कामचारेण टिलोपादुभयमपीत्यपरे। पक्षद्वयमिदं पुंवद्भावे प्रदर्शितं, पटोऽयं मतभेदोऽन्येषामुवर्णान्तानां कव्यादिनामिवर्णान्तानां च द्रष्टव्यः। कुमार्यादीनां तु पुंवद्भावेन कुमाराद्यादेशविधानात् वृद्धावप्यगेव लुप्यतइति (अचकुमारत्) इत्याद्येव भवति, इदं चाग्लोपित्वेनेत्वाभाववचनं सन्वत्सूत्रस्य चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपर इत्यर्थवादीनां हरदत्तादीनामनुसारेण न तु चङ्परे णौ यल्लघु तस्मिन्परतोऽभ्यासस्येति वादिनां कैयटकारादीनां, तेषां यदत्राभ्यासात्परं लघु न तच्चङ्परणिपरं, यच्चङ्परं न तल्लघु, अभ्यासस्य वर्णान्तरेण व्यवधानान्न तत्पर इति नास्त्यत्रेत्वप्रसङ्गः। तथाहि तत्र भाष्ये अजजागरदित्यत्राभ्यासलघुपरत्वाभावादित्वं न भवतीति उक्तम्, यदा व्यवहितं चात्र लघु चङ्परमिति। यद्येवमचीकृतदजीहरदित्यादावपि व्यवधानं प्राप्नोति। नैतदस्ति। 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इत्येकेन वर्णेन व्यवधानमाश्रीयते न पुनरनेकेनापि। एवमप्यचिक्षणदित्यत्र न प्राप्नोति। एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति भवति संयोगेन व्यवधानेऽपीति, यदयम् "अत्स्मृदृत्वर" इति असस्मरदित्यादीनामित्वाभावार्थमत्वं शास्ति। अवश्यं चैतदेवं चङ्परे णौ यल्लघु तल्लोपस्य स्थानिवत्त्वेन चङ्परणिपरत्वस्याभावादित्वं न भवतीति वाच्यं, तदेतत्स्थानिवत्त्वं न भवत्यभ्यासस्यादिष्टादचः पूर्वत्वात्स-

स्यपि वा स्थानिवत्त्वे तत्सहितमेव चङ्परणिपरमङ्गं भवति, अभ्यासस्य च तस्यैवेतीत्वं दुर्वारमिदानीमेवोक्तम्। अथ कथमत्रेत्वादि भवति वादितवन्तं प्रयोजितवान् अववीदद्वीणां परिवादकेनेति, यावता योऽसौ णौ णिलोपस्तस्य स्थानिवत्त्वेनाभ्यासात्परस्य लघोश्चङ्परत्वं विहन्यते, अत्र वृत्तिकारः परिहरति। ण्याकृतिनिर्देशात्सिद्धमिति। अत एव णिजातेर्निमित्तत्वेनाश्रयणात् गोबलीवर्दन्यायेन णिचोऽन्यस्याको लोप इहाग्लोप इत्यग्लोपित्वादित्वं न प्राप्नोतीत्येतदपि परिहृतं, यत्तु "सन्वल्लघुनि" इत्यत्र भाष्ये णेः परत्वाद्वृद्धौ कृतायां लोप इति अग्लोपित्वाभावादित्वं न भवतीतिवचनं तत् प्रौढिवादमात्रं, यस्त्वयमेव णौ चङीत्यत्र नाग्लोपीत्यगितिप्रत्याहारग्रहणसामर्थ्यात् ण्यल्लोपेत्यादिवचनात् वृद्धेः पूर्वं णिलोपमाह। एवमन्यत्रापि णेर्णा द्रष्टव्यं, वहेः क्ते यजादित्वात् सम्प्रसारणे परपूर्वत्वे हो ढ "झषस्तथोः" इति तकारस्य धकारे तस्य ष्टुत्वेन ढकारे ढो ढे लोपे दीर्घः, ऊढः, तमाचष्टे ( ऊढयति ) चङि अजादित्वात् द्वितीयस्यैकाचश्चङेति द्विर्वचने कर्तव्ये पूर्वत्रासिद्धत्वेन ढत्वादीनामसिद्धत्वे णौ कृतं स्थानिवदिति णिलोपस्य च स्थानिवत्त्वे हशब्दस्य द्विरुक्तौ उत्तरखण्डस्य पूर्ववद्ढत्वादावभ्यासस्य हलादिशेषे "कुहोश्चुः" इति कुत्वेन हकारस्य झकारे तस्य च "अभ्यासे चर्च" इति जश्त्वे जकारः, आदि वृद्धावौजढदिति भवति। अग्लोपित्वात्सन्वदित्वाभाव औजढदिति, क्विनि पूर्ववत् सम्प्रसारणाद् ढिश्शब्दाण्णिचि चङि हति शब्दस्य द्विरुक्तौ। ननु कथमिह ढत्वादीनामसिद्धत्वं, यतः [पूर्वत्रासिद्धीयमद्विर्वचनम्,] इत्युच्यते, सत्यम् "उभौ सम्भ्यासस्य" इति उपसर्गादुत्तरस्यानितेर्नकारस्य णत्वविधानादनित्यत्वज्ञापनादिह तत्र प्रवर्तते, नित्ये चास्मिन् प्राणितांतिवत् प्राणिणिषतीत्यत्रापि अनितेर्नकारस्योपसर्गस्थान्निमित्तात् परत्वेन "अनितेः" इति णत्वे कृते तत्सहितस्यैव द्विर्वचनसिद्धेः किमनेन साभ्यासस्य णत्वविधानेन, कर्तृशब्दाद्वा णाविष्ठवदतिदेशात् छन्दसीति विधीयमाने तृशब्दलोपे करयतीत्येके, एवं भर्त्रादीनामपि भरयतीत्यादि द्रष्टव्यं, दोग्ध्रादेस्तु णौ घत्वादीनां पूर्वत्रासिद्धत्वेन तृशब्दलोपे दौहीयसीत्यादिवद् दोहयतीत्यादि भवति। अन्ये त्वयं तृशब्दलोपश्छन्दस्युपदिष्टः कथं भाषायां स्यादिति कर्तयतीत्यादि प्रतिपन्नाः। पितृयतीत्यादावयं तृशब्दलोपो नाशंक्यः, 'उणादयोऽव्युत्पन्नम्' इति पित्रादिषु व्युत्पत्तिकार्यानाश्रयणादवयवप्रविभागो न भवति। अत्र च ज्ञापकम्। "अप्तृन्" इत्यत्र नप्त्रादीनां ग्रहणमव्युत्पत्तौ तृजन्तत्वादेव दीर्घसिद्धेः किं तेषां ग्रहणेन। त्वमाचष्टे (त्वादयति) "प्रत्ययोत्तरपदयोश्च" इति एकार्थयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमयोर्वृद्धिः, अत्रान्ये 'अङ्गवृत्त' इति वृद्धिम कृत्वा त्वदयति मदयतीति इति मन्यन्ते। अपरे पुनस्त्वमयोः परपूर्वत्वात् पूर्वं नित्यत्वाट्टिलोपे वृद्धौ पुकि ( त्वापयति !मापयति ) इदि भवति, त्वादयतीतिवादिनामन्तरङ्गपरपूर्वत्वमित्यमित्यभिप्रायः। युवामाचष्टे ( युष्मयति ) आवामाचष्टे ( अस्मयति ) "युवावौ" इत्यत्र द्विवचने ह्यर्थवृत्तिताया अभिधानेऽपि णिजुत्पत्तिः प्रातिपदिकादिति विभक्तेरनुत्पादे विभक्तिपरत्वाभावान्न युवावयोः प्रसङ्गः, इह सुबन्तादुत्पत्तावपि विभक्तेर्लुक्त्वेन विभक्तिपरत्वाभावाद्युवावययोरप्रसङ्ग एव, न च मन्तव्यमन्तरङ्गत्वाल्लुकः पूर्वं युवावयोर्द्वितीयायां चेति शेषे लोपापवादे आत्वे पुकि युवापयति आवापयतीति स्यातामिति, यतो 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग् बाधते' उपपादितं चैतत् क्यज्विधौ, "प्रत्ययोत्तरपदयोश्च" इति त्वमौ

युष्मदस्मदोरनेकार्थत्वान्न प्रसजतोऽत।एव युष्मानाचष्टे अस्मानाचष्टे युष्मयत्यस्मयतीत्यत्रापि न भवस्त्वत्वामतिक्रान्तः अतिक्रान्तौ अतिक्रान्तान् ( अतीत्वामेवमतिमाम् अतित्वान् अतिमान् ) अत्र च युष्मदस्मदोरेकार्थत्वाद्विभक्तिपरत्वाच्च "त्वमावेकवचने" इति त्वमयोः शेषेऽल्लोपापवादे "द्वितीयायां च" इति पूर्ववदात्वे शसोऽन्यत्र विभक्तेः "ङेः प्रथमयोः" इत्यमादेशः। शसि तु "शसो न" इति युष्मदस्मद्भ्यां परस्य शस आदेर्नकारे सकारस्य संयोगान्तलोपः, "युवावौ द्विवचने" इत्यत्र द्व्यर्थवचनं द्विवचनं, तच्च युष्मदस्मदोर्विशेषण-

मिति स्थितत्वादौङि युवावयोरप्रसङ्गः, अत्रार्थे णौ युष्मदस्मदोरेकार्थत्वेन "प्रत्ययोत्तरपदयोश्च" इति त्वमयोरन्तङ्गत्वात्परपूर्वत्वे ततष्टिलोपे वा (अतित्वयति। अतिमयति) इति भवतः, अत्रापि परपूर्वत्वात्पूर्वं नित्यत्वाट्टिलोप इति वादिनाम् (अतित्वापयति, अतिमापयति) इति स्यात्, युवामतिक्रान्तमतिक्रान्तावतियुवामतिक्रान्तान् अतियुवान्, एवमत्यावामत्यावान्, युष्मदस्मदोर्व्यर्थत्वात् विभक्तिपरत्वाच्च "युवावौ द्विवचने" इति युवावयोः पूर्वत्वाद् "द्वितीयायां च" इत्यात्वं "ङेः प्रथमयोरम्" इत्यम्भावः, शसो नादि च भवति, युष्मानतिक्रान्तो ऽतिक्रान्तौ अतियुष्मानतिक्रान्तानतियुष्मानेवमत्यस्मान्, पूर्ववदात्वविभक्तिकार्ये, सर्वत्रार्थे णौ युष्मदस्मदोरनेकार्थत्वात्त्वमयोरभावात् (अतियुष्मयति। अत्यस्मयति) इति भाव्यं, श्वानमाचष्टे (शावयति) अत्र श्वन्निति स्थिते णाविष्ठवदतिदेशाद् द्वौ टिलोपौ प्राप्नुतः, टेरित्येको "नस्तद्धित" इति अपरस्तत्र "प्रकृत्यैकाच्" इति प्रकृतिभावष्टेरित्यस्यैवेति तस्मिन्निवृत्तेऽपि "नस्तद्धित" इति भवति तत्र कृते इष्ठनोऽजादित्वेन तत्र परे पूर्वस्य भत्वं दृष्टमिति णावप्यतिदेशेन तस्य सम्भवाद्वकारसम्प्रसारणे वृद्ध्यावादेशः। नन्विष्ठवदतिदेशवाक्ये णावित्युपमेये सप्तमीश्रवणादिष्ठवदित्युपमाने वतिः सप्तम्यन्तात् इति तत्र परे पूर्वस्य यत्कार्यं दृष्टं तदेवातिदेष्टव्यं, णावपि परे पुनर्णेरिष्ठनः तद्धितत्वमपि इति, तत्र "प्रातिपदिकस्य" इति वचनस्य प्रत्ययकार्याणामतिदेशनिवृत्त्यर्थत्वाद्वा णेस्तद्धितत्वस्याभावात्कथं "नस्तद्धित" इति टिलोपोऽत्र स्यात्, अतद्धितत्वादेव त्वयाप्योर्गुणो न कृतः। उच्यते। असत्यपि तद्धितत्वे ब्रह्मवत्तरो (ब्रह्मिष्ठः) इत्यादौ विन्मतोर्लुकि इष्ठनि परे प्रकृतो नान्तलक्षणष्टिलोपो दृष्ट इत्यत्रेष्ठनोऽभावेऽपि सम्भावनया स्यादेव, यथा पट्वितमा पटिष्ठेत्यादौ "भस्याढे तद्धिते" इति पुंवद्भावात्कुमारीमाचष्टे कुमारयतीत्यादौ इष्ठनः सम्भावनया भवति, एवं तर्हि दविष्ठ इत्यादाविष्ठन्योर्गुणः पूर्वस्य दृष्ट इत्यत्राप्यतिदेशः प्राप्नोति। नैष दोषः। तदस्मिन्सम्प्रसारणटिलोपौ "असिद्धवदत्र" इत्यसिद्धौ भविष्यतः। अन्ये तु ब्रह्मिष्ठ इत्यादौ नान्तलक्षणाट्टिलोपात् परत्वाट्टेरित्यनेनैव भवितव्यमिति तस्याप्रवृत्तेरिष्ठनि परे पूर्वत्वादर्शनादिहातिदेशो न युक्त इति तदभावात् केवलं सम्प्रसारणपूर्वत्वयोः शुनयतीति भवतीति मन्यन्ते। नन्वनयोराभीययोष्टिलोपयोः "असिद्धवदत्र" इत्यन्योन्यस्यासिद्धत्वात्कथं विप्रतिषेधः, "घुमास्था" इत्यत्र हल्ग्रहणेन विप्रतिषेधइदमसिद्धत्वं नेति ज्ञापनात्, तद्धलग्रहणं (गोद) इत्यादावजादौ क्ङित्यार्धधातुके ईत्वं माभूदिति। यदि च विप्रतिषेधे इदमसिद्धत्वं स्यात् कृतेऽपीत्वे तस्यासिद्धत्वादातो लोपे सिद्धं गोद इत्यादौति किं हल्ग्रहणेन, नन्वेतदीत्वेऽपि "अचि श्नुधातु" इतीयङ् स्यादिति तन्निवृत्त्यर्थमीत्वमेव माभूदिति अर्थवदेव। नैतदस्ति प्रयोजनं, यदि यङोऽप्याभीयत्वे न तस्मिन्नपि तस्यासिद्धत्वात्, मैवं, युटो यणोवेयङीत्यस्यासिद्धत्वस्याभावो वाच्यः, अन्यथा धियौ पियाविति न सिध्यति। यद्दधातिपिबत्योः क्तौ कृतं "घुमास्था" इतीत्वमियङ्यसिद्धं स्यात्, नैतदस्ति, "ध्यायतेः सम्प्रसारणं च" इति ध्यायतेः प्यायतेश्च क्तौ सम्प्रसारणदीर्घत्वयोर्धीपीशब्दयोर्व्युत्पादनादवश्यं चैतदेवं वाक्यकारस्य मते विज्ञेयमन्यथा तेन वकारे प्रतिषेध इति क्वावपीत्वाभावस्योक्तत्वाद्धापाशब्दावेव स्यातां, तथा च तत्र भाष्ये यदि तर्हि वकारे प्रतिषेध उच्यते कथं धीरिति नोदयित्वा धीरिति चोक्तं, किम्मुक्तं नैतदीत्वं किं तर्हि ध्याप्योः सम्प्रसारणमित्युक्तं, यदपि मतमीत्वे वकारस्य निषेध इत्यस्य भाष्ये ऽनवस्थानात् क्वाप्येतौ शब्दौ भवत इति तदपि क्वावीत्वं, विभक्तावियङिति व्याश्रयत्वान्नास्त्यसिद्धत्वप्रसङ्गः। एवमपि व्यवस्थार्थं हल्ग्रहणं कर्तव्यमेव, अन्यथाभीयानामन्योऽन्यस्मिन्नन्योन्यस्यासिद्धत्वादीत्वमाल्लोपे सिद्धमाल्लोपश्चेत्व इति व्यवस्था न प्रकल्पेत, एवं तर्हि "आतो लोप इटि च" इत्यजादौ क्ङित्यार्धधातुके ऽकारस्य लोपो भवति, ततो घुमास्थागापाजहातिसां धादेरपि आकारस्य लोपो भवति, पूर्वोक्ते इङादौ परे, इदं चेत्वबाधनार्थम्, इदं

वाजादावाल्लोपस्योक्तत्वाद्धलादौ ङ्कित्यार्धधातुके भवति, तत "पुलिङ्गि" "वान्यस्य संयोगादेः" "न ल्यपि" "मयतेरिदन्यतरस्याम्" यति ततो, आत इत्येव, यति चात ईद्भवत्येवं लघीयसा न्यासेन सिद्धावपि यद्गरीयसा यत्नमास्थाय हल्ग्रहणं करोति तस्यैतत्प्रयोजनं विप्रतिपेधे नेदमसिद्धत्वमिति, एवमप्युक्तो विप्रतिषेधः, इष्ठवदतिदेशेनैव द्वावपि टिलोपौ प्राप्येते इत्येकयोगलक्षणत्वेन पौर्वापर्याभावात्, तथा "प्रत्ययलोप" इत्यत्र वार्तिकं तुग्दीर्घयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीरिति, न युक्तो विप्रतिषेधः । किमनेनातिदिश्यते,यत्प्रकृताववस्थितं तत्र च परत्वात् "नस्तद्धित"इत्येतं बाधित्वा टेरित्येव व्यवस्थितमिति, "प्रकृत्यैकाच्" इत्यत्र भाष्यादौ (ब्रह्मिष्ठ) इत्यत्र "नस्तद्धित" इति टिलोपो विहितः । विद्वांसमाष्टे इति णौ टिलोपे विद्वयतीति दौर्गाः । अत्रात्रेयः—प्रसारणाभावश्चिन्त्य इति, तत्रेष्ठवद्भावेन भत्वात् "वसोः सम्प्रसारणम्" इति सम्प्रसारणे वृद्धावायादेशे विदावयतीति भवति, भवितव्यमित्येके । अपरे तु ब्रुवते । कृतेऽपि टिलोपे प्रसारणं प्राप्नोतीति नित्यत्वात् कृते तस्मिन्ननन्तरङ्गत्वात्परपूर्वत्वे पश्चाट्टिलोप इति विदयतीति । ननु टिलोपोऽपि कृते सम्प्रसारणे प्राप्नोतीति नित्यः, नैतदस्ति, कृते सम्प्रसारणे ऽन्तरङ्गत्वात् परपूर्वत्वे शब्दान्तरप्राप्त्या नित्योऽयमनित्यो भवति । स्यादेतदेवं यदि प्रसारणमात्रेण शब्दान्तरप्राप्तिः स्यान्नेह तथा किं तु परपूर्वत्वेन, यस्य च लक्षणान्तरेण निमित्तं विहन्यते नैतदनित्यं भवति । नैष दोषः । यस्य निमित्तमिति परिभाषा न सार्वत्रिकी, उक्तं चैवम् "आडजादीनाम्"इत्यत्र हरदत्तादिभिः। अमुमेव पक्षमाश्रित्य अस्माभिर्माधवीयायां धातुवृत्तौ विदयतीति प्रदर्शितम् । उदञ्चमाचष्टे (उदीचयति) । अत्र सोपसर्गात्संग्रामयतेरिति ज्ञापकाद्धातुसंज्ञानिमित्ते प्रत्यये उपसर्गाणां पृथक्करणात् क्विन्नन्ताल्लुप्तनकारान्तादञ्चतेरेव णौ "प्रकृत्यैकच्" इति प्रकृतिभावाट्टिलोपाभावो, णाविष्ठवदतिदेशेन भत्वे "अच" इति तु लुप्तनकारस्याञ्चतेः प्राप्ताकारलोपापवाद "उद ईत्" इतीत्वं भवति । चङिणिलोपस्य "द्विर्वचनेऽचि" इति स्थानिवत्त्वात् अजादेर्द्वितीयस्य"इति चिशब्दस्य द्विर्वचने अङ्गस्याटि वृद्धौ उदैचिचदिति भवति, ल्यपि लघुपूर्वत्वाभावेनायादेशाभावाण्णिलोप, उदिच्येति भवति, प्रत्यञ्चमाचष्टे प्रतीचयति,अत्रापि पूर्ववदञ्चतेर्भत्वात् "अच" इत्यकारलोपे "चौ"इति लुप्तनकारेऽञ्चतौ पूर्वपदस्य दीर्घः । चङि चिशब्दात् पूर्वमाटि यणादेशे (प्रत्यचिचत्) "इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च" इति यदेकोसवर्णेऽचि प्रकृतिभावो दीर्घस्य च ह्रस्वस्तदा प्रति अचिचदिति भवति । ल्यपितु पूर्ववत् प्रतीच्येति भवति । सम्यञ्चमाचष्टे (समीचयति)। "समः समि" इत्यञ्चतौ सम्यादेशे "अचः" इत्यकारलोपे "चौ" इति दीर्घः । अत्रापि चङ्ल्यपोः पूर्ववत् सम्यचिचत् समीच्येति भवति, तिरोऽञ्चतीति (तिर्यङ्) "तिरसस्तिर्यलोपे" इति तिर्यादेशः, तमाचष्टे (तिराययति) इष्ठवद्भावेनाञ्चतेष्टिलोपे वृद्ध्यायौ, तिरस इत्यत्रालोप इति अलोपे तिर्यादेशाभावो "अच" इत्यञ्चतेर्विधीयमानाकारलोपविषयः, स ह्यनन्तरः, "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" अत्र पुनरिष्ठवद्भावप्रवृत्त्या "टेः" इति तिरेरिकारस्य वृध्यायोः कृतयोर्वा लोपो न भवति, 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति । यद्वा "असिद्धवदत्र" इति प्राथमिकस्याञ्चतिटिलोपस्य चारमिकेऽस्मिन्नसिद्धत्वात्,यथाकारितरामित्यत्र तशब्दे पूर्वप्रवृत्तश्चिणो लुक् पुनस्तरपि स्वप्रवृत्तावसिद्धो भवति, अत एव तिरेः स्थानिवत्त्वेनाव्ययत्वात् 'अव्ययानां भमात्रे' इति प्राप्तोऽपि टिलोपो न भवति, एवमपीकारस्य "यस्य" इति लोपेन भवितव्यमिति चेन्न । टिलोपस्यासिद्धत्वात्परया वृद्ध्या बाधाद्वा । यत्तु "कस्येत" इत्यत्र भाष्ये कार्यमित्यत्रेकारवचनसामर्थ्याद् "यस्येति च" इति लोपाभाववचनं तदुपज्ञान्तरपरतया कथं चिन्नेयम् । अस्याग्लोपित्वेनोपधाह्रस्वत्वाभावात् (अतितिरायत्) इति, सहाञ्चतीति (सध्र्यङ्) "सहस्य सध्रिः" इति सध्र्यादेशः, सध्रिमाचष्टे (सध्राययति,) पूर्ववत् ध्रेरिकारलोपाभावः, चङि (असससध्रयत्,) अग्लोपित्वादुपधाह्रस्व-

त्वाभावः, अभ्यासस्येत्वं तु लघुपरत्वाभावादपि न भवति, यदीष्ठवद्भावेन प्राप्तस्याच्चतेष्टिलोपस्य तिर्यादेरिकारे पुनः प्रवृत्तावसिद्धत्वं तर्हि कुमारयतीत्यादाविष्ठवद्भावेन प्रवृत्तं पुंवत्त्वं तेनैव कुमारादेरकारलोपे ऽसिद्धं, नैष दोषः, इष्ठवत्त्वभावेनातिदिश्यमानानां कार्याणामुत्पत्तिदेश एव देश इत्याश्रयणात्पुंवत्त्वोत्पत्तिश्च "भस्याढे तद्धिते" इति विधीयमाना आभीयान भवति,अत एव भाष्यकारेण लोहिनीमाचष्टे लोहितयतीत्यादिषु इष्ठवद्भावेन लोहितादेशेनपुनष्टिलोपः कृतः,एवमपि सध्र्यतीत्यादावङ्गवृत्तिपरिभाषया वृद्धिर्न प्राप्नोतीति नाशंक्यम्, यस्मादेषा भाष्यकारादिभिर्यत्राश्रिता तत्रैव प्रवर्तते, अत एवात्र परिभाषावाक्ये निष्ठित स्येत्युक्तं, निष्ठितत्वं च प्रयोगार्हत्वं, तच्चाप्तभाषितमन्तरेणावगन्तुं न शक्यते। विषु अञ्चति गच्छतीति ( विष्वक् ) तमञ्चतीति ( विष्वद्र्यङ् )। देवान् अञ्चतीति ( देवद्र्यङ् ) "विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये" इत्यद्र्यादेशः विष्वद्र्यञ्चमाचष्टे ( विषद्र्यायति, ) एवं ( देवद्र्यायति ) पूर्ववदञ्चतेर्लोपे "यस्य" इति लोपात्परत्वादद्र्योकारस्य वृद्ध्वायादेशः। विष्वक्शब्दोऽयं धर्मवचनोऽपि दृश्यते। यथाद्योरस्य सतो विषुणचारुरित्यत्र, विष्वगित्युत्तरपदलोपश्चाकृतसन्धेरिति लोमादिलक्षणे मत्वर्थीये नकारे उत्तरपदस्याकृतसन्धेर्लोपः। अत्र भट्टभास्करः। विषुणस्य, नानाविधा या गतिस्तद्वतः, "विष्वग्देवयोश्च" इति च शब्दात्सर्वनाम्नो ऽद्र्यादेशे सर्वद्र्यायतीत्यादि। अदसो ऽद्र्यदेशे पक्षत्रयम्। "अदसोऽसेर्दादु दो मः" इति उत्वमुभाभ्यामपि दकाराभ्यां परयोः, मत्वं च द्वयोरपि दकारयोरित्येकः पक्षः। उत्वमत्वे परयोरेवेति द्वितीयः, नेति तृतीयः, तथा चोक्तम्।

'अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत्।
केचिदन्त्यसदेशस्य नेत्येके ऽसेर्हि दृश्यते॥

इति। तत्रोत्त्वमत्वयोः ( अमुमुआययति, अदमुआययति ) इति भवतः, उकारस्य तु यणादेशः पूर्वत्रासिद्धमित्यसिद्धत्वान्न भवति। उत्वमत्वयोरभावे त्वदद्रायततीति। चङि अजादित्वेन द्वितीयस्यैकाचो द्विर्वचनेऽग्लोपित्वादुपधाह्रस्वत्वाभावात् (अमुमुआयति) इति, उत्वमत्त्वयोरभावे "सन्वत्" इतीत्वमग्लोपित्वादभ्यासस्य चङ्परलघुपरत्वाभावाद्वा न भवति। उत्वमत्वयोः [ पूर्वत्रासिद्धीयमद्विर्वचने ] इति असिद्धत्वाभावः, त्वामञ्चति ( त्वद्र्यङ् ) मामञ्चति ( मद्र्यङ्, ) उत्तरपदत्वात् "प्रत्ययोत्तरपदयोश्च" इति एकार्थवृत्तयोर्युष्मदस्मदोर्मपर्यन्तस्य त्वमादेशौ, पूर्ववदद्र्यादेशः, णौ तु (अदद्रायति, मद्रायति) युवामञ्चति आवामञ्चति ( युष्मद्र्यङ्, अस्मद्र्यङ्।, ) अत्र युष्मदस्मदोरुत्तरपदपरत्वेऽप्यनेकार्थत्वान्न त्वमौ, "युवावौ द्विर्वचने" इत्यत्र द्विर्वचननेन द्व्यर्थवृत्तिताया अभिधानेऽपि विभक्तेर्लुका लुप्तत्वेन तत्परत्वाभावान्न युवावादेशौ, न लुकः पूर्वमन्तरङ्गत्वेन भवतो "अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत" इत्युक्तत्वात्। युष्मानञ्चति ( युष्मद्र्यङ्, ) अस्मानञ्चति ( अस्मद्र्यङ्, ) सर्वत्रात्र णौ ( युष्मद्रायति अस्मद्रायति) इति भवतः। एवं त्वामतिक्रान्तमतिक्रान्तौ अतित्वामतिक्रान्तान् ( अतित्वान् ) एवमतिमाम् ( अतिमान् )। एषु कर्मसूपपदेषु अञ्चेः क्विपि (अतित्वदङ्, अतिमदङ्)। अत्र टिलोपे जाते (अतित्वादयति, अतिमादयति ) इति भवतः, युवामतिक्रान्तमतिक्रान्तौ वा अतियुवामतिक्रान्तानतयुवान्, एवमत्यावामत्यावान्, एषु कर्मसूपपदेषु क्वावतियुष्मदङ् अत्यस्मदङ्, युस्मदस्मदोर्द्वयार्थत्वेऽपि 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत'इति पूर्वमेव विभक्तेर्लुका लुप्तत्वात् विभक्तिपरत्वाभावान्न युवावौ नाप्युत्तरपदनिबन्धनौ त्वमौ, एकार्थत्वाभावादत एव युष्मानतिक्रान्तमतियुष्माम्, अतिक्रान्तनतियुष्मान्, एवमत्यस्मामत्यस्मानित्यनयोरपि कर्मणोः अञ्चतावप्रत्यये उत्तरपदे त्वमयोरभावादतियुष्मदङ् अत्यस्मदङ् इति भवतः, सर्वत्रात्र णावञ्चतेष्टिलोपे एकार्थत्वाभावादेव प्रत्ययनिबन्धनावपि त्वमौ न भवत इति ( अतियुष्मादयति अत्यस्मादयति ) इति भवतः, सर्वत्रातित्वादयतीत्यादौ युष्मदस्मदोरुप-

सर्जनत्वात्संज्ञोपसर्जनप्रतिषेध इति सर्वनामत्वाभावादद्वयादेशो न प्रदर्शितः । कमाचष्टे (कापयति, अचीकपत्, ) "प्रकृत्यैकाच्" इति प्रकृतिभावाट्टिलोपाभावे वृद्धौ पुगागमः, अमाचष्टे (आपयति, ) चङि तु माभवानोणिणदित्यत्र नित्यत्वाद् द्वितीयस्यैकाचोद्विर्वचने ओकारस्यानुपधात्वादेव णौ चङि ह्रस्वाव्भावसिद्धे ऋदित्करणेन "नाग्लोपि" इत्यादिना ह्रस्वत्वनिषेधाद् द्वितीयद्विर्वचनात् पूर्वमुपधाह्रस्वत्वस्य ज्ञापनात्, कृते च तस्मिन् "द्विर्वचनेऽचि" इति णिलोपस्य स्थानिवत्त्वेनाजादित्वात् पिशब्दस्य द्विर्वचने (माभवान पिपत्) इति भवति, इमाचष्टे (आययति, ) उमाचष्टे (आवयति,) अरमाचष्टे (आरयति,) अलमाचष्टे (आलयति, ) ऋकारलृकारयोः सावर्ण्यात् तयोः "उरण् रपर"इति रपरत्वाद्यरपरावृद्धिः । एषां णौ चङ्युपधाह्रस्वे ततो द्वितीयस्यैकाचो द्विर्वचने (माभवानयियत्, माभवानविवत् माभवानरिरत्, माभवानलिलत्) इति तत्र भवति । अत्र णौ कृतं स्थानिवदिति वृद्ध्यादेर्द्विर्वचने न स्थानिवत्त्वं, यद्यं स्थानिवद्भावः स्थानिरूपस्य द्विर्वचने कर्तव्ये भवति; इह तु स्थानिवद्भावाण्णेरेव द्विर्वचनं, पुनातीति पूः, भवतीति भूः, लुनातीति लूः, जवतीति जूः, एभ्यो णौ (पावयति, भावयति, लावयति, जावयति, ) लुङि णौ चङि ह्रस्वत्वे ण कृतं स्थानिवदिति पुप्रभृतीनां द्विर्वचने पुनरुत्तरखण्डस्य वृद्ध्यावयोर्ह्रस्वत्वे वा ऽभ्यासस्य च ह्रस्वत्वे तस्यावर्णपराः पुयण्जः परा इति सन्वद्भावे "ओः पुयण्जि" इति सनि विधीयमानइत्वे दीर्घे च (अपीपवत्, अलीलवत्, अजीजवत्) इति भवति । नन्वत्र पूप्रभृतीनां द्विर्वचने पुनरुत्तरखण्डस्य वृद्ध्यादेशह्रस्वत्वानिति घादेरभ्यासस्यानादिष्टादचः पूर्वत्वात्सन्वद्भावेन पुयण्जिलक्षणे सन्वदित्वे प्राप्ते "णौ चङि" इति ह्रस्वस्य "अचः परस्मिन्" इति "स्थानिवत्त्वेनालघुपरत्वात् कथमित्वं, नैष दोषः । "ओः पुयणजि" इति इत्वस्य सन्वद्भावे सन्वदतिदेशस्यानर्थक्यप्रसङ्गात् स्थानिवद्भावस्यात्राप्रवृत्तेः, इदमेव ओः पुयणजीति वचनं ज्ञापकं णौ कृतस्य स्थानिवत्त्वे, अन्यथा न क्वचिदपि पुयणजिपरोऽवर्णात्परोऽभ्यासः सम्भवति, नन्वत्रास्ति सम्भवः पिपचितेः पिपचिषतीति, यवतेर्यौतेश्च "स्मिपूङ्रञ्ज्वशां सनि" "सनीवन्तर्द्ध" इतीटि गुणावादेशयोः "द्विर्वचनेऽचि"इति स्थानिवद्भावेन पूयूशब्दो द्विरुच्यते, एवमपि पुइत्युदिद्ग्रहणं जग्रहणं च णौ कृतस्य स्थानिवत्त्वाभावेऽनर्थकमेव स्यादिति ज्ञापकमेव ।यद्येवमचिकीर्तदिति "उपधायां च"इत्यृकारस्येत्वं णौ कृतमिति स्थानिवद्भावादकारवदेकाचो द्विर्वचनेऽभ्यासस्योरदत्वादचिकीर्तदिति प्राप्नोति, नैतदस्ति । यत इदं ज्ञापकं यथा जातीयकाः पुयणजस्तथा जातीयकानामेवेति इह न प्रवर्तते,कथं जातीयकाः, पुयणजः, अवर्णवदुत्तरखण्डाः, स्पष्टं चैतदेवम् "उरत्" इत्यत्र रक्षितपदमञ्जर्यादिषु, "द्विर्वचनेऽचि" इति सूत्रे भाष्येऽप्येवमेव स्थितम्।यत्तु "स्तौतिण्योरेव" इत्यत्र न्यासे क्षिपेचयिषतीत्यत्र सेचेर्हेतुमण्णौ गुणे सनीड्गुणायादेशयोरुत्तरखण्डस्यावर्णपरत्वाभावेऽप्यस्याः परिभाषायाः सामान्याश्रयेण सिच्शब्दस्य द्विर्वचनकथनं तदेवमप्यत्र रूपाभेद इत्येतावन्मात्रतया न तु सिद्धान्तस्थित्या । अन्यथा पूर्वोक्तन्यासेन भाष्यादिना विरोधः स्यात्, एवं च सीरदेवेनास्याः परिभाषायाः विशेषविषयतामुक्त्वा पूर्वोक्तन्यासप्रामाण्यात् "पूर्वत्रासिद्धम्" इत्यत्र वृत्तौ उत्तरखण्डस्याचोऽभावेऽपि स्थानिवत्त्वाप्रायेणौजढदिति, द्विर्वचनोक्तेऽल्लोपः "पिबतेरीच्चाभ्यासस्य" इत्यत्र चापीप्यद् इत्युदाहरणे णौ कृतस्योपधालोपस्य स्थानिवत्त्वेन पाप्शब्दस्य द्विर्वचनाच्च यत्सामान्यविषयत्वकथनं तदपि प्रत्युक्तं, कथं तर्हि (औजढत् अपीप्यत्) इति, यत् द्विर्वचनोत्तरकालमपि टिलोपेन "लोपः पिबतेः" इत्यनेन वोत्तरखण्डेऽवर्णाद्यहारस्यावश्यंभावित्वात् प्रयोगगतमवर्णं न पश्याम इति णौ कृतपरिभाषानुपस्थानात्, अनच्कत्वाद् द्विर्वचनमेव न स्यात् । उच्यते । यद्यपि प्रयोगेऽवर्णवन्तमुत्तरखण्डं न पश्यामः प्रक्रियायां तु पश्याम एवेति द्विर्वचनेनोत्तरकालं प्रवर्तमानेनावर्णाहारेण न कश्चिद्दोषः । एवं चैतदर्थमवर्णोत्तरखण्डे परिभाषेयं नित्या अन्यत्र क्वचित्प्रवर्त्तत इति व्यवस्थाशून्यं सीरदेववचनं नाश्र-

-चणीयं भवति, कथं तर्हि (सिषेवयिषति) इति, यदिह द्विर्वचने उत्तरखण्डमवर्णन्न भवतीति-णौ कृतस्य गुणस्य स्थानिवत्त्वं न स्यात्, मास्तु गुणस्य द्विर्वचनेऽभ्यासह्रस्वत्वेनैवं रूपं सिध्यति। भ्रूवमाख्यत् अबुभ्रवदित्यत्र योऽवर्णपरो यण् नासौ।ओः पर इतीत्वाभावः। अशिश्रयदित्यत्राभ्यासस्येत्वं णौ कृतस्य स्थानिवत्त्वेन श्रीशब्दस्य द्विर्वचनात्। हेशब्द-माख्यत् (अजीहयत्,) गावमाख्यत् (अजूगवत्,)रायमाख्यत् (अरीरयत्,) नावमाख्यत् (अनूनवत्) अत्रापि णौ कृतपरिभाषया सन्ध्यक्षरस्य द्विर्वचनेऽभ्यासस्य ह्रस्वत्वे लघु भवति। अत्रोपसर्गग्रहणं प्राद्युपलक्षणम्, अन्यथा स्वश्वमाख्यत्स्वासश्वयदित्यादि न सिध्यति। स्वराचष्टे (स्वरयति,) 'अव्ययानां भमात्रे' इति टिलोपः "प्रकृत्यैकाच्" इति प्रकृतिभावस्तु येन नाप्राप्तिन्यायेनानन्तर्याच्च टेरित्यस्यैव, टिलोपस्य स्थानिवत्त्वाभावा-त्स्वशब्दस्य द्विर्वचने असिस्वयदित्येके। अन्ये तु णौ कृतत्वेन टिलोपस्य स्थानिवत्त्वा-त्स्वरशब्दस्यैव हि द्विर्वचनं युक्तमित्यसस्वरदित्याहुः। अत्राभ्यासस्येत्वमुत्तरखण्डस्य पुनष्टिलोपेन लघुपरत्वाभावान्न भवति। न च टिलोपात्पूर्वमेवास्ति लघुपरत्वमिति स्यात्, नित्यत्वात्तस्य, न च णिचा लघुपरत्वं, तस्य निमित्तत्वेन ततोऽन्यस्य लघोस्तत्राश्रयणस्य स्थितत्वात्, बहु च बहुत्वं वाचष्टे (भावयति,) अत्र "इष्ठस्य यिट् च" इतीष्ठनि विहितत्वात् बहोर्भूभावः, यिडागमस्तु णावित्युपमेये सप्तमीश्रवणादिष्ठवदित्युपमानादपि सप्तम्यन्ताद्वतिरितीष्ठनि परे पूर्वस्य यत्कार्यं तदेवातिदिश्यते, न तु इष्ठनोऽपीति प्रातिपदि-कस्येतिवचनस्याप्रत्ययकार्यातिदेशार्थत्वाद्वा न भवति, "टेः" इत्यत्र कैयटे भावयतीत्यु-दाहृत्य यिट्सन्नियोगशिष्टत्वाद्भावस्य यिडभावे भूभावस्याप्यभावात् बहयतीत्येकीय-मतेनोपन्यस्तं, पदमञ्जर्यां तु बहतीति स्वपक्षमुक्त्वा भावयतीत्येकीयमतेनोक्तम्। अत्र शास्त्राणां कार्यस्य च प्राधान्यात्तदेवातिदेष्टुं युक्तमितीष्ठवद्वचनमेवेष्ठनि परतः प्रकृतौ दृष्टं कार्यं णावपि विधत्तइति भूभावस्य सन्नियोगशिष्टत्वाभावाद् भावयतीत्येव युक्तमिति वयमुत्पश्यामः। एवं च यदुक्तं पुरुषकारे बहयतीत्युदाहृत्येष्ठनि यत् दृष्टं कार्यं तद्व्यति-दिश्यते, न चेष्ठनि युट् नापि इष्ठवद्भूभावश्च, यिट्सन्नियोगशिष्टत्वात्तदभावे तु भाव-यतीति चिन्त्यमाप्तैरिति। तदेव चिन्त्यं भवति। चान्द्रकौमारशाकटायनेषु पुनरिष्ठनि युक् चेति बहोरेव युक् विधीयते तत्र मते ऽत्रापि भूयतीति भाव्यम्।

सूत्रवार्तिकभाष्येषु नायं पक्षः प्रदर्शितः।
विरुद्धश्चेति तैरेव न वयं बहु मन्महे॥
अस्त्येव हि विरोधोऽत्र पक्षे युक् प्रकृतेर्भवेत्॥
तेन णावपि तस्य स्यादतिदेशो युटः पुनः।
प्रत्ययस्यैव शेषत्वान्नातिदेशो भवेद्यतः॥

टिलोपः। यणादिपरलोपः। 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः', स्थूलादिभ्यः इष्ठेमेयःसु परं यणादि लुप्यते, तत्र पूर्वस्य च गुणो भवतीत्येतस्मादपि भवति, यणादीत्येतावत्युच्यमाने पुनः सर्वस्य लोपादियतीतिवत् प्रत्ययस्यैव श्रवणं स्यादिति परव-चनमत्र, पूर्वस्य गुणवचनं स्थविष्ठ इत्यादावोर्गुणो यणादिपरलोपस्य "असिद्धवदत्र" इत्य-सिद्धत्वादवर्णान्तस्य भस्याभावान्न स्यात् प्रसङ्गः, क्षेपिष्ठ इत्यादावुवर्णान्तस्य भस्यैवाभा-वाच्च, अत्रेक्परिभाषोपस्थानादन्त्यस्य गुणो न भवति, ह्रसिष्ठं इत्यादौ त्विकोऽभावान्नैव भवति, अत एवोक्तं वृत्तौ पूर्वग्रहणं विस्पष्टार्थमिति। नन्वेतदिक्परिभाषाबाधेनानिकोऽप्य-न्त्यस्य गुणार्थं स्यात्, नैतत्, "इको गुणवृद्धी" इत्यत्र भाष्यवार्तिकयोर्हंशिक्षिप्रक्षुद्रेष्विग्र-हणमिति एक एव गुणस्योक्तत्वात्, (स्थवयति, दवयति, क्षेपयति, क्षोदयति) इति, अत्र यवयतीत्यादौ गुणस्य "अचोऽञ्णिति" इति वृद्धिः 'अङ्गवृत्त' इति वा "प्रातिपदिकाद्धात्वर्थे बहुलम्" इति बहुलग्रहणाद्वा न भवति, अत्र युवतिशब्दादपि इष्ठेयसुनोर्लिङ्गविशिष्टपरि-

भाषया यणादिपरलोपादेशेवाणणावपि यणादिपरलोपादौ यवयतीत्येव रूपं, यद्वात्रेष्ठवद्भावात् पुंवत्त्वेन युवशब्दआदेशे तस्य यणादिपरलोपे भविष्यति तदेव रूपम् , अत्र प्रक्रियारत्ने बहुना दूरयतीत्यपि कौमारश्चिन्त्यः । ( दवयति ) इत्येव भाष्ये उदाहृतत्वेन तेषां यत्किञ्चित् प्रयोगमात्रमूलत्वादस्यापि सम्भवाच्चेति सुधाकरकारोऽपि 'शीकरव्यतिकरमरिचिभिर्दूरपत्यवनते विवस्वति'इति प्रयोगमुपादायेष्ठवद्भावाद्दवयतीति भवितव्यमिति,यणादिपरलोपे । विन्मतोर्लुक् । स्रगस्यास्तीति ( स्रग्वी, ) "अस्मायामेधास्रजो विनिः" । तथा गावोऽस्येति मतुपि गोमान्, तत्र ( स्रजिष्ठो, गविष्ठ ) इत्यादौ भवन्विन्मतोर्लुक् स्रजयति गवतीत्यादावपि भवति । तत्र कृते "टेः" इति प्रकृतेर्यष्टिलोपः प्राप्तः स "प्रकृत्यैकाच्" इति प्रकृतिभावान्न भवति तत्राजन्तेषु "अचो ञ्णिति" इति वृद्धिः, स्रगादिषु "अत उपधाया" इति 'अङ्गवृत्ते पुनर्वृत्तावविधिः'इति न भवतीति भाष्ये स्थितम् । सन्वल्लोपित्वात्सन्वदित्वदीर्घत्वयोरभावात् ( असस्रजत्,अजुगवत् ) इत्यादि भवति, मोयाविनमाचष्टे मेधाविनमाचष्टे वसुमन्तमाचष्टे इषद्वन्तमाचष्टे इत्यादौ विन्मतोर्लुकि प्रकृतेरनेकाच्त्वाट्टिलोपे ( भावयति, मेधयति, वसयति, इषयति ) इत्यादि भवति, सकारान्तानामपि पयस्विनमाचष्टे तेजस्विनमाचष्टे आयुष्मन्तमाचष्टइत्यादौ णौ विन्मतोर्लुगिति लोपे ( पयसयति, तेजसयति, आयुषयति ) इत्यादि भवतीति "प्रकृत्यैकाच्" इत्यत्र पदमञ्जर्यां स्थितं, कैयटे तु तत्र भाष्यकारेणेष्ठेयसुनोर्विधीयमानोऽयं "प्रकृत्यैकाच्" इति प्रकृतिभावः क्व भवतीति विचार्य विन्मतोलुगर्थमिति विन्मत्वन्तादिष्ठेयसुनोर्विन्मतोश्च लुकि स्रगिष्ठादौ स्रगादेष्टिलोपाभावार्थमित्यभिधाय विन्मतोर्लुगयं ना प्राप्ते टिलोपे आरभ्यमाणस्तं बाधिष्यते, स एव हि लोपः कृतेऽपि विन्मतोर्लुकि स्रगादौ प्रवर्त्ततइत्युभयोः प्रकृतिप्रत्ययविषययोष्टिलोपयोरेकत्वमङ्गीकृत्य विन्मतोर्लुकि च स्रगादिप्रकृतेष्टिलोपोऽपि बाधतइति कृत्वा प्रकृतिभावस्यानर्थक्यं प्रतिपाद्य तत्प्रतिपक्षत्वे पयस्विन्छब्दादिषु विनश्च लुक्यनेन स्रगादाविव पयसष्टिलोपस्य बाधे पयिष्ठ इति न प्राप्नोतीति आक्षिप्य 'यथालक्षणमप्रयुक्ते' इत्यभिधानान्न भवति टिलोपः, रजस्विनमाचष्टे ( रजसयति ) आयुष्मन्तमाचष्टे (आयुषयति) इति भवितव्यमित्युक्तम् , नन्वत्र मतेऽन्येषामप्यनेन न्यायेन लोपो न स्यादिति कथं वृत्तावेकाज्ग्रहणस्य वसयतीति प्रत्युदाहरणम् , उच्यते । भाष्ये "प्रकृत्यैकाच्" इदं प्रत्याख्यानमन्तरेणापि सूत्रं भिन्नविषयस्यापि टिलोपस्य शास्त्रद्वारेणैक्यमभ्युपेत्याभावः शक्यते वक्तुमित्येवं परं न त्वर्थसत्तत्वमित्यवश्यं विन्मतोर्भिन्नविषयस्य प्रकृते टिलोपस्य बाधासम्भवादेकाक्षु तद्बाधनार्थमारम्भणीयमेतत्सूत्रमित्यनेकाक्षु टिलोपो भवत्येव, यत्तु पयिष्ठ इति न प्राप्नोति 'यथालक्षणमप्रयुक्त' इतिभाष्यमुपादाय न भवति टिलोप इति कैयटकारवचनं तद् भाष्ये पयस्विन्छब्दं प्रस्तुत्यानभिधानात्कृतविन्मतुनुगन्तसान्तमात्रविषयं न त्वन्यविषयमपि, अत एव तत्रैव कैयटे ततश्च रजस्विनमाचष्टे (रजसयति ) आयुष्मन्तमाचष्टे ( आयुषयति ) इति भवितव्यमिति कृतविन्मतुलुगन्तसान्तमेवोदाहृतं, यत्तु माययतीत्यादाविष्ठवद्भावेन विनो लुकि पुनस्तेनैव टिलोपे विणो लुङ्न्यायेन विनो लुको "असिद्धवदत्र" इत्यसिद्धत्वाट्टिलोपाप्रसङ्ग इति चोद्यं तट्टिलोपप्रकरणे तिरयतीत्यत्र परिहृतम् । कुमुदान्यत्र सन्ति ( कुमुद्वान् देशः, ) एवं ( नड्वान् , वेतस्वान् , )"कुमुदनडवेतसेभ्योड्मतुप्" इत्यत्र चातुरर्थिको ड्मतुप् । अस्यानजादित्वेन भत्वाभावेऽपि डित्करणसामर्थ्याट्टिलोपे "झय" इति मकारस्य वकारः । अत्र टिलोपस्य पूर्वस्मादपि विधावितिस्थानिवत्त्वम् [पूर्वत्रासिद्धे न स्थानिवत् ] इति न भवति । अत्र सुधाकरः । कुमुदादिभ्यो णो विन्मतोर्लुगित्यत्र न केवलं मतुवेव गृह्यते किन्तु ड्मतुबिति तस्य लुकि ( कुमुदयति, नडयति, वेतसयति ) इत्याह । अन्ये 'त्वेकानुबन्धग्रहणे न द्व्यनुबन्धकस्य' इति न्यायेन विन्मतोरित्यत्र द्व्यनुबन्धकस्य मतुप एव ग्रहणं युक्तं न त्र्यनुबन्धकस्य ड्मतुपोऽपीति लुगभावाट्टिलोपे ( कुमुद्वयति, नड्वयति, वेतस्वयति ) इत्येवं भविष्यमित्याहुः । ननु ड्मतुपो लुकि कथं कुमु-

-दयतीत्युदाहृतं, यावता विन्मतोर्लुकि वसुमच्चरो वसिष्ठ इत्यादिवत् प्रकृतेष्टिलोपेन भाव्यं, नेष्ठवद्भावेन प्राप्तत्वाद्विन्मतोर्लुक आभीयत्वेनैव पुनष्टिलोपे कर्त्तव्ये चिणो लुङ्न्यायेनासिद्धत्वं, यस्मादिष्ठवद्भावप्राप्तानां कार्याणामुत्पत्तिदेश एव देशः, तदपेक्षयैव सिद्धासिद्धी इति टिलोपप्रकरणे तिरायतीत्यत्रोपपादितं, न च इमतुपि कृतस्य टिलोपस्य अस्मिंष्टिलोपेऽसिद्धत्वम्, व्याश्रत्वादेवं तर्हि इमतुपि कृतस्य टिलोपस्य "अचः परस्मिन्" इति स्थानिवत्त्वात् पुनर्व्याश्रयोऽपि टिलोपो न भविष्यति। विन्मतोर्लुक्। "युवाल्पयोः कनन्यतरस्याम्" इतीष्ठेयसुनोर्विधीयमानः कनादेशो णावपि भवतीति युवानमल्पं वाचष्टे कनयतीति भवति। अन्यतरस्यां ग्रहणात् कनभावे युवयत्यल्पयतीति भवतः। यूनोऽत्र यणादिगुणौ, युवतीमल्पां वाचष्टे लिङ्गविशिष्टपरिभाषया कनादेशो कनयतीति भवति, अङ्गवृत्तपरिभाषया बहुलग्रहणाद्वोपधावृद्ध्यभावः, कन इष्ठवद्भावस्य पुंवद्भावाभावेत्यादिना यत् प्रयोजनकथनं तदुपलक्षणमिति यथासम्भवमन्यान्यपि प्रयोजनानि प्रदर्श्यन्ते। अन्तिकमाचष्टे ( नेदयति, ) बाढमाचष्टे ( साधयति)। "अन्तिकबाढयोर्नेदसाधौ" इतीष्ठनि विहितौ नेदसाधावपि भवतः, प्रशस्यमाचष्ट (प्रशस्ययति, ) "प्रशस्यस्य श्रः" "ज्य च" इतीष्ठेयसुनोर्विधीयमानौ श्रज्यादेशावत्र न भवतः, सोपसर्गात्सूत्रमयतेरेवेति ज्ञापकात् शस्यशब्दादेव णिच् न तु प्रशस्य शब्दादिति णिच्परत्वाभावाद्यस्मादिष्ठनि परे सम्भाविते वा यत्कार्यं सम्भाव्यते तस्माण्णावपि तद्भवतीत्यवश्यमतिदेशार्थोऽभ्युपगन्तव्यः, अन्यथाऽनवस्थानप्रसङ्गात्। सुधाकरस्तु श्रापयति ज्यापयतीति श्रज्यावुदाजहार, एवं प्रक्रियारत्नकारोऽपि। तच्च मृग्यम्। शाकटायनस्तु श्रयति ज्ययतीत्युदाजहार। स हि ण्णित्परस्याच इति धातोरुपान्त्यस्यैवाकारस्याकारमाह न पुनरन्त्यस्यापीत्यत्राकारस्यैवाभावाद्दूरे पुकः प्रसङ्गः अत्र मते स्रजयतीत्यादौ वृद्धेरभावोऽङ्गवृत्तपरिभाषया बहुलग्रहणाद्वेत्येवं नाभिधानीयो भवति, प्रस्थस्फानां च भावं व्यधादिति प्रापयतीत्यादिसिद्धिः। सर्वमिदमनार्षत्वादप्रमाणमिति प्रक्रियारत्ने दूषितम्। अस्माभिस्तु श्रज्यादेशावेवात्र नाभ्युपगतौ, वृद्धमाचष्टे ( ज्यापयति,) "वृद्धस्य च" इतीष्ठेयसुनोर्विधीयमानो ज्यादेशो णावपि भवति, अकारोच्चारणसामर्थ्यात्, "प्रकृत्यैकाच्" इति लोपाभावे वृद्धौ पुक्, अयं च ज्यादेशः "प्रियस्थिर" इत्यादिना वर्षादेशस्यापि विधानाद्विकल्पेन भवति, प्रिय स्थिर स्फिरोरु बहुल गुरु वृद्ध तृप्र दीर्घ वृन्दारक इत्येतेभ्यस्तदाचष्ट इति णौ प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दा इतीष्ठनीयसुनोः प्रियादीनां यथासंख्यं विधीयमानाः प्रादयो णावपि भवन्तीति प्रियस्य ( प्रापयति, ) स्थिरस्य ( स्थापयति, उरोः ( वरयति, ) बहुलस्य ( बंहयति, ) गुरोः ( गरयति, ) वृद्धस्य ( वर्षयति ) तृप्रस्य ( त्रपयति, ) तृप्रं दुःखमित्युक्तं, दीर्घस्य ( द्राघयति, ) वृन्दारकस्य ( वृन्दयति, ) प्रादीनामदन्तानां वृद्धौ पुक्। लोपस्तु "प्रकृत्यैकाच्" इति प्रकृतिभावान्न भवति। ननु प्रादीनां प्रकृतिभावे "असिद्धवदत्र" इत्यसिद्धत्वादेकाजेव नास्तीति प्रकृतिभावाप्रसङ्गात् स्यादेव टिलोपः, एवन्तर्हि प्रादीनामसिद्धत्वादेवायमपि न भविष्यति। ननु मा भूदेवमयं प्राद्याश्रयष्टिलोपः स्थानिवद्भावेन, प्रियाद्याश्रयस्तु प्राप्नोत्येव, नैतत्। प्रियादीनामिष्ठवद्भावेन प्राप्ताट्टिलोपात् परत्वादकृतएव तस्मिन् प्राद्यादेश इति स्थानिनि स एव नास्ति टिलोप आदेशे योऽतिदिश्येत, परयतीत्यादौ बहुलग्रहणात् 'अङ्गवृत्त' इति वा "अत उपधाया" वृद्धिर्न भवति। अत्र क्षीरस्वामी। बहुलग्रहणाद् प्रादेशाभावात् ( प्रिययति ) इत्यपीति, मैत्रेयस्तु स्थिरस्यस्थादेशे बहुलग्रहणात् वृद्धिपुकोरभावात् गुणायादेशयोः स्थयतीति, बहुलादेव स्थिरयतीत्यपीति कौमाराः। भाष्ये तु प्रापयति स्थापयतीत्येवोदाहृतत्वात् उद्भाष्यमेतत् सर्वमित्यनादरणीयम्। व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयति, [तत्करोतीत्युपसंख्यानम्] सूत्रयत्याद्यर्थमिति णिच्, [प्रातिपदिकाद्धात्वर्थे] इत्येव सिद्धे वचनमिदं माणवकं मुण्डयतीत्यादौ माणवकादिसापेक्षान्मुण्डादेर्णिजर्थं मुण्डमिश्रेव व्याकरणा दिसापेक्षात् सूत्रादेर्णिजर्थमारभ्यते। व—

लक्ष्यलक्षणसमुदायस्य व्याकरणशब्दार्थत्वात्सूत्रस्यैतदंशत्वेन व्यतिरेकोद्भवे षष्ठी, यद्यपि सूत्रमेव व्याकरणशब्दार्थस्तथापि व्याकृतिक्रियाकारणत्वविशिष्टव्याकरणं शब्दार्थः सूत्रशब्दार्थस्तु केवलमिति राहोः शिर इत्यादिवत् काल्पनिकान्वयव्यतिरेकस्य सम्भवः। यदा त्वयं व्यतिरेको न विवक्ष्यते तदा व्याकरणं सूत्रं करोतीति विग्रहीतव्यम्, अत्र वृत्तौ वर्तिपदार्थानामेकार्थ्येन विविक्तानामभावादन्यान्वयायोगात् सूत्रस्य व्याकरणेन सम्बन्धानुपपादाद्व्यतिरेकाभावाद्व्याकरणात् षष्ठ्यभावः, अस्य च विशेषकर्मणः सामान्यकर्मणः सूत्रस्य प्रत्ययार्थान्तरभावादन्तरभावात् करोतिना सम्बन्धाच्च भवति द्वितीया। उक्तं चैवं भाष्ये। वाक्ये षष्ठी, उत्पन्ने प्रत्यये द्वितीया, केनैतदेवं भवति, योऽसौ सूत्रव्याकरणयोरभिसम्बन्ध उत्पन्ने प्रत्यये निवर्त्तते, अस्ति च व्याकरोतेर्व्याकरणेन सामर्थ्यमिति द्वितीयेति। अत्र कैयटे वाक्ये द्रव्यरूपं सूत्रं सूत्रशब्देनोच्यते, णिचि तूत्पन्ने सत्त्वभावनिवर्त्तनात्करोत्यर्थाभिधायी सूत्रशब्दः सम्पद्यते। तदुक्तं 'परार्थाभिधानं वृत्तिः' इति। एतच्च प्रक्रियागतविभागाश्रयेणोक्तं, परमार्थतस्तु धात्वन्तरं सूत्रविशिष्टक्रियावचनमिति।

अथान्योऽपि णिच् प्रदर्श्यते॥ कंसस्य वधः कंसवधः, "हनश्च वध" इति वधादेशः, "कर्तृकर्मणोः कृति" इति कंसात् कर्मणः षष्ठी, "कृद्योगा च षष्ठी समस्यते" इति समासः। यद्यपि सर्पिषो जानीते, मातुः स्मरतीत्यादौ न माषाणामश्नीयादित्यादावपि कारकस्य शेषत्वविवक्षायां षष्ठीसिद्धावपि "ज्ञो विदर्थस्य करणे" "अधीगर्थदयेशां कर्मणि" इत्यादिना कारकस्य शेषत्वविवक्षायामेव पुनः षष्ठीविधानं षष्ठी श्रूयतएव न लुप्यतइत्यर्थात् समासनिषेधार्थमनुमेवार्थे प्रतिपदविधाना च षष्ठी न समस्यतइत्याहेति तस्य "कर्तृकर्मणोः कृति"इत्यत्र शेषाधिकाराभावाद्शेषत्वविवक्षायामेव कर्मणः षष्ठीविधावनुत्थानात् कृद्योगा चेति वचनं तदपवादो न भवति किं तु "षष्ठी"इति समासवचनस्यानुवाद इति राजपुरुषादिवत् षष्ठीत्येव समासः। उक्तञ्च।

> साधने व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
> प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये॥

इति। न चैवं मन्तव्यम् [ प्रतिपदविधाना च ] इति वचनं "कर्तृकर्मणोः कृति" इति षष्ठ्याः समासनिषेधार्थं स्यादिति यतः [ कृद्योगा च षष्ठी समस्यते ] इति त्वयैव समासोऽभिहितः, कंसवधमाचष्टे कंसं घातयति, [आख्यानात् कृतस्तदाचष्टे] इति णिच्, आख्यायतइत्याख्यानं "कृत्यल्युटो बहुलम्"इति कर्मणि ल्युट्,तद्योगाच्छब्दोऽप्याख्यानम् इहाख्यानमात्रमाख्यानशब्देनोच्यते न तु संज्ञाभूतं कंसवधबलिबन्धसुभद्राहरणादि कर्मेत्येति राजागमनादेरपि णिच् भवति, अत्र 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति कंसवधादेराख्यानस्य कृदन्तत्वम्, अत्र कंसवध इति स्थिते कृत्प्रत्ययस्य लुक् भवति, प्रकृतिप्रत्यापत्तिरिति, कृत्प्रकृतेर्धातोः प्रत्यापत्तिर्भवति, प्रत्यापत्तिश्चाविकारस्वरूपेणावस्थानमिति वधादेशनिवृत्तौ हनिरेवावतिष्ठते, ननु प्रत्ययस्य सन्नियोगेन शिष्टोऽयं वधादेशः तस्य लुका निवृत्तौ स्वयमपि संन्नियोगशिष्टपरिभाषया निवर्तिष्यत एव किं प्रत्यापत्तिवचनेनेति चेत्। सत्यमत्रैवं सिद्ध्यति तत्फलं त्वग्रे दर्शयिष्यते। तत्र कंसहानेति स्थिते प्रकृतिवच्च कारकं चकारो भिन्नक्रमः कारकमित्यस्यानन्तरं द्रष्टव्यः, कार्यशब्दोऽध्याहार्यः, षष्ठ्यर्थे वतिः, प्रकृतिशब्देन हेतुमण्णिच्प्रकृतिरुच्यते। तदयमर्थो भवति। वधादेः कृदन्तस्य यत्कारकं कंसादिकं तस्य कृत्प्रकृतेर्हन्यादेर्हेतुमण्णौ धातावनन्तर्भूतमकृतनलोपादिकं द्वितीयान्तं यद्रूपं तादृशं भवति। "हनस्तोचिण्णलोः" "होहन्तेर्ञ्णिन्नेषु" इत्यादिकं कार्यं हेतुमण्णिचः प्रकृतेरिवात्रापि णौ भवतीति, ततश्च कंसात् द्वितीयायां हनश्च तत्वघत्वयोः कंसं घातयतीति सिद्धं भवति, अनेन चातिदेशेन कारकस्य धातावन्तर्भावस्यापि। प्रतिपादनादर्थात्साद्व्यतिरिक्ताद्वधादेवायं णिजिति तदादेरेव धातुत्वात्तत एव तिङि तदाद्येव तिङन्तं

पदं भवति, तथा कंसं घातयतीत्यादौ वधादेरेवाङ्गत्वादडागमस्तस्मादेव पूर्वो भवति, एवं कंसमजीवतदित्यत्र हन एव चङ्परणिपरं द्विर्वचनं भवति, एवं कंसमजीघतदित्यत्र हन एव चङ्परणिपरे द्विर्वचनं भवति। नन्वन्तरेणापि कार्यातिदेशं वृद्धिरिवास्यैव णेर्णित्वमाश्रित्य "हो हन्तेः" इति घत्वं "हनस्त" इति तत्वं च भविष्यति किमनेनातिदेशेनेति चेन्न। 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति यत्र धातोः स्वरूपोपादानेन किंचित्कार्यं विधीयते तत्र धातुनिबन्धनप्रत्यये तत्कार्यमिति विज्ञानात्, अस्य च णेर्धातुनिमित्तत्वाभावात्कंसपरिमृड्काम्यतीत्यत्र मृजेर्वृद्धिरिवात्रापि तत्वघत्वयोरप्रसङ्गात्। न चैवं मन्तव्यं कंसपरिमृड्काम्यतीत्यत्र यदङ्गं कंसपरिमृडिति न तन्मृजिर्यश्च मृजिर्नासावङ्गं,मृजेर्वृद्धिश्च मृजेरङ्गस्य विधीयते इत्यन्तरेणापि धातुस्वरूपपरिभाषायां नास्त्येव वृद्धेःप्रसङ्ग इति,यतोऽङ्गाधिकारे तस्य च तदन्तस्यापि इति मृज्यन्तस्यापि प्राप्नोत्येव। एवं बलिबन्धमाचष्टे बलिबन्धयतीत्यादि, नन्वत्र कृल्लुगिति कृतो लुका लुप्तत्वात् प्रत्ययलक्षणाभावात् कृद्योगाभावान्न षष्ठी प्राप्नोति, प्रत्ययस्य लक्षणं च लुका लुप्तत्वान्न भवितव्यं, स्थितं च हन्त्याद्यपेक्षया कर्मत्वमिति द्वितीया सिद्धेः किं प्रकृतिवत्कारकातिदेशेनेति चेत्, असत्यस्मिन्नतिदेशे कंसादेः पृथक्करणमेव न स्यादिति विभक्तेरेवाप्रसङ्गात्कुतः स्याद् द्वितीया, किं च कंसवधशब्दादेव णिच् न तु विनिष्कृष्टकारकांशाद्वधादिति सकारकस्यैव तिङन्तत्वं स्यात्। तथाऽडागमोऽपि कारकात् पूर्वमेव स्यात्। न तु कंसं घातयतीति हन्तेः,एवं"चङि"इति द्विर्वचनमपि कंसादेरेव स्यात्, न तु कंसमजीघतदित्यादौ हन्त्यादेः, नैतानि सन्ति प्रयोजनानि। यथा प्रकृतिवत् कारकमित्यनेन कंसप्रकृतेर्हन्त्यादणौ दृष्टः कारकाणामन्तर्भावोऽत्रापि णौ प्रतिपद्यते, तथा प्रकृतिवत् कार्यमित्यनेनापि कृत्प्रकृतेर्णौ हन्त्यादेः शुद्धे णौ दृष्टस्यानिष्कृष्टकारकप्रकृतित्वस्यात्राप्यतिदेष्टुं शक्यत्वान्निष्कृष्टकारको हन्त्यादिरेव स्यात्। प्रत्ययस्य प्रकृतिरिति यत्तस्तदाद्येव तिङन्तं भविष्यत्यड्द्विर्वचने च तस्यैव भविष्यतः, सत्यमत्रैव न दोषो भविष्यति, राज्ञा आगमनं राजागमनं, "कर्तृकर्मणोः कृति" इति कर्तरि षष्ठी, पूर्ववत् "कृद्योगा च षष्ठी समस्यत"इति समासः। राजागमनमाचष्टे राजानमागमयतीत्यादौ राजादेर्द्वितीया न स्यात् किं तु कर्तृलक्षणा तृतीयैव स्यात्, यतः प्रकृतिवत् कारकमित्येतत् प्रकृतेः शुद्धे णौ दृष्टकार्यमेवातिदेशेन पुनरन्यदपि किंचित्, प्रकृतिवत् कार्यमित्युच्यमाने तु गमने कर्तृभूतस्य राज्ञः कृत्प्रकृतेर्गमः शुद्धे णौ "गतिबुद्धि" इत्यादिनाऽस्ति कर्मत्वमित्यत्रापि णौ कर्मरूपातिदेशाद्राजानमागमयतीति सिद्धं भवति। अत एव शुद्धे णौ दृष्टस्य कर्मरूपस्यात्रापि णावतिदेशाद्राज्ञो नलोपो भवति, न चैवं मन्तव्यं "सुप्तिङन्तं पदम्" इति द्वितीयान्तस्यैव राज्ञः पदत्वादत्र नकारान्तस्य प्रातिपदिकान्तत्वेऽपि पदान्तत्वाभावान्नलोपो न भवति यल्लुप्तयान्तर्वर्तिन्या षष्ठ्या प्रत्ययलक्षणेन तदन्तत्वेन नान्तं भवत्येव पदं, न चास्ति "न लुमता" इति प्रत्ययलक्षणाभावः, यदयं लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत् कार्यं लुप्तप्रत्ययमाश्रित्य प्राप्नोति तन्नेतीह नावतरति। एवं च प्रकृतिवत्कारकवचनं कंसादेर्द्वितीयार्थं च भवति। यतः "कर्तृकर्मणोः कृति"इति षष्ठी प्राप्नोति, तदेवं कंसादीनां कारकाणां णिजुत्पत्तौ पृथक्कारस्य सिद्धत्वादाख्यानात् कृदित्याख्यानशब्दो ऽर्थात्स्वावयवकृदन्तपरो भवति। मृगाणां रमणं मृगरमणं, कर्तरि षष्ठ्याः पूर्ववत् समासः। मृगरमणमाचष्टे मृगान् रमयति, दृश्यर्थायां च प्रवृत्ताविति णिजत्राख्यानात्कृत इत्यादि सर्वं सम्बध्यते, तदस्यायमर्थः। मृगरमणस्य या समाख्यानरूपा प्रवृत्तिः सा यदि दृश्यर्था भवति, तदा णिज्भवतीति। एवं च मृगान् रमयतीत्यस्यायमर्थो भवति, स्वयं मृगरमणमनुभवन् अन्यस्मै तद्दर्शयितुमाचष्ट इति। इदं दृश्यर्थायां चेति वचनमाख्यानात्कृतस्तदाचष्टइत्येवाख्यानप्रवृत्तेर्दृश्यर्थत्वेऽपि सिद्धे णिच्यारभ्यमाणमदृश्यर्थत्वं माभूदित्येवमर्थं, तेन यदारण्ये दृष्टं मृगरमणं ग्रामस्थोऽन्यस्माचष्टे एवं मृगास्तत्ररमन्ते तदा मृगारमणमाचष्टइति वाक्यमेव भवति।

अत्र कैयटे इष्यर्थायामित्येतच्च मृगरमणादिविषयमेव द्रष्टव्यं, राजागमनादौ तु इष्यार्थप्रवृत्त्यभावेऽपि णिज्भवति, अत्र रमणक्रियायां कर्तृभूतानां मृगाणां रमेरकर्मकत्वेऽपि शुद्धे णौ "गतिबुद्धि" इत्यादिना कर्मत्वादत्रापि णौ कर्मत्वं, रात्रेर्विवासो (रात्रिविवासः,) विवासोऽतिक्रमणं, कर्त्तरि षष्ठ्याः पूर्ववत्समासः, ततः "आङ् मर्यादाभिविध्योः" इत्याङोऽव्ययीभावः, आरात्रिविवाससमाचष्टे रात्रिं विवासयति, आलोपश्च, "कालाध्वनोरत्यन्तसंयोगे" मर्यादायां णिचि मर्यादावचनस्याङो लोपः, इहाख्यानादिति न सम्बध्यत इति पदमञ्जर्याम्, कृल्लुगादि पूर्ववत्। इह कालस्यात्यन्तसंयोगः सन्निहिताख्यानक्रिययानवयवेन सम्बन्धः, ततश्च रात्रिं विवासयतीत्यस्यायमर्थः। यावद्रात्रेरतिक्रमणं तावत्कथाः कथयतीति, इहाख्यानमाख्येयमपेक्षत इति कथा इति, प्रदर्शितवसिक्रियायां कर्तृभूतायां रात्रेर्वसेरकर्मत्वेन शुद्धे णौ "गतिबुद्धि" इत्यादिना कर्मत्वादत्रापि णौ कर्मत्वं, सूर्यस्योद्गमनं सूर्योद्गमनम्, अत्रापि पूर्ववत् कर्त्तरि षष्ठी, समासश्च, विक्रमसिंहपुर्याः प्रस्थितः काञ्चीपुर्यां सूर्योद्गमनं प्राप्नोतीत्यर्थः। भू प्राप्तावात्मनेपदीति चुरादौ, सूर्यमुद्गमयतीति। 'चित्रीकरणे प्रापि' कृदन्ताच्चित्रीकरणे गम्यमाने प्राप्नोत्यर्थाण्णिच्, कृल्लुगादि पूर्ववत्। अत्राप्यागमने कर्त्तुः सूर्यस्य पूर्ववदूगमेः शुद्धे णौ "गतिबुद्धि" इत्यादिना कर्मत्वाद् इशेरपि णौ कर्मत्वं, विक्रमसिंहपुर्याः काञ्चीपुरी विदेशस्थेत्युदयात् पूर्वं तावतो देशस्य गमनमिहाश्चर्यकरणम्, इहाप्यसम्भवादाख्यानादिति न सम्बद्ध्यते। तत्र प्रकृतिवत्कारकातिदेशात्सूर्यस्य णौ पृथग्भावः, सोपसर्गात् संग्रामयतेरेवेति ज्ञापकादुदोऽपीति सूर्यमुद्गमयतीत्यादि भवति, पुष्येण योगः पुष्ययोगः, अत्र यथा "अन्तर्द्धौ येनादर्शनमिच्छति" इत्यात्मनः कर्मणो नियमेन गम्यत्वाद्येनेति कर्त्तुः षष्ठी "उभयप्राप्तौ" इति नियमान्न भवति, एवमत्रापि युजिक्रियाकर्मणश्चन्द्रमसो नियमेन गम्यत्वात्तद्योगे कर्त्तुः पुष्यात् षष्ठी भवति, पुष्यश्चात्र कर्त्ता, चन्द्रमाः कर्म, स हि तं युनक्ति, पुष्ययोगं जानाति पुष्येण योजयति। "नक्षत्रयोगे ज्ञि" इति नक्षत्रयोगवाचिनः कृदन्तादस्माज्जानात्यर्थे णिचि कृल्लुगादि पूर्ववत्। अत्र प्रकृतिप्रत्यापत्तिवचनेन घञि "चजोः कुघिण्ण्यतोः" इति कुत्वं निवर्तत इति कैयटपदमञ्जर्यादिषूक्तम्। [प्रकृतिवत्कारकम्] इत्यनेन कृत्प्रकृतेः शुद्धे णौ यदयं कारकमेतद्रूपमत्रापि णावित्युक्तत्वाद्योगे कर्त्तुः पुष्यस्य गत्यादिष्वनन्तर्भावेन कर्मत्वाभावादत्रापि णौ न भवति कर्मत्वमित्यात्मनः कर्तृत्वाश्रयेण तृतीया भवति। अत्र न्यासे पुष्येण करणभूतेन चन्द्रमसो योग इति करणे तृतीयामुक्त्वा कृत्प्रकृतेर्युजेः शुद्धे णौ पुष्यस्य करणताविपर्यासाभावात्तत्र दृष्टामेवात्रापि णावतिदिश्यत इति तृतीयामुक्त्वा यदा पुष्येण सह योग इत्यर्थो विवक्ष्यते तदा कारकातिदेशस्यायं विषयो न भवति। पुष्यस्य करणत्वात्सहार्थएव तृतीया वेदितव्येत्युक्तम्, अनयोः पक्षयोः पुष्येण करणभूतेन सह वा तेन चन्द्रमस्यन्ययोगे इत्यर्थः स्यात्। अत्र कैयटे 'प्रकृतिवत्कारकम्' इत्यनेन "तेन तुल्यं क्रिया चेद्वतिः" इति तृतीयार्थे वतिमङ्गीकृत्य णिचो या प्रकृतिः कंसवधादिराख्यानक्रियापेक्षया प्रतिपन्नकर्मैव तया तुल्यं भवत्यप्रतिपन्नभावं कंसादिकं घातयति राजानमागमयतीत्यादौ सर्वत्र कंसादेर्द्वितीयासामर्थ्यं, तदनेनैव न्यायेन पुष्येण योजयतीत्यत्रापि पुष्यस्य कर्मत्वाद् द्वितीया स्यादित्याशङ्क्य वत्करणात् स्वाश्रयस्य कर्तृत्वस्या निवर्त्तनात्तृतीयासिद्धिमुक्त्वैवमुक्तम्, अथ वा प्रकृत्या तुल्यं वर्तते इति प्रकृतिवत्प्रकृतेरिव प्रकृतिण्यन्तस्य कारकमित्युभयथातिदेशाश्रयणात्कचित्कश्चित्परिगृह्यत इति ॥

अथान्योऽपि प्रातिपदिकाश्रयः प्रदर्श्यते ॥ [आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा]

"कर्त्तुः क्यङ् सलोपश्च" इत्यत्र यङ् पठ्यत इति उपमानात्सन्निहिताचारक्रियायाः कर्त्तुः प्रातिपदिकादाचारेऽर्थेऽयं क्विब् भवति, अत्र वा, ग्रहणं तक्रकौण्डिन्यन्यायेन कौटिल्ययङः क्रियासमभिहारे यङ इवावगल्भादिप्रातिपदिकविषयेणानेन क्रियासुबन्तविषयस्यापि क्यङो बाधो माविज्ञायीति। नन्विदं गल्भाद्यनुक्रमणं "कर्त्तुःक्यङ्" इत्यत्र सुबन्ताधिकारे क्रियते। क्यङप-

वादश्चायं क्विप्। उत्सर्गसमानदेशत्वं चापवादानां प्राचुर्येण दृष्टमिति सुबन्तादेवानेन क्विपा भवितव्यम्, न चैतदस्ति, यद्गल्भादीननुक्रम्य सर्वप्रातिपदिकेभ्य इत्यक इत्याह। न चेदं प्रातिपदिकग्रहणं सुबन्तोपलक्षणार्थं स्यात्। तर्हि सर्वेभ्य इत्येकइत्येवोक्तत्वात् प्रातिपादिकग्रहणमनर्थकं स्यात्, यत्तु तदुक्तं गल्भादौ वाग्रहणं तदिदानीं न वक्तव्यं भवति, यतः सर्वेभ्यः क्विब् विधीयते क्यङन्तरेणापि वाग्रहणं वचनद्वयप्रामाण्याद्विकल्पो भविष्यति। अथैवङ्गल्भाद्योऽपि नानुक्रमितव्या भवन्तीति न वक्तव्यं भवतीति न मन्तव्यं, यदेषामनुदात्तत्वप्रतिज्ञानार्थमेवानुकरणम्, इदं चानुदात्तत्वप्रतिज्ञानं क्विप्संनियोगएवेत्यत्रावगल्भ इवाचरति अवगल्भायतइत्यादौ वाक्ये क्यङि चाकारस्य श्रवणं भवति। अवगल्भइवाचरति (अवगल्भते। अवगल्भाञ्चक्रे। अवगल्भिता। अवगल्भिष्यते। अवगल्भताम्। अवागल्भत। अवगल्भेत। अवगल्भिषीष्ट। अवागल्भिष्ट। अवागल्भिष्यत)। अनुदात्तेत्त्वात्तङ्, सोपसर्गात्संप्रामयतैरेवेतिज्ञापकान्निष्कृष्टोपसर्गाद्गल्भादेव प्रत्यय इति गल्भस्यैवाडागमो भवति। तथावागल्भ्येत्यत्रावशब्दस्य "कुगतिप्रादयः" इति समासे तल्लक्षणो ल्यब् भवति। (क्लीबते। क्लीबाञ्चक्रे। होडते। होडाञ्चक्रे) इत्यादौ "कास्प्रत्ययादाम्" इत्याम्। "आमः" इति लेर्लुक्, ननु तत्र प्रत्ययग्रहणमपनीय कास्यनेकाच इति कर्त्तव्यं चुलुम्पाद्यर्थमिति न्यस्यते, एतेऽवगल्भादय एकाच इति कथमाम्, नैष दोषः। यद्यपि क्विप्सन्नियोगेनैकाचो भवन्ति तथाप्युपदेशेऽनैकाचो भवन्ति। कास्यनेकाच इत्यत्र च भूतपूर्वगतिराश्रयिष्यते। इदमेव क्विब्विधानं भूतपूर्वगत्याश्रयणे प्रमाणम्। अन्यथा 'गल्भ धाष्टर्ये', 'क्लीबृ अधाष्टर्ये', 'होडृ अनादरे, इत्येतेभ्योऽनुदात्तेभ्य अवगल्भतइत्यादिसिद्धौ किमनेन, तत्र च धातूनामनेकार्थत्वात् आचारार्थश्च भविष्यति। अश्व इवाचरति (अश्वति)। प्रातिपदिकात् प्रत्ययविधानात् शप्रकृत्यकारयोरपदान्ताश्रयम् "अतो गुणे" इतिपररूपत्वं भवति। अन्यथान्तर्वर्त्तिन्या विभक्त्या पदत्वात्पररूपत्वं न स्यात्। (अश्वाञ्चकार। अश्विता। अश्विष्यति। अश्वतु। आश्वत्। अश्वेत्। अश्व्यात्। आश्वीत्। आश्विष्यत्) अतो लोप आर्धधातुके। क इवाचरति। (कति। चक। चकतुः) इत्यादि, अतो लोपः सर्वत्र, अयं [ण्यल्लोप]इत्यादिना वृद्धिं बाधते, अ इवाचरति (अति) इत्यादि। (औ। अतुः। उः)। इत्यादि। सर्वत्रात्र द्विर्वचनेऽतो लोपादन्तरङ्गत्वात् "अतो गुणे" पररूपत्वे तस्याङ्गग्रहणेन प्राप्तादतो लोपात् परत्वादभ्यासग्रहणेन ग्रहणात् "अत आदेः" इति दीर्घः। "आतो लोप इटि च" इत्याल्लोपः किति, णलि तु "आत औ णल" इत्यौ वृद्धिः। यथाकथञ्चित् 'प्रातिपदिकग्रहणे लिङ्गविशिष्टं गृह्यत' इति स्थितत्वान्मालेवाचरति (मालाति। मालाञ्चकार। मालिता। मालिष्यति। मालातु। अमालात्। मालायात्। मालायास्ताम्। अमालासीत्)। यमरमनमातां सगिटौ। इड्वजादावार्धधातुके "आतो लोप इटि च" इत्याकारलोपः, ज्ञेवाचरति (ज्ञति। जज्ञौ) इत्यादि पूर्ववत्, प्रत्ययान्तत्वेऽप्येकाच्त्वादामभावः। आ इवाचरति (आति) इत्यादि। कविरिवाचरति (कवयति। कवयाञ्चकार। कवयिता) इत्यादि, आशीर्लिङि "अकृत्सार्वधातुकयोर्दीर्घः" इति दीर्घे (कवीयात्)। लुङ्यतरङ्गमपि गुणं सिचि वृद्धिरपवादत्वात् बाधत इति वृद्धावायादेशे च (अकावीत्) विरिवाचरति (वयति) इत्यादि पूर्ववल्लिटि प्रत्ययान्तत्वेऽप्येकाच्त्वादामभावे, (विवाय। विव्यतुः। विव्युः। विवयिथ। विव्यथुः। विव्य। विवाय। विवय। विव्यिव। विव्यिम)। णिति वृद्धिः, पिति गुणः, किति "एरनेकाच" इति यण.देशः॥

इरिवाचरति (अयति) इत्यादि, लिट्येकाच्त्वादामभावः। (इयाय। ईयतुः। ईयुः। इययिथ। ईयथुः। ईय। इयाय। इयय। ईयिव। ईयिम,) अत्र किति सवर्णदीर्घे "अचि श्नुधातु" इतीयङ्। यद्वा सवर्णदीर्घत्वात् परत्वेनोत्तरखण्डस्य "एरनेकाच" इति यण्यपि नास्त्यत्र रूपभेदः, गुणवृद्धिविषये अयायोः "द्विर्वचनेऽचि" इति स्थानिवत्त्वादेकारस्यैकारस्य च द्विर्वचनेऽभ्यासह्रस्वत्वे "अभ्यासस्यासवर्णे" इतीत्यङ्, यदापि गुणवृद्ध्योरपि स्थानिवद्भावा-

दिकारस्य द्विर्वचनं तदापि सवर्णदीर्घात् परत्वात्पुनरुत्तरखण्डस्य गुणाद्यावल्त्येवाभ्यासस्यावर्णपरत्वमिति इयङ्सिद्धिः। नच पुनः प्रवर्तमानाभ्यां गुणवृद्धिभ्यामन्तरङ्गत्वात्सवर्णदीर्घेन साध्यमिति मन्तव्यम्। एवं हि "अभ्यासस्यासवर्णे" इतीयङ्वचनमनर्थकं स्यात्, नन्वयमस्त्यवकाशः, अर्तेर्लिटि द्विर्वचनेऽभ्यासस्य "अर्त्तिपिपर्त्योश्च" इतीत्वे, (इयर्ति, इयृतः) इत्यादि, नैतदस्ति, 'नह्येकमुदाहरणं योगारम्भं प्रयोजयति' इयति हि प्रयोजनेऽभ्यासस्यार्त्तावित्येव ब्रूयात्। एपेरियेष, ओणेरुवोणेत्यादि तु न प्रयोजनं, यतोऽयं छान्दसः, भाषायात्वासा भवितव्यं, छन्दसि च तन्वादीनां [ छन्दस्युपसंख्यानम् ] इति 'त्रियम्बकं सुत्रगं' इत्यादिवदियङुवङौ सेत्स्यतः। लक्ष्मीरिवाचरति (लक्ष्मीयति। लक्ष्मयाञ्चकार। लक्ष्मयिता) इत्यादि। श्रीरिवाचरति ( श्रयति। शिश्राय। शिश्रियतुः। शिश्रियुः ) "एरनेकाच" इति यणादेशः संयोगपूर्वत्वान्न भवति, "अचि श्नुधातु" इतीयङेव भवति। ईरिवाचरति, ( अयति ) इत्यादि, लिटि पुनः "इजादेश्च गुरुमतोऽनृच्छ" इत्याम्ययांचकारेति भवति। तत्र व्यपदेशिवद्भावेनेजादित्वगुरुमत्त्वे समाश्रिते। विधुरिवाचरति ( विधवति, विधवांचकार, विधविता, विधविष्यति, विधवतु, अविधवत्, विधवेत् )। आशिषि "अकृत्सार्वधातुकयोः" इति दीर्घे, ( विधूयात्, अविधावीत् )। गुणं सिचि वृद्धिरपवादत्वाद् बाधते। कुरिवाचरति ( कवति। चुकाव ) इत्यादि। एकाच्त्वादामभावः। उरिवाचरति ( आवति ) इत्यादि। पूर्ववल्लिटि गुणवृद्धिविषये अवावौ स्थानिवत्त्वादोकारस्य च द्विर्वचनेऽभ्यासहस्वत्वे। "अभ्यासस्यासवर्णे" इत्युवङि ( उवाव। उवविथ। उवाव ) इति भवति, यदापि गुणवृध्योरपि स्थानिवद्भावादुकारस्य द्विर्वचनं तदपि "अभ्यासस्यासवर्णे" इत्युवङ्विधानसामर्थ्यात् सवर्णदीर्घात् पूर्वमुत्तरखण्डस्य गुणादावभ्यासस्यासवर्णपरत्वादुवङ्, क्रिति तु ( उवतुः। उवथुः। उव। उविव। उविम ) इति भवति, अत्रान्तरङ्गत्वात्सवर्णदीर्घ सत्युवङ्। अत्र 'वार्णादाङ्गं बलीय' इति पूर्वमुत्तरखण्डस्योवङि पश्चात्कृते तस्मिन्नूवतुरित्यादि स्यादिति न मन्तव्यम्, यत इयं परिभाषाऽऽङ्गवार्णयोः समानाश्रयत्वे प्रवर्त्तते। यथा कारक इति, अत्र हि प्रत्ययमेवाश्रित्य गुणवृद्धी प्राप्नुतः, उवतुरित्यत्र उकारमाश्रित्य सवर्णदीर्घः प्राप्नोति। उवङ् तु प्रत्ययमाश्रित्येति नास्ति समानाश्रयत्वं, वधूरिवाचरति ( वधवति। वधवांचकार, वधविता ) इत्यादि। भ्रूरिवाचरति ( भ्रवति। बुभ्राव। बुभ्रुवतुः ) इत्यादि "अचि श्नुधातुभ्रुवाम्" इत्युवङादेशः। अयं च वृद्धिगुणयोर्विषये ताभ्यां परत्वात् बाध्यते। उरिवाचरति (अवति) इत्यादि, लिटि "ईजादेश्च" इत्याम्यवाञ्चकारेति भवति, पितेवाचरति ( पितरति। पितरांचकार। पितरिता। पितरिष्यति। पितरतु। अपितरत्। पितरेत्। पित्रियात्)। "रिङ् शयग्लिङ्क्षु" इति रिङादेशः। ( अपितारीत् ) अन्तरङ्गमपि गुणं सिचि वृद्धिर्वचनाद्बाधतइत्युक्तं, यद्वात्र गुणेऽपि न दोषः। यत्कृतेऽस्मिन् "अतो ल्रान्तस्य" इति पुनर्वृद्धिर्भविष्यति। नेवाचरति ( नरति, ननार ) इतीत्यादि पूर्ववत्। आ इवाचरति (अरति) "पाघ्रा" इत्यादावर्त्तिग्रहणेन।

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।<br>
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥

इति इत्यादिसाहचर्याच्च धातुपाठस्थ एवार्तिर्गृह्यते, न पुनरयमपीति ऋच्छादेशाभावः। अत एव तत्र पदमञ्जर्याम् ऋगतिप्रापणयोरिति भौवादिकः, ऋ गताविति क्रैयादिकः, ऋ सृ गताविति जौहोत्यादिक इति त्रीनेवोपादायान्त्योरग्रहणे कारणं शिदसम्भवः साहचर्यं चोक्तम्, तथा "समो गम्यृच्छि" इत्यत्र वृत्तौ अर्तीत्यत्र पठ्यते, सृ गतिप्रापणयोररिति भूवादौ। ऋ सृ गताविति जुहोत्यादौ। विशेषाभावादुभयोरपि ग्रहणमिति। यदि च नामधातोरिह ग्रहणमिष्येत् कथमेवमुच्येत। एवमन्यत्रापि तत्र तत्र प्रतिपदधातुग्रहणेष्वभिव्यक्तपदार्थानां धातुपाठपठितानामेवोपादानं क्रियते। "बाह्वादिभ्यश्च"

इत्यत्र भाष्यकैयटयोरप्यनभिव्यक्तपदार्थानां तत्तत्कार्यं न भवतीति, अद्यत्वे बाहोः "बाह्वादिभ्यश्च" इति ञोऽभावात्सामान्येऽणि बाहव इति भवति। तथा संज्ञाश्वशुरस्य "राजश्वशुराद्यत्" इति यतोऽभावादल्लक्षणे इञि श्वाशुरिरित्येव, "मातृपितृभ्यां स्वसा" इत्याभ्यां परस्य स्वसृविधीयमानं षत्वं क्रियाशब्दात् परस्य नेति तत्र मातृस्वसेति भवतीति प्रतिपादितम्। एवं चास्मादशब्दाल्लिटि "ऋच्छत्यॄताम्" इति किति लिटि विधीयमानो गुणो न भवति। तत्र धात्वभ्यासयोः सवर्णदीर्घे धातुग्रहणेन ग्रहणादकारान्तलक्षणे गुणे अरतुरित्यादि भवतीत्येके। अन्ये त्वभ्यासग्रहणेन ग्रहणादुरदत्वहलादिशेषातआदेरितिदीर्घेषु "आतो लोप" इत्याकारलोपे सत्यतुरित्यादि प्रत्ययमात्रमेवावशिष्टं भवतीति। एवं "णिश्रिद्रुस्रुभ्य" इत्यनभिव्यक्तपदार्थत्वेनाचारक्विबन्तस्य द्रोर्ग्रहणाभावाच्चङभावात् सिच्यद्रावीदिति भवति। भूरिवाचरति भवतीत्यत्र "गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" "भुवो वुग्लुङ्लिटोः" "भवतेरः" इति विधीयमानसिज्लुग्वुगभ्यासात्वानामभावात् (अभावीत्। आभाविषाम्। अभाविषुः। बुभाव) इत्यादि एव भवति, पिबतेर्विचि पाः, तस्याचारक्विबन्तस्य "पाघ्रा"इत्यादौ "गातिस्था" इत्यादौ चाग्रहणात् पिबादेशसिज्लुकोरभावात् ( पाति। अपासीत् ) इति भवति, एवमन्यदप्युन्नेयं प्रतिपदोक्तेषु। पॄरिवाचरति। ( परति। पपार। पपरतुः। पपरुः ) इत्यादि, अयं पॄशब्दानुकरणं धात्वन्तरं न पुनः क्र्यादौ जुहोत्यादौ वा पठ्यमान इति पाठाश्रयः श्नाश्लुश्च न भवति। किति लिटि "ऋच्छत्यॄताम्" इति ऋकारान्तलक्षणो गुणः। "श्रॄदृप्रास्" इति ह्रस्वविकल्पस्त्वनभिव्यक्तपदार्थत्वान्न भवति। ऋ इवाचरति ( अरति, अरांचकार, ) "इजादेश्च गुरुमत" इत्याम्प्रत्ययः। गम्ऌ इवाचरति ( गमलति। गमलांचकार। ) प्रत्ययान्तत्वादामि ऋकारऌकारयोः सावर्ण्यात् "उरण्रपर" इति लपरो गुणः। ऌ इवाचरति (अलति, ) पूर्ववद्गुणः। लिटि द्विर्वचनम्, ऌवर्णदीर्घाभावात् सवर्णदीर्घाभावात् उत्तरखण्डस्य यण्यभ्यासस्योरदत्वादेव (आल। अलतुः) इत्यादि। परमहेरिवाचरति ( परमहयति। परमहयाञ्चकार।) केवलाच्चामभावाज्जिहाय। लुङि सिचीट्यवादेशे हलन्तलक्षणा वृद्धिः "नेटि" इति निषिध्यते। "अतो हलादेः" इति वृद्धिविकल्पोऽपि ह्म्यन्तक्षणेति यान्तत्वान्निषिद्ध इत्यपरमहयीदिति भवति। एकार इवाचरति (अयति,) लिटीजादिलक्षणे आमि (अयांचकार)इति भवति। लुङि (आयीत्) अन्यदा पूर्ववद्धलन्तलक्षणाया वृद्धेः"नेटि"इति निषेधान्माभवानायीत्। गौरिवाचरति (गवति। जुगाव। अगवीत्। अगावीत्)। "अतो हलादेः" इति वा वृद्धिः। ओकारवदाचरति। ( अवति। अवाञ्चकार ) लुङि हलन्तलक्षणाया वृद्धेः "नेटि" इति निषेधात् (माभवानवीत्)इति। परमरा इवाचरति (परमरायति। परमरायाञ्चकार। रायति। रिराय )। ऐकार इवाचरति ( आयति, अयांचकार, ) परमनौरिवाचरति, (परमानावयति। परमनावाञ्चकार। नावति। नुनाव)। केवलादौकारात् (आवति, आवांचकार, ) गोधुगिवाचरति ( गोदुहति, ) य इवाचरति ( ययति, ) अनेकाच्त्वादामभावे ( ययाय )। लुङि यान्तत्वाद् वृद्ध्यभावात् ( अयीत् ), द्यौरिवाचरति ( देवति )। स्वरिवाचरति ( स्वरति, ) फलिवाचरति (फलति, ) अनयोर्लुङि "अतो हलादेः" इति विकल्पापवादे "अतो ल्रान्तस्य" इति नित्यं वृद्धौ (अस्वारीत्,अफालीत् ) इति भवति,"चरफलोश्च" इत्यत्र न्यासविस्तारयोः फलेर्णौ क्विपि (फाल् ) अयमप्येकदेशविकृतन्यायेन गृह्यत इति यङ्यङ्लुकोरभ्यासस्य नुकि (पंफाल्यते, अपंफालीत् ) इत्युक्तं, तदेतत् "उत्परस्यातः" इति तपरकरणम् "अतो हलादेः" इत्यादिवन्न केवलनिर्देशार्थमपि तु सवर्णग्रहणनिवृत्त्यर्थमपीत्याश्रयणेनान्यथा प्रतिपदोपादानेष्वभिव्यक्तपदार्थानामेव भाष्यादौ ग्रहणस्य स्थितत्वान्नैवं युज्यते, इदमिवाचरति, ( इदामति )। "अनुनासिकस्य क्विझलोः" इत्यत्र झलादिक्विप् धातोरेव सम्भवतीति तत्साहचर्यात्क्विबपि धातुविहित एव गृह्यत इति नात्र क्वावयं दीर्घ इति केचित्तन्न। अस्य क्विपः ककारस्यात्र सामान्यग्रहणमन्तरेण प्रयोजनाभावात्। चङि-

वाचरति ( वाङति ), अणिवाचरति ( आणति, राजानति, कुम्भति, अस्वति, पदति, योधति, भिषजति, शम्वति, अङ्कति, पण्यति, त्वदति, मदति, ) "प्रत्ययोत्तरपदयोश्च" इति त्वमौ । युवामिवाचरति आवामिवाचरति, यूयमिवाचरति वयमिवाचरति, ( युष्मदति, अस्मदति, ) युष्मदस्मदोरनेकार्थत्वान्न त्वमौ विभक्तिपरत्वाभावान्न युवावौ नापि यूयवयौ । त्वामतिक्रान्तः अतित्वम् । एवमत्यहं, क्वावतित्वदति अतिमदति "प्रत्ययोत्तरपदयोः" इति त्वमौ, युवां युष्मानतिक्रान्तः अतित्वयत्यहम्, अत्र द्विवचनत्वे तदाश्रित्य युवावौ न भवतः पराभ्यां त्वाहाभ्यां बाधादत्र क्वावपि (अतित्वदति, अतिमदति, मखति, कफति, मन्थति, वटति, पटति, अकति, कङ्कति, अयति, वेशति, षपति, यशति, ) प्रसिद्धा ये हलन्तास्तेषां कारितणौ टिलोपे "णेरनिटि" इति णेश्च लोपे तद्धलन्तत्वं द्रष्टव्यम् ॥

अथैतत्क्विबन्ताद्धातोः "क्विप् च"इति कर्तरि क्वा किञ्चिदुच्यते। "यूस्त्र्याख्यौ नदी"इतीकारान्तशब्दरूपं स्त्र्याख्यं नदीसंज्ञकमित्युक्तम्, तत्र कुमार्यादेरेतत्क्विबन्तात्कर्त्तरि क्वौ कुमारी ब्राह्मण इत्यादौ स्त्र्याख्यत्वाभावान्नदीसंज्ञा न प्राप्नोति । तत्रोच्यते, [ प्रथमलिङ्गग्रहणं च ] इति क्विब्लुक्समासैरन्यलिङ्गत्वेऽपि प्रथमलिङ्गाश्रया नदीसंज्ञा भवतीत्यर्थः । इह प्रत्युतत्वाल्लुप्समासौ न प्रदर्श्येते । एवं च कुमारी ब्राह्मण इत्यादौ आचरतिवर्तमानस्य कुमार्यादेर्नदीसंज्ञायां हे कुमारि ब्राह्मण इत्यादौ "अम्बार्थनद्योर्ह्रस्वः"इति ह्रस्वो भवति, (कुमार्यै ब्राह्मणाय ) इत्यादौ ङिद्वचने च "आण्नद्याः" इत्याडागमो "ङेराम्नद्याम्नीभ्यः" इत्यामादेशः, ( कुमारीणां ब्राह्मणानाम् ) इत्यादौ 'ह्रस्वनद्यापः इति नुड्भवति, एवं हे ब्रह्मबन्धु ब्राह्मण, ब्रह्मबन्ध्वे ब्राह्मणाय इत्यादौ ह्रस्वादि द्रष्टव्यं, नदीत्वादेव बहवः कुमार्यो ब्राह्मणा यस्मिन् ( बहुकुमारीको देश ) इत्यादौ "नद्यृतश्च" इति कप् भवति, यत् - पुनरिष्वशनिप्रभृतीनां ह्रस्वान्तानां स्त्र्याख्यानां श्रीभ्रुप्रभृतीनामियङुवङ्स्थानानां च "ङिति ह्रस्वश्च" इति नदीसंज्ञा विकल्पेन तदेवाचारक्विबन्तानां पुंल्लिङ्गानां [ प्रथमलिङ्गग्रहणं च ] इति न भवति । तथा च वार्त्तिकम् [ ह्रस्वेयङुवङ्स्थानप्रवृत्तौ च ] अत्र भाष्यम्—ह्रस्वौ च इयङुवङ्स्थानौ प्रवृत्तौ च प्राक् प्रवृत्तेश्च स्त्रीवचने एव नदीसंज्ञौ भवत इति वक्तव्यमिति, प्रवृत्तिः क्विबादीनां, तेनार्थान्तरसंक्रान्तिः । ( इषवे ब्राह्मणाय, अशनये ब्राह्मणाय, धेनवे ब्राह्मणाय, श्रिये ब्राह्मणाय, भ्रुवे ब्राह्मणाय, ) इत्यादौ नदीसंज्ञानिमित्तकार्यं न भवतीति, यत्र तु स्त्रीवचनं तत्र (इष्वै ब्राह्मण्यै, इषवे ब्राह्मण्यै, अशनये ब्राह्मण्यै, धेन्वै ब्राह्मण्यै, धेनवे ब्राह्मण्यै, श्रियै ब्राह्मण्यै, श्रिये ब्राह्मण्यै, भ्रुवै ब्राह्मण्यै भ्रुवे ब्राह्मण्यै ) इत्यादौ पक्षे विसंज्ञानिबन्धनमपि भवति । यस्त्वपर आह–ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् प्रवृत्तेश्च स्त्रीवचन एव नदीसंज्ञौ भवत इति वक्तव्यमित्यत्र क्वचिद्भाष्यकोशेष्वस्त्रीवचन एव नदीसंज्ञौ भवत इत्यकारप्रश्लेषेण पाठः सोपपाठ इति कैयटे उक्तम्, एवं कुमारीमिच्छति कुमारीयतीत्यादेः क्वावल्लोपयोः कुमारी ब्राह्मण इत्यादौ द्विवचनेषु कुमार्यै ब्राह्मणायेत्यादि द्रष्टव्यम् ।

इदमपरं क्वौ कार्यं विचार्यते । युष्मदस्मदोर्युष्मानाचष्टे अस्मानाचष्टे इति णौ टिलोपेऽनेकार्थत्वेन "प्रत्ययोत्तरपदयोश्च" इति त्वमयोरभावाद्युष्म् अस्म् इति मान्ते युष्मदस्मदी भवतस्तत्र तु कृदन्तत्वाद्विभक्तिष्वेकदेशविकृतस्यानन्यत्वाद्युष्मदस्मदाश्रया विभक्त्यादेशाः प्रकृत्यादेशाश्च त्वादयो भवन्तीत्येके, तन्मते "यूयवयौ जसि" "त्वाहौ सौ" "तुभ्यमह्यौ ङयि" "तवममौ ङसि" इति योगचतुष्टयविषये प्रकृतेर्यूयादयो भवन्ति, तथा "युष्मदस्मद्भ्यां ङसोऽश्" "ङे प्रथमयोरम्" "शसो न" "भ्यसोभ्यम्" "पञ्चम्या अत्" "एकवचनस्य च" "साम आकम्" इतियोगसप्तकविहिता विभक्त्यादेशाश्च भवन्ति, एवं 'युष्मदस्मदोरनादेशे" "द्वितीयायां च" "प्रथमायाश्च द्विवचनेभाषायाम्" इत्यात्वं "योऽचि" इति यत्वं,"शेषे लोपः" इत्यन्त्यलोपश्च यथायोगं भवति, अत्र "युष्मदस्मदोरनादेशे" इत्यात्वं "योऽचि" इत्यजादौ यत्वविधानात् हलादाववशिष्यते ॥

अथ रूपाणि—( त्वम्, अहं, युषाम्, आसाम्, ) विभक्तिपरत्वेऽपि युवावौ प्रकृत्यार्थैकत्वाभावान्न भवतः, ( युयं, वयं, युषामासां, युषान्, आसान्, युष्या, अस्या, युषाभ्याम्, असाभ्यां, युषाभिः, असाभिः, तुभ्यं, मह्यं, युषाभ्याम्, असाभ्यां, युषभ्यम्, असभ्यंम्, ) "भ्यसोभ्यम्" इति अभ्यमादेशपक्षे इदं रूपम्, अन्यदा शेषे लोपे पदकार्ये जश्त्वाद्युड्भ्यमड्भ्यमिति भाव्यम्, (युषत्, असत्, तव,मम, युष्योः, अस्योः, युषाकम्, असाकं, युष्यि, अस्यि, युष्योः, अस्योः, युषासु, असासु, ) युवामाचष्टे आवामाचष्ट इति णौ क्वौ णेश्च लोपे विभक्तौ पूर्ववत् "प्रत्ययोत्तरपदयोश्च" इति त्वमयोः युष्मदस्मदोरेकार्थत्वाभावादभावः, अस्ति द्व्यर्थत्वं विभक्तिपरत्वं चेति युवावौ भवतः। तत्र "युयवयौ जसि" इत्यादियोगचतुष्टयविषये परत्वाद्युयादयो भवन्ति, अत्र रूपाणि। ( त्वम्, अहं, युवाम्, आवां, यूयं, वयं, युवान्, आवान्, युवया, आवया, युवाभ्याम्, आवाभ्यां, युवाभिः, आवाभिः, तुभ्यं, मह्यं, युवाभ्याम्, आवाभ्यां, युवत्, आवत्, युवाभ्याम्, आवाभ्यां, युवत्, आवत्, तव, मम, युवयोः, आवयोः, युवाकम्, आवाकं, युवयि, आवयि, युवयोः, आवयोः, युवासु, आवासु, ) विभक्त्यादेशादि पूर्ववत्, त्वामाचष्टे मामाचष्ट इति णौ "प्रत्ययोत्तरपदयोश्च" इति त्वमयोः, "प्रकृत्यैकाच्" इति प्रकृतिभावाट्टिलोपाभावे णेश्च क्वौ लोपे त्वाद् माद् इति भवतः, अङ्गवृत्तपरिभाषया वृद्धिर्नेति भवादिनां त्वद् मद् इति भवतस्तत्र विभक्तिषु मपर्यन्तस्याभावाद्यूयादयो न भवन्ति, तत्र रूपाणि। आदितः पञ्चसु वचनेषु त्वां मामिति, वृद्धिर्नेति वादिनां सुजसोः शेषे लोपेन दकारलोपे त्वं मम् इति भवतः ( त्वान्, मान्, त्वाया, माया ) अवृद्धिपक्षे ( त्वया, मया, त्वाभ्यां, माभ्यां, त्वाभिः, माभिः ) एवं "ङे प्रथमयोरम्" इत्यमि शेपेलोप "आतो धातोः" इत्याकारलोपः ( त्वां, मां, त्वाभ्यां, माभ्यां,) भ्यमादेशे पूर्ववच्छेषे लोपे (त्वाभ्यम्, आभ्यम्) इति भवति, पूर्ववल्लोपे, अभ्यमादेशपक्षे आल्लोपे च ( त्वभ्यं, मभ्यम् ) इति भवति, अवृद्धिपक्षे शेषलोपे ( त्वभ्यम्, मभ्यम्, ) अङ्गवृत्तपरिभाषया "बहुवचने झल्येत्" इत्येत्वं न भवति, (त्वत्, मत्, ) पूर्ववच्छेपेलोपाल्लोपौ, ( त्वाभ्यां, माभ्यां, त्वत्, मत्, त्व, म, ) पूर्ववच्छेपेलोपाल्लोपौ (त्वायोः, मायोः, अवृद्धिपक्षे ( त्वयोः, मयोः, त्वाकं, माकं, त्वायि, मायि, त्वायोः, मायोः, ) अवृद्धिपक्षे ( त्वयि, मयि ) इत्यादि, ( त्वासु मासु, ) अत्र येषां दर्शनं णौ त्वमयोः परपूर्वत्वात् पूर्वमनेकाच्त्वेन टिलोपे वृद्धौ पुकि क्वौ णेर्लोपे ( त्वापि मापि ) इति भवत इति, तेषामपि पूर्ववत् शेषे लोपादिषु वृद्धिपक्षे यानि रूपाणि तानि द्रष्टव्यानि। ननु युष्मदस्मदोर्मान्तत्वे कथं यूयादयः प्रदर्शिताः। यतस्ते "मपर्यन्तस्य" इत्यधिकारे विधीयन्ते, "मपर्यन्तस्य" इति च युस्मदस्मद्भ्यां वैयधिकरण्येन सम्बध्यते, 'व्यपदेशिवद्भावश्चाप्रातिपदिकेन' इति प्रतिषिध्यते, अवश्यं चैतदेवं विज्ञेयं सामानाधिकरण्येन सम्बन्धे मान्तयोरादेशप्रसङ्गात् उच्यते। अत्र मान्तस्येति वचनेनाप्युक्तेऽथ सिद्धे परिग्रहणसामर्थ्यात् अप्रातिपदिकेनेत्यस्याप्रवृत्तेः, व्यपदेशिवद्भावसिद्धेः। अपरे पुनराहुः, सति शेषे पर्यन्तशब्दो वर्तते, तेन मान्तयोः युष्मदस्मदोर्यूयादेशेन न भवितव्यमिति तन्मते पूर्वं "यूयवयौ जसि" इत्यादियोगचतुष्टयस्याप्रवृत्तेर्युवावाद्यादेशाभावः, तत्र रूपाणि ( युषम् असम्, ) "ङे प्रथमयोरम्" इत्यमि "शेपेलोप" इत्यन्तलोपः, सुजसोर्द्विवचने तु "प्रथमायाश्च द्विवचने" इत्यात्वम् ( युषाम्, असाम्, ) चतुर्थ्येकवचने तुभ्यमह्यादेशाभावात् "ङेप्रथमयोरम्" इत्यमि शेषे लोपे ( युषम्, असम्, ) षष्ठ्येकवचने "युष्मदस्मद्भ्यां ङसोऽश्" इति अशादेशे "तवममौ ङसि" इति तवममयोरभावे शेषे लोपे युष असेति भवति, इदं च शेषे लोपप्रदर्शनं शेषे लोपे इत्यस्य शेषे विभक्तौ पर इत्यर्थपक्षे, यदा तु मात् परत्वशेषत्वमिति पक्षस्तदा शेषेलोपाभावान्मकारस्य श्रवणं भवतीति युष्मम् अस्ममित्यादि भवति॥

इति श्रीसायणेन विरचितेयं प्रत्ययान्तनामधातुवृत्तिः समाप्ता॥

शुभं भवतु

# अथ माधवीयधातुवृत्तौ प्रसङ्गोपात्तग्रन्थकृतां नामपरिचायकं पत्रम् ।

पुरुषकारः ।
स्वामी ।
हेलाराजः ।
मैत्रेयः ।
दैवपुरुषकारौ ।
भट्टभास्करः ।
क्षीरस्वामी ।
शाकटायनः ।
गुहः ।
चन्द्रः ।
वर्धमानः ।
हरदत्तः ।
गणरत्नः ।
महोदधिकारः ।
दुर्गः ।
भोजः ।
वामनः ।
शाकलः ।
जिनेन्द्रः ।
इन्दुः ।
श्रीभद्रः ।
कैयटकारः ।
वार्ष्यायणिः ।
भाष्यकारः ।
पतञ्जलिः ।
आचार्याः ।
वृत्तिकारः ।
सुभूतिः ।
सुबोधिनीकारः ।
भागुरिः ।
यादवप्रकाशः ।
प्रदीपकृत् ।
आभरणकारः ।
काश्यपः ।
गणकारः ।
श्रीकरः ।
न्यासकृतः ।
सूत्रकारः ।
सुधाकरः ।
श्रीकराचार्यः ।
भोजः ।
राजानकः ।
धनपालः ।
जयादित्यः ।
बोधिन्यासकृतः ।
वासुदेवः ।
तरङ्गिणीकारः ।
देवः ।
केशवस्वामी ।
शिवस्वामी ।
दौर्गाः ।
आत्रेयः ।
सीरदेवः ।
चान्द्रः ।
कौमारः ।
सुधाकरकारः ।
प्रक्रियारत्नकारः ।
सम्मताकारः ।
रामदेवमिश्रः ।
कौशिकः ।
विज्ञानेश्वरः ।
रक्षितः ।
व्याघ्रभूतिः ।
दण्डनाथः ।
प्राचीनाः ।
न्यासकारः ।
भोजराजः ।
पूर्णचन्द्रः ।
नन्दी ।
भोजः ।
यज्ञनारायणः ।

इति माधवीयधातुवृत्तौ प्रसङ्गोपात्तग्रन्थकृतां नामपरिचयः ।

# अथ माधवीयधातुवृत्तौ प्रसङ्गोपात्तग्रन्थानाम् परिचायकं पत्रम् ।

मैत्रेयेन्द्रन्यासः ।
रक्षितः ।
पदमञ्जरी ।
वृत्तिः ।
वेदः ।
भट्टिः ।
वृत्तिप्रदीपः ।
यादवप्रकाशः ।
निघण्टुः ।
न्यासः ।
प्रातिशाख्यम् ।
प्रकाशः ।
बोधिन्यासः ।
कैयटः ।
शाकटायनवृत्तिः ।
गणरत्नः ।
महोदधिः ।
वृत्तिन्यासः ।
गणवृत्तिः ।
वैजयन्तिः ।
प्रक्रियारत्नः ।
उद्योतः ।
तरङ्गिणी ।
शाकटायनसूत्रव्याख्या ।
अमोघा ।
सम्मता ।
उणादिवृत्तिः ।
अमरः ।
हेलाराजीयम् ।
वृत्तिव्याख्या ।
कोशः ।

इति माधवीयधातुवृत्तौ प्रसङ्गोपात्तग्रन्थानाम्परिचयः ।

# अथ पाणिनिव्याकरणग्रन्थकाराणां

# नामकृतिपरिचायकं पत्रम् ।



| | |
|---|---|
| पाणिनिः । | सूत्रपाठः, धातुपाठः, गणपाठः । |
| वररुचिः । | सूत्रवार्तिकपाठसूत्रवृत्तिः । ( वाररुचसंग्रहः ) |
| कात्यायनः । | सूत्रवार्तिकपाठः । |
| व्याडिः । | संग्रहः । परिभाषावृत्तिः |
| पतञ्जलिः । | महाभाष्यम् |
| हरिः । | महाभाष्यव्याख्या ( वाक्यपदीयम् ) |
| हेलाराजः । | व्यापदीयव्याख्या । ( किरणप्रकाशः ) |
| पुञ्जराजः । | वाक्यपदीयव्याख्या |
| कैयटः । | महाभाष्यव्याख्या । ( प्रदीपः ) |
| नीलकण्ठः । | प्रदीपटीका ( कैयटप्रकाशः ) |
| रामचन्द्रस्वरस्वती । | ,, ,, ( विवरणम् ) |
| नारायणः । | ,, ,, ( विवरणम् ) |
| ,, ,, | वाररुचसंग्रहटीका । ( दीपप्रभा ) |
| ,, ,, | सूत्रवृत्तिः । ( शब्दभूषणम् ) |
| रामकृष्णानन्दः । | महाभाष्यटीका । |
| शिवरामेन्द्रः । | ,, ,, |
| ,, ,, | सूत्रवृत्तिः । |
| लक्ष्मणसूरिः । | ,, ,, ( आदर्शः ) |
| व्याघ्रभूतिः । | सूत्रवार्तिकम् । |
| कुणिः । | सूत्रवृत्तिः । |
| विट्ठलः । | सूत्रवृत्तिः । |
| जयन्तः । | सूत्रवृत्तिटीका |
| जयादित्यवामनौ । | पाणिनिसूत्रवृत्तिः ( काशिका ) |
| हरदत्तः । | काशिकाव्याख्या । ( पदमञ्जरी ) |
| रङ्गनाथः । | पदमञ्जरीव्याख्या । ( मकरन्दः ) |
| न्यासकारः । | ,, ,, ( न्यासः ) |
| शिवभट्टः । | न्यासव्याख्या ( कुङ्कुमविकाशः ) |
| महामिश्रः । | ,, ,, ( व्याकरणप्रकाशः ) |
| जिनेन्द्रबुद्धिः । | ,, ,, ( विवरणपञ्चाशिका ) |
| वासुदेवः । | ,, ,, ( काशिकावृत्तिसारः ) |
| विप्रराजेन्द्रः । | सूत्रविवरणम् । ( शब्दामृतम् ) |

| | |
|---|---|
| उदयनः । | सूत्रवृत्तिः । ( मितवृत्त्यर्थसंग्रहः ) |
| सीरदेवः । | ,, ,, |
| ,, ,, | परिभाषावृत्तिः । |
| रामचन्द्रः । | प्रक्रियाकौमुदी । |
| विट्ठलः । | प्रक्रियाव्याख्या । ( प्रसादः ) |
| शेषकृष्णः । | ,, ,, |
| ,, ,, | पदचन्द्रिका । |
| ,, ,, | स्फोटतत्वनिरूपणम् । |
| रामचन्द्रशेषः । | प्रक्रियाकौमुदीटीका ( गूढभाववृत्तिः ) |
| जयन्तः ( मधुसूदनपुत्रः ) । | ,, ,, ( तत्वचन्द्रः ) |
| चारणोवतेशः । | ,, ,, ( अमृतसृतिः ) |
| रामभट्टः । | ,, ,, ,, |
| विश्वकर्मा । | ,, ,, ( सत्प्रक्रियाव्याकृतिः) |
| हरिवल्लभः । | कौस्तुभव्याख्या । ( दर्पणा ) |
| कृष्णमिश्रः । | ,, ,, ( भावदीपः ) |
| नागेशः । | ,, ,, ( विषमी ) |
| ,, ,, | कैयटव्याख्या ( उद्योतः ) |
| ,, ,, | सिद्धान्तकौमुदीव्याख्या (बृहच्छब्देन्दुशेखरः) |
| ,, ,, | ,, ,, ,, ( लघुशब्देन्दुशेखरः |
| ,, ,, | परिभाषेन्दुशेखरः |
| ,, ,, | बृहन्मञ्जूषा । लघुमञ्जूषा । परमलघुमञ्जूषा । |
| भट्टोजीदीक्षितः । | सूत्रव्याख्या ( सिद्धान्तकौमुदी ) |
| ,, ,, | सिद्धान्तकौमुदीव्याख्या ( प्रौढमनोरमा ) |
| ,, ,, | सूत्रव्याख्या ( शब्दकौस्तुभः ) |
| हरिदीक्षितः । | मनोरमाव्याख्या–बृहच्छब्दरत्नम् ।लघुशब्दरत्नम्। |
| कल्याणमल्लः । | ,, ,, ,, ( शब्दरत्नदीपः ) |
| कृष्णमिश्रः । | मनोरमाव्याख्या । ( कल्पलता ) |
| ,, ,, | सिद्धान्तकौमुदीव्याख्या । ( रत्नार्णवः ) |
| ,, ,, | लघुमञ्जूषाटीका ( कुञ्जिका ) |
| चक्रपाणिशेषः । | मनोरमाखण्डनम्। |
| जगन्नाथः । | मनोरमाकुचमर्दिनी । |
| ज्ञानेन्द्रसरस्वती । | सिद्धान्तकौमुदीव्याख्या ( तत्वबोधिनी ) |
| कृष्णमौनिः । | ,, ,, ,, ( सुबोधिनी ) |
| ,, ,, | ,, ,, ,, ( स्फोटचन्द्रिका ) |
| अनन्तः । | सिद्धान्तकौमुदीटीका ( बालमनोरमा ) |
| नीलकण्ठः । | ,, ( वैयाकरणसिद्धान्तरहस्यम् ) |
| वासुदेवः । | ,, ,, ,, ,, |
| रामकृष्णः । | ,, ,, ( वैयाकरणसिद्धान्तरत्नाकरः ) |
| उदयङ्करः । | परिभाषाप्रदीपार्चिः । |
| ,, ,, | लघुशब्देन्दुशेखरव्याख्या ( ज्योत्स्ना ) |

| | |
|---|---|
| बालम्भट्टः । | उद्योतटीका ( छाया ) |
| ,, ,, | शब्देन्दुशेखरटीका ( चिदस्थिमाला ) |
| ,, ,, | शब्दरत्नव्याख्या ( भावप्रकाशः ) |
| ,, ,, | कौस्तुभव्याख्या । ( उद्योतः ) |
| ,, ,, | परिभाषेन्दुशेखरटीका ( गदा ) |
| ,, ,, | लघुमंजूषाटीका ( कला ) |
| राजारामः । | लघुशब्देन्दुशेखरव्याख्या । |
| भैरवमिश्रः । | ,, ,, ,, ( चन्द्रकला ) |
| ,, ,, | वैयाकरणभूषणसारटीका ( परीक्षा ) |
| ,, ,, | परिभाषेन्दुशेखरव्याख्या ( भैरवी ) |
| ,, ,, | शब्दरत्नव्याख्या । ( भैरवी ) |
| घुसेलसदाशिवभट्टः । | लघुशब्देन्दुव्याख्या ( सदाशिवभट्टी ) |
| पाठकः । | ,, ,, ( पाठकी ) |
| ,, ,, | परिभाषेन्दुशेखरटीका ( पाठकी ) |
| अभ्यंकरभास्करशास्त्री । | लघुशब्देन्दुशेखरव्याख्या ( विवरणम् ) |
| गजेन्द्रगडकरराघवाचार्यः । | ,, ,, ,, ( विषमी ) |
| ,, ,, | परिभाषेन्दुशेखरटीका ( त्रिपथगा ) |
| ,, ,, | कौस्तुभव्याख्या ( प्रभा ) |
| अभ्यंकरवासुदेवशास्त्री । | लघुशब्देन्दुशेखरव्याख्या । ( गूढार्थप्रकाशः ) |
| ,, ,, | परिभाषेन्दुशेखरटीका । ( तत्त्वादर्शः ) |
| लक्ष्मीनृसिंहः । | सिद्धान्तकौमुदीव्याख्या । |
| इन्द्रदत्तः । | ,, ,, ,, |
| विश्वेश्वरतीर्थः । | ,, ,, ,, |
| तारानाथः । | ,, ,, ,, ( सरला ) |
| वरदराजः । | सूत्रव्याख्या ( लघुकौमुदी । मध्यकौमुदी ) |
| मौनिजयकृष्णः । | ,, ,, (लघुकौमुदीव्याख्या । मध्यकौमुदीव्याख्या ) |
| विश्वेश्वरः । | सूत्रवृत्तिः ( व्याकरणसुधामहानिधिः ) |
| सदाशिवमिश्रः । | ,, ,, ( गुढार्थदीपिनी ) |
| अन्नंभट्टः । | ,, ,, ,, |
| धरणीधरः । | ,, ,, ( वैयाकरणसर्वस्वम् ) |
| तारेरामचन्द्रभट्टः । | ,, ,, ,, |
| बलरामः । | ,, ,, धातुप्रकाशः । |
| माधवः । | धातुपाठटीका ( धातुवृत्तिः ) |
| रक्षितः । | ,, ,, ( धातुप्रदीपः ) |
| वर्धमानः । | गणपाठटीका । ( गणरत्नमहोदधिः ) |
| शरणदेवः । | परिभाषाटीका । ( दुर्घटवृत्तिः ) |
| वोपदेवः | ,, ,, ( कामधेनुः ) |
| श्रीपतिः । | ,, ,, ( ज्ञानदीपिका ) |
| ,, ,, | शब्दरत्नव्याख्या ( भैरवी ) |
| पुरुषोत्तमः । | प्रयोगरत्नमाला । |

| | |
|---|---|
| विश्वरूपः । | विश्वरूपनिबन्धः । |
| रत्नेशः । | लक्षणसङ्ग्रहः । |
| ,, ,, | स्फोटसिद्धिन्यायविचारः । |
| कौण्डभट्टः । | बृहद्वैयाकरणभूषणम् । वैयाकरणभूषणसारः । |
| वनमाली । | वैयाकरणभूषणटीका । ( मतोन्मज्जिनी ) |
| हरिवल्लभः । | वैयाकरणभूषणसारटीका । ( लघुभूषणकान्तिः ) |
| मन्नुदेवः । | वैयाकरणभूषणसारटीका। (बृहद्दर्पणा । लघुदर्पणा) |
| ,, ,, | परिभाषेन्दुटीका । ( दोषोद्धरणम् ) |
| महानन्दः । | वैयाकरणभूषणसारटीका |
| नीलकण्ठः । | पाणिनीयदीपिका । |
| इन्दिरापतिः । | परिभाषेन्दुशेखरटीका ( परीक्षा ) |
| भीमभट्टः । | ( भैमी ) |
| शङ्करभट्टः । | ( शाङ्करी ) |
| लक्ष्मीनृसिंहः । | ( त्रिशिखा ) |
| द्विवेदीहरिनाथः । | ( अकाण्डताण्डवम् ) |
| विष्णुभट्टः । | ( चिच्चन्द्रिका ) |
| राजारामदीक्षितः । | लघुमञ्जूषाटीका |
| विष्णुरामः । | परिभाषाप्रकाशः |
| कुप्पुशास्त्री । | परिभाषाभास्करः |
| रामभद्राश्रमः । | सिद्धान्तचन्द्रिका । |
| अनन्तभट्टः । | शब्दसुधा । |
| गोडबोलेनारायणशास्त्री । | प्रातिपदिकसंज्ञावादः । |
| ,, ,, ,, | वाक्यवादः |
| हरियशोमिश्रः । | वाक्यवादटीका । ( वाक्यदीपिका ) |
| म. म. पटवर्धनतात्याशास्त्री । | परिभाषेन्दुटीका ( भूतिः ) |
| म० म० जयदेवमिश्रः । | ,, ,, ( विजया ) |
| | शब्देन्दुशेखरटीका ( शास्त्रार्थरत्नावली ) |
| म० म० पर्वतीयनित्यानन्दपन्तः । | शब्देन्दुशेखरटीका । ( दीपकम् ) |
| म० म० भारद्वाजगोविन्दशास्त्री । | परिभाषेन्दुशेखरटीका ( जटाजूटः ) |

इति पाणिनिव्याकरणग्रन्थकाराणां नामकृतिपरिचयः ।

# अथ माधवीयधातुवृत्तिस्थधातूनाम—
# अकारादिक्रमेण सूची ।

# धातूनां सूची ।

# धातुनां सूची ।

Digitized by Arya Samaj Foundation Chennai and eGangotri

# धातूनां सूची ।

## धातूनां सूची ।

| धातुनाम | सू. अं. | पृ. अं. |
|---|---|---|
| दाप् | ४९ | २६७ |
| दाश | ३३ | ३२२ |
| दाशृ | ८६७ | १९८ |
| दासृ | ८७८ | १९९ |
| दिवि | ५८४ | ११२ |
| दिवु | १ | २८० |
| दिवु | १८९ | ३९: |
| दिवु | १७२ | ३८९ |
| दिश | ३ | ३२३ |
| दिह | ५ | २२६ |
| दीक्ष | ६०१ | ११४ |
| दीङ | २६ | २८७ |
| दीधीङ् | ६६ | २६७ |
| दीपी | ४२ | २९२ |
| दु | ९२५ | १८३ |
| दु | १० | ३१७ |
| दुर्वी | ५६५ | १०९ |
| दुल | ६३ | ३८२ |
| दुष | ७७ | ३०० |
| दुःख | ३८९ | ४०१ |
| दुःख | १६ | ४०५ |
| दुह | ४ | २२४ |
| दुहिर् | ७२५ | १२८ |
| दूङ् | २५ | २८७ |
| दृ | २१ | ३६८ |
| दृ | ३४ | ३२२ |
| दृङ् | १२७ | ३४१ |
| दृप | ८८ | ३०३ |
| दृफ | ३३ | ३२९ |
| दृभ | २८१ | ३९९ |
| दृभी | २८० | ३९९ |
| दृभी | ४३ | ३३० |
| दृम्फ | ३४ | ३२९ |
| दृशिर् | ९६८ | १९८ |
| दृह | ७१९ | १२८ |
| दृहि | ७२० | १२८ |
| दॄ | ७९६ | १३८ |
| देङ् | १४३ | १८६ |
| देवृ | ५१६ | १०१ |
| दैप् | १०७ | १७० |
| दो | ४० | २९१ |
| दंश | ९६९ | १९९ |
| द्यु | २१ | २४३ |
| द्युत | ७२८ | १२९ |
| द्यै | ८८९ | १६७ |
| द्रवस | ३९ | ४०५ |
| द्रम | ४६२ | ९४ |
| द्रा | ४४ | २५५ |
| द्राक्षि | ६५९ | १२१ |
| द्राखृ | १२१ | ९८ |
| द्राडृ | २८४ | ७५ |
| द्राह | ६३७ | ११७ |
| द्रु | ९२६ | १८३ |
| द्रुण | ५६ | ३३१ |
| द्रुह | ८९ | ३०३ |
| द्रूञ् | ९ | ३६६ |
| द्रेकृ | ७८ | ५५ |
| द्रै | ८९० | १६७ |
| द्विष | ३ | २२४ |
| | ध | |
| धक्क | ६० | ३८२ |
| धन | २२ | २८० |
| धवि | ५८९ | ११२ |
| धाञ् | १० | २७७ |
| धावु | ५९३ | ११३ |
| धि | १२२ | ३३७ |
| धिक्ष | ५९९ | ११३ |
| धिवि | ५८५ | ११२ |
| धिष | २१ | २८० |
| धीङ् | २८ | २८८ |
| धुक्ष | ५९४ | ११३ |
| धुञ् | ९ | ३१६ |
| धुट | ७३३ | १३० |
| धुर्वी | ५६४ | १०९ |
| धू | ११४ | ३३६ |
| धूञ् | १९ | ३६७ |
| धूञ् | २९३ | ३९५ |
| धूप | ३९३ | ८७ |

| धातुनाम | सू. अं. | पृ.अ. |
|---|---|---|
| धूप | २३७ | ३९२ |
| धूरी | ४९ | २९३ |
| धूस | १०९ | ३८९ |
| धृङ् | ३२८ | ३४१ |
| धृज | २१७ | ६९ |
| धृजि | २१८ | ६९ |
| धृञ् | ८८४ | १६३ |
| धृञ् | ९४१ | १८९ |
| धृष | ३०८ | ३९६ |
| धृषा | २३ | ३२१ |
| धॄ | २३ | ३६९ |
| धेट् | ८८६ | १६५ |
| धोॠँ | ५४६ | १०६ |
| ध्मा | ९१० | १७२ |
| ध्यै | ८९२ | १६७ |
| ध्वन | ३४७ | ३९८ |
| ध्वज | २१९ | ६९ |
| ध्वजि | २२० | ६९ |
| ध्वण | ४४९ | ९२ |
| ध्वन | ८०५ | १३९ |
| ध्वन | ८१३ | १४२ |
| ध्वसु | ७४२ | १३१ |
| ध्वंसु | ७४४ | १३१ |
| ध्वाक्षि | ६६१ | १२१ |
| ध्वृ | ९२१ | १८१ |
| ध्रज | २१५ | ६९ |
| ध्रजि | २१६ | ६९ |
| ध्रण | ४५५ | ९३ |
| ध्राक्षि | ६६० | १२१ |
| ध्राखृ | १२२ | ५८ |
| ध्राडृ | २८५ | ७५ |
| ध्रु | ११६ | ३३६ |
| ध्रु | ९२५ | १८३ |
| ध्रेकृ | ७९ | ५५ |
| ध्रै | ८९१ | १६७ |
| | न | |
| नक्क | ५९ | ३८२ |
| नट | २५६ | ३९३ |
| नट | १२ | ३७९ |
| नदि | ६७ | ५४ |

| धातुनाम | सू. अं. | पृ.अं. |
|---|---|---|
| नर्द | ५६ | ५२ |
| नह | ७६९ | १३६ |
| नाथृ | ७ | ३७ |
| नाधृ | ६ | ३७ |
| निवास | ३४३ | ३९८ |
| निष्क | १९२ | ३८७ |
| नृती | ९ | २८३ |
| नॄ | ७९७ | १३८ |
| नॄ | २४ | ३६९ |
| | प | |
| पक्ष | १७ | ३७९ |
| पचष् | ९७६ | २०१ |
| पचि | ११६ | ३८५ |
| पचि | १७२ | ६१ |
| पट | २९३ | ७६ |
| पट | ३१४ | ३९७ |
| पट | २९७ | ३९२ |
| पठ | ३२६ | ८१ |
| पडि | २७८ | ७५ |
| पडि | ८० | ३८३ |
| पण | ४३५ | ८९ |
| पत्र | ३१९ | २९७ |
| पत्लृ | ८३० | १४६ |
| पथि | ४१ | ३८१ |
| पथे | ८३२ | १४८ |
| पद | ६१ | २९५ |
| पद | ३५४ | ३९९ |
| पन | ४३६ | ८९ |
| पम्पस | १४ | ४४ |
| पय | ४७२ | ९७ |
| पयस | ४० | ४०५ |
| पर्ण | ३९३ | ४०१ |
| पर्द | २९ | ४५ |
| पर्प | ४०९ | ८८ |
| पर्ब | ४१३ | ८८ |
| पर्व | ५६९ | ११० |
| पल | ८२४ | १४५ |
| पल्यूल | ३३९ | ३९८ |
| पश | १८४ | ३९० |

# धातूनां सूची ।

## धातूनां सूची ।

| धातुनाम | सू. अं. | पृ.अं. | धातुनाम | सू. अं. | पृ.अं. |
|---|---|---|---|---|---|
| मल | ४८९ | १०० | मीमृ | ४६४ | ९४ |
| मल्ल | ४९० | १०० | मील | ५१२ | १०४ |
| मव | ५९१ | ११२ | मीव | ५५७ | १०९ |
| मव्य | ५०३ | १०१ | मुच | २०८ | ३१२ |
| मश | ७१० | १२६ | मुचि | १५० | ६१ |
| मष | ६७९ | १२२ | मुच्लृ | १४६ | ३४४ |
| मसी | ११३ | ३०८ | मुज | २४७ | ७२ |
| मस्क | १०२ | ५७ | मुंजि | २४८ | ७२ |
| मस्जो | १३१ | ३४२ | मुट | ३२० | ८० |
| मह | ७१६ | १२७ | मुट | ९२ | ३३४ |
| मह | ३२५ | ३९८ | मुट्ट | ७९ | ३८३ |
| महि | ६२५ | ११६ | मुठि | २६२ | ७३ |
| महि | २६२ | ३९३ | मुडि | २७२ | ७४ |
| महीङ् | ३३ | ४०५ | मुडि | ३२२ | ८० |
| मा | ५२ | २५८ | मुण | ५३ | ३३१ |
| माक्षि | ६५८ | १२१ | मुद | १६ | ४२ |
| माङ् | ६ | २७२ | मुद | २०५ | ३९१ |
| माङ् | ३४ | २८९ | मुर | ६२ | ३३१ |
| मान | ९५३ | १८७ | मुल | ६९ | ३८२ |
| मान | ३०१ | ३९६ | मुप | ५८ | ३७५ |
| मार्ग | ८३ | ३८३ | मुस | ११२ | ३०८ |
| मार्ग | ३०४ | ३९८ | मुह | ९० | ३०४ |
| माहृ | ८७९ | १५९ | मूङ् | ९४८ | १८७ |
| मिघृ | ४ | ३१३ | मूर्छा | २१० | ६८ |
| मिच्छ | १७ | ३२७ | मूत्र | ३६३ | २९९ |
| मिक्ष | १३४ | ३१० | मूर्वी | ५६७ | ११० |
| मिदा | ७३० | १३० | मूल | ५२३ | १०४ |
| मिदि | ८ | ३२९ | मूष | ६६५ | १२१ |
| मिह | ८५३ | १५६ | मृक्ष | ६५३ | १२१ |
| मिल | ८२ | ३३३ | मृग | ३५६ | ३९९ |
| मिल | १४५ | ३४४ | मृङ् | ११९ | ३३७ |
| मिवि | ५८१ | ११२ | मृजू | ५६ | २६१ |
| मिश | ७१० | १२६ | मृजू | ३०६ | ३९६ |
| मिश्र | ३७५ | ४०० | मृड | ४७ | ३३० |
| मिष | ७१ | ३३२ | मृड | ४४ | ३७३ |
| मिषु | ६८६ | १२३ | मृण | ५० | ३३० |
| मिह | ९७२ | २०१ | मृद | ४३ | ३७३ |
| मी | २८३ | ३९५ | मृधु | ८५९ | १५६ |
| मीङ | २९ | २८८ | मृधु | २५९ | १५६ |
| मीञ् | ४ | ३६५ | मृष | ५६ | २९४ |
| | | | मृष | १४१ | ३४४ |

ल

# धातूनां सूची ।

| धातुनाम | सू. अं. | पृ. अं. | धातुनाम | सू. अं. | पृ. अं. |
|---|---|---|---|---|---|
| वद | १८९ | २१२ | वात | ३५० | ३७८ |
| वद | २१९ | ३९६ | वाश्र | ५५ | २६४ |
| वहि | ११ | ४१ | वास | ३४२ | ३९८ |
| वधि | १०८ | ६७ | विच्छ | २३७ | ३१२ |
| वन | ४५८ | ९३ | विच्छ | १३९ | ३४३ |
| वन | ४५९ | ९४ | विजिर् | १२ | २७८ |
| वनु | ८ | ३९७ | विजिर् | ५ | ३४९ |
| वनु | ७११ | १३७ | विजी | ९ | ३२५ |
| वप् | ९८३ | २०६ | विजी | २३ | ३५४ |
| वभ्र | ५५० | १०७ | विट | ३२३ | ७८ |
| वम | ८३४ | १४८ | विथृ | ३३ | ४५ |
| वय | ४७१ | ९७ | विदृ | १३ | ३११ |
| वर | ३१० | ३९७ | विद | ५४ | २५९ |
| वर्च | १६० | ६० | विद | ६३ | २९७ |
| वर्ण | ४९ | ३७९ | विदूल्ल | १४८ | ३४२ |
| वर्ण | ३९२ | ४०१ | विद | १७४ | ३८९ |
| वर्ध | ११९ | ३८६ | विध | ४५ | ३३० |
| वर्ध | ९०५ | ११५ | विल | ७७ | ३३२ |
| वर्ह | २३४ | ३१२ | विल | ७१ | ३८२ |
| वल | ४८७ | ९९ | विल | ७२ | ३८२ |
| वल्क | ३७ | ३८० | विश | १४० | ३४३ |
| वल्ग | १४० | ५८ | विष | ५४ | ३७५ |
| वल्गु | ३ | ४०४ | विषु | ६८५ | १२३ |
| वल्भ | ३८८ | ८५ | विष्क | ३९४ | ४०१ |
| वल्ल | ४८८ | ९९ | विष्ल | १३ | २७८ |
| वल्ह | २३५ | ३१२ | वी | ३८ | २५२ |
| वश | ७० | २६८ | वीर | ३९५ | ३९९ |
| वष | ६७८ | १२२ | वृक | ९२ | ९६ |
| वस | ९८५ | २०८ | वृक्ष | ५९६ | ११३ |
| वस | १३ | २३३ | वृङ् | ३८ | ३७२ |
| वस | ३०९ | ३९२ | वृजी | १९ | २३५ |
| वस | ३९६ | ४०१ | वृजी | २४ | ३५४ |
| वसु | १०६ | ३०७ | वृजी | २७२ | ३९४ |
| वस्क | १०१ | ५७ | वृञ् | ८ | ३१९ |
| वह | ९८४ | २०७ | वृञ् | २७३ | ३९४ |
| वा | ४० | २६३ | वृतु | ७४६ | १३१ |
| वाक्षि | ७५७ | १२१ | वृतु | ९२ | २९३ |
| वाञ्छि | २६६ | ६८ | वृतु | ७२ | ३९२ |
| वाडृ | २८३ | ७५ | वृतु | २४६ | ३९२ |

# धातूनां सूची ।



तिथी
पु०सं०
भारती पुस्तकालय

